॥ श्रीः ॥

# अथ श्रीप्रपन्नामृतस्थमुख्यविषयानुक्रमणिका.

इति भट्टार्यवेदांतिसंवादः समाप्तः ।



इति श्रीप्रपन्नामृतविषयानुक्रमणिका समाप्ता ।

॥ श्रीः ॥

# प्रपन्नामृतम् ।

## प्रथमोऽध्यायः ।

श्रीमते रामानुजाय नमः ॥ वाधूलश्रीनिवासार्यपादांभोजोपजीवनम् ॥ जंन्यपुंगवसद्भक्तं श्रीनिवासगुरुं भजे ॥ १ ॥ राजच्छिद्रघुतोर्द्ध्वपुंड्रमनिशं रामानुजाख्यं मुनिं काषायांबरमब्जसन्निभगलं कांतोपवीतत्रयम् ॥ भाषासंस्तुतवाग्विलासममलं बद्धांजलिं भास्वरं श्रीवत्सांकमुखाखिलार्य्यशरणं श्रीभाष्यकारं भजे ॥ २ ॥ श्रीरंगराजपदपंकजराजहंसं रामानुजार्य्यपदपंकजभृंगराजम् ॥ श्रीशैलवंशकलशांबुधिपूर्णचन्द्रं श्रीरंगराजगुरुमन्वहमाश्रयामः ॥ ३ ॥ मिथ्यावादिमदांधसिंधुरसुधासंरंभकुंभस्थलीनिर्भेदोद्भवसूक्तिमौक्तिकमणीशुभ्रीकृताग्रस्थलः ॥सत्तर्कस्फुरदत्युदग्रनखरो वेदांतशैलाश्रितः श्रीरामानुजकेसरी विजयते प्रोद्दंडविक्रीडितः ॥४॥ कौशिकान्वयसंभूतं कारुण्यामृतसागरम् ॥ नृसिंहाचार्य्यतनयं रामानुजगुरुं भजे ॥ ५ ॥ नाधीतानि च शास्त्राणि न कृतं गुरुपूजनम्॥वक्ष्यामि कृपया विष्णोरनुगृह्णंतु देशिकाः ॥ ६ ॥ इंदिरारमणं देवमिभशैलनिवासिनम् ॥ विवस्वत्कोटिसंकाशं देवराजमहं भजे ॥ ७ ॥ अस्ति वैकुंठनगरं सर्वलोकेषु विश्रुतम् ॥ नित्यमुक्तैः सेव्यमानं विष्णोः प्रीतिकरं शुभम् ॥८॥नवरत्नसमाकीर्णैः प्राकारैरुपशोभितम् ॥ अनेकगोपुरयुतं मंडपैरुपशोभितम् ॥ ९ ॥ दिव्यप्रासादसंयुक्तैर्दिव्यकक्ष्यासमावृतैः॥गृहरत्नैः शोभमानं नवरत्नमयैः शुभैः ॥ १० ॥ स्वर्णवृक्षसमाकीर्णैरुद्यानैरुपशोभितम् ॥ चंद्रकांतमयैः शुभ्रैर्विमानैः प्रविराजितम् ॥ ११ ॥ दिव्याप्सरोगणैर्नित्यं सेवितं

---

१ रघु। २ सरस्वती । ३ मिथ्या । ४ सूर्य ।

सततं शुभैः ॥ विवस्वत्कोटिसंकाशैस्तोरणैर्बहुभिर्वृतम् ॥१२॥ सुधाकरसहस्राभैः पुरुषैरुपशोभितम् ॥ वापीकूपतडागैश्च दिव्यामृतमयैः शुभैः ॥ १३ ॥ दिव्यांडजवरैर्नित्यं स्वर्णपंकजशोभितम् ॥ शोभमानं पताकाभिर्ध्वजैश्च परिशोभितम् ॥ १४ ॥ अनंतं शाश्वतं दिव्यं नित्यानंदसुखाह्वयम् ॥ अजेयं निर्मलं शुद्धं परमं सुसुखप्रदम् ॥१५॥ ब्रह्मादीनामसाध्यं च साध्यं वै भक्तिशालिनाम्॥तन्मध्ये तत्पुरं दिव्यं गृहरत्नसमावृतम् ॥ १६ ॥ चतुर्द्वारसमायुक्तं द्वारपालैः सुरक्षितम् ॥ कोटिसूर्यप्रकाशेन नवरत्नमयेन च ॥ १७ ॥ प्राकारेण समायुक्तं पताकाध्वजमालिना ॥ दिव्यरत्नसमाकीर्णैरत्युच्छ्रायैर्मनोहरैः ॥१८॥ अनेकगोपुरव्रातैः शोभमानं सुशोभितैः ॥ सर्वाभरणयुक्ताभिः स्त्रीभिर्बह्वीभिरंचितम् ॥ १९ ॥ तत्र मध्ये मणिमयं मंडपं चास्ति शोभनम् ॥ सहस्रस्तंभसंयुक्तं विष्णोः प्रीतिकरं शुभम् ॥ २० ॥ दिव्यचंदनकर्पूरकुंकुमामोदवासितम् ॥ दिव्याप्सरोगणाकीर्णं नित्यमुक्तसमावृतम्॥२१॥ तन्मध्ये सुमहाबाहुः फणिराजो महाबलः ॥ सहस्रफणसंयुक्तस्तत्रास्ते विमलद्युतिः ॥ २२ ॥ तस्योपरि महाबाहुः शंखचक्रगदाधरः ॥ इंदीवरदलश्यामः पद्मपत्रनिभेक्षणः ॥ २३ ॥ कंदर्पकोटिलावण्यो जगन्मोहनविग्रहः ॥ कोटिसूर्यप्रतीकाशः कोमलावयवोज्वलः ॥ २४ ॥ केयूरहारकटकनूपुराद्यैरलंकृतः ॥ दिव्यचंदनलिप्तांगः पीतांबरधरो युवा ॥ ॥ २५ ॥ नित्यं श्रीभूमिनीलाभिः संवृतः परमेश्वरः ॥ नित्यमुक्तैस्सेव्यमानः सुखं रेमे महाविभुः ॥२६॥ एवं सर्वात्मनस्तस्य श्रीनिवासस्य शार्ङ्गिणः ॥ श्रिया संबोध्यमानस्य जगतो रक्षणाय च ॥ २७ ॥ श्रीहरेरुदभूत्काचिच्चिंता निर्हेतुका तदा ॥ केनोपायेन वैकुंठमिमाञ्जंतून्नयाम्यहम् ॥ २८ ॥ इति चिंतयमाने तु लोकनाथे हरौ तदा ॥ शय्याभूतः फणी शेषस्तमाह पुरुषोत्तमम् ॥२९॥ का चिंता तव देवेश परिपूर्णस्य नित्यशः॥विचारे तव सर्वज्ञ कारणं नेह विद्यते॥३०॥इत्युक्तः फणिराजेन तमाह पुरुषोत्तमः ॥ भोगीश सुमहावीर्य शृणु तद्वचनं मम॥३१॥

यदर्थं चिंतयाम्यद्य संदृश्य दुःखिताञ्जनान् ॥ श्रिया सहावतीर्णोऽस्मि जनरक्षणहेतुना ॥ ३२ ॥ अवतारेषु मां सर्वे मन्यंते प्राकृता जनाः ॥ राजानं चापि गोपालं प्राकृतं पुरुषं यथा ॥ ३३ ॥ अस्मत्संरक्षणार्थाय वैकुंठादागतो हरिः ॥ एवं न मेनिरे दृष्ट्वा मां जगत्कारणं परम् ॥ ३४ ॥ तदर्थं चिंतयाम्यद्य फणिराज महामते ॥ प्रेषिताश्च मया पूर्वं लोकरक्षणहेतुना ॥ ३५ ॥ शंखचक्राद्यायुधानि विष्वक्सेनादिसूरयः ॥ तेपि भूमिं समासाद्य दृष्ट्वा पापयुताञ्जनान् ॥ ३६ ॥ तत्तादृग्भाषणेनैव दुर्जयं वै हरेः पदम् ॥ इत्यालोच्य तदा सर्वे मौनेन सुसमाहिताः ॥ ३७ ॥ ततः केन प्रकारेण स्वस्थानं पुनरागताः ॥ इत्युक्त्वा फणिराजं तं पुनः प्राह हरिस्तदा ॥ ३८ ॥ भोगिराज महाप्राज्ञ समर्थो जनरक्षणे ॥ अवतीर्य भवान्भूमौ जनान्रक्षितुमर्हति ॥ ३९ ॥ त्वां विना कस्य सामर्थ्यमस्ति लोके विशेषतः ॥ इत्युक्तस्तेन हरिणा फणीशः प्रयतात्मवान् ॥ ४० ॥ तमुवाच महाविष्णुं वाक्यं वाक्यविशारदः ॥ त्वं धाता सर्वलोकानां सृष्टिस्थित्यंतकारकः ॥ ४१ ॥ त्वत्तः सर्वं जगदिदमभूत्स्थावरजंगमम् ॥ त्वन्मायया जगदिदं मोहितं परमेश्वर ॥ ४२ ॥ तवाशक्यं महाबाहो कार्यं लोकेषु सर्वदा ॥ नास्ति विष्णो विशालाक्ष जंतुरक्षणतत्पर ॥ ४३ ॥ तथापि कृपया विष्णो मां नियोक्ष्यसि रक्षणे ॥ त्वद्दासभूतेन मया कर्तव्यमविचारतः ॥ ४४ ॥ वाक्यं तव प्रयत्नेन संदेहस्तत्र नास्ति हि ॥ ब्रह्मादिस्तंबपर्यंतं मायया मोहितं जगत् ॥ ४५ ॥ तस्माद्दत्तं यदि भवेद्विभूतिद्वयमच्युत ॥ येन केनापि वैकुंठं प्रापयिष्यामि ताञ्जनान् ॥ ४६ ॥ इति तद्वाक्यमाकर्ण्य देवेशो हरिरीश्वरः ॥ अनंताय ददौ तस्मै विभूतिद्वयमादरात् ॥ ४७ ॥ पुनः प्रोवाच लक्ष्मीशो वाक्यं भोगीशमर्थवत् ॥ पूर्वं ममाज्ञया केचिद्भुवं प्राप्य शुभान्विताः ॥ ४८ ॥ पंचसंस्कारसंयुक्ताः प्रजारक्षणतत्पराः ॥ तिष्ठंति ज्ञानयुक्ताश्च नित्यं हरिपरायणाः ॥ ४९ ॥ तथापि तेषां सामर्थ्यं जनानज्ञानमोहितान् ॥ नास्ति ज्ञानोपदेशेन स्ववशीक-

तुमादरात् ॥ ५० ॥ तदहं प्रेषयाम्यद्य जगत्पालनकर्मणि ॥ इत्युक्तस्तेन हरिणा फणिराजः प्रसन्नधीः ॥ ५१ ॥ प्रदक्षिणीकृत्य तदा ववंदे चरणौ हरेः ॥ ततोनुज्ञापितोऽनंतो हरिणा जनरक्षणे ॥ फणिराजः प्रसन्नात्मा भूम्यां चक्रे मनस्तदा ॥५२॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे वैकुंठनाथफणिराजसंवादे प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः ।

तोंडीरमंडले भूम्यां पूर्वांभोधेस्तु पश्चिमे ॥योजनत्रयदूरे सा नाम्ना भूतपुरी ह्यभूत् ॥१॥ त्रिषु लोकेषु विख्याता विष्णोः प्रीतिकरी शुभा॥ धनधान्यसमायुक्ता दानशीलैः समावृता ॥ २ ॥ नागपुन्नागबकुलैः कपित्थाश्वत्थसर्जकैः ॥ चंदनागरुवृक्षैश्च चूतबिल्वादिकैरपि ॥ ३ ॥ कोविदारैश्च खर्जूरैर्जम्ब्वामलकदाडिमैः॥तालैस्तमालैः पनसैर्नारिकेलैः कुरंटकैः ॥ ४ ॥ [1]न्यग्रोधतिंतिणीवृक्षैः [2]पूगेक्षुवनराजिभिः ॥ सहकारैः कोविदारैः कदलीवनराजिभिः ॥ ५ ॥ इत्याद्यैर्वृक्षजातैश्च शोभिता च सुपुष्पकैः ॥ मयूरपिकनादैश्च मत्तभृंगस्वरैस्तथा ॥६॥ शाखामृगगणाकीर्णा सारिकाभिः समावृता॥ वापीकूपतडागैश्च सरोभिश्च सपंकजैः ॥७॥उद्याने रममाणाभिः स्त्रीभिः पुंभिः समावृता॥ वेदाध्ययनशीलैश्च विद्वद्भिर्ब्राह्मणोत्तमैः ॥ ८ ॥ काव्यनाटकपाठैश्च वेदपाठैस्तथैव च ॥ तार्किकैश्शाब्दिकैश्चापि वेदवेदांतपारगैः ॥ ९ ॥ इत्याद्यैर्ब्रह्मघोषैश्च नादिता सर्वतः शुभा ॥ विष्ण्वालयैर्मणिमयैरत्युच्छ्रायैश्च गोपुरैः ॥१०॥ विस्तीर्णै राजमार्गैश्च नरनारीसमावृतैः ॥ सौधपंक्तिसमायुक्तैर्गृहरत्नैः समावृता ॥ ११ ॥ गजवाजिसमाकीर्णैः शूरैश्च बहुभिर्वृता ॥ चतुर्द्वारसमायुक्ता द्वारपालैः सुरक्षिता ॥ १२ ॥ तस्यां पुर्यां महाप्राज्ञो यज्वा केशवनामकः ॥ वेदवेदांतसंपन्नः सर्वशास्त्रविशारदः ॥ १३ ॥ सदाचारसमायुक्तः सत्यधर्मपरायणः ॥ जितेंद्रियो जितक्रोधः सत्यवाग-

१ वट । २ क्रमुक ।

नसूयकः ॥ १४ ॥ देवद्विजगुरूणां च पूजकश्च दृढव्रतः ॥
स्थिरबुद्धिः स्थिरानंदस्तपोदानपरायणः ॥ १५ ॥ मिताशी मित-
भाषी च महाभागवतोत्तमः ॥ हारीतान्वयसंभूतो नित्यं हरिपरा-
यणः ॥ १६ ॥ भार्यया सह संयुक्तस्तत्रास्ते ब्राह्मणोत्तमः ॥ अन-
पत्यतया तस्यां पुत्रार्थी वैष्णवोत्तमः ॥ १७ ॥ दिवानिशं हरिं ध्याय-
न्नुवास जगदीश्वरम् ॥ चंद्रोपरागस्तु महानथाभूद्भुवि विश्रुतः ॥ १८ ॥
ततो महोदधेस्स्नानं कर्तुकामः स भार्यया ॥ वैष्णवः केशवो यज्वा
पुण्यां कैरविणीमगात् ॥ १९ ॥ कैरविण्यां समुद्रे च स्नात्वा सम्य-
क्समास्थितः ॥ नत्वा तं प्रार्थयामास पुत्रार्थी पार्थसारथिम् ॥२०॥
तमेवोद्दिश्य तत्रैव पुत्रिकापुत्रकारणात् ॥ इष्टिं चकार विधिवत्स
विप्रः श्रीहरिं तदा ॥२१॥ तयेष्टया द्विजवर्याय प्रसन्नः पार्थसारथिः॥
प्राप्नोम्यहं ते पुत्रत्वमिति स्वप्ने तमब्रवीत ॥ २२ ॥ ततो लब्धवरो
धीमान् केशवो भार्यया सह ॥ अवाप भूतनगरीं हृष्टः केशवपालि-
ताम् ॥ २३ ॥ ततः कतिषु यातेषु वासरेष्वब्जलोचना ॥ गर्भं दधौ
कांतिमती पत्नी केशवयज्वनः ॥ २४ ॥ एवं गते बहुतिथे तस्यां जज्ञे
महामतिः ॥ चैत्रे मेषे शुक्लपक्षे पंचम्यां गुरुवासरे ॥ २५ ॥ मध्याह्ने
कर्कटे लग्ने नक्षत्रे रुद्रदैवते ॥ कौसल्यायां यथा रामो यथादित्यां च
वामनः ॥ २६ ॥ देवक्यां तु यथा कृष्णो रोहिण्यां तु यथा हली ॥
तथा सुतो महातेजाः फणिराजो महाबलः ॥ अस्यावतारश्लोकाश्च
गीयंते प्रथिता भुवि ॥ २७ ॥ यथावतारान्मथुरा मुरारे रामस्य साके-
तपुरी च यद्वत् ॥ तथा यतींद्रस्य समागतेन पुण्यान्विता भूतपुरी
बभूव ॥ २८ ॥ चैत्राद्रासंभवं विष्णोर्दर्शनस्थापनोत्सुकम् ॥ तोंडी-
रमंडले शेषमूर्तिं रामानुजं भजे ॥ २९ ॥ पुत्रं दृष्ट्वा कांतिमती प्रोद्यं-
तमिव भास्करम् ॥ हर्षेणोत्फुल्लनयना मुमोद सह बंधुभिः ॥ ३० ॥
यज्वा तु केशवस्तत्र पुत्रं दृष्ट्वा तु सुंदरम् ॥ ब्राह्मणेभ्यो ददौ प्रीत्या

१ भगवन्तम्.।

वसुधान्यादिकं बहु ॥ ३१ ॥ ततः केशवदेवेन श्रीभूतपुरवासिना ॥ चोदितास्तेन ते सर्वे भूतपट्टनवासिनः ॥ ३२ ॥ श्रीरामानुजजन्मर्क्षे भूतपुर्यां गृहेगृहे ॥ तैलाभ्यंगैर्गंधचूर्णैरुत्सवं चक्रिरे जनाः ॥ ३३ ॥ तदाप्रभृति सर्वत्र भूम्यां रामानुजोत्सवः ॥ श्रीरामानुजजन्मर्क्षे विस्तारं समपद्यत ॥३४॥ श्रीरामकृष्णजन्मर्क्षं लोकेषु प्रथितं यथा॥तथा रामानुजार्यस्य जन्मर्क्षं लोकविश्रुतम् ॥ ३५ ॥ ततः श्रीशैलपूर्णार्यो भगिन्याः पुत्रसंभवम्॥श्रुत्वा हृष्टमना वेगात्तां भूतनगरीमगात् ॥ ३६॥ दृष्ट्वा बालं महात्मानं तेजोराशिमकल्मषम् ॥ मुमोदामानुषं मत्वा पुत्रं केशवयज्वनः ॥ ३७ ॥ द्वादशेऽहनि पुत्रस्य केशवो बंधुभिः सह ॥ तेन श्रीशैलपूर्णेन गुरुणामिततेजसा॥३८॥शङ्खचक्रांकनं पूर्वं कारयित्वाथ लीलया ॥ लोके रामानुज इति नाम चक्रे सुमंगलम् ॥ ३९ ॥ स बालो ववृधे नित्यं बालसूर्य इवोदितः ॥ द्विजाः सर्वे च तं दृष्ट्वा बालं सर्वांगशोभितम् ॥ ४० ॥ शेषो वा सैन्यनाथो वेत्युत्प्रेक्षां चक्रिरे तदा ॥ सर्वे ते विस्मयं प्रापुर्दृष्ट्वा बालस्य लक्षणम् ॥ ४१ ॥ यस्मिन्न क्षणे भुवि पदं व्यदधात्स बालस्तस्मिन् क्षणे कलिरहो सहसा विलिल्ये ॥ पापः पलायनपरस्सहसा पृथिव्यां धर्मो बभूव भगवान्स्वपदैश्चतुर्भिः ॥ ४२ ॥ मनोरविन्दानि महात्मकानां श्रीलक्ष्मणाचार्य्यरविप्रकाशात् ॥ निरस्तकालुष्यतमोभियोगात्सम्यग्विकासं प्रययुस्तदानीम् ॥ ४३ ॥ आजानुबाहुमरविंददृशं शुभांगं चन्द्राभमब्जदलकोमलपाणिपद्मम् ॥ बालं विलोक्य रमणं जितमर्त्यभावं मोदं जगाम जनकः प्रभया ज्वलंतम् ॥ ४४ ॥ बालं विलोक्य विबुधाः स्फुरदंशुजालमाचन्द्रवर्णममलं सुगुणालबालम् ॥ सम्यग्वितर्क्य बहुधाखिलदिव्यचिह्नैः शेषोयमेव भवितेति दृढं तमूचुः ॥ ४५ ॥ कृत्वान्नप्राशनं तस्य चौलं चापि यथाक्रमम् ॥ मौंजीबंधं चकारास्य पुत्रस्यामिततेजसः ॥ ४६ ॥ गर्भाष्टमे शुभदिने केशवार्यो महायशाः ॥ वेदान्स-

लक्षणांस्तस्य स्वयमेवोपदिश्य च ॥ विद्यास्नातस्य पुत्रस्य विवाहं कर्तुमुद्यतः ॥ ४७ ॥ ततस्तु षोडशे वर्षे पुत्रस्यादित्यवर्चसः ॥ विवाहं विधिना चक्रे स विप्रो वेदपारगः ॥ ४८ ॥ ततः स केशवो यज्वा कालेन महता तदा॥जगाम वैष्णवं लोकं नित्यमुक्तैः समावृतम्॥४९॥ पितुर्वियोगजं दुःखं ज्ञानेन विनिगृह्य सः ॥ पितृकार्याणि सर्वाणि चकार विधिना ततः ॥ ५० ॥ ततः स्वभार्यया सार्द्धं मात्रा रामानुजो महान् ॥ तस्मिन्नेव पुरे चासौ कंचित्कालमुवास ह ॥ ५१ ॥ अधीत्य सर्वशास्त्राणि ज्ञानं संपादयाम्यहम् ॥ इति बुद्धिः समुत्पन्ना लक्ष्मणार्यस्य निश्चयम् ॥५२॥ततो जनमुखाच्छ्रुत्वा यादवं विदुषां वरम्॥ तत्समीपे शास्त्रपाठं श्रोतुकामः कुशाग्रधीः ॥ ५३ ॥ भूतपुर्य्यां विहायाशु वासं रामानुजस्तदा ॥ कांच्यां वासं कुटुम्बेन साकं चक्रे महामनाः ॥५४॥ तदारभ्य प्रतिदिनं यादवस्य विपश्चितः ॥ समीपे शास्त्रपठनं चक्रे रामानुजः सुधीः ॥ ५५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे रामानुजार्यावतारादिकथनं नाम द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ।

ततो महाँल्लक्ष्मणदेशिकेंद्रः शास्त्रप्रवीणोपि तदर्थजातम् ॥ नित्यं पठंस्तत्त्वविदग्रगण्यस्समास्थितोऽभूत्किल यादवाग्रे ॥ १ ॥ कदाचिल्लक्ष्मणाचार्य्यं तं विलोक्य स यादवः ॥ तस्य बुद्धिविशेषं च तेजोरूपादिलक्षणम् ॥ २ ॥ अनंतोयमिति ज्ञात्वा तूष्णींभूतो दयान्वितः ॥ ततस्तद्देशपालस्य पुत्रीं रक्षोऽग्रहीन्महत् ॥ ३ ॥ बहवो मांत्रिका राज्ञः शासनादागतास्ततः ॥ असमर्थतया तेषामानयामास यादवम् ॥ ४ ॥ आज्ञां राज्ञः पुरस्कृत्य शिष्यसंघसमावृतः ॥ यादवः प्रययौ द्वारं राज्ञस्तस्य महात्मनः ॥ ५ ॥ स राजा यादवं दृष्ट्वा प्रत्युत्थायाभिवाद्य तम् ॥ तस्मै संदर्शयामास तां रक्षोभिहतां सुताम्॥ ॥ ६ ॥ तां कन्यां यादवो दृष्ट्वा शिष्यसंघसमावृतः ॥ शनैःशनैर्जप-

न्मंत्रान्कन्यकानिकटं ययौ ॥ ७ ॥ अमन्त्रयच्च तां कन्यां मंत्रैर्मंत्रविदां वरः ॥ ब्रह्मराक्षसवेताला यक्षभूतादयो ग्रहाः ॥ ८ ॥ यन्नामस्मरणादेव भृशं भीताः पलायिताः ॥ ब्रह्मरक्षस्तु तं दृष्ट्वा यादवं जपशीलिनम्॥९॥हुंकारेण विनिर्भर्त्स्यं दन्तान्कटकटापयन् ॥ प्रलयांबुदनिर्घोषतुल्यनादं व्यधात्तदा ॥ १० ॥ तेन संमोहितो विप्रः संचचाल स यादवः ॥ स ब्रह्मराक्षसो दृष्ट्वा यादवं भयमोहितम्॥ ११ ॥ प्रसार्य यादवस्याग्रे पादौ निःशंकितो भृशम् ॥ उवाच वाक्यं प्रहसन् गिरा गम्भीरया तदा ॥ १२ ॥ भो यादव किमर्थं त्वं शिष्यैः सह समागतः॥ मां निवारयितुं शक्यं न त्वया मणिमंत्रकैः ॥ १३ ॥ तेनोच्चाटनसामर्थ्यं नास्तिनास्तीति तेऽधुना ॥ जानाम्यहमनूचानः पूर्ववृत्तांतकारणात् ॥ १४ ॥ द्विजत्वहेतुकं कर्म किमकारि त्वया पुरा ॥ मया जन्मांतरे पापं ब्रह्मराक्षसहेतुकम् ॥ १५ ॥ इदं विचार्य सर्वं त्वं मदग्रे ब्रूहि तत्त्वतः ॥ ब्रह्मराक्षसवाक्यं तच्छ्रुत्वा विप्रो भयातुरः ॥ १६ ॥ न किंचिदुत्तरं तस्मै दत्तवाल्लँज्जयान्वितः ॥ स ब्रह्मराक्षसो दृष्ट्वा विमुखं भीतमानसम् ॥ १७ ॥ उवाच वाक्यं तं विप्रं गिरा गम्भीरया तदा ॥ त्वत्पूर्वजन्मवृत्तांतं वक्ष्यामि शृणु यादव ॥ १८ ॥ अग्रहारो महान्कश्चिन्मधुरांतिक इत्यभूत्॥ तस्य पश्चिमदिग्भागे तटाकोऽस्ति सपंकजः ॥ १९ ॥ तस्य सेतौ च वल्मीके गोधीभूत्वा त्वमास्थितः ॥ कदाचिद्वैष्णवः कश्चिद्वेदवेदांगपारगः ॥ २० ॥ आगत्य तस्मिन्सरसि स्नात्वा पाकं विधाय च ॥ निवेद्य विष्णवे सम्यक्तदन्नं परमात्मने ॥ २१ ॥ चकार तन्मना भूत्वा भोजनं ब्राह्मणोत्तमः ॥ तदोत्थाय जवाद्धीमान्कृतपादादिशोधनः ॥२२॥ उच्छिष्टपत्रं वल्मीकसमीपे विससर्ज सः॥ भवानागत्य वल्मीकाद्दृष्ट्वा पत्रं कुतूहलात् ॥ २३ ॥ तत्पत्रसंस्थितं चान्नं भुक्तं सर्वं क्षुधा त्वया ॥ तद्विशेषाद्द्विजकुले जातस्त्वमसि यादव ॥ २४ ॥ तदिदानीमुदर्केच्छुः कांतिमत्यात्मसंभवम् ॥ रामानुजं समाश्रित्य गच्छ लोकमनुत्तमम् ॥ २५ ॥ त्वत्पूर्वजन्मच-

रितमुक्तं खलु मयाऽधुना ॥ वक्ष्यामि येन पापेन ब्रह्मरक्षो भवं त्विह ॥ २६ ॥ श्रूयतां तत्पुरावृत्तमव्यग्रमनसा त्वया ॥ जातोहं ब्राह्मणकुले वेदवेदांगपारगः ॥ २७ ॥ भार्यया सह संयुक्तो यज्ञारंभकरोऽभवम्॥ मंत्रक्रियादिलोपेन ब्रह्मरक्षोऽभवं द्विज ॥२८॥ तदाप्रभृत्यनुदिनं सर्वसत्त्वभयंकरः ॥ पर्वतान्वनराजींश्च ग्रामांश्च नगराणि च ॥ ॥ २९ ॥ संचरन्निखिलान्देशान् कांचीं प्राप्तो यदृच्छया ॥ रमणीये पुरोद्याने संचरंतीं मनोरमाम् ॥ ३० ॥ कन्यां दृष्ट्वा मोहितोहं गृहीत्वा विगतज्वरः ॥ अनया विचराम्येतदर्थं नृपवराज्ञया ॥ ३१ ॥ नानाजनपदेभ्यश्च बहवो मंत्रवादिनः ॥ आगत्य भीता दृष्ट्वा ते दद्रुवुर्भयमोहिताः ॥ ३२ ॥ त्वया न शक्यं मंत्रेण मां निवारयितुं गृहात् ॥ ते सर्वमंत्रतंत्राणि यांति निष्फलतां मयि ॥ ३३ ॥निक्षिप्तान्यूषरे क्षेत्रे यथा बीजानि यादव ॥ यः शिष्यगणमध्ये तु समास्ते पुरुषोत्तमः ॥ ३४ ॥ रामानुज इति ख्यातः सर्वलक्षणशोभितः ॥ स तु पादेन मां स्पृष्ट्वा दत्त्वा पादोदकं शुभम् ॥ ३५ ॥ यदि दास्यत्यनुज्ञां मे गमिष्येहं यथासुखम् ॥ इति रक्षोवचः श्रुत्वा राजा हृष्टमनास्तदा ॥ ३६ ॥ रामानुजस्य चरणावभिवाद्य सभार्यया ॥ उवाच मधुरं वाक्यं लक्ष्मणार्यं महौजसम् ॥ ३७ ॥ रामानुज महाप्राज्ञ रक्षेमां कन्यकां मम ॥ त्वन्माहात्म्यं न जानामि शरणागतरक्षक ॥ ॥ ३८ ॥ ब्रह्मरक्षोवचोभिस्ते विदितं चरितं मया ॥ तद्वाक्यं राजसिंहस्य श्रुत्वा रामानुजस्तदा ॥ ३९ ॥ स्वपादौ तस्य शिरसि निक्षिप्य प्रीतिपूर्वकम् ॥ दत्त्वा पादोदकं तस्मै सम्यग्गच्छेति चाब्रवीत् ॥ ॥ ४० ॥ लक्ष्मणार्यस्य तद्वाक्यं श्रुत्वा प्रीतमनास्तदा ॥ तत्पादोदकपानेन राक्षसो ध्वस्तपातकः ॥ ४१ ॥ तां राजकन्यां विजहौ तनुं चात्मविनाशिनीम् ॥ दिव्यदेहधरः श्रीमान् विमानं सूर्यसन्निभम् ॥ ॥ ४२ ॥ आरुह्य प्रययौ स्वर्गमप्सरोगणसेवितम् ॥ ब्रह्मराक्षसनिर्मुक्त

शुशुभे राजकन्यका ॥ ४३ ॥ यथा रामपदस्पर्शान्मुक्तशापा ऋषि-
प्रिया ॥ रामानुजांघ्रिसंस्पर्शात्तथा सा राजकन्यका ॥ ४४ ॥ दुष्ट-
ग्रहेण निर्मुक्ता गगने रोहिणी यथा ॥ स राजा कन्यकां दृष्ट्वा
हर्षेणोत्फुल्ललोचनः ॥ ४५ ॥ रामानुजस्याभिषेकं सुवर्णेनाकरो-
त्तदा ॥ यादवस्यापि सत्कारं कृत्वा हृष्टोऽभवत्तदा ॥ ४६ ॥ यादव-
स्सह शिष्यैश्च समागत्य स्वमालयम् ॥ परपूजां स्वावमानं स दृष्ट्वा
दुःखितोऽभवत् ॥ ४७ ॥ रामानुजोपि तद्द्रव्यं यादवाय ददौ मुदा ॥
तद्द्रव्यं प्रतिगृह्यापि यादवो दीर्घमत्सरः ॥ ४८ ॥ चक्रे रामा-
नुजे वैरं कांतिमत्यात्मसंभवे ॥ तस्मिन्काले विप्रवर्यो गोविंद
इति विश्रुतः ॥ ४९ ॥ द्युतिमत्यात्मजः श्रीमाँल्लक्ष्मणार्यस्य
वैभवम् ॥ श्रुत्वातिमानुषं सम्यङ् मुमोद तदनुत्तमम् ॥ ५० ॥
भ्रातरं लक्ष्मणाचार्य्यं द्रष्टुकामः कुशाग्रधीः ॥ मात्रा चैवाभ्यनुज्ञातः
पुरीं कांचीमगात्ततः ॥ ५१ ॥ ददर्श यादवस्याग्रे रामानुजमनुत्तमम्
॥तं मातृष्वस्रियं दृष्ट्वा लक्ष्मणार्यः समागतम्॥५२॥हर्षेण महता युक्तः
सस्वजे प्रीतिपूर्वकम्॥गोविंदोऽपि तदारभ्य समीपे यादवस्य सः॥५३॥
सह रामानुजार्य्येण शास्त्रं वेदांतनामकम् ॥ पठन्हृष्टमना भूत्वा तत्रै-
वास्ते द्विजोत्तमः॥ ५४ ॥सत्यश्रुतौस्तु वेदांते यादवोऽपार्थमुक्तवान्॥
स तं श्रुत्वा लक्ष्मणार्यो यादवं प्रत्यभाषत ॥ ५५॥ शृणु यादव मद्वा-
क्यं वेदार्थप्रतिपादकम् ॥श्रुतेरपार्थविषयं किमुक्तं भवताधुना ॥५६॥
सत्यज्ञानादिवाक्यानि वदंति ब्रह्मणो गुणान् ॥ सदेवेत्यादिवाक्यानि
तत्त्वमस्यादिकानि च॥ ५७ ॥ रामानुजस्य तद्वाक्यं श्रुत्वा कोपसम-
न्वितः ॥ प्रोवाच यादवो भूयः सर्वशास्त्रार्थकोविदम् ॥ ५८ ॥ शिक्ष-
को वा त्वमस्माकं गुरुर्वा शठ दुर्मते ॥ इति निर्भर्त्सयामास कलिना
मोहितो द्विजः ॥५९॥ ततो रामानुजः प्राज्ञः स्वगृहं प्राप्य नित्यशः ॥
पूर्वाधीतान्महाग्रंथान्पुनरालोकयन्स्थितः ॥ ६० ॥ रामानुजोप्ये-

वसुदारबुद्धिस्त्यक्त्वा तदा तस्य गुरोर्निवासम् ॥ उवास संतुष्टमनाः स्वगेहे वेदांततत्त्वार्थविचारदक्षः॥ ६१ ॥इति श्रीप्रपन्नामृते रामानुजचरित्रे ब्रह्मराक्षसमोचनं नाम तृतीयोध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ।

ततः कदाचिदेकांते यादवो दीर्घमत्सरः ॥ शिष्यानातान्समाहूय वाक्यमेतदभाषत ॥ १ ॥ अहं द्विजानां सर्वेषां प्रसिद्धः पंडितोत्तमः ॥ अपार्थं श्रुतिवाक्यानां किमर्थं चोक्तवानहम् ॥२॥ विदिता भवतामेषा प्रतीतिः पंडितेषु मे ॥ सर्वासु वादगोष्ठीषु नावमानः कदाचन ॥ ३ ॥ बहु कुर्वंति मां सर्वे वेदवेदांगपारगाः ॥किमत्र वाच्यं यदहं रक्षसा चावमानितः ॥ ४ ॥ पश्यत्स्वेव च सर्वेषु लक्ष्मणार्यस्य सन्निधौ ॥ मम शिष्यस्य बालस्य स्वल्पबुद्धेश्च पूजनम् ॥ ५ ॥ दृष्ट्वा ममावमानं च शोचामि सततं द्विजाः ॥ ग्रंथात्रामानुजः सर्वानधीत्य मम सन्निधौ ॥६॥ दूषयत्येव मां नित्यमुक्तोपार्थः श्रुतेरिति ॥ अभून्मे सहजः शत्रुरहो रामानुजः सुधीः ॥ ७ ॥ बुद्ध्या बृहस्पतेस्तुल्यस्तेजसैव विभावसोः ॥ अद्वैतखंडनार्थाय जातः केशवयज्वनः ॥८॥ केनोपायेन तं विप्रं वधिष्याम्यात्मनो रिपुम् ॥ तच्छ्रुत्वा विप्रबालास्ते तमूचुर्यादवं तदा ॥ ९ ॥ भो यादव महाप्राज्ञ मागमस्त्वं मनोव्यथाम् ॥तिष्ठत्सु प्रियशिष्येषु मादृशेषु तवांतिके ॥ १० ॥ येन केनाप्युपायेन नाशयामोथ बालकम् ॥ शिष्याणां वचनं श्रुत्वा हिताहितसमन्वितम्॥११॥ पुनः प्रोवाच धर्मज्ञः शिष्यानात्मगतं वचः ॥ रामानुजस्य मरणे ह्युपायश्चिंतितो मया ॥ १२ ॥ गंगायात्रां समुद्दिश्य वयं गच्छाम बालकाः ॥ प्रयत्नेन तमादाय शत्रुं रामानुजं ततः ॥ १३ ॥ गत्वा त्रिवेणीमव्यग्राः सर्वकल्मषनाशिनीम् ॥ तस्यां क्षिपामस्तमिति बुद्धिरासीन्ममाधुना॥ १४ ॥ एवं कृते ततोऽस्माकं ब्रह्महत्या न विद्यते ॥

गुरोर्वाक्यं समाकर्ण्य शिष्यास्ते विप्रबालकाः ॥ १५ ॥ प्रशशंसु-र्नृशंसं तं रावणं राक्षसा यथा ॥ ततश्शिष्यैः समानीतं तेजोराशिमरिं-दमम् ॥ १६ ॥ रामानुजमुवाचेदं यादवो मधुराक्षरम् ॥ रामानुज महाप्राज्ञ किमर्थं नागतो भवान् ॥ १७ ॥ शिष्ये त्वयि कृता शिक्षा सा कोपाय तवाऽभवत् ॥ सर्वेभ्यः प्रियशिष्येभ्यः प्रीतिस्त्वयि ममा-धिका ॥ १८ ॥ न त्वया सदृशः कश्चित्पुमाल्लोकेषु विद्यते ॥ पर्व-तानां यथा मेरुर्धेनूनां कामधुग्यथा ॥ १९ ॥ तथा त्वं सर्वलोकेषु प्रसिद्धो भवसि ध्रुवम् ॥ मत्प्रसादात्पूर्णविद्यो भव रामानुजोत्तम ॥ २० ॥ त्वद्वियोगान्मम मनो भृशं शोचत्यहर्निशम् ॥ तद्वाक्यं यादवेनोक्तं विषमिश्रामृतोपमम् ॥ २१ ॥ श्रुत्वा रामानुजः प्रीत-स्तथ्यं मेने महामनाः ॥ तदा प्रभृत्यनुदिनं समीपे यादवस्य सः ॥ ॥ २२ ॥ रामानुजोप्यधीयानः शास्त्रं नित्यं समास्थितः ॥ ततो रामानुजं प्राह यादवः परवंचकः ॥ २३ ॥ माघस्नानं प्रयागे तु स्वर्गादिफलदं किल ॥ तस्मादहं गमिष्यामि प्रयागं शिष्यसंवृतः ॥ ॥ २४ ॥ भवता गंतुकामोहं युक्तं यदि तथा कुरु ॥ यादवस्य वचः श्रुत्वा मात्रानुज्ञापितस्तदा ॥ २५ ॥ रामानुजश्च प्रययौ जाह्नवीं यादवेन सः ॥ तत्कौटिल्यं यादवस्य विदित्वा तत्क्रियादिभिः ॥ ॥ २६ ॥ रामानुजाय गोविंदो वक्तुकामः समास्थितः ॥ कदाचिं-द्विंध्यमार्गेथ यादवः शिष्यसंवृतः ॥ २७ ॥ पुरो मृगगणाकीर्णे विना रामानुजं ययौ ॥ आयांतं दूरतो दृष्ट्वा गोविंदो भ्रातरं पथि ॥ ॥ २८ ॥ स्थित्वा मुहूर्तं सौहार्दाद्रामानुजमथाब्रवीत् ॥ रामानुज महाप्राज्ञ जाह्नवीस्नानकैतवात् ॥ २९ ॥ जिघांसुस्त्वां त्वया सार्द्धं गच्छत्येवमतंद्रितः ॥ स्थातव्यमप्रमादेन त्वया रामानुजोत्तम ॥ ॥ ३० ॥ एवमुक्त्वा स गोविंदस्तेनानुज्ञापितो जवात् ॥ ययौ शीघ्रं गुरुभयाद्गोविंदो भ्रातृवत्सलः ॥ ३१ ॥ रामानुजस्तु तद्वाक्यं गोविंदवदनाच्युतम् ॥ श्रुत्वा मार्गं विहायाथ वृक्षमूले समास्थितः ॥ ३२ ॥

वर्षेण महता तस्मिन्यादवः पीडितो वने ॥ प्रपीडया गतः सायं जलक्लिन्नोऽनुगैः सह ॥ ३३ ॥ ततो विलोक्य गोविंदं पथि रामानुजं विना ॥ आयांतं यादवो वाक्यमुवाच मधुराक्षरम् ॥ ॥ ३४ ॥ विहाय लक्ष्मणाचार्यं त्वमेकाकी समागतः ॥ क्व स्थितोसौ तेन विना नैवागंतुमिहार्हसि ॥ ३५ ॥ यादवस्य वचः श्रुत्वा गोविन्दः प्रत्युवाच तम् ॥ अग्रे प्रयातो भवतो लक्ष्मणार्यो महामतिः॥ ३६ ॥ इति विज्ञातुकामोऽहमागतोस्मि तवांतिकम् ॥ ततः शिष्यान्समाहूय यादवो वाक्यमब्रवीत् ॥३७॥ रामानुजं विचिन्वध्वं मार्गे वृक्षसमाकुले ॥ इति तद्वाक्यमाकर्ण्य तदन्वेषणतत्पराः ॥ ३८॥ वनं विलोक्य तत्सर्वं यादवाय न्यवेदयन् ॥वनमन्वेषितं सम्यगस्माभिः शीघ्रगामिभिः ॥ ३९ ॥ रामानुजं न पश्यामस्तमसा बंधुरे वने ॥ शिष्योदीरितमाकर्ण्य गोविंदप्रियमावहन् ॥ ४० ॥ कुहनाद्दुःखसंविष्टो यादवो दुःखितोऽभवत् ॥ ततः स यादवस्तत्र प्रियशिष्यैः समावृतः ॥ ४१ ॥ अन्तः सन्तोषसंयुक्तः सुखं शेते स्म पापकृत् ॥ संत्यज्य घोरे वनमध्यभागे बालं स तं निश्चलचित्तवृत्तिः ॥ गंगावगाहस्य फलं ममेदं मत्वेति निद्रामगमद्दुरात्मा ॥ ४२ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे यादवप्रकाशगंगायात्रायां विंध्यारण्ये रामानुजार्य्यविसर्जनं नाम चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ।

ततो रामानुजो धीमान् निर्मनुष्ये महावने ॥ अनन्यमानसो भूत्वा दध्यौ श्रीकेशवं हरिम् ॥ १ ॥ ततो भक्तपराधीनः श्रीहस्तिगिरिनायकः ॥ श्रिया सह समायुक्तः शरणागतरक्षकः ॥ २ ॥ बद्धगोधांगुलित्राणो धनुष्पाणिः शरान्दधत् ॥ उपानद्गूढपादश्च पीतांबरधरो युवा ॥ ॥ ३ ॥ व्याधवेषं समास्थाय ययौ रामानुजं प्रति ॥ रामानुजोपि तं दृष्ट्वा व्याधं पत्नीसमन्वितम् ॥ ४ ॥ उवाच वाक्यं मधुरमतिविस्मय-

मानसः ॥ कस्त्वं व्याध स्त्रिया साकं क्व गच्छसि महावने ॥ ५ ॥ किमागमनकार्यं ते वक्तव्यं कुतुकं मम ॥ इत्युक्तस्तमुवाचेदं व्याध-रूपी परः पुमान् ॥ ६ ॥ अहं गच्छामि विप्रेंद्र क्षेत्रं सत्यव्रतं शुभम् ॥ त्वमस्मिन्विजनेऽरण्ये मृगव्याघ्रसमाकुले॥ ७ ॥कस्माच्चरसि चैकाकी को देशः कुत्र गम्यते॥ व्याधस्य वचनं श्रुत्वा लक्ष्मणार्य्यः प्रहृष्टधीः ॥ ८ ॥ उवाच वाक्यं मधुरं तं हरिं व्याधरूपिणम् ॥ प्रयागं गंतुकामोहं निर्गतः कांचिकात्पुरा ॥ ९ ॥ एकाकी विजनेऽरण्ये केनचिद्धेतुना स्थितः ॥ यातुकामः पुनरपि क्षेत्रं सत्यव्रतं प्रति ॥ १० ॥ असहाय-तया कंचित्पुरुषं चिंतयाम्यहम् ॥ इति तद्वाक्यमाकर्ण्य व्याधरूपी हरिस्तदा ॥ ११॥ रामानुजं समादाय ययौ सत्यव्रतं प्रति ॥ क्रोश-मात्रे गते दूरे रविरस्तं गतोऽभवत्॥ १२ ॥ तद्रात्रौ वृक्षमूले तौ शयाते व्याधदंपती ॥ रामानुजस्तत्समीपे वृक्षमूले समास्थितः ॥ १३ ॥ तद्रात्रौ व्याधवनिता व्याधं प्रत्याह चादरात् ॥ पिपासा बाधते नाथ पानीयं दीयतां मम ॥ १४ ॥ पत्नीवचनमाकर्ण्य व्याधरूपी हरिस्त-दा ॥ उवाच व्याधवनितारूपिणीं श्रियमादरात् ॥ १५ ॥ विद्यतेंबु विशालाक्षि निकटे चारुहासिनि ॥ वर्त्तते तत्र पानीयं स्वच्छं सज्जन-चित्तवत् ॥ १६॥ वनप्रदेशो गहनो महता तमसा वृतः॥अधुना नीर-मानेतुं मया शक्यं न शोभने ॥ १७ ॥ रामानुजोथ तच्छ्रुत्वा व्याधे-नोक्तं प्रियां प्रति ॥ उवाच प्रीतियुक्तात्मा व्याधं पत्नीसमन्वितम् ॥ ॥ १८ ॥ दिष्ट्या सहायहेतोर्मे ह्यागतौ लोकदंपती ॥ व्याधरूपधरौ नूनमिति मे निश्चिता मतिः ॥ १९ ॥ असमर्थोस्मि युवयोः प्रदातुं जलमप्यहम् ॥ प्रातस्तथापि दास्यामि युवाभ्यां जलमुत्तमम् ॥ २० ॥ इत्युक्त्वा तौ महाप्राज्ञस्तूष्णीमास्ते महानिशि ॥ प्रभातायां तु शर्व-र्यां व्याधरूपी हरिः स्वयम् ॥ २१ ॥ रामानुजं महात्मानमुवाच सह भार्यया ॥ स्वच्छं जलं ददामीति क्षपायां भाषितं त्वया ॥२२॥अत्रासन्ने

देहि तात विद्यते च शुभं जलम् ॥ हस्ताभ्यां जलमादाय शीघ्रं दातव्यमेव नौ ॥ २३ ॥ इति तद्वाक्यमाकर्ण्य जवाल्लक्ष्मणदेशिकः ॥ हस्ताभ्यां जलमादाय ददौ व्याधाय भक्तितः ॥ २४ ॥ त्रिवारं तु जलं दत्त्वा भूयो लक्ष्मणदेशिकः॥पाणिभ्यां जलमुद्धृत्य नापश्यद्व्याधदंपती ॥ २५ ॥ कूपाद्बहिर्विनिर्गत्य चिंताव्याकुलितेंद्रियः ॥ ततो जनपदान् ग्रामान् नदीं च श्वेतवालुकाम् ॥ २६ ॥ मनोहरं च पंथानं दृष्ट्वाश्चर्यमवाप सः ॥ समागतांश्च् जनान् दृष्ट्वा संतुष्टो वाक्यमब्रवीत ॥ २७ ॥ जनाः शृणुध्वं मद्वाक्यं यूयं कस्मादिहागताः ॥ अस्य देशस्य किं नाम तत्त्वतो ब्रूत मेऽनघाः ॥ २८ ॥ रामानुजस्य तद्वाक्यं श्रुत्वा ते वाचमब्रुवन् ॥ इदं सत्यव्रतं क्षेत्रं भुक्तिमुक्तिप्रदं शुभम् ॥२९॥ अविदूरे प्रकाशंते गोपुराणि समंततः ॥ इयं क्षीरनदी पुण्या पुरोद्यानवनं शुभम् ॥ ३० ॥ इदं प्रकाशते वृक्षैस्सदा पुष्पफलान्वितैः ॥ इति तद्वाक्यमाकर्ण्य दृष्ट्वा कांचीपुरीं तदा ॥३१॥ अयं हस्तिगिरीशस्य प्रभावः परमात्मनः ॥ इति मेने महाप्राज्ञः सम्यगाश्चर्यमानसः ॥ ३२॥ ततो रामानुजः स्वीयं गृहं गत्वा मुदान्वितः ॥ मात्रे निवेदयामास सर्वं वृत्तांतमादरात् ॥ ३३ ॥ कांचीपुरीजनाः सर्वे रामानुजमुपागतम् ॥ दृष्ट्वा श्रुत्वा तत्कथां च विस्मयाविष्टचेतसः ॥३४॥रामानुजं पुनर्जातं मन्यंते हृष्टमानसाः ॥ पुत्रं कांतिमती दृष्ट्वा जगाद वचनं हितम्॥३५॥ शृणु वत्स प्रवक्ष्यामि हितार्थं भवतोऽधुना ॥ अस्मिन्सत्यव्रतक्षेत्रे कश्चित्तुर्यकुलोद्भवः ॥ ३६ ॥ कांचीपूर्ण इति ख्यातो नित्यं हरिपरायणः ॥ शबर्य्यंशेन संभूतः शमादिगुणसंयुतः॥ ३७ ॥ नित्यं वरदराजस्य कैंकर्याणि यथाक्रमम् ॥ कुर्वन्ननन्यमनसा तत्पादध्यानतत्परः ॥ ३८ ॥ अंतरंगोऽभवत्तस्य हरेः सर्वांतरंगिणः ॥ तस्मै निवेदय स्वीयं वृत्तांतं मार्गसंभवम् ॥ ३९ ॥ इत्यनुज्ञापितो मात्रा लक्ष्मणार्य्यः कृतत्वरः ॥ कांचीपूर्णस्य निलयं संप्राप्य विनयान्वितः

॥ ४० ॥ कांचीपूर्णाय तत्सर्वं वृत्तांतमवदत्तदा ॥ कांचीपूर्ण-
तच्छ्रुत्वा रामानुजमथाब्रवीत् ॥ ४१ ॥ रामानुज महाप्राज्ञ त्वयि-
स्ति करुणा हरेः ॥ तस्मात्त्वमापदो मुक्तः कांतिमत्यात्मसंभव
॥ ४२ ॥ पातुकामो हरिर्नित्यं त्वयानीतं शुभं जलम् ॥ व्याधवेषं
समास्थाय श्रीहस्तिगिरिनायकः ॥ ४३ ॥ याचित्वा त्वां देवराज-
स्त्वया दत्तं पयः शुभम् ॥ पीत्वा विष्णुः श्रिया सार्द्धमंतर्धानं
गतो हरिः ॥ ४४ ॥ अतस्त्वं देवराजाय नित्यं भक्त्या महात्मने ॥
तत्कूपान्नीरमादाय स्वर्णकुंभेन तत्प्रियम् ॥ ४५ ॥ समर्पयाशु हरये
निशम्य वचनं मम ॥ कांचीपूर्णस्य तद्वाक्यं श्रुत्वा रामानुजस्तदा
॥ ४६ ॥ तमुवाच महात्मानं कांचीपूर्णं कुशाग्रधीः ॥ करिष्यामि न
संदेहस्तव वाक्यं हितान्वितम् ॥ ४७॥ वेदांतैर्मृग्यमाणस्य ब्रह्माद्यैरपि
सर्वदा ॥ वरदस्यांतरंगस्य तव वाक्यं शुभान्वितम् ॥४८॥ न करोति
महाभक्त्या कः प्राज्ञः करुणानिधे॥ इत्युक्त्वा लक्ष्मणाचार्यः कांचीपूर्णं
हितैषिणम् ॥ ४९ ॥ तेनानुज्ञापितो गत्वा स्वगृहं हृष्टमानसः ॥ मात्रे
निवेद्य तत्सर्वं तयानुज्ञापितस्तदा ॥५०॥ तत्कूपाज्जलमादाय स्वर्ण-
कुंभेन नित्यशः ॥ नागाचलनिवासाय नित्याय परमात्मने॥वरदाया-
प्रमेयाय गोविन्दाय महात्मने॥५१॥ भक्त्या समर्पयन्नास्ते ध्यायंस्त-
त्पादपंकजम्॥निवृत्तदुःसंगतिराप्तवाक्यात्संप्राप्तसत्संगतिरार्य्यवर्य्यः॥
विख्यातकीर्तिः करिशैलनाथकैंकर्यमार्गेण रराज कांच्याम् ॥ ५२ ॥
इति श्रीप्रपन्नामृते रामानुजचरित्रे कांचीपूर्णाज्ञया देवराजाय शाल-
कूपसलिलसमर्पणं नाम पंचमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ।

ततो महाँल्लक्ष्मणदेशिकेंद्रः कांचीपुरे सर्वजनप्रसिद्धः ॥ श्रीवि-
ष्णुकैंकर्य्यरतैकचित्तो रेजे यथा विष्णुपुरे फणींद्रः ॥ १ ॥ तस्मि-
न्काले रंगधाम्नि यामुनार्य्यः कृपानिधिः ॥ वेदवेदांतसंपन्नस्तुर्याश्रम-

मुपास्थितः ॥ २ ॥ पंचसंस्कारसंपन्नः परवादिभयंकरः ॥ सिंहासनां-
शसंभूतः शीलादिगुणसंयुतः ॥ ३ ॥ शिष्यैः परिवृतो नित्यं शरणा-
गतरक्षकः ॥ श्रीमद्वैष्णवसिद्धांतपालकः संबभूव सः ॥ ४ ॥ एवं-
विधो यामुनार्यो विद्वद्भिः सह संगतः ॥ कदाचिच्छठजिद्ग्रंथं
विलोक्य ध्यानमास्थितः ॥५॥ ततः शिष्यान्समाहूय यामुनो वाक्य-
मब्रवीत् ॥ यूयं सर्वेषु देशेषु विचिन्वध्वं ममाज्ञया ॥ ६ ॥ यत्र
बालं महाप्राज्ञं सर्वलक्षणशोभितम् ॥ विष्णुभक्तिसमायुक्तं शमा-
दिगुणसंयुतम् ॥ ७ ॥ सर्वशास्त्रार्थतत्त्वज्ञं सततं प्रियवादिनम् ॥
सदाचारसमायुक्तं सज्जनप्रतिपूजितम् ॥ ८ ॥ एवंविधं नरं दृष्ट्वा
ममाख्यात द्विजोत्तमाः ॥ यामुनार्यस्य वचनं श्रुत्वा शिष्याः समा-
गताः॥९॥ देशेदेशे तु पुरुषमुक्तलक्षणलक्षितम् ॥ विचिन्वंतः शिष्य-
जनाः पुरीं कांचीं समागताः ॥ १० ॥ तत्र रामानुजं दृष्ट्वा श्रुत्वा तस्य
कथामपि ॥ रंगक्षेत्रं समागम्य यामुनाय न्यवेदयन् ॥ ११ ॥ रामा-
नुजस्य वृत्तांतं श्रुत्वा शिष्यजनात्तदा ॥ यामुनार्यो द्रष्टुकामः कांति-
मत्यात्मसंभवम् ॥१२॥ व्याधिना पीड्यमानोऽसावसमर्थोऽभवत्तदा॥
यादवोऽपि ततो गंगां संप्राप्य स्वेच्छया पराम् ॥ १३ ॥ माघस्नानं
तत्र कुर्वन्नास्ते शिष्यजनैस्सह ॥ गंगायां कुर्वतस्तस्य स्नानं भक्त्यारु-
णोदये ॥ १४ ॥ गोविंदस्याभवत्पाणौ शिवलिंगं जलात्तदा ॥ गोविंदो
दर्शयामास गुरवे विस्मयान्वितः॥१५॥ तल्लिंगं यादवो दृष्ट्वा सव्यहस्त
स्थितं शुभम् ॥ गोविंदं प्रत्युवाचेदं यादवो विदुषां वरः॥१६॥गोविंद-
विश्वनाथस्ते प्रसन्नः करुणाकरः ॥ माघस्नानात्तु संतुष्टोऽभवद्रुद्रोऽम-
राधिपः ॥ १७ ॥ एवमुक्त्वा तु गोविंदं यादवो विदुषां वरः ॥ आमा-
घमासं गंगायास्तीरे स्थित्वा महामनाः ॥ १८ ॥ स्नानं च सर्वतीर्थेषु
कृत्वा शिष्यजनैः सह ॥ कांचीपुरीं पुनरगात्कृतकृत्यः स यादवः ॥
गोविंदस्तु महाप्राज्ञो यादवेन महात्मना ॥१९॥ कांचीपुर्यां समासाद्य

साकं तत्र विसृज्य तम् ॥ स्वीयं श्रीमंगलग्रामं तदनुज्ञापितो गतः ॥ २० ॥ गंगांभश्च समानीतं शिवलिंगं तदद्भुतम् ॥ तस्मिन्ग्रामे प्रतिष्ठाप्य कृत्वा भस्मादिधारणम् ॥२१॥ कालहस्तिपुरं प्राप्य नत्वा रुद्रमुमापतिम् ॥ तत्र संपूजयन्नित्यं गोविंदः सुखमास्थितः ॥ २२ ॥ तस्य रामानुजस्याथ विंध्यारण्यादिहागतम् ॥वृत्तांतमन्यतस्सर्वं जनादाकर्ण्य यादवः ॥२३॥ अत्यन्तसाध्वसमना विस्मयेन समन्वितः॥ रामानुजेऽस्मिन् वैरेण हानिरेव भविष्यति ॥ २४ ॥ इत्यालोच्य तदा चित्ते शिष्यैः सह स यादवः ॥ पुनश्चैवं समालोच्य यादवो निश्चितक्रियः ॥ २५ ॥ सख्यं रामानुजार्येण चक्रे शिष्यमुखात्तदा ॥ शास्त्रप्रदातुरत्यंतमभावाद्यादवादृते ॥ २६ ॥ पुनः श्रीलक्ष्मणाचार्यः तस्माद्विद्वान्महामतिः ॥ यादवाच्च यथापूर्वं संगृह्णन्सुखमास्थितः ॥ ॥२७॥ शास्त्राभिलाषात्सुतरां महात्मा संत्यज्य देवेश्वरदास्यकृत्यम्॥ कांचीपुरे लक्ष्मणदेशिकेंद्रस्तस्यांतिके पूर्ववदास्थितोऽभूत् ॥ २८ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे गोविंदस्य कालहस्तिवासो नाम षष्ठोऽध्यायः ॥ ६ ॥

---

## सप्तमोऽध्यायः ।

ततः कदाचिच्छ्रीरंगाद्यामुनः शिष्यसंवृतः ॥ रामानुजं द्रष्टुकामः पुरीं कांचीं ययौ जवात् ॥ १॥ स्वाचार्यागमनं श्रुत्वा कांचीपूर्णो गुरुप्रियः ॥ प्रत्युज्जगाम सहसा भक्तैः पुरजनैः सह ॥ २ ॥ यामुनार्यो महाप्राज्ञः कांचीपूर्णेन संगतः ॥ सन्निधिं देवराजस्य संप्राप्य विनयान्वितः ॥ ३ ॥ विराजमानं हस्त्यद्रौ वरदं भक्तवत्सलम् ॥ पद्मपत्रविशालाक्षं पूर्णेंदुसदृशाननम् ॥ ४ ॥ कोटिसूर्यप्रतीकाशं कोमलावयवोज्ज्वलम्॥ शंखचक्रधरं देवं शरणागतरक्षकम् ॥ ५ ॥ श्रीभूमिसहितं विष्णुं दृष्ट्वा हर्षसमन्वितः ॥ कृत्वा प्रदक्षिणं सम्यग्ववंदे चरणौ हरेः ॥ ६ ॥ यथाशक्ति स्तुतिं कृत्वा मंगलं कर्तुमुद्यतः ॥ श्रीहस्तिगिरिनिवासाय मंग-

लं मधुवैरिणे ॥ ७ ॥ वैकुंठलोकनाथाय मंगलं विश्वरूपिणे ॥ भक्ताभीष्टप्रदायास्तु मंगलं परमात्मने ॥ ८ ॥ परब्रह्मस्वरूपाय मंगलं करुणाब्धये ॥ पीतांबरधरायास्तु मंगलं कंसवैरिणे ॥९॥ इत्येवं मंगलं कृत्वा यामुनार्यो हरिप्रियः ॥ तत्तीर्थं शठकोपं च तत्प्रसादं सुपावनम् ॥१०॥ आदाय प्रेमयुक्तात्मा द्रष्टुकामः स यामुनः ॥ रामानुजं महाप्राज्ञं तच्छैलान्निर्गतस्तदा ॥ ११ ॥ तस्मिन्काले यादवश्च शिष्यैः परिवृतो द्विजः ॥ वसंतं वारणगिरौ वरदं भक्तवत्सलम् ॥ १२ ॥ संसेवितुं समायातो लक्ष्मणार्येण धीमता ॥ ततः समागतान्दृष्ट्वा शिवभक्तान् द्विजान् मुनीन् ॥ १३ ॥ कांचीपूर्णमुवाचेदं यामुनार्यो विशेषवित् ॥ द्विजवृंदं समायाति कांचीपूर्ण विलोकय ॥ १४ ॥ सर्वेषां पुरतः कश्चिदेकदंडी समागतः ॥ कांचीपूर्ण समाख्याहि तस्य वृत्तांतमादरात् ॥ १५ ॥ यामुनार्यस्य तद्वाक्यं श्रुत्वा प्रीतमनास्तदा ॥ कांचीपूर्णो यामुनार्यमुवाच वचनं गुरुम् ॥ १६ ॥ स एष यामुनाचार्य यादवो नाम विश्रुतः ॥ सर्वशास्त्रेषु निपुणः सर्वमंत्रविशारदः ॥१७॥ स्वमतस्थापको धीमान्परपक्षविनाशकः ॥ शिष्याणां पुरतो याति दंडमुद्यम्य वेगतः ॥१८॥ अस्यैव निकटे नित्यं कांतिमत्यात्मसंभवः ॥ रामानुजः पठन्नास्ते शास्त्रं वेदांतनामकम् ॥ १९ ॥ पश्येमं यामुनाचार्य्य लक्ष्मणार्यं शुचिस्मितम् ॥ आयांतं विप्रमध्ये तु स्वहस्तेन सुशोभिना ॥ २० ॥ सख्युर्विप्रस्य बालस्य हस्तं संगृह्य चादरात् ॥ दीर्घबाहुं विशालाक्षं निम्ननाभिं तनूदरम् ॥ २१ ॥ कंबुकंठं स्निग्धकेशं पूर्णचन्द्रनिभाननम् ॥ विशालवक्षो बिंबोष्ठमुन्नतांसं जनप्रियम् ॥ ॥ २२ ॥ सम्यक् समविभक्तांगं स्निग्धवर्णं सुलक्षणम् ॥ क्षीराब्धिफेनसंकाशवस्त्रद्वयविराजितम् ॥ २३ ॥ सुवर्णकटिसूत्रेण शोभमानं सुशोभिना ॥ नवरत्नविकीर्णाभ्यां कुण्डलाभ्यां विराजितम् ॥ २४ ॥ बिसतंतुनिभैः शुभ्रैर्ब्रह्मसूत्रैर्विराजितम् ॥ छिद्रोर्द्ध्वपुण्ड्रसंयुक्तललाटेनातिशोभितम् ॥ तमेवं हि यतिश्रेष्ठ रा-

मानुजमकल्मषम् ॥ २५ ॥ रामानुजस्य वृत्तांतं विंध्यारण्योद्भवं तदा ॥ सर्वं निवेदयामास यामुनाय महात्मने ॥ २६ ॥ कांचीपूर्णस्य तद्वाक्यं मुनिः श्रुत्वा स यामुनः ॥ रामानुजं लोचनाभ्यां संवीक्ष्य प्रेमपूर्वकम् ॥ २७ ॥ तेन संभाषणं कर्तुमुद्युक्तो यामुनोऽभवत् ॥ यद्ययं हि समाहूतो लक्ष्मणार्यो मयांतिकम् ॥ २८ ॥ नायाति यत्तु वा बालो ह्यसज्जनसमावृतः ॥ मनस्येवं समालोच्य यामुनार्य्यः कृपानिधिः ॥ वरदं प्रार्थयामास तस्य विज्ञानसिद्धये ॥ २९ ॥ यस्य प्रसादकलया बधिरः शृणोति पंगुः प्रधावति जवेन च वक्ति मूकः ॥ अंधः प्रपश्यति सुतं लभते च वंध्या तं देवमेव वरदं शरणं गतोस्मि ॥३०॥लक्ष्मीश पुंडरीकाक्ष कृपां रामानुजे तव ॥ निधाय स्वमते नाथ प्रविष्टं कर्तुमर्हसि ॥ ३१ ॥ इति विज्ञापनं कृत्वा वरदं प्रति भक्तितः॥ शिष्यैः सर्वैः परिवृतो यामुनार्यो दयानिधिः ॥ भूयः श्रीरंगनगरं प्रपेदे वनशोभितम् ॥ ३२ ॥ निर्गत्य कांचीनगरात्सशिष्यः श्रीरंगमासाद्य स यामुनार्य्यः ॥ रामानुजस्याभ्युदयं चिकीर्षुस्ततस्तोत्ररत्नं प्रचकार धीरः॥३३॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे रामानुजदर्शनार्थं कांचीं प्रति यामुनाचार्यागमनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

## अष्टमोऽध्यायः ।

ततो वेदांतशास्त्राणि पठँल्लक्ष्मणदेशिकः ॥ पूर्ववद्यादवस्याग्रे तस्थौ स ब्रह्मचारिभिः ॥१॥ कदाचिद्यादवस्याथ लक्ष्मणार्य्यो महामतिः ॥ तैलेनाभ्यंजनं कुर्वन् शृण्वञ्छास्त्रं समास्थितः ॥ २ ॥ स विप्रो यादवोऽपार्थं श्रुतेः शिष्यान् वदन् स्थितः ॥ रामानुजस्तु तच्छ्रुत्वा दुःखाविष्टोऽभवत्तदा ॥ ३ ॥ क्रुद्धस्य लक्ष्मणार्यस्य नेत्राभ्यामश्रुबिंदवः ॥ पतिता यादवस्योर्वोरपार्थं वदतः श्रुतेः ॥ ४ ॥ दीप्ताभ्यामिव दीपाभ्यां सार्चिषः स्नेहबिंदवः ॥ तदश्रुपतनं घोरमब्रवीदिव यादवम् ॥ ५ ॥ अपार्थं श्रुतिवाक्यानां मा वदेति वचः स्फुटम् ॥ अश्रुभिः पीड्यमा-

नोऽसौ यादवः पंडिताधमः ॥ ६ ॥ साश्रुनेत्रमुखं दृष्ट्वा तस्य रामानुजस्य तत् ॥ प्रत्युवाच शुभं वाक्यं लक्ष्मणार्यं हरिप्रियम् ॥ ७ ॥ किमर्थं शोचसे प्राज्ञ वद दुःखस्य कारणम् ॥ लक्ष्मणार्यो यादवस्य वाक्यं श्रुत्वा तमब्रवीत् ॥ ८ ॥ कप्यासमिति वाक्यस्य विरुद्धार्थस्त्वयोच्यते ॥ ९ ॥ अपार्थं यच्छ्रुतेरर्थं श्रुत्वा शोचामि यादव ॥ रामानुजस्य तद्वाक्यं श्रुत्वा कोपसमन्वितः ॥ १० ॥ रामानुजमुवाचेदं यादवः कलिमोहितः ॥ भो रामानुज दुर्बुद्धे त्वं वदार्थं ममाग्रतः ॥ ॥ ११ ॥ कप्यासमिति वाक्यस्य यत्तत्स्वाभाविकं वरम् ॥ यादवस्य वचः श्रुत्वा लक्ष्मणार्यो मुदान्वितः ॥ १२ ॥ वक्तुकामः श्रुतेरर्थं यादवं वाक्यमब्रवीत् ॥ कप्यासमिति वाक्यस्य वक्ष्याम्यर्थं शृणु द्विज ॥ १३ ॥ गंभीरांभसि जातस्य प्रोद्यद्भानुकरैस्तदा ॥ संफुल्लदलपद्मस्य सदृशे लोचने हरेः ॥ १४ ॥ तस्याः श्रुतेरेवमर्थो वक्तव्यः शास्त्रवित्तमैः ॥ षाड्गुण्यपरिपूर्णस्य विष्णोरमिततेजसः ॥ १५ ॥ मर्कटासनसादृश्यमुच्यते नेत्रयोस्त्वया ॥ त्वयोदितमबद्धार्थं श्रुत्वा शोचामि यादव ॥ १६ ॥ लक्ष्मणार्यस्य तद्वाक्यं श्रुत्वा कोपसन्वितः ॥ रामानुजं तिरस्कृत्य यादवो वाक्यमब्रवीत् ॥१७॥ रे रे दुर्मार्ग दुर्बुद्धे मा वदार्थमसंगतम् ॥ स्थातुं ममाग्रे योग्यत्वं तव नास्ति द्विजाधम ॥१८॥ इत्युक्त्वा यादवो मूर्खः शमादिगुणसंयुतम् ॥ रामानुजं महात्मानं गच्छगच्छेति चाब्रवीत् ॥ ॥ १९ ॥ रामानुजो महाप्राज्ञस्तं विहाय स यादवम् ॥ कांचीपूर्णं समासाद्य सर्ववृत्तांतमादरात् ॥ २० ॥ तस्मै निवेद्य सहसा तेनानुज्ञापितस्तदा ॥ श्रीहस्तिगिरिनाथाय स्वर्णकुंभेन तज्जलम् ॥२१॥ भक्त्या समर्पयन्नित्यं वरदाय समास्थितः ॥ २२ ॥ कांचीपूर्णेनानुनीतस्तदानीं त्यक्त्वा दुष्टं यादवं लक्ष्मणार्यः ॥ भक्त्या युक्तो हस्तिशैलाधिनेतुः कुर्वन्नास्ते नित्यकैंकर्य्यवृत्तिम् ॥ २३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कप्यासश्रुत्यर्थविचारो नामाष्टमोऽध्यायः ॥ ८ ॥

# नवमोऽध्यायः ।

ततः श्रीरंगनगरे यामुनार्यो यतीश्वरः ॥ देवराजं समुद्दिश्य स्तोत्ररत्नं विधाय च ॥ १ ॥ रामानुजार्य्यवृत्तांतं शृण्वंस्तत्र समास्थितः॥ कांचीपुरे यादवं तं कांतिमत्यात्मसंभवः ॥ २ ॥ विसृज्य स महाप्राज्ञः कांचीपूर्णेन संगतः ॥ तन्नियोगेन हरये वारणाचलवासिने ॥ ३ ॥ शालकूपजलं भक्त्या चादाय स्वर्णकुंभतः ॥ नित्यं समर्पयन्नास्ते सुदा रामानुजः सुधीः ॥४॥ श्रुत्वा कदाचिदित्येवं संप्रहृष्टः स यामुनः ॥ शिष्यं पूर्णार्यमाहूय वचनं चेदमब्रवीत् ॥ ५ ॥ कांचीपुरीं समासाद्य लक्ष्मणाचार्य्यसन्निधौ ॥ मया कृतमिदं स्तोत्रं त्वं वाचय ममाज्ञया ॥ ६ ॥ गुरुवाक्यं तदाकर्ण्य तेन चाज्ञापितस्तदा ॥ पूर्णाचार्यो महाप्राज्ञः पुरीं कांचीं ययौ जवात् ॥ ७ ॥ श्रीहस्तिशैलमारुह्य तं नत्वा वरदं हरिम् ॥ तत्सन्निधौ यामुनेन कृतं स्तोत्रमणिं पठन् ॥ ८ ॥ कृत्वा विज्ञापनं तस्य वरदस्य जगत्पतेः ॥ तत्तीर्थं शठकोपं च गृहीत्वा भक्तिसंयुतः ॥ ९ ॥ रामानुजार्य्यवृत्तांतं कांचीपूर्णान्निशम्य सः ॥ तत्संधानं समाश्रित्य तस्थौ स्तोत्रमणिं पठन् ॥ १० ॥ तदा रामानुजो धीमान् हेमकुंभेन तज्जलम् ॥ समादायांजसा भक्त्या वरदांतिकमाययौ ॥ ११ ॥ तत्रापश्यन्महात्मानं महापूर्णं महौजसम् ॥ द्विजवर्यं महाप्राज्ञं विष्णुभक्तं विमत्सरम् ॥ १२ ॥ स्वरेण महता सम्यक् पठंतं वैष्णवं स्तवम् ॥ ततः स्वाभाविकं नाम श्रुत्वा पद्यमनुत्तमम् ॥१३॥ रामानुजो महाप्राज्ञः परं हर्षमवाप्तवान् ॥ १४ ॥ स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः ॥ ब्रह्मा शिवः शतमखः परमस्वराडित्येतेऽपि यस्य महिमार्णवविप्रुषस्ते ॥ १५ ॥ श्रुत्वा स्तोत्रमणिं प्राज्ञो विस्मयाविष्टमानसः ॥ पूर्णाचार्यमुवाचेदं लक्ष्मणार्यो हरिप्रियः ॥ १६ ॥ द्विजोत्तम महाप्राज्ञ पठमानं स्तवं शुभम् ॥ महात्मना कृतं केन

मह्यमाख्याहि तं गुरुम् ॥ १७ ॥ रामानुजस्य तद्वाक्यं श्रुत्वा पूर्ण कृपानिधिः ॥ रामानुजमुवाचेदं श्रोतुकामं विमत्सरम् ॥ १८ ॥ रंगक्षेत्रे महान्कश्चिद्यामुनार्य्य इति श्रुतः ॥ आसीद्विप्रकुले जातो वेदवेदांतपारगः ॥ १९ ॥ तुर्याश्रमं समापन्नः पंचसंस्कारसंस्कृतः ॥ सर्वशास्त्रार्थतत्त्वज्ञः सदाचारसमाश्रयः ॥ २० ॥ जितेंद्रियो जितक्रोधो विष्णुभक्तो विमत्सरः ॥ तेन स्तोत्रं कृतमिदं रामानुज महामते ॥ २१ ॥ विप्रवर्यस्य तद्वाक्यं श्रुत्वा रामानुजस्तदा ॥ पूर्णाचार्य्यमुवाचेदं यामुनार्यदिदृक्षया ॥ २२ ॥ द्रष्टुमिच्छामि तं प्राज्ञं यामुनार्य्यं यतीश्वरम् ॥ मान्नयस्वाधुना रङ्गमागच्छामि त्वया सह ॥ २३ ॥ रामानुजस्य वचनं श्रुत्वा हृष्टः स वैष्णवः ॥ काञ्चीपूर्णाय तत्सर्वमभिधाय प्रयत्नतः ॥ २४ ॥ रामानुजं समादाय श्रीरङ्गं गन्तुमुद्यतः ॥ रामानुजमुवाचेदं पूर्णार्य्यः पूर्णवत्सलः ॥ २५ ॥ प्रयाणे लक्ष्मणार्य त्वमायत्तो भव सत्वरम् ॥ रङ्गक्षेत्रं गमिष्यामि संदेहोत्र न विद्यते ॥ २६ ॥ पूर्णाचार्य्यस्य तद्वाक्यं श्रुत्वा लक्ष्मणदेशिकः ॥ मतङ्गगिरिवासाय वरदाय महात्मने ॥ २७ ॥ स्वर्णकुम्भे स्थितं तोयं समर्प्य परया मुदा ॥ काञ्चीपूर्णाय वृत्तान्तं सन्निवेद्य सुहृत्प्रियः ॥ २८ ॥ तेनानुज्ञापितो धीमान्यामुनार्य्यदिदृक्षया ॥ महापूर्णस्य निकटं संप्राप्य विनयान्वितः ॥ तेन साकं ययौ धीरो रंगक्षेत्रमनुत्तमम् ॥ २९ ॥ तदा रंगेश्वरः श्रीमान्मनस्येवमचिंतयत् ॥ रामानुजो यामुनश्च मिलितौ यद्युभावपि ॥ ३० ॥ लीलाविभूतिरस्माकं तदा नष्टा भविष्यति ॥ ततोर्चकमुखेनाह रंगेशो यामुनं प्रति ॥ ३१ ॥ गच्छाद्यैव यतिश्रेष्ठ दत्तं ते परमं पदम् ॥ तेनैवमुक्तो हरिणा रामानुजादिदृक्षया ॥ ३२ ॥ रंगेश्वरं प्रणम्याह यामुनः शिरसा हरिम् ॥ रंगेशानंतरं मुक्तिं गच्छामि दिवसाष्टकात् ॥ ३३ ॥ इति विज्ञाप्य योगीशस्तत्संभाषणलोलुपः ॥ मठं समासदच्छीघ्रमाकांक्षंस्तस्य

चागमम् ॥ ३४ ॥ सुमहानपि योगीन्द्रः परतंत्रस्ततोंजसा ॥ अनवाप्य
मनोभीष्टं स्वाचार्याङ्घ्रिमुपेयिवान् ॥ ३५ ॥ रामानुजमहापूर्णौ यामुनं
यमिनां वरम् ॥ द्रष्टुकामौ महाप्राज्ञौ कावेरीं प्रापतुस्तदा ॥ ३६ ॥
व्यूहं द्विजानां संदृष्ट्वा कावेरीसैकते स्थितम् ॥ ऊचतुर्वचनं तौ तु
मार्गागतजनानिदम् ॥ ३७ ॥ किमर्थमागतो व्यूहो वैष्णवानां महा-
त्मनाम् ॥ विशदं तज्जनाः शीघ्रं कारणं वदताद्य नौ ॥ ३८ ॥ तयो-
स्तद्वचनं श्रुत्वा विप्रयोर्विष्णुभक्तयोः ॥ जनास्तत्कारणं ताभ्यां द्विजा-
भ्यामवदंस्तदा ॥ ३९ ॥ तद्वाक्यं घोरसंकाशं यामुनार्य्यवियोगजम् ॥ श्रुत्वा
तौ विष्णुभक्तार्यौ जनेभ्यः पथि दुःखितौ ॥ ४० ॥ भूम्यां निपतितौ तत्र
छिन्नमूलाविवद्रुमौ ॥ यामुनार्यवियोगेन दुःखितौ विबुधर्षभौ ॥ ४१ ॥ रामा
नुजमहापूर्णौ मूर्च्छां तौ प्रापतुस्तदा ॥ पूर्णाचार्यो महाप्राज्ञो गुरोर्म-
रणदुःखितः ॥ ४२ ॥ कथंचिद्धैर्यमालंब्य तद्दुःखं विनिगृह्य सः ॥
रामानुजमुवाचेदं पतितं धरणीतले ॥ ४३ ॥ उत्तिष्ठ ज्ञानसंपन्न
किमर्थं परितप्यसे ॥ शोकेन साध्यते कार्यमस्माभिः किं परंतप
॥ ४४ ॥ रामानुज महाप्राज्ञ श्रूयतां वचनं मम ॥ कुर्वंति ब्राह्मणास्तस्य
परलोकगतस्य हि ॥ ४५ ॥ यामुनार्यस्य कार्याणि कृत्यानि विधि-
नाधुना ॥ संस्थापनं यामुनस्य भूम्यां गर्त्ते यतेर्गुरोः ॥ ४६ ॥ विप्रै-
र्यावन्न क्रीयेत तावद्गच्छाव शीघ्रतः ॥ तत्र गत्वा तथाभूतं द्रक्ष्यावो
यामुनं मुनिम् ॥ ४७ ॥ तस्माद्धैर्य्यं समालंब्य समुत्तिष्ठ द्विजोत्तम ॥
क्षेत्रं सत्यव्रतं पुण्यं विहायाशु जगत्पते ॥ ४८ ॥ वरदस्यांबुदानं च
तत्सेवां मुक्तिदायिनीम् ॥ यं यामुनार्य्यमुद्दिश्य द्रष्टुकामः समागतः ॥
॥ ४९ ॥ स इदानीं यामुनार्य्यः स्वाचार्यः पदमातवान् ॥ इदं दैवकृतं
नान्यत्तस्माच्छोकं विसर्जय ॥ ५० ॥ सुखदुःखे वियोगे च संयोगे
मरणे भये ॥ सर्वत्र कारणं दैवं लाभालाभे महामते ॥ ५१ ॥ इत्युक्त्वा
पतितं भूमौ युगांते भास्करं यथा ॥ निःश्वसंतं यथा नागं निर्वेगमिव
चांबुधिम् ॥ ५२ ॥ निरुत्साहं निर्विचेष्टं निमग्नं शोकसागरे ॥ अश्रु-

पूर्णमुखं दीनं सार्थभ्रष्टं यथा द्विजम् ॥ ५३ ॥ यथा पंकविनिर्मग्नं
गजेंद्रमिव दुःखितम् ॥ एवंविधं महात्मानं लक्ष्मणार्यं कृपानिधिः ॥
॥ ५४ ॥ दोर्भ्यामुत्थाप्य सहसा सस्वजे प्रेमपूर्वकम् ॥ ततो रामानुजो
धीमान् पूर्णार्येण महायशाः ॥ ५५ ॥ तत्र गत्वा यामुनार्य्यमपश्य-
द्दीनचेतसः ॥ तस्य रूपं लक्ष्मणार्यो दृष्ट्वा वाक्यमिदं जगौ ॥ ५६ ॥
संभाषणे यामुनेन नास्ति प्राप्तिर्ममाधुना ॥ क्षुद्रस्य महतां संगे यथा
प्राप्तिर्न विद्यते ॥ ५७ ॥ एतेन मम सांगत्यं लभ्यते चेन्महात्मना ॥
अस्मिँल्लोके निवसतां जनानां वैष्णवोत्तमाः ॥ ५८ ॥ गंतुं हरेः पदं
तत्र सेवितुं हरिमव्ययम् ॥ तत्सौधानामहं कृत्वा सोपानानि निरंतरम्
॥ ५९ ॥ तन्मार्गेण जनान् सर्वान् तद्विष्णोः परमं पदम् ॥ जवात्प्रा-
पयितुं सम्यक्समर्थो नात्र संशयः ॥ ६० ॥ इत्युक्त्वा स महाप्राज्ञो
यामुनस्य महात्मनः ॥ रामानुजोंगुलीर्दृष्ट्वा तिस्रश्चाकुंचितास्तदा ॥
॥ ६१ ॥ विस्मयाविष्टहृदयस्तत्रत्यान्वैष्णवान् द्विजान् ॥ उवाच
वचनं धीमान् तच्छिष्यान् प्रेमपूर्वकम् ॥ ६२ ॥ यामुनांगुलयो जन्म-
प्रभृत्येवं विधा उत ॥ अधुनाकुंचिताः किं वा तदिदं तथ्यमुच्यताम् ॥
॥६३॥ रामानुजस्य तद्वाक्यं श्रुत्वा ते वैष्णवास्तदा ॥ आकुंचितांगुली-
र्दृष्ट्वा यामुनस्य महात्मनः ॥ ६४ ॥ विस्मयाविष्टहृदयास्तमूचुरमितौ-
जसम् ॥ पूर्वं तु यामुनांगुल्यः स्वभावेन समास्थिताः ॥ ६५ ॥
अधुनाकुञ्चितास्तिस्रो विस्मयो जायते महान् ॥ तत्कारणं न जा-
नीमो भवान् विज्ञातुमर्हति ॥ ६६ ॥ वैष्णवानां वचः श्रुत्वा
लक्ष्मणार्यः परार्थवित् ॥ अभिप्रायं यामुनस्य ज्ञात्वा बुद्ध्या महा-
मतिः ॥ ६७ ॥ मध्ये द्विजानां सर्वेषां जगाद वचनं तदा ॥ अहं
विष्णुमते स्थित्वा जनानज्ञानमोहितान् ॥ ६८ ॥ पंचसंस्कारसंपन्नान्
द्राविडाम्नायपारगान् ॥ प्रपत्तिधर्मनिरतान् कृत्वा रक्षामि सर्वदा
॥ ६९ ॥ एवं रामानुजाचार्ये गदत्यात्मविदां वरे ॥ महात्मा यामुना-
चार्यो जहावेकांगुलिं तदा ॥ ७० ॥ ततः प्रोवाच धर्मात्मा वाक्यं

रामानुजः पुनः ॥ संगृह्य निखिलानर्थांस्तत्त्वज्ञानपरं शुभम् ॥७१॥ श्रीभाष्यं च करिष्यामि जनरक्षणहेतुना ॥ इत्युक्तवति विप्रेंद्रे वचनं वदतां वरे ॥ ७२ ॥ अंगुलिर्यामुनाचार्य्यो द्वितीयां सहसात्यजत् ॥ ततोन्यदर्थदं वाक्यं धीमान् रामानुजोऽवदत् ॥ ७३॥ जीवेश्वरादीँल्लोकेभ्यः कृपया यत्पराशरः ॥ संदर्शयन् तत्स्वभावान् तदुपायगतीस्तथा ॥ ७४ ॥ पुराणरत्नं संचक्रे मुनिवर्य्यः कृपानिधिः ॥ तस्य नाम्ना महाप्राज्ञवैष्णवस्य च कस्यचित् ॥ ७५ ॥ अभिधानं करिष्यामि निष्क्रियार्थं मनेरहम् ॥ इत्येवं लक्ष्मणाचार्ये पुनर्वदति निश्चले ॥ ७६ ॥ कृतकृत्यो यामुनार्यः सोवशिष्टांगुलिं जहौ ॥ तत्रत्यपुरुषा दृष्ट्वा तच्चित्रं महदद्भुतम् ॥ ७७ ॥ रामानुजं महात्मानं मन्यंते पुरुषोत्तमम् ॥ रामानुजो महाप्राज्ञो यामुनार्य्यस्य चांगुलीः ॥७८॥ आकुंचिता मोचयित्वा द्विजेभ्यो वंदनं व्यधात् ॥ भूयः प्रोवाच तान्विप्रान् वाक्यं रामानुजस्तदा ॥ ७९ ॥ न जानाम्यहमेतावद्यामुनं वैष्णवोत्तमम् ॥ महान्प्रमादो मे जातः किं करिष्यामि वैष्णवाः ॥ ८० ॥ करुणा रंगनाथस्य मयि नो विद्यतेऽधुना ॥ इतो देशाद्गमिष्यामि पुरीं कांचीं द्विजोत्तमाः ॥ ८१ ॥ इत्युक्त्वा वैष्णवान् सर्वान्गमनायोद्यतोऽभवत् ॥ प्रयाणे त्वरमाणं तु लक्ष्मणार्यं महामतिम् ॥ वाक्यमूचुर्महात्मानं तद्दर्शनमभीप्सवः ॥ रामानुज विशेषज्ञ रंगेशं भक्तवत्सलम् ॥ ८२ ॥ संसेव्य पश्चाद्गमने मतिं कुरु महामते ॥ यामुनं द्रष्टुकामस्त्वमद्य दूरादिहागतः ॥ ८३ ॥ एवंविधा तस्य वृत्तिरद्याभूत्किल मद्गुरोः ॥ रंगेशमपि दृष्ट्वाथ त्वं कांचीं गंतुमर्हसि ॥८४॥ ततस्तेषां वचः श्रुत्वा लक्ष्मणार्योऽब्रवीद्विजान् ॥ क्षणमप्यधुना क्षेत्रे श्रीरंगेस्मिन्द्विजोत्तमाः ॥ ८५ ॥ महात्मना यामुनेन संत्यक्ते मम बन्धुना ॥ अधिष्ठितेपि मे वस्तुं रंगेशेन महात्मना ॥८६॥ न मानसं रोचतस्मिन्पुण्येपि सुमनोहरे॥लोकेशमपि रंगेशं यामुनाशांकुराच्छिदम् ॥८७॥ तं निर्दयं न पश्यामि मम दुःखकरं द्विजाः ॥ इत्युक्त्वा तैर-

नुज्ञातस्तत्क्षेत्रात्तत्क्षणं द्विजाः ॥ ८८ ॥ कांचीपुरीं प्रति ययौ धीमान्
रामानुजस्तदा ॥ सह्यपादोद्भवां तीर्त्वा कावेरीं कलिनाशिनीम् ॥८९॥
ततोऽपश्यज्जनपदान् ग्रामांश्च नगराणि च ॥ क्षेत्रं सत्यव्रतं प्राप्य गो-
पुराण्युत्तमानि च ॥९०॥ दूरात्प्रकाशमानानि दृष्ट्वा हृष्टस्तदाऽभवत् ॥
आसाद्य तां दिव्यजलां महात्मा रामानुजः क्षीरनदीं विशुद्धाम् ॥ य-
द्यामुनाचार्य्यवियोगदुःखं जहौ श्रमं चाध्वगतं तदानीम् ॥९१॥ निमज्ज्य
तोये परिपूर्णकामः सन्तर्प्य देवान् सपितॄनृषींश्च ॥ आरुह्य तीरं परिधाय
वस्त्रे जजाप जप्यं सुधृतोर्द्ध्वपुण्ड्रः ॥९२॥ तन्नित्यकृत्यं विधिना च कृत्वा
तीर्त्वा जवात् क्षीरनदीं महात्मा ॥ कांचीपुरीं कृष्णकृताधिवासां ददर्श
धीमान्दनुजारिभक्तः ॥९३ ॥ गत्वा पुरीं साधुजनावृतां तां नत्वा रमे-
शं करिशैलनाथम् ॥ स्थित्वा मुहूर्तं निकटे च तस्य कृत्वा स्तुतिं स्वा-
लयमाविवेश ॥ ९४॥ रम्ये गृहे केशवयज्वपुत्रः पत्न्या सह प्रीतमना
महात्मा ॥ सुखेन रेमे प्रियया निशायां तस्यां स रामानुजविप्रवर्य्यः
॥ ९५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे यामुनार्य्यातिमदशायां
तस्याकुंचितांगुलिमोचनं नाम नवमोऽध्यायः ॥ ९ ॥

## दशमोऽध्यायः ।

ब्राह्मे मुहूर्त्ते चोत्थाय कृतपूर्वाह्णिकक्रियः ॥ कांचीपूर्णस्य निलयं
धीमान् रामानुजो ययौ ॥ १ ॥ कांचीपूर्णाय तत्सर्वं वृत्तांतं
यामुनस्य सः ॥ रामानुजोऽवदत्तस्मै गुरोः शिष्याय बुद्धिमान
॥ २ ॥ कांचीपूर्णो निशम्याथ वियोगं स्वगुरोस्तदा ॥ तेपे
दुःखाभिभूतस्स लक्ष्मणार्यान्महात्मनः ॥ ३ ॥ शिष्यकृत्यं ततश्च-
क्रे कांचीपूर्णो मृते गुरौ ॥ यामुनार्यस्य सहसा द्विजानाहूय वैष्ण-
वान् ॥ ४ ॥ पुनर्वरदराजाय कुर्वन्कैंकर्य्यमादरात् ॥ संभाषणं च सत-
तं तेन साकं समास्थितः ॥ ५ ॥ लक्ष्मणार्यो विनीतात्मा शालकूप-
जलं शुभम् ॥ भक्त्या समर्पयन्नित्यं वरदाय महात्मने ॥ ६ ॥ तत्सं-
निधौ स्थितं नित्यं कांचीपूर्णं दृढव्रतम् ॥ तस्यांतरंगं तं नत्वा तदा

मेने स्वकं गुरुम् ॥ ७ ॥ कदाचिल्लक्ष्मणार्य्यस्तदुच्छिष्टबुभुक्षया ॥ कांचीपूर्णमुवाचेदं वचनं वदतां वरः ॥ ८ ॥ मद्गृहे भोजनं ह्यद्य कर्तव्यं भवता ध्रुवम् ॥ कांचीपूर्ण दयासिंधो निक्षिप्य करुणां मयि ॥ ९ ॥ तस्येंगितं तदा ज्ञात्वा कांचीपूर्णोऽप्यचिंतयत् ॥ न मयेदं यदि कृतं तन्मनः शोचति ध्रुवम् ॥ १० ॥ हितमेव जनानां हि कर्तव्यं पापभीरुणा ॥ मत्सखा विष्णुभक्तोऽयं द्विजश्रेष्ठो महामतिः ॥ ११ ॥ वैकुंठलोकादायातो जनरक्षणकाम्यया ॥ प्रियमेवास्य कर्तव्यं मया रामानुजस्य हि ॥ १२ ॥ ततो रामानुजं वाचमवदद्वैष्णवोत्तमः ॥ करिष्यामि न सन्देहस्तव वाक्यं द्विजोत्तम ॥ १३ ॥ रामानुजो हृष्टमनाः संप्राप्य गृहमादरात् ॥ विशेषतः कारयित्वा पाकं पत्न्या जवात्तदा ॥ १४ ॥ विष्णवर्चनादिकं सर्वं विधायाशु महामतिः ॥ तस्यागमनमाकांक्षन्नास्थितो वैष्णवोत्तमः ॥ १५ ॥ इदानीमपि नायातः किन्नायाति हरिप्रियः ॥ इत्यालोक्य पुनः शीघ्रं ययौ तन्निलयं प्रति ॥ १६ ॥ दक्षिणेनैव मार्गेण करिशैलस्य बुद्धिमान् ॥ कांचीपूर्णस्तदा शीघ्रं रामानुजगृहं प्रति ॥ १७ ॥ करिशैलोत्तरे भागे स्वमठादाययौ तदा ॥ ततस्तद्गृहमासाद्य कांचीपूर्णो महामतिः ॥ १८ ॥ रामानुजार्य्यपत्नीं तामुवाच वचनं शुभम् ॥ पतिव्रते महाभागे श्रूयतां वचनं मम ॥ १९ ॥ कुत्राद्य ते गतो भर्त्ता लक्ष्मणार्यः सुमध्यमे ॥ कांचीपूर्णस्य तद्वाक्यं श्रुत्वा भक्तिपुरस्सरम् ॥ २० ॥ रक्षकांबा तदा साध्वी पत्नी रामानुजस्य सा ॥ अवोचदसितापांगी कांचीपूर्णं हरिप्रियम् ॥ २१ ॥ कृतदेवार्चनः शीघ्रं त्वत्कृतेऽकृतभोजनः ॥ त्वन्मठं प्रति मे भर्त्ता तवानयनकारणात् ॥ २२ ॥ कांचीपूर्णाधुनैवार्यस्तवांतिकमुपागतः ॥ क्षणमात्रं सहस्वाद्य भर्त्ता मे ह्यागमिष्यति ॥ २३ ॥ तस्यास्तद्वचनं श्रुत्वा कांचीमुनिरभाषत ॥ रामानुजार्यपत्नीं तां मुग्धां मृदुतरं वचः ॥ २४ ॥ रक्षकांबेनघे किंचिच्छृणु विज्ञापनं मम ॥ अद्यैव भोजनं मह्यं दातव्यं शीघ्रतस्त्वया ॥ २५ ॥ क्षुधा मां बाधतेऽत्यंतं मातः सर्वहितैषिणि ॥ देवराजस्य

सेवार्थं गम्यते चाधुना मया ॥ २६ ॥ भर्तुरागमपर्यंतमत्र स्थातुं न शक्यते ॥ कांचीपूर्णस्य तद्वाक्यं रक्षकांबा निशम्य सा ॥ २७ ॥ अजानन्ती मनो भर्तुर्लक्ष्मणार्यस्य धीमतः ॥ कांचीपूर्णाय सहसा तदन्नमदिशत्तदा ॥ २८ ॥ कांचीपूर्णो जवाद्भुक्त्वा तदन्नममृतोपमम् ॥ कृतत्वरस्तदुत्थाय कृतपादादिशोधनः ॥ २९ ॥ उच्छिष्टपत्रं स तदा महात्मा भगवत्परः ॥ विधाय हस्ते तत्पत्रं शीघ्रमुत्सृज्य दूरतः ॥ ३० ॥ नागाचलं प्रति ययौ स प्राग्गोपुरवर्त्मना ॥ रक्षकांबा तदा साध्वी भर्तृपोषणतत्परा ॥ ३१ ॥ जवात्तद्भुक्तशिष्टान्नं दत्वा दासजनाय च ॥ भूयः स्नात्वा ततः पाकं कुर्वती पूर्ववत्स्थिता ॥३२॥ तूर्णं रामानुजो गत्वा तन्मठं प्रति सादरम् ॥ मृगित्वा तत्र तं पूर्णं ज्ञात्वा परिजनात्तदा ॥ ३३ ॥ स सम्यक्तस्य वृत्तांतं स्वगृहं प्राप्य सत्वरम् ॥ भार्यां दृष्ट्वा पुनः स्नातामत्याश्चर्ययुतोऽब्रवीत् ॥३४॥ भूयः स्नातासि मूढेद्य कारणं तद्वदाशु मे ॥ भर्तुर्वचनमाकर्ण्य प्रोवाच विनयेन सा ॥ ३५ ॥ त्वं कांचीपूर्णमानेतुं स्वगृहान्निर्गतो यदा ॥ तत्क्षणादूर्ध्वमायातः कांचीपूर्णो गृहं प्रति ॥ ३६ ॥ त्वां विचार्याशु वृत्तांतं तज्ज्ञात्वा सादरं वचः ॥ मामेवमवदत्स्वामिन् कांचीपूर्णः कृतत्वरः ॥ ३७ ॥ भर्तुरागमपर्यंतं न स्थातुं शक्यते मया ॥ क्षुधा मां बाधतेऽत्यंतं वरदं प्रति गम्यते ॥ ३८ ॥ भोजनं देहि मे शीघ्रं यद्वै त्वद्भर्तृसंमतम् ॥ ततो मयार्पितं सम्यक् तदन्नं षड्रसैर्युतम् ॥ ३९ ॥ कांचीपूर्णो जवाद्भुक्त्वा महात्मा भगवत्परः ॥ देवराजस्य कैंकर्य्यं कर्तुकामो ययौ जवात् ॥ ४० ॥ शूद्रशेषं ब्राह्मणस्य न भोज्यं हि कदाचन ॥ इत्येवं मनसा सम्यग्विचार्याहं द्विजर्षभ ॥ ४१ ॥ शीघ्रं तत्परिहृत्यान्नं शेषं दासजनाय च ॥ उपवासेन युक्तस्य तव भोजनसिद्धये ॥ ४२ ॥ भूयः पाकं कर्तुकामा स्नाताहमधुना ध्रुवम् ॥ पत्न्योदीरितमाकर्ण्य वचोलीकमसंगतम् ॥४३॥ तेपे रामानुजो धीमान्स्वार्थभ्रष्टो यथा द्विजः ॥

ततो रामानुजो धीमान् हरिमाराध्य वै पुनः ॥ ४४ ॥ निवेदितान्नं भुक्त्वाशु कांचीपूर्णदिदृक्षया ॥ करिशैलं समारुह्य तं दृष्ट्वा वरदांतिके ॥ ४५ ॥ कांचीपूर्णमुवाचेदं प्रांजलिर्वरदप्रियम् ॥ त्वमद्य पंचसंस्कारान् कृत्वा मम दयानिधे ॥ ४६ ॥ रक्ष मां कृपया स्वामिंस्त्वामेव शरणं गतम् ॥ अस्मिँल्लोके त्वया नाथ न तुल्यः पुरुषोस्ति हि ॥ ४७ ॥ दीनं त्वत्पादभक्तं मां न त्वमर्हस्युपेक्षितुम् ॥ तच्छ्रुत्वा लक्ष्मणार्यस्य वाक्यं परमवैदिकम् ॥ ४८ ॥ कांचीपूर्णस्तदा प्राह मर्यादामनुपालयन् ॥ स विष्णुभक्तः प्रोवाच कांचीपूर्णोर्थदं वचः ॥ ४९ ॥ लक्ष्मणार्यं महात्मानं देवराजस्य सन्निधौ ॥ भवता गदितं वाक्यमिदं लोकविगर्हितम् ॥ ५० ॥ तुर्यवर्णोस्मि वै तात संस्कारं तव लक्ष्मण ॥ तस्मादहं करिष्यामि कथं द्विजवरोत्तम ॥ ५१ ॥ ततस्तद्वाक्यमाकर्ण्य कांचीपूर्णेन भाषितम् ॥ ५२ ॥ रामानुजस्तथ्यमिति मत्वा प्राज्ञः पुनस्तदा ॥ कांचीपूर्णमुवाचेदं वचनं विनयान्वितः ॥ ५३ ॥ उपायेषु च कः साधुरंतिमस्मरणं तथा ॥ मोक्षः कदेति द्रष्टव्यः कमाचार्यं समाश्रये ॥५४॥ चतुरर्थान्कर्तुकामो मनस्यालोचितं मया ॥ विज्ञाप्य देवराजाय तेनोक्तं वचनं शुभम् ॥ ५५ ॥ मह्यं करुणया ब्रूहि कांचीपूर्ण कृपानिधे ॥ रामानुजस्य तद्वाक्यं श्रुत्वासौ वैष्णवोत्तमः ॥ ५६ ॥ तं तथाद्य करिष्यामि मा कुरुष्वात्र संशयम् ॥ इति रामानुजं चोक्त्वा कैंकर्य्यं जगतीपतेः॥५७॥ कुर्वन्समास्थितस्तत्र कांचीपूर्णस्तपोधनः ॥ कांचीपूर्णस्य तद्वाक्यं श्रुत्वा रामानुजो महान् ॥ ५८ ॥ तं देवराजं संसेव्य पुनरायान्निजं गृहम् ॥ तस्यां रात्र्यां देवराजस्तं कांचीपूर्णमुत्तमम् ॥५९॥ तालवृंतेन शुभ्रेण स्वस्य कैंकर्यमादरात् ॥ कुर्वंतं स्वांतरंगं च कमलापतिनंदनम् ॥६०॥ हरिः प्रोवाच वचनं सस्मितं हेतुगर्भितम् ॥ कंचिदर्थं मनस्यद्य निधाय त्वं तपोधन॥६१॥वक्तुकाम इवाभासि ज्ञातं त्वन्मुखदर्शनात्॥ तदहं श्रोतुमिच्छामि श्रीकांचीपूर्ण कौतुकात् ॥ ६२ ॥ तस्माच्छीघ्रं

समाख्याहि त्वन्मनस्यभिवांच्छितम् ॥ वचनं देवराजस्य निशम्य विनयान्वितः ॥ ६३ ॥ कांचीपूर्णस्तदा तस्मै वरदाय महात्मने ॥ रामानुजेन गदितं वाक्यमाह महात्मना ॥६४॥ लक्ष्मणार्यस्य वृत्तांतं कमलानंदनस्तदा ॥ श्रुत्वा हरिः प्रियं वाक्यं कांचीपूर्णमभाषत॥६५॥ अहमेव परं तत्त्वं जगत्कारणकारणम् ॥ क्षेत्रज्ञेश्वरयोर्भेदः सिद्ध एव महामते ॥६६॥ मोक्षोपायो न्यास एव जनानां मुक्तिमिच्छताम् ॥ मद्भक्तानां जनानां च नांतिमस्मृतिरिष्यते ॥ ६७ ॥ देहावसाने भक्तानां ददामि परमं पदम् ॥ पूर्णाचार्य्यं महात्मानं समाश्रय गुणाश्रयम् ॥ ६८ ॥ इति रामानुजार्याय मयोक्तं वद सत्वरम् ॥ कांचीपूर्णश्च तद्वाक्यं निशम्य हरिणेरितम् ॥ ६९ ॥ रामानुजाय तत्सर्वं वरदोक्तं न्यवेदयत् ॥ लक्ष्मणार्यस्तु तच्छ्रुत्वा कमलानंदनाच्छुभम् ॥ ॥ ७० ॥ चिंतितस्यार्थजातस्य मया तुल्यमिदं त्विति ॥ विस्मयाविष्टहृदयस्तदा रामानुजोऽभवत् ॥७१॥ ततस्तं देवराजं च तं कांचीपूर्णमुत्तमम् ॥ भक्त्या संसेव्य सुप्रीतस्ताभ्यामाज्ञापितस्तदा ॥ रंगं प्रति ययौ धीमान्पूर्णाचार्यदिदृक्षया ॥७२॥ अर्थात् षडाकर्ण्य गजाद्रिनाथात्कांचीमुनेः पूर्णकृपावशेन ॥ श्रीभूरिपूर्णाश्रयणाभिलाषाद्विसृज्य कांचीं प्रययौ स रंगम् ॥ ७३ ॥ इतिश्रीप्रपन्नामृते रामानुजचरित्रे देवराजात्षड्वागर्थसंप्राप्तिर्नाम दशमोऽध्यायः ॥ १० ॥

## एकादशोऽध्यायः ।

रंगक्षेत्रे यामुनस्य स्वाचार्यस्य महात्मनः ॥ शिष्यास्ते वैष्णवाः सर्वे सम्यगाराधनादिकम् ॥ १ ॥ चक्रुर्भक्त्या द्विजश्रेष्ठा महापूर्णादयस्तदा ॥ यामुनार्यगुणान् सर्वान् कीर्त्तयंतो मुहुर्मुहुः ॥ २ ॥ तद्वियोगांबुधौ मग्नास्तत्पारं न प्रपेदिरे ॥ ततो रामानुजं प्राज्ञं स्मृत्वा विप्रोत्तमं वरम् ॥ ३ ॥ केचिद्वै वैष्णवास्तत्र दुःखितांस्तान् द्विजोत्तमान् ॥ अब्रुवन्वचनं प्रीत्या तद्दुःखविनिवारकम् ॥ ४ ॥ मा शोचध्वं महा-

त्मानं परलोकगतं प्रति ॥ अस्माकं रक्षकः श्रीमानास्ते विप्रोत्तमोऽधुना ॥ ५ ॥ रामानुज इति ख्यातः क्षेत्रे सत्यव्रते शुभे ॥ अनंतरं यामुनार्यांघ्रिना रामानुजं वरम् ॥ ६ ॥ यः कोपि नास्ति लोकेस्मिन्स्वमतप्रतिपालकः ॥ एष रामानुजः श्रीमान्धीमाल्लोकविलक्षणः ॥ ॥ ७ ॥ सदृशो यामुनार्येण शीलादिगुणसंयुतः ॥ बुध्या बृहस्पतेस्तुल्यस्तेजसा रविणा समः ॥ ८ ॥ भक्त्या प्रह्लादसदृशः क्षमया पृथिवीसमः ॥ तेजस्वी ज्ञानसंपन्नः सर्वशास्त्रार्थतत्त्ववित् ॥ ९ ॥ दयावान् धर्मशीलश्च निपुणो जनरक्षणे ॥ मतेऽस्मिन्समधिष्ठाय जनान्रक्षितुमर्हति ॥ १० ॥ पूर्णाचार्य्य महाभाग गत्वा कांचीपुरीं शुभाम् ॥ पञ्चसंस्कारसंपन्नं कृत्वा रामानुजं वरम् ॥ ११ ॥ कंचित्कालं तेन सार्कं स्थित्वा तत्र महात्मना ॥ स्वमतावश्यकान्ग्रंथान्विष्णुचित्तादिसूरिभिः ॥ १२ ॥ कृतान्रामानुजार्याय प्रापयित्वा प्रयत्नतः ॥ तं शनैः स्ववशं कृत्वा रामानुजमकल्मषम् ॥ १३ ॥ येन केनाप्युपायेन तमिहानय सत्वरम् ॥ तेषां वचनमाकर्ण्य महापूर्णः कृपानिधिः ॥१४॥ अनुज्ञातस्ततस्तेन रंगेशेन महात्मना ॥ सकुटुंबो ययौ शीघ्रं क्षेत्रं सत्यव्रतं प्रति ॥ १५ ॥ देशान्ग्रामान्पर्वतांश्च नदीस्तीर्त्वा वनानि च ॥ अग्रहारमवाप्याथ मथुरांतकमादरात् ॥ १६ ॥ रामानुजश्च तं ग्राममवाप्याथ ददर्श तम् ॥ पूर्णाचार्यं महात्मानं कुटुंबेन समागतम् ॥ १७ ॥ पूर्णाचार्य्यस्य चरणावभिवाद्य मुदान्वितः ॥ विनयावनतो भूत्वा वचनं चेदमब्रवीत् ॥ १८ ॥ श्रीरंगाख्यं महापुण्यं क्षेत्रं हित्वा मनोहरम् ॥ रंगनाथस्य सेवां च भुक्तिमुक्तिप्रदां शुभाम् ॥१९॥ कुत्र गच्छसि हे ब्रह्मन्कुटुंबेन समावृतः ॥ ब्रूहि तत्कारणं मेद्य पूर्णाचार्य महामते ॥ २० ॥ रामानुजस्य तद्वाक्यं श्रुत्वा श्रीवैष्णवोत्तमः ॥ स्वस्यागमनवृत्तांतं लक्ष्मणार्याय विस्तरात् ॥ २१ ॥ निवेद्य पृष्टवान्तं च तदागमनकारणम् ॥ रामानुजोपि

सहसा तस्मै वृत्तांतमात्मनः ॥ २२ ॥ अभिधाय पुनर्वाक्यं पूर्णा-
चार्य्यमुवाच सः ॥ इहैव पञ्चसंस्कारान्मम कृत्वा दयानिधे ॥ २३ ॥
संसारकूपपतितं मामुद्धर कचग्रहात् ॥ रामानुजस्य तद्वाक्यं श्रुत्वा
पूर्णस्तमब्रवीत् ॥ २४ ॥ पुण्ये सत्यव्रते क्षेत्रे देवराजस्य सन्निधौ ॥
करिष्यामि न सन्देहस्तव संस्कारपंचकम् ॥ २५ ॥ ग्रामस्यास्याविदूरे
हि तत्क्षेत्रं विद्यते शुभम् ॥ क्षमस्वैकदिनं प्राज्ञ गच्छामोऽद्यैव
सत्वरम् ॥ २६ ॥ इति ब्रुवंतं पूर्णार्य्यं वाक्यं रामानुजो ब्रवीत् ॥
शरीरमस्थिरं ज्ञात्वा तव वाक्यं महामते ॥ २७ ॥ सहसा कथमि-
च्छामि कर्तुमद्य बुधर्षभ ॥ पुराहं यामुनाचार्य्यं द्रष्टुकामस्त्वया सह
॥ २८ ॥ कांच्याः समागतो ह्यस्मि स प्राप परमं पदम् ॥ स्वपंतं
वापि भुंजानं गच्छंतमपि वर्त्मनि ॥ २९ ॥ युवानमपि बालं वा
स्ववशे कुरुते विधिः ॥ इदमद्य कृतं कार्य्यं श्वोन्यत्कार्य्यं करिष्यते ॥
॥ ३० ॥ इति लोके स बलवान्कृतांतो न समीक्षते ॥ तस्मात्कार्य्यं
शुभं धीमाञ्श्रेयस्कामी नरोत्तमः ॥ ३१ ॥ विलंबेन कथं कर्तुमर्हति
द्विजसत्तम ॥ रामानुजस्य वचनं महापूर्णो निशम्य तत् ॥ ३२ ॥
इदं तथ्यं तदा मत्वा रामानुजमभाषत ॥ विगाह्यागच्छ विप्रेंद्र
सरस्यस्मिञ्छुभोदके ॥ ३३ ॥ चक्रांकनं करिष्यामि त्वरमाणस्य
तेऽधुना ॥ इत्युक्त्वा तं महाप्राज्ञः कांतिमत्यात्मसंभवम् ॥ ३४ ॥
स्नात्वा कृताह्निकः प्राप्य विष्णोरायतनं शुभम् ॥ तत्रत्यैर्वैष्णवैः
साकं प्रतिष्ठाप्य हुताशनम् ॥ ३५ ॥ स चक्रे विधिना होममा-
ज्यभागांतमादरात् ॥ ततः पुरुषसूक्तेन मूलमंत्रेण मंत्रवित् ॥ ३६ ॥
अन्यैश्च वैष्णवैर्मंत्रैश्चरुणाज्येन भक्तितः ॥ अष्टोत्तरसहस्रं तु
जुहावाग्नौ सहर्त्विजा ॥ ३७ ॥ चक्रराजं पाञ्चजन्यं गन्धपुष्पा
क्षतैः शुभैः ॥ संपूज्य सुमहात्मानं लक्ष्मणार्य्यं ददर्श तम् ॥ ३८ ॥
विप्रोत्तमं विष्णुभक्तं प्रांजलिं पुरतः स्थितम् ॥ स्नातं विनयसंपन्नं
निर्मलं स्वच्छमानसम् ॥ ३९ ॥ सन्निधौ रामचंद्रस्य कोदंडशर-

धारिणः ॥ तप्ताभ्यां शंखचक्राभ्यां विधिनाग्नौ कृपानिधिः ॥ ४० ॥
लक्ष्मणार्य्यस्य भुजयोः सर्वलक्षणयुक्तयोः ॥ कृत्वांकनं तदा तस्मै
लक्ष्मणार्याय धीमते ॥ ४१ ॥ आपन्नरक्षकं मंत्रं दास्यनामादिकं
तदा ॥ अर्चारूपं देवराजं प्रददौ शिष्यवत्सलः ॥ ४२ ॥ पूर्णाचा-
र्येण गुरुणा कृतसंस्कारपंचकः ॥ रेजे रामानुजः श्रीमाञ्छरच्चंद्र
इवामलः ॥ ४३ ॥ श्रीवैष्णवश्रिया जुष्टं कृत्वा रामानुजं गुरुः ॥
श्रीहरेर्दास्यसाम्राज्ये तं प्रतिष्ठाप्य नायकम् ॥ ४४ ॥ उवाच प्रीति-
युक्तात्मा वचनं मधुराक्षरम् ॥ भूलोके यामुनाचार्यात्पश्चादाचार्य्य-
मूर्तिमान् ॥ ४५ ॥ त्वमेव रक्षकस्त्वद्य सर्वेषां वैष्णवोत्तम ॥ प्रच्छ-
न्नबौद्धसमयानुन्मूल्य शतशोऽशुभान् ॥ ४६ ॥ कर्तुं शक्तिस्तवैवास्ति
लक्ष्मीशं सर्वशेषिणम् ॥ त्वत्तेजोत्यद्भुतं दृष्ट्वा वक्ष्याम्यद्य कुतूहलात्
॥ ४७ ॥ स्वदेशिकं पूजयित्वा लक्ष्मणार्य्यस्तमग्रतः ॥ तत्रत्यान्वै-
ष्णवान्सर्वान् पूजयामास शास्त्रतः ॥ ४८ ॥ ततः स्वाचार्यमादाय
सकुटुंबं कृपानिधिम् ॥ भूयः सत्यव्रते क्षेत्रे ययौ रामानुजस्तदा
॥ ४९ ॥ देवराजं हरिं नत्वा गुरुणा सह बुद्धिमान् ॥ तत्तीर्थशठको-
पादीन्गृहीत्वा भक्तितस्तदा ॥ ५० ॥ कांचीपूर्णाय तत्सर्वं पूर्णा-
र्यागमनादिकम् ॥ निवेदयित्वाशु तदा स्वगृहं प्रविवेश ह ॥ ५१ ॥
स्वदेशिकाय पूर्णाय स्वगृहं स्वार्थमादरात्॥दत्त्वा तत्सन्निधौ नित्यं दि-
व्यांश्च द्राविडागमान्॥५२॥भक्त्याध्ययनमव्यग्रः कुर्वन्सततमादरात्॥
सात्त्विकानि पुराणानि गुरुणा सह बुद्धिमान् ॥ ५३ ॥ विलोकयन्
लक्ष्मणार्यः स सम्यग्भगवत्परः ॥ सुखेन कालं षण्मासाननयद्वै-
ष्णवोत्तमः ॥ ५४ ॥ पूर्णाचार्यो लक्ष्मणार्याय सर्वान्संदिश्यार्थो-
नाज्ञया देशिकस्य ॥ चक्रे वासं कौतुकात्कांचिकायां हस्त्य-
द्रीशे भक्तिमान्देवराजे ॥ ५५ ॥ इति श्रीप्रपन्नामृते रामानु-
जचरित्रे देवराजाज्ञया महापूर्णाश्रयणं नामैकादशोऽध्यायः ॥ ११ ॥

# द्वादशोऽध्यायः ।

कदाचिल्लक्ष्मणाचार्य्यस्तैलाभ्यंगकृताश्रमः ॥ आहूतो वैष्णवः कश्चित्तैलाभ्यंजनवासरे ॥ १ ॥ श्रमेण महता युक्तं वैष्णवं क्षुत्समन्वितम् ॥ विलोक्य लक्ष्मणाचार्यो भार्यामानीय चाब्रवीत् ॥ २ ॥ अन्नं पर्युषितं गेहे ह्यस्ति चायं क्षुधान्वितः॥ अन्नं न किंचिदप्यस्ति सा तमाहेति भामिनी ॥ ३ ॥ स तां कार्यांतरे धीमान्नियोज्य गृहमाविशत् ॥ गृहांतरे संविशोध्य दृष्ट्वान्नं पात्रसंस्थितम् ॥ ४ ॥ तामाहूय तदा भार्यां दर्शयित्वा तदोदनम् ॥ उवाच वचनं धीमान्कोपात्संरक्तलोचनः ॥ ५ ॥ अहो ते हृदयं क्रूरमीदृशे निर्दयं जने ॥ पूर्वैरुक्तं तु तत्सत्यं पापानामाकराः स्त्रियः ॥ ॥६॥ इत्युक्त्वा कुपितः श्रीमान् भार्य्यां लक्ष्मणदेशिकः ॥ किंचिदस्वस्थहृदयो बभूव व्यथितेंद्रियः ॥ ७ ॥ ततः सा लक्ष्मणार्यस्य भार्या पंडितमानिनी ॥ घटेनांबु समानेतुं कूपं प्रति ययौ जवात् ॥ ८ ॥ महापूर्णार्यभार्या च तादृशी तत्क्षणेन सा ॥ ९ ॥ जलार्थं घटमादाय तत्कूपं प्रतिं सा गता ॥ घटावाबध्य रज्जुभ्यामेककाले स्त्रियौ जवात् ॥ १० ॥ कूपे निधाय सहसा ताभ्यां कूपांबुकर्षणे ॥ घटात्पूर्णार्यभार्यायाः पतिता जलबिंदवः ॥ ११ ॥ रामानुजार्य्यभार्यायाः कलशे जलपूरिते ॥ संक्रांतं स्वघटं दृष्ट्वा तद्घटोदकबिंदुभिः ॥ १२ ॥ भार्या रामानुजार्यस्य कोपसंरक्तलोचना ॥ इयमाचार्यपत्नी मे पूज्या भर्तुर्यथा गुरुः ॥ १३ ॥ तदंबुपतनाद्दोषो नास्ति कुंभे च मामके ॥ शुद्ध्यर्थं च प्रभवति संशयोऽत्र न विद्यते ॥ १४ ॥ गुरूच्छिष्टं च संप्रार्थ्य तस्य पादोदकं शुभम् ॥ स्वीकर्त्तव्यं प्रयत्नेन भक्त्या शिष्येण सर्वथा ॥ १५ ॥ एवं न मेने सा देवी स्त्रीस्वभावं समाश्रिता ॥ पूर्णार्यभार्यां परुषं वाक्यमाह निरर्थकम् ॥ १६ ॥ हीनजातिसमुत्पन्ने दुराचारसमन्विते ॥ चटसांकर्यमायातमधुनाचारवर्जिते ॥ १७ ॥

क्व ते जातिः श्रुतं शीलं क्व ते द्रव्यादिसंपदः ॥ अस्माकं तु कुलं शीलं विद्या च द्रव्यसंपदः ॥१८॥ इत्येवं परुषं वाक्यं वदंतीं तां स्त्रियं प्रति ॥ पूर्णार्यधर्मपत्नी च वाक्यं परुषमब्रवीत् ॥ १९ ॥ एवं तयोस्तदा वध्वोः कलहः समवर्तत ॥ पूर्णाचार्य्यः स्वभार्यायां कोपं कृत्वा महत्तरम् ॥२०॥ तद्वृत्तांतं न शृणोति यावद्रामानुजोत्तमः ॥ रंगं प्रति ययौ तावत्कुटुंबेन समावृतः॥२१॥ ततो रामानुजः प्राज्ञः स्वाचार्यगृहमादरात्॥गत्वा गृहे महात्मानं नापश्यद्देशिकोत्तमम् ॥२२॥केचिज्जनाः समागत्य समीपगृहवासिनः ॥ पूर्णाचार्यं विचिन्वंतं रामानुजमथाब्रुवन् ॥ २३ ॥ पूर्णाचार्यस्य भार्यायाः पत्न्याश्च तव सुव्रत ॥ अस्य कूपस्य निकटे कलहः समजायत ॥ तत्कारणं न जानीमस्तद्वेत्ति वरदो हरिः ॥ २४ ॥ पूर्णाचार्यः स्वकां भार्यां समादाय जवान्वितः ॥ रंगक्षेत्रं प्रति ययौ तत्क्षणं वैष्णवोत्तमः ॥ २५ ॥ तेषां वाक्यं तु तच्छ्रुत्वा लक्ष्मणार्योऽप्रियं तदा ॥ संतप्तहृदयः शीघ्रमागत्य स्वनिवेशनम् ॥ २६ ॥ पत्न्यास्तत्सर्ववृत्तांतं विदित्वा विशदं तदा ॥ कोपसंरक्तनयनस्तां भार्यामिदमब्रवीत् ॥ २७ ॥ अपराधः कृतः पापे महान्पूर्वं त्वया मम ॥ २८ ॥ तं सहिष्णुस्समभवमद्येमन्न सहामि ते ॥ शीघ्रं गच्छस्व निलयात्त्वत्पितुर्गृहमादरात् ॥ २९ ॥ स्त्रीणां परमधर्मोयं पतिचित्तानुवर्त्तनम् ॥ त्वयि नास्ति दुराचारे तस्मात्त्वां संत्यजाम्यहम् ॥ ३० ॥ एवं वदंतं भर्त्तारं दृष्ट्वा भयविमोहिता ॥ अश्रुपूर्णमुखी दीना प्रकंपे वचनाद्भृशम् ॥ ३१ ॥ रामानुजस्तदा भार्यां दृष्ट्वा शोकसमन्विताम् ॥ मृदुस्वभावो विजहौ कोपं स करुणाकरः ॥ ३२ ॥ भार्याविसर्जनोपायं हृदि संचिंतयंस्तदा ॥ लक्ष्मणार्यो महाप्राज्ञः कश्चित्कालं समास्थितः ॥ ३३ ॥ कदाचिद्वरदं देवं करिशैले जनार्दनम् ॥ सेव्यमानं लक्ष्मणार्यं दृष्ट्वा कश्चिद्द्विजोत्तमः ॥ ३४ ॥ पीडितः क्षुत्पिपासाभ्यां भोजनं तमयाचत ॥ रामानुजस्तु तं विप्रमुवाच विनयान्वितः ॥ ३५ ॥

शीघ्रं मद्गृहमासाद्य मद्भार्यायै मयोदितम् ॥ अभिज्ञानं निवेद्याशु
त्वं तस्यै द्विजपुंगव ॥ ३६ ॥ भुक्त्वा शीघ्रमिहागच्छ तया दत्तान्न-
मादरात् ॥ वरदोत्सवकालोयं गंतुमद्य गृहं प्रति ॥ ३७ ॥ त्वया सह
न युक्तं मे सेवां हित्वा जगत्पतेः॥ विष्णवर्चनाद्वरं लोके पूजनं चातिथे-
र्द्विज॥ ३८ ॥ तथापि कारणं मेऽद्य विद्यते द्विजपुंगव॥ इत्युक्तस्तेन वै
विप्रो लक्ष्मणार्येण धीमता ॥ ३९ ॥ रामानुजगृहं गत्वा तस्य भार्यां
महात्मनः ॥ उवाच वचनं धीमान्विनयेन स तां प्रति ॥ ४० ॥
पतिव्रते महाभागे भर्त्ता ते भक्तवत्सलम् ॥वरदं सेवयन्नास्ते करिशैलेऽ-
धुना हरिम् ॥ ४१ ॥ तेनाहं प्रेषितः साध्वि भोजनार्थमिहाधुना ॥
आगतोऽभवमार्ये मे शीघ्रमन्नं प्रदीयताम् ॥ ४२ ॥ लक्ष्मणार्य्यस्य
महिषी श्रुत्वा तद्द्विजभाषितम् ॥ अनादृत्य रुषा देवी प्रोवाच परुषं
वचः ॥ ४३ ॥ अन्नं वा तंदुलं वापि मद्गृहे नास्ति चाधुना ॥ अत्र
स्थातुं न युक्तं ते याहि याहि द्विजोत्तम ॥ ४४ ॥ येन त्वं प्रेषितो
यातस्तं याचय दयानिधिम्॥इत्युक्त्वा रोषताम्राक्षी दृढं बद्ध्वा करं तदा
॥४५॥वदंती क्रूरवाक्यानि रुषा देवी समास्थिता॥विप्रो निराशः प्रत्येत्य
लक्ष्मणार्याय धीमते॥४६॥तथोवाच रुषायुक्तः क्षुत्पिपासार्दितस्तदा॥
तदुपाकर्ण्य वृत्तांतं लक्ष्मणार्यो विचार्य सः॥४७॥लेख्यं कृत्वा प्रयत्ने-
न भार्यायाः पितुरालयात् ॥ विवाहार्थं समुद्दिश्य प्रेषितं श्वशुरेण तु
॥ ४८ ॥ इति रामानुजः शीघ्रं हरिद्रां च फलानि च ॥ विचित्रनूतन-
पटं समादाय प्रयत्नतः ॥ ४९ ॥ तं ब्राह्मणमुवाचेदं मतिमान्सांत्वपू-
र्वकम् ॥ इदं लेख्यं हरिद्रादि सर्वमादाय सत्वरम् ॥ ५० ॥ पुनर्वेश्म
द्विजश्रेष्ठ गत्वा त्वत्पितुरालयात्॥ आगतोऽभवमद्याहं तवानयनकार-
णात् ॥ ५१ ॥ मद्भार्य्यामेवमुक्त्वाथ त्वं लेख्यमिदमादरात् ॥ वाच- त्वा
यित्वा तत्समीपे तस्यै वस्त्रादि चार्पय ॥५२॥ तद्वाक्यश्रवणात्प्रीत्या-
त्वयि प्रीतिं करिष्यति ॥ अस्मिन्नर्थे न संदेहो गच्छाशु द्विजपुंगव ॥
॥ ५३ ॥ रामानुजस्य तद्वाक्यं श्रुत्वा विप्रस्तथाकरोत् ॥ तदाकर्ण्य

हि सा देवी हर्षेण सुसमाहिता ॥५४॥ पित्रा दत्तमिदं सर्वमिति वस्त्रा-
दिकं तदा ॥ गृहीत्वाजानती मुग्धा भर्त्तुः कुटिलतां यथा ॥ ५५ ॥
परिपप्रच्छ तं विप्रं पित्रोः कुशलमादरात् ॥ तस्यास्तद्वचनं श्रुत्वा द्विज-
स्तां वाक्यमब्रवीत् ॥ ५६ ॥ तेषामनामयं सुभ्रूर्येषां कुशलमीहसे ॥
अनुजस्य विवाहं ते कर्तुकामः पिताधुना ॥ ५७ ॥ अभवं प्रेषितस्ते-
न तवानयनकारणात् ॥ तद्द्विजस्य वचः श्रुत्वा सा देवी ब्राह्मणोत्तमम्
॥ ५८ ॥ इति तं पूजयामास सकाशात्पितुरागतम् ॥ पाकं कृत्वा
प्रयत्नेन भोजयामास तद्द्विजम् ॥ ५९ ॥ ततो रामानुजः शीघ्रमागत्य
स्वनिकेतनम् ॥ अजानन्निव तत्सर्वं वृत्तांतं द्विजपुंगवम् ॥ ६० ॥ नि
शम्य निपुणो हृष्टस्तां भार्यामेवमब्रवीत् ॥ अधुनैतेन विप्रेण गच्छ
त्वं जनकालयम् ॥६१॥ त्वदाभरणवस्त्रेषु समादाय यदिच्छसि ॥आ-
गमिष्याम्यहं तत्र नीत्वा पंचादिनान्यनु ॥ ६२ ॥ पतिवाक्यं तदाक-
र्ण्य साध्वी हर्षसमन्विता ॥ देहबंधुजनोपेता दासीदासजनावृता॥निर्ग-
त्य स्वगृहात्तूर्णं प्रययौ पितुरालयम् ॥६३॥ तत्त्वोपायवशात्स लक्ष्म-
णगुरुर्नीत्वा स्वकीयां सतीं तत्पित्रोर्गृहमंजसा तदनु तां चित्तेन नाचिं-
तयन् ॥ बुद्धिं चागमनाभिलाषविषयां तुर्याश्रमाप्तिक्रियां नैपुण्येन
चिकीर्षुरात्मनि परं ब्रह्माभिधे निश्चलाम् ॥ ६४ ॥ इति श्रीप्रपन्नामृते
रामानुजचरित्रे भार्याविसर्जनोपायसिद्धिर्नाम द्वादशोऽध्यायः ॥१२॥

## त्रयोदशोऽध्यायः ।

उपायेन तदा भार्यां नीत्वा तज्जनकालयम् ॥ गृहधामादिकं सर्वं
विहाय विगतस्पृहः ॥ १ ॥ तुर्याश्रमप्रवेशाय त्रिदंडं कुंडिकां तदा ॥
सर्वोपकरणं धीमान् काषायवसनादिकम् ॥२॥ संपाद्य तरसा शिष्यै-
रानीय प्रयतः शुचिः ॥ सन्निधौ देवराजस्य सन्निधाय जगत्पतेः॥३॥
रामानुजः प्रणम्याथ वरदं भक्तवत्सलम् ॥ तेनानुज्ञापितो धीमाननं-
तसरसस्तटे ॥ ४ ॥ संस्मरन्यामुनार्यस्य चरणौ लोकपावनौ ॥

लक्ष्मणार्यः प्रसन्नात्मा चक्रे संन्यासमादरात् ॥ ५ ॥ तदा देवगणाः सर्वे हर्षनिर्भरमानसाः ॥ ववृषुः पुष्पवर्षाणि यतिराजस्य मूर्द्धनि ॥ ६ ॥ देवदुंदुभिनिर्घोषो महानासीत्तदा दिवि ॥ ववौ वायुः सुखस्पर्शः सुप्रभोऽभूद्दिवाकरः ॥ ७ ॥ दिशो विरेजुर्विमला जनाः सर्वे मुदं ययुः ॥ तदा रामानुजं दृष्ट्वा यतिसाम्राज्यदीक्षितम् ॥ ८ ॥ निराशः पृथिवीं हित्वा प्रपेदे काननं कलिः ॥ काषायचीरसंवीतः सदंडः सकमंडलुः ॥ ९ ॥ ऊर्ध्वपुंड्रैर्द्वादशभिः परिशोभितविग्रहः ॥ रामानुजस्तदा रेजे नारायणमुनिर्यथा ॥ १० ॥ देवराजस्तदा वाक्यं कांचीपूर्णमुवाच सः ॥ कांचीपूर्ण समादाय मामकान्परिचारकान् ॥ ११ ॥ध्वजाछत्रादिकान्त्सर्वान्वैष्णवांश्च द्विजोत्तमान् ॥ शिबिकायां प्रतिष्ठाप्य शठकोपं च मामकम् ॥ १२ ॥ तत्र गत्वा महात्मानं तं रामानुजमादरात् ॥ इहानयस्व भक्तं तं द्रष्टुमिच्छामि सत्वरम् ॥ १३ ॥ कांचीपूर्णः संप्रहृष्टस्तद्वाक्यश्रवणात्तदा ॥ वरदोक्तप्रकारेण सर्वैस्तैः परिचारकैः ॥ १४ ॥ रामानुजं प्रति ययौ सहसा स हरिप्रियः ॥ तुर्याश्रमस्य कृत्यानि कृत्वा सर्वाणि शास्त्रतः ॥ १५ ॥ अनेकैर्ब्राह्मणैः साकं वेदवेदांतपारगैः ॥ रामानुजार्य्यः सहसा वरदं सेवितुं ययौ ॥ १६ ॥ तावन्योन्यं तदा दृष्ट्वा कांचीपूर्णयतीश्वरौ ॥ हर्षमापतुरन्योन्यं यथार्हं कृतसत्क्रियौ ॥ १७ ॥ कांचीपूर्णस्ततस्तस्मै यतिराजाय धीमते ॥ तत्तीर्थं शठकोपादीन् दापयित्वा तदर्चकैः ॥ १८ ॥ वरदोक्तप्रकारेण निधाय परिचारकान् ॥ व्यादिदेश जनान्त्सर्वान् कैंकर्य्यार्थं महात्मनः ॥ १९ ॥ ब्राह्मणाः स्वस्तिपठनं चक्रुर्हर्षसमन्विताः ॥ भेरीकाहलवाद्यादीन् वादयंतो जनास्तदा ॥ ॥ २० ॥ रामानुजस्य पुरतो ययुः शीघ्रं मृदंगकाः ॥ पुरतः शठकोपं तु कृत्वा रामानुजस्तदा ॥ २१ ॥ करिशैलादिनाथं च कांचीपूर्णेन संगतः ॥ ब्रह्मज्ञैर्ब्राह्मणैः साकं वरदस्य जगत्पतेः ॥ २२ ॥ ववंदे लक्ष्मणाचार्यश्चरणौ ब्रह्मणार्चितौ ॥ रामानुजं देवराजस्तं दृष्ट्वा यति-

शेखरम् ॥ २३ ॥ हर्षेण महतायुक्तस्तां चिंतां विजहौ तदा ॥ रामानु-
जाय विप्रेभ्यः सर्वेभ्यः स तदा हरिः ॥ २४ ॥ स्वतीर्थं शठकोपा-
दीन् दापयित्वार्चकैर्मुदा ॥ प्रत्येकं लक्ष्मणार्याय सन्मानं सुमहत्तरम्
॥ २५ ॥ स भूयः कारयित्वाशु प्रीत्या तस्मै महात्मने ॥ नामधेयं
तस्य चक्रे यतिराज इति प्रभुः ॥ २६ ॥ कांचीपूर्णमुवा-
चेदं वरदो भक्तवत्सलः ॥ यतींद्राय मठं सम्यक् दर्शयित्वा मनो-
हरम् ॥ २७ ॥ तत्र त्वं विनिधेह्याशु यतिराजं तपोधनम् ॥ कांची
पूर्णस्तदाकर्ण्य तद्वाक्यं जगतीपतेः ॥ २८ ॥ यतिराजं समा-
दाय तैः साकं परिचारकैः ॥ मठे निवेशयामास वरदानुज्ञया तदा
॥ २९ ॥ रामानुजोपि सहसा मठं प्राप्य यतीश्वरः ॥ समागत-
जनान्सर्वान् यथोचितमपूजयत् ॥ ३० ॥ तदा पौरजनाः सर्वे
संसेव्य यतिशेखरम् ॥ आपुर्निकेतनान्यार्याः स्वानि हृष्टा द्विजोत्तमाः
॥ ३१ ॥ अनुज्ञातस्तदा तेन कांचीपूर्णो महात्मना ॥ देवराजाय
वृत्तांतं तद्विज्ञाप्य महात्मने ॥ ३२ ॥ तत्सन्निधौ यथापूर्वं निधाय
परिचारकान् ॥ संसेव्य चरणौ तस्य स्वमठं प्रविवेश ह ॥ ३३ ॥
ततो यतींद्रस्तरुणार्कसन्निभः सर्वाञ्जनान् पूर्णकटाक्षवीक्षणैः ॥
स्वपादपद्माभिमुखान्निरंतरं कुर्वन्त्स तस्थौ वरदार्पिते मठे ॥ ३४ ॥
एवं स रामानुजवैष्णवोत्तमः संत्यज्य भार्यां प्रतिकूलधर्मिणीम् ॥
अनुज्ञयानंतसरस्तटे हरेस्तुर्याश्रमं स प्रतिपेदिवांस्तदा ॥ ३५ ॥
संसेव्य विष्णुं करिशैलनाथं हर्षेण तेनार्पितनामधेयः ॥ यतीश्वरस्तत्र
समास्थितोभूत्कांचीपुरे वेदविदां वरिष्ठः ॥ ३६ ॥ इदं चरित्रं भवरो-
गनाशनं रामानुजार्य्यस्य महात्मनः शुभम् ॥ शृण्वंति भक्त्या सततं
नरोत्तमास्ते यांति लोकं मधुवैरिणो हरेः ॥ ३७ ॥ ज्ञानप्रदं पापहरं
पवित्रं श्रोतुः श्रवप्रीतिकरं विचित्रम् ॥ वैकुंठलोकप्रदमाशु पुंसामिदं
चरित्रं यतिशेखरस्य ॥ ३८ ॥ रामानुजाय नाथाय यतींद्राय महा-

त्मने ॥ कृपामात्रप्रसन्नाय लक्ष्मणार्याय ते नमः ॥ ३९ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे रामानुजार्य्यस्य तुर्याश्रमप्रवेशो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

## चतुर्दशोऽध्यायः ।

कांचीपुर्याः पूर्वभागे कश्चित्पुरुषमंगलः ॥ अग्रहारो महानासीद्विद्वज्जनसमावृतः ॥ १ ॥ तत्र वेदविदां श्रेष्ठः सर्वधर्मपरायणः ॥ अनंतदीक्षित इति द्विजवर्यो महानभूत् ॥ २ ॥ स सर्वगुणसंपन्नां सर्वलक्षणशोभिताम् ॥ उपयेमे यथाशास्त्रं कन्यां केशवयज्वनः ॥ ३ ॥ भरतांशः सुतो जज्ञे पत्न्यां पुत्रो विचक्षणः ॥ श्रीमान् दाशरथिर्नाम विख्यातः सकलावनौ ॥ ४ ॥ वेदवेदांगसंपन्नो हरिभक्तिपरायणः ॥ स्वमातुलं महात्मानं तुर्याश्रमसमागतम् ॥ ५ ॥ ज्ञात्वा स तु महाप्राज्ञः कांचीमागत्य सत्वरम् ॥ शिश्रिये लक्ष्मणाचार्य्यं प्रथमं प्रेमपूर्वकम् ॥ ६ ॥ ततो रामांशसंभूतः कूरनाथ इति श्रुतः ॥ अनंतभट्टतनयस्सर्वशास्त्रार्थकोविदः॥७॥हारीतान्वयसंभूतःसदा हरिपरायणः॥अशिश्रियत्तदा सोपि यतिराजं गुणाश्रयम् ॥८॥ लक्ष्मणार्यस्तदा ताभ्यां शिष्याभ्यां यतिपुंगवः ॥ ग्रंथाननुपदिशन् सम्यक् कांच्यां तस्थौ महायशाः॥९॥कदाचिद्यादवस्याथ जननी यतिशेखरम्॥ वदंतं वैष्णवग्रंथान् शिष्येभ्यः प्रीतिपूर्वकम् ॥ १० ॥ ऊर्ध्वपुंड्रधरं धीरं काषायांबरशोभितम् ॥ त्रिदण्डधारिणं प्राज्ञं नारायणमुनिं यथा ॥ ११ ॥ स्वतेजसा भासमानं प्रोद्यंतं भास्करं यथा ॥ दृष्ट्वा भक्तिसमायुक्ता नमश्चक्रे यतीश्वरम् ॥ १२ ॥ ततः सा मठमागत्य यादवं वाक्यमब्रवीत् ॥ वत्स यादव मद्वाक्यं शृणु भक्तिसमन्वितः ॥ १३ ॥ रामानुजं महात्मानं नावमंस्व च पूर्ववत् ॥ तं समाश्रय तत्त्वज्ञं वैरं हित्वा सुभक्तितः ॥ १४ ॥ धर्मसंस्थापनार्थाय हरिणा प्रेषितोऽधुना ॥ वैकुंठादागतोऽनंतो जातः केशवयज्वनः ॥ १५ ॥

रामानुज इति ख्यातः पुत्रः सर्वहिते रतः ॥ कांचीपूर्णादयः सर्वे ज्ञानिनस्तं यतीश्वरम् ॥ १६ ॥ एवं विदुर्महात्मानं पुत्रं लक्ष्मणदेशिकम् ॥ विष्णुभक्तिविहीनस्य विप्रस्य विदुषां वर ॥ १७ ॥ विद्याचारादिकं व्यर्थं शवालंकरणं यथा ॥ विष्णुरेव जगत्कर्ता सृष्टिस्थित्यंतकारकः ॥ १८ ॥ तदंशभूता विप्रेंद्र ब्रह्मरुद्रादिदेवताः ॥ पराशरादिमुनयः सर्वे तत्त्वार्थवेदिनः ॥ १९ ॥ नारायणं समाश्रित्य ययुर्मुक्तिं जगत्पतिम् ॥ मातृवाक्यं तदाकर्ण्य तथ्यं मत्वा स यादवः ॥ २० ॥ ध्यात्वा मुहूर्तं जननीमुवाच वचनं तदा ॥ त्वयोदितमिदं मातः सत्यं वाक्यं हितं मम ॥ २१ ॥ तदर्थाय मयावश्यं कर्त्तव्यं भूप्रदक्षिणम् ॥ अधुना जरयाक्रांतं शरीरं मामकं प्रसूः ॥ २२ ॥ ममाशक्यमिदं तस्मादिदानीं भूप्रदक्षिणम् ॥ ततस्तद्वाक्यमाकर्ण्य सा यादवमभाषत ॥ २३ ॥ प्रदक्षिणं कुरुष्वाद्य यतिराजममानुषम् ॥ विचारं मा कुरुष्वाद्य तस्य तुल्यं फलं द्विज ॥ २४ ॥ तत्कार्यं यादवः प्राप मातृवाक्यादनिश्चयम् ॥ ततः कदाचिद्विप्रेंद्रः संशयापन्नमानसः ॥ २५ ॥ मठमागत्य तरसा दृष्ट्वा लक्ष्मणदेशिकम् ॥ अवोचद्यादवो वाक्यं तं यतीश्वरमर्थदम् ॥ २६ ॥ शंखचक्रोर्द्ध्वपुंड्रादिधारणं च त्वया कृतम् ॥ ब्रह्मणो निर्गुणस्यापि गुणित्वं प्रतिपादितम् ॥ २७ ॥ नास्त्यत्र मानं शास्त्रेषु विद्यते चेद्वदाधुना ॥ यतिराजस्तदा वाक्यं श्रुत्वा यादवभाषितम् ॥ २८ ॥ तस्य संभाषणे शिष्यं कूरेशं व्यादिदेश ह ॥ अनुज्ञातस्तदा तेन देशिकेन महात्मना ॥ २९ ॥ कूरेशो यादवं वाक्यं जगाद विदुषां वरम् ॥ श्रूयतामभिधास्यामि शंखचक्रादिधारणे ॥ ३० ॥ सगुणब्रह्मसद्भावे विष्णुसर्वोत्तमत्वके ॥ श्रुतिस्मृतिपुराणेषु प्रमाणानि द्विजोत्तम ॥ ३१ ॥ श्रुतिः- "प्रतप्ते विष्णोरब्जचक्रे पवित्रे जन्मांभोधिं तर्त्तवे चर्षणींद्राः ॥ मूले बाह्वोर्दधतेन्ये पुराणाः लिंगान्यंगे तावकान्यर्पयंति" साम्नि—"पवित्रमित्यग्निः ॥ अग्निर्वै सहस्रारः ॥ सहस्रारो नेमिः ॥ नेमिना

तप्ततनुर्ब्राह्मणः सायुज्यं सलोकतामाप्नोति देवासो ये विधृतेन बाहुना सुदर्शनेन प्रयतमानवो लोकसृष्टिं वितन्वंति ब्राह्मणास्तद्वदंति अग्निना वै तप्तं द्विभुजे धार्य्यम् ऊर्ध्वपुंड्रमालिखेत् ॥ तस्माद्विरेखं भवति न पुनरागमनमेति ब्रह्मणः सायुज्यं सलोकतामाप्नोति ॥ चक्रं बिभर्ति वपुषा प्रतप्तं बलं देवानाममितस्य विष्णोः ॥ स एति नाकं दुरितान्विधूय प्रयांति यद्यतयो वीतरागाः ॥ अथर्वणे—"एभिर्वयमुरुक्रमस्य चिह्नैरंकिता लोके सुभगा भवामः ॥ तद्विष्णोः परमं पदं येऽधिगच्छंति लांछिताः" ॥ पराशरसंहितायाम्—"उपवीतादिवद्धार्याः शंखचक्रादयस्तथा ॥ ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥" भीष्मपर्वणि—"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥ अर्चनीयश्च वंद्यश्च नित्ययुक्तैः स्वकर्मसु" ॥ ३२ ॥ हारीतस्मृतौ—"तापादिपंचसंस्कारी महाभागवतोत्तमः ॥ अन्ये त्ववैष्णवा ज्ञेया हीनास्तापादिभिर्जनाः ॥३३॥ विना यज्ञोपवीतेन विना चक्रस्य धारणात् ॥ विना द्वयेन वै विप्रश्चांडालत्वमवाप्नुयात्" ॥ ३४ ॥ वामने—"श्वपाकमिव वीक्षेत लोके विप्रमवैष्णवम् ॥ वैष्णवो वर्णबाह्योपि पुनाति भुवनत्रयम् ॥ ३५ ॥ लैंगे—"अष्टाक्षरविदः सर्वे तप्तचक्रांकितास्तद ॥ सेवका वासुदेवस्य तथैव नटनर्त्तकाः ॥ ३६ ॥ अन्ये च वैष्णवास्तत्र सर्वे चक्रेण लांछिताः ॥ अग्निनैव तु संतप्तं चक्रमादाय वैष्णवः ॥ ॥ ३७ ॥ दाहयेत्सर्ववर्णानां विष्णुसालोक्यसिद्धये ॥" ३८ ॥ कठवल्ल्यामूर्ध्वपुंड्रविधिः—"धृतोर्द्ध्वपुंड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा ॥ स्वरेण मंत्रेण सदा हृदिस्थं परात्परं यं महतो महांतम् ॥ ३९ ॥ स्कांदे—"येषां चक्रांकितं गात्रं शूद्रेष्वपि च दृश्यते ॥ ते वै स्वर्गस्य नेतारो ब्राह्मणा भुवि दुर्ल्लभाः" ॥४०॥ पराशरः—"विना यज्ञोपवीतेन विना चक्रस्य धारणात् ॥ विना द्वयेन वै विप्रश्चांडालत्वमवाप्नुयात् ॥ ४१ ॥ अनिष्टानां निवृत्त्यर्थमैकान्त्याय

जगत्पतौ ॥ सिद्ध्यर्थं कर्म्मणां चैव धार्य्यं चक्रादिलाञ्छनम्
॥ ४२ ॥ दक्षिणे तु भुजे विप्रो विभृयाद्वै सुदर्शनम् ॥ सव्ये तु शंखं
बिभृयादिति ब्रह्मविदो विदुः ॥ ४३ ॥ अथर्वणोपनिषदि—"हरेः
पादाकृतिमात्मनो हिताय मध्ये छिद्रमूर्ध्वपुंड्रं यो धारयति स परस्य
प्रियो भवति स पुण्यवान् भवति स मुक्तिवान् भवति ॥ ४४ ॥
महोपनिषदि—"धृतोर्द्ध्वपुंड्रः परमेशितारं नारायणं सांख्ययोगाभि-
गम्यम् ॥ ज्ञात्वा विमुच्येत नरः समस्तैः संसारपाशैरिह चैति विष्णु-
म्" ॥ ४५ ॥ आग्नेये—"त्रिपुंड्रधारणं विप्रो लीलयापि न कारयेत् ॥
धारयेद्विधिना सम्यगूर्द्ध्वपुंड्रं प्रयत्नतः" ॥४६॥ ब्रह्मांडे—"ब्राह्मणस्यो-
र्ध्वपुंड्रं तु क्षत्रियस्यार्द्धचंद्रकम् ॥ वैश्यस्य वर्तुलाकारं शूद्रस्यैव त्रिपुंड्र-
कम् ॥ ४७ ॥ ब्राह्मणेन न कर्तव्यं तिर्यक्पुंड्रस्य धारणम् ॥ स शूद्र एव
मंतव्यस्तिर्यक्पुंड्रस्य धारणात् ॥ ४८ ॥ ब्रह्मरात्रे ॥ प्रणवेनैव मंत्रेण
मृदा वै मामनुस्मरन् ॥ ललाटे धारयेन्नित्यं मम सायुज्यमाप्नुयात्
॥४९॥ वसिष्ठस्मृतौ—" नासिकामूलमारभ्य आकेशांतं प्रकल्पयेत् ॥
अंगुलं पार्श्वमेकं तु ऊर्ध्वपुंड्रस्य लक्षणम् " ॥ ५० ॥ सनत्कुमारसं-
हितायाम्—"ऊर्द्ध्वपुंड्रं मृदा धार्य्यं सच्छिद्रं सौम्यमेव च ॥ तदलं-
करणार्थाय हरिद्रां धारयेच्छ्रियम् ॥ ५१ ॥ ऊर्द्ध्वपुंड्रस्य मध्ये तु
अन्यद्द्रव्यं न धारयेत् ॥ हरिद्रां धारयेच्चूर्णं सर्वपापैः प्रमुच्यते ॥५२॥
अच्छिद्रमूर्द्ध्वपुंड्रं तु ये कुर्वंति द्विजाधमाः ॥ तेषां ललाटे सततं श्वा-
नपादो न संशयः ॥५३॥ पाद्मे—" ये कंठलग्नतुलसीनलिनाक्षमाला
ये बाहुमूलपरिचिह्नितशंखचक्राः ॥ ये वा ललाटफलके लसदूर्द्ध्वपुं-
ड्रास्ते वैष्णवा भुवनमाशु पवित्रयंति ॥ ५४ ॥ ईश्वरसंहितायाम्—
"विष्णुदेहपरामृष्टं यच्चूर्णं शिरसावहेत् ॥ सोश्वमेधफलं प्राप्य विष्णुलो-
के महीयते ॥ ५५ ॥ सांतरालोर्द्ध्वपुंड्रस्य मध्ये श्रीशस्य धामनि ॥
हरिद्रासारसंभूतरजसा धारयेच्छ्रियम् ॥५६॥ पराशरस्मृतौ—" एको-
पवीतं धार्यं स्याद्व्रतिनां ब्रह्मचारिणाम् ॥ गृहस्थानां वनस्थानामुपवी-

तोभयंस्मृतम्" ॥५७॥ पंचरात्रे—"काषायवस्त्रयुग्मं च वेणुयष्टिं च धारयेत् ॥ कौपीनं कटिसूत्रं च च्छत्रं ताम्रकमंडलुम् ॥५८॥ छिद्रोर्ध्वपुंड्रमेकं वा तथा द्वादशमेव वा ॥ तुलसीनलिनाक्षाणां मालिकाधारणं तथा ॥ ५९ ॥ भुजयोर्गुरुणा सम्यक् शंखचक्रं च धारयेत् ॥ यज्ञोपवीतमेकं च सम्यग्धारयतीश्वरः ॥ ६० ॥ यस्त्वेकदंडमालंब्य धर्मं ब्राह्मं परित्यजेत् ॥ विकर्मस्थो भवेद्विप्रः स याति नरकं ध्रुवम् ॥ ६१ ॥ शिखायज्ञोपवीतादि ब्रह्मकर्म यतिस्त्यजेत् ॥ स जीवन्नेव चांडालो मृतः श्वानोऽभिजायते ॥६२॥ मौंज्येणाजिनदंडादिधार्याणि ब्रह्मचारिणा ॥ कटिसूत्रं तु कौपीनं शुक्लवस्त्रद्वयं शुभम् ॥ ६३ ॥ मुंडनं चांगुलीयादिगृहस्थस्य विशिष्यते" सगुणत्वे श्रुतयः"यः सर्वज्ञः सर्ववित्परास्य शक्तिर्विविधैव श्रूयते ॥स्वाभाविकी ज्ञानबलक्रियाच तेजोबलैश्वर्यमहावबोधः ॥ ६४ ॥ सवीर्य्यशक्त्यादिगुणैकराशिः ॥ अपहतपाप्मा विज्वरो विमृत्युर्विशोको विजिघत्सोपिपासः सत्यकामः सत्यसंकल्पः" इति ॥६५॥ तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ॥ पतिं पतीनां परमं परस्माद्विदाम देवं भुवनेशमीड्यम् ॥६६॥ ज्ञाज्ञौ द्वावजावीशिनीशौ नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ॥६७॥ नारायणपरं ब्रह्म तत्त्वं नारायणः परः ॥ नारायणपरा वेदाः ॥ नारायण एवेदं सर्वं निष्कलंको निरंजनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणः ॥ ६८ ॥ एको ह वै नारायण आसीत् ॥ न ब्रह्मा नेशानः ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ॥ भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" ॥६९॥भारते—"हरिः परायणं परं हरिः परायणं परम् ॥ पुनःपुनर्वेदाम्यहं हरिः परायणं परम्"॥ मोक्षधर्मे॥ "त्वयापि सततं राजन्नभ्यर्च्यः पुरुषोत्तमः ॥ स हि माता पिता चैव कृत्स्नस्य जगतो गुरुः ॥७०॥ जगतः कारणत्वं च सगुणत्वं स्वभावतः ॥ त्रिपाद्विभूतियुक्तत्वं

ब्रह्मणो रूपमुच्यते" ॥ ७१ ॥ विष्णुधर्मोत्तरे—"तस्मात्सर्वेषु देवेषु विष्णुरेव सनातनः ॥ तस्मात्सर्वप्रयत्नेन विष्णुमेव समाश्रयेत्" ॥ ७२ ॥ एवं शतसहस्राणि प्रमाणानि महांति च ॥ सत्तर्कसहितान्येव सर्वशास्त्राविरोधतः ॥७३॥ श्रुतिस्मृतिपुराणानि कूरेशो व्याजहार सः ॥ श्रुत्वा सर्वाणि वाक्यानि यादवो विस्मयान्वितः ॥ अनुज्ञातस्तदा ताभ्यां स्वमठं प्रविवेश ह ॥ ७४ ॥ श्रुत्यादिप्रचुरप्रमाण वचनैः सर्वोत्तमत्वे हरेश्चक्राद्यंकनधारणे च सगुणब्रह्मण्यनंते परे ॥ कूरेशः प्रतिपाद्य दार्ढ्यमधिकं सद्योऽनवद्यां प्रथां विख्यातं यतिशेखरं समभजज्जित्वा तदा यादवम् ॥ ७५ ॥ इतिश्रीप्रपन्नामृते रामानुजचरित्रे कूरेशयादवसंवादे विष्णुपरतत्त्वनिर्णयो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## पञ्चदशोऽध्यायः ।

तस्यां रात्र्यां देवराजः स्वप्ने तस्य जगत्पतिः ॥ आगत्य यादवं विप्रं संशयापन्नमानसम् ॥ १ ॥ उवाच कृपया वाक्यं दयार्द्रीकृतमानसः ॥ जनन्या तव यच्चोक्तं तत्सत्यं यादवाधुना ॥ २ ॥ यतिराजाश्रयान्मुक्तिर्नान्यथा द्विजपुंगव ॥ चिंतां विहाय सहसा सर्वकार्यविनाशिनीम् ॥ ३ ॥ यतिराजं महात्मानं समाश्रय गुणाश्रयम् ॥ इत्युक्त्वांतर्दधे विष्णुर्यादवं करुणालयः ॥ ४ ॥ तद्वाक्यश्रवणात्सोपि निश्चयं नाध्यगच्छत ॥ यादवस्य प्रसूः साध्वी कदाचिद्वरदं हरिम् ॥ ५ ॥ संसेव्य सा ददर्शाथ यतींद्रं यमिनां वरम् ॥ देवराजस्य सेवार्थं शिष्यैः सह समावृतम् ॥ ६ ॥ आगच्छंतं लक्ष्मणार्यं तेजोराशिमकल्मषम् ॥ यादवस्य समीचीनो लक्ष्मणार्य्यसमाश्रयः ॥ ७ ॥ सा पुत्रवत्सला साध्वी मनस्येवमचिंतयत् ॥ उपश्रुतिरभूत्तत्र तस्याश्चितानुरोधिनी ॥ ८ ॥ श्रुत्वा तां हर्षसंयुक्ता यादवायाददात्मने ॥ तद्वृत्तांतं तदा तस्मै जगाद हितकाम्यया ॥ ९ ॥

मातृवाक्यं निशम्याथ यादवश्छिन्नसंशयः ॥ मात्रे निवेदयामास स्वप्नवृत्तांतमादरात ॥ १० ॥ अनिश्चयात्पुनः सोपि मात्रा चाज्ञापितस्तदा ॥ कांचीपूर्णं समासाद्य यादवः करुणानिधिम् ॥ ११ ॥ विनयावनतो भूत्वा वचनं चेदमब्रवीत् ॥ कांचीपूर्ण कृपासिंधो कमलापतिनन्दन ॥ १२ ॥ मयि निक्षिप्य करुणां रक्ष मां शरणागतम् ॥ मयाधुना कश्चिदर्थश्चिंतितो मानसे महान् ॥ १३ ॥ संशयस्तस्य करणे विद्यते मे तपोधन॥ मनश्चलति तत्कार्ये वाते दीपशिखा यथा ॥ १४ ॥ मदर्थं देवराजं त्वं कृत्वा विज्ञापनं जवात् ॥ यदुक्तं तेन कृपया मह्यं ब्रूह्यकृतात्मने ॥ १५ ॥ कांचीपूर्णस्तदाकर्ण्य यादवोक्तं वचः शुभम् ॥ देवराजाय सहसा तद्वृत्तांतं न्यवेदयत् ॥१६॥ तच्छ्रुत्वा वरदः प्राह कांचीपूर्णं रहस्तदा ॥ शृणु वक्ष्यामि तत्त्वेन चिंतितं यादवेन ते ॥१७॥ रामानुजाश्रये मात्रा यत्तन्महदुदीरितम् ॥ तद्वाक्यश्रवणात्तस्य न मनो निश्चयं गतम् ॥ १८ ॥ तस्मै स्वप्नेति तत्कार्यं कृपया भाषितं मया ॥ तस्मादपि यतेस्तस्य विचिकित्सा भवेत्तदा ॥ १९ ॥ इदानीमपि विप्राय मयोक्तमिति तद्वद ॥ रामानुजं समाश्रित्य गच्छ लोकमनुत्तमम् ॥ २० ॥ मानुष्यं दुर्लभं प्राप्य विप्रत्वं च विशेषतः ॥ य आत्मश्रेयसे नालं स शोच्यो ह्यात्मवंचकः ॥ २१ ॥ अधीत्य सर्वशास्त्राणि शिष्येभ्यस्तान्यबोधयन् ॥ वचनं देवराजस्य कांचीपूर्णो निशम्य तत् ॥ २२ ॥ बभाषे यादवं वाक्यं वरदोक्तं हरिप्रियः ॥ कांचीपूर्णस्य तद्वाक्यं निशम्यात्यंतविस्मितः ॥ २३ ॥ विच्छिन्नसंशयो हृष्टः कांचीपूर्णमपूजयत् ॥ तरसा मठमागत्य यादवस्तं यतीश्वरम् ॥ २४ ॥ भक्त्या प्रदक्षिणं कृत्वा यादवो ह्यपतत्तदा ॥ यतिराज दयासिंधो दीनं मामवलोकय ॥ २५ ॥ मत्कृतानपराधांस्तान् ॥ क्षमस्व बहुधा किल ॥ संसारार्णवनिर्मग्नं मामुद्धर कचग्रहात् ॥ २६ ॥ लक्ष्मणाचार्यस्तदा दृष्ट्वा यादवं दीनमानसम् ॥ उवाच प्रहसन् वाक्यं दयार्द्रीकृतमानसः ॥ २७ ॥ उत्तिष्ठ भूसुरश्रेष्ठ

न ते दुःखमितः परम् ॥ विद्यते देवराजस्य कृपा त्वयि जगत्पतेः ॥२८॥इत्युक्त्वा यादवं प्रीत्या पतितं पादयोस्तदा ॥ उद्धृत्य पाणिना शीघ्रं यतिराजः कृपार्णवः ॥ २९ ॥ तस्य संरक्षणे यत्नं चकार विबुधाग्रणीः ॥ मौंजीबंधादिकं कृत्वा यादवस्य यतीश्वरः ॥ ३० ॥ आदरात्पंचसंस्कारानथ तुर्याश्रमं ददौ ॥ गोविंददास इति च दास्यनामाकरोत्प्रभुः ॥ ३१ ॥ यादवः शुशुभे श्रीमान् कृतसंस्कारपंचकः ॥ निष्कल्मषमना भूत्वा शरच्चंद्र इवामलः ॥ ३२ ॥ तस्मै गोविंददासाय यतींद्रः करुणाकरः ॥ समस्तवैष्णवग्रंथान् स्वयमेवोपदिश्य च ॥ ३३ ॥ गोविंददासं प्रत्याह लक्ष्मणार्यो विचक्षणः ॥ पूर्वं त्वया वैष्णवानां यतीनां दूषणं कृतम् ॥ ३४ ॥ तद्दोषपरिहाराय ग्रंथं कुरु महामते ॥ अस्मिन्मते महाप्राज्ञ स्वदृढप्रत्ययाय च ॥ ३५ ॥ अनुज्ञातस्तदा तेन लक्ष्मणार्येण यादवः ॥ चक्रे तद्दोषशांत्यर्थं यतिधर्मसमुच्चयम् ॥ ३६ ॥ सर्वशास्त्रार्थसारार्थान्त्समुद्धृत्यार्य्यसंमतम् ॥ त्रिदण्डसंन्यासविधिं योऽवदत्तमनुत्तमम् ॥ ३७ ॥ यतिराजस्य निकटे कंचित्कालं स यादवः ॥ स्थित्वाशु वैष्णवं लोकं जगामात्यंतनिर्मलम् ॥ ३८ ॥ हस्त्यद्रीश्वरशासनाद्यातिपातिं भक्त्या समाश्रित्य तं तेनैवाप्तदृढाशयो मुरहरेर्विष्णोः परत्वेऽनिशम् ॥ सम्यग्वैष्णवतामुपेत्य मतिमान् गोविंददासाभिधो मोक्षं प्राप भवाद्यगम्यमतुलं विष्णोः पदं यादवः ॥ ३९ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे यादवेन वरदराजाज्ञया यतिराजाश्रयणं नाम पंचदशोऽध्यायः ॥ १५ ॥

---

## षोडशोऽध्यायः ।

कांच्यां यतींद्रः करुणाकरेंद्रः कामादिदोषान्करुणार्द्रदृष्ट्या ॥ जनस्य सर्वान्प्रणुदन् विरेजे यथातपं शीतकरो निशायाम् ॥ १ ॥ सर्वे जनास्तस्य कटाक्षपूताः संत्यक्तसंसारमहाभिलाषाः ॥ शिष्या यतींद्रस्य यथा महांतश्चकाशिरे विष्णुपुरे सुरेंद्राः ॥ २ ॥ कालह-

स्त्यामास्थितस्य गोविंदस्य यतीश्वरः ॥ हितार्थं प्रेषयामास मातुलाय महात्मने॥ ३ ॥लेख्यं श्रीशैलपूर्णाय लक्ष्मणार्यः कृपानिधिः॥ यतिराजः प्रतिदिनं शिष्येभ्यः प्रेमपूर्वकम् ॥ ४ ॥ शास्त्राण्युपदिशन् तस्थौ कांच्यां विष्णुपरायणः॥ यामुनाचार्यशिष्यास्ते रंगक्षेत्रनिवासिनः॥ ५ ॥ वैभवं यतिराजस्य श्रुत्वा हर्षसमन्विताः ॥ सम्यक् प्रणम्य रंगेशं लोकेशं भक्तवत्सलम् ॥ ६ ॥ विनयावनता भूत्वा वचनं चेदमब्रुवन् ॥ अस्माकं रक्षणार्थाय यतिराजो जगद्गुरुः ॥७॥ आनेतव्यं प्रयत्नेन त्वयात्र करुणाकर ॥ स तद्वाक्यं निशम्याशु रंगेशो भक्तवत्सलः ॥ ८ ॥ प्राहिणोद्देवराजाय लेख्यं तत्कार्यसिद्धये ॥ वाचयामास वरदस्तल्लेख्यं भक्तिपूर्वकम् ॥ ९ ॥ एतावंतं चिरं कालं देवराज यतीश्वरः॥ भगवँस्त्वत्समीपे तु लक्ष्मणार्यो स्थितोऽभवत् ॥ १० ॥ तमिदानीं दयासिंधो मह्यं देहि यतीश्वरम् ॥ एवं ज्ञात्वा पत्रिकार्थं प्रहसन्वरदोऽब्रवीत् ॥ ११ ॥ दानशीला नरा लोके याचितानि ददत्यलम् ॥ अभिमतान्न प्रदास्यंति कितवास्तावकान् क्वचित् ॥ १२ ॥ एवमुक्त्वा द्विजवरं गच्छेत्याह तदागतम् ॥ स द्विजो रंगमागत्य रंगेशाय महात्मने ॥ १३ ॥ सर्वं निवेदयामास वृत्तांतं विष्णुसेवकः ॥ तस्य वाक्यं तदाकर्ण्य रंगेशो निपुणो महान् ॥ १४ ॥ वररंगं समाहूय वचनं चेदमब्रवीत् ॥ यामुनाचार्य्यसत्पुत्र देवगानविशारद ॥ १५ ॥ गत्वा सत्यव्रतं क्षेत्रं देवराजं रमापतिम् ॥ नाटचेन देवगानेन स्वशक्त्या च महामते ॥ १६ ॥ प्रलोभयित्वा वरदं मदर्थं वैष्णवोत्तम ॥ अन्यान्यनर्घ्यवस्तूनि प्रदत्तान्यपि तेन ते ॥१७॥ न गृहाण तमेव त्वं याचयस्व यतीश्वरम् ॥ येन केनाप्युपायेन यतिराजं जगद्गुरुम् ॥ १८ ॥ आदाय शीघ्रमागच्छ तं गायकवरोत्तम ॥ इत्युक्तस्तेन हरिणा वररंगस्त्वरान्वितः ॥ १९ ॥ कांचीमवाप सहसा तमानेतुं यतीश्वरम् ॥

कांचीपूर्णादयः सर्वे वररंगस्य धीमतः ॥ २० ॥ विज्ञायागमनं तस्य गुरुपुत्रस्य सत्वरम् ॥ प्रतिजग्मुर्महात्मानं शंखकाहलनिःस्वनैः ॥ ॥ २१ ॥ यामुनाचार्य्यतनयमर्घ्यपाद्यादिकैः परम् ॥ पूजार्हं पूजयामासुः कांचीपुरनिवासिनः ॥ २२ ॥ वररंगः संप्रहृष्टः कांचीपूर्णादिभिस्तदा ॥ करिशैलं समारुह्य कनकांबरधारिणः ॥ २३ ॥ ववंदे चरणौ तस्य देवराजस्य भक्तितः ॥ तत्तीर्थं शठकोपं च गृहीत्वा भक्तिपूर्वकम् ॥ २४ ॥ कांचीपूर्णेन निर्दिष्टे गृहे वासं तदाकरोत् ॥ गुरुपुत्राय सहसा तस्मै वैष्णवपुंगवः ॥ २५ ॥ प्रसादान्यखिलान्याशु कांचीपूर्णः प्रदापयत् ॥ अध्वग्लानिनिवृत्त्यर्थं वररंगः कुशाग्रधीः ॥ ॥ २६ ॥ तं वासरं व्यपनयत्तिष्ठन्वेश्मनि वैष्णवः ॥ ततः कल्ये समुत्थाय कृतपूर्वाह्णिकक्रियः ॥ २७ ॥ वेषं रुचिरमास्थाय सन्नद्धो नाट्यकर्मणि ॥ देवराजस्य सेवार्थं वररंगो जवाद्ययौ ॥ २८ ॥ त्यागमंडपमासाद्य वरदः करुणाकरः ॥ सर्वैः परिजनैर्देव्या श्रिया भूम्या च शोभितः ॥ २९ ॥ स्वतेजसा दशदिशो भासयन् भानुमानिव ॥ मंदस्मितसुखः श्रीमांस्तस्थौ तत्र जगत्पतिः ॥ ३० ॥ वररंगः प्रणम्याथ वरदं भक्तवत्सलम् ॥ देवगानेन महता जगावग्रे जगत्पतेः ॥ ३१ ॥ चकार बहुधा नाट्यं वरदस्य स वैष्णवः ॥ देवगानेन देवेशः संतुष्टो नर्तनेन च ॥ ३२ ॥ अनर्घ्याभरणादीनि ददौ तस्मै जगत्पतिः ॥ वररंगस्तानि दृष्ट्वा वरदं प्राह बुद्धिमान् ॥ ३३ ॥ किं प्रयोजनमेतेन मम भक्तहितेरत ॥ मया यद्वांच्छितं नाथ तत्प्रदेह्यधुनादरात् ॥ ३४ ॥ तस्य वाक्यं तदाकर्ण्य वरदः प्राह तं प्रति ॥ मां च लक्ष्मीं विना वत्स यद्वांछसि ददामि तत् ॥ ३५ ॥ देवराजस्य वचनं श्रुत्वासौ वैष्णवोत्तमः ॥ वररंगः संप्रहृष्टो वरदं वाक्यमब्रवीत् ॥ ३६ ॥ रंगेशाय दयासिंधो यतिराजं समर्पय ॥ वांछा ममेयं वरद नास्त्यन्या जगदीश्वर ॥ ३७ ॥ प्रीतिस्तु रंग-

राजस्य तास्मिन्नेव महात्मनि ॥ तच्छ्रुत्वा वरदो वाक्यं तमाहोद्विग्न-
मानसः ॥ ३८ ॥ यतिराजं विना तावद्यदन्यद्वांछयाधुना ॥ कथं
दास्यामि ते धीरं प्राणभूतं यतीश्वरम् ॥ ३९ ॥ किंतु प्राणान्परि-
त्यज्य यः को वा वर्तते भुवि ॥ युष्मत्प्राणान्देहि मह्यमिति वांछति
कः कथम् ॥४०॥ तस्य तद्वचनं श्रुत्वा यामुनार्यस्य नंदनः ॥ वररंगः
पुनः प्राह वरदं वदतां वरः ॥४१॥ सर्वे जना वदंति त्वां सत्यवाचं दयाप-
रम् ॥ सकलार्थप्रदं धीरं देवदेवं जगत्पतिम् ॥ ४२ ॥ दास्यामीति
प्रतिश्रुत्य पूर्वं मे वांछितं हरे ॥ त्वया संप्रति मां देव न ददामीति भा-
षितम् ॥ ४३ ॥ द्विरुक्तिस्तव नास्तीति जनाः सर्वे वदंति हि ॥ त्व-
योक्तान्यवतारेषु वचनानि स्मराधुना ॥ ४४ ॥ चिंतां मा कुरु देवेश
त्वया किं साध्यतेऽधुना ॥ हर्षेण रंगराजाय यतिराजं समर्पय ॥४५॥
इत्युक्त्वा वरदं देवं वररंगस्तदा हरिम् ॥ आगच्छ यतिराजेति रंगं प्रति
महामते ॥ ४६ ॥ ब्रुवाणस्त्वरया पाणिं जग्राह यतिभूपतेः ॥ यतिरा-
जस्तदा भूम्यां देवराजाय भक्तितः ॥ ४७ ॥ कृत्वा प्रणामं साष्टांगं
श्रीहस्तिगिरिवासिने ॥ तेनानुज्ञापितो धीमान् वररंगेण संयुतः॥४८॥
मठमागत्य तरसा सर्ववृत्तांतमादरात् ॥ स्वशिष्येभ्यो विधायाथ ल-
क्ष्मणार्यस्तपोधनः ॥ ४९ ॥ प्रतस्थे वररंगेण रंगक्षेत्रं महात्मना ॥
यतिराजस्य तद्वाक्यं श्रुत्वा श्रोत्रसुखावहम् ॥५०॥ कूरेशदाशरथ्यादि-
शिष्याः संतुष्टमानसाः ॥अनुजग्मुर्लक्ष्मणार्यं रंगराजदिदृक्षया ॥५१॥
लोके मातृगृहाद्यथा पतिगृहं याता नवोढांगना ध्यायंती पितरौ हृदा-
श्रुनयना तद्वद्यतीनां प्रभुः ॥ त्यक्त्वा लक्ष्मणदेशिकः स महतीं कां-
चीं कथंचित्तदा चिंताशोकसमन्वितो हरिपरो रंगं प्रतस्थे शनैः॥५२॥
इतिश्रीप्रपन्नामृते रामानुजचरित्रे रंगराजाय यतिराजसमर्पणं नाम षो-
डशोऽध्यायः ॥ १६ ॥

# सप्तदशोऽध्यायः ।

रामानुजो ददर्शाथ कावेरीं कलिनाशिनीम् ॥ शुद्धां मनोहरां दिव्यामपंकां पंकजावृताम् ॥ १ ॥ स्वच्छतोयसमायुक्तां श्रीरंगोत्संगगामिनीम् ॥ तस्यां विगाह्य कावेर्यां शिष्यैः सह यतीश्वरः ॥ २ ॥ सम्यग् धृत्वोर्ध्वपुंड्राणि सैकते सुमनोहरे ॥ मंत्रराजं जपंस्तस्थौ लक्ष्मणार्यो हरिप्रियः ॥ ३ ॥ वररंगः पुरा शीघ्रं श्रीरंगं प्राप हर्षतः ॥ आरंभकर्मसंसिद्धिं रंगेशाय निवेदितुम् ॥ ४ ॥ पूर्णाचार्य्येण संयुक्तो यामुनार्य्यस्य नंदनः ॥ रामानुजस्यागमनं रंगेशाय न्यवेदयत् ॥ ५ ॥ वररंगस्य वचनं श्रुत्वा हर्षसमन्वितः ॥ रंगेशो वररंगाय सम्मानं बहुधाकरोत् ॥ ६ ॥ रंगनाथस्ततः पूर्णमुवाच वचनं शुभम् ॥ इदानीं बहुमानेन कनकच्छत्रचामरैः ॥ ७ ॥ अस्माद्दिव्यकथाः पूर्णाः पठद्भिर्वैष्णवोत्तमैः ॥ देशिकेंद्रैर्महाभागैरन्यैश्च पुरवासिभिः ॥ ८ ॥ वाचामगोचरेणैव वैभवेन यतीश्वरम् ॥ तत्र गत्वा लक्ष्मणार्यमानयस्व जवादिति ॥ ९ ॥ रंगेशस्य वचः श्रुत्वा पूर्णार्यः पूर्णवत्सलः ॥ प्रत्युज्जगाम सहसा वैष्णवैर्वेदपारगैः ॥ १० ॥ समस्तैः परिवारैस्तं लक्ष्मणार्यं यतीश्वरम् ॥ रंगराजः स्वयं प्रीत्या निर्ययावग्रमंडपे ॥ ११ ॥ कृतनित्यक्रियो धीमाल्लँक्ष्मणार्य्यस्तपोधनः ॥ विलोक्य निवहं तेषां वैष्णवानां महात्मनाम् ॥ १२ ॥ तत्सेवाभिमुखः श्रीमान्प्रतस्थे शिष्यसंवृतः ॥ आयांतं लक्ष्मणाचार्यं दृष्ट्वा हर्षसमन्विताः ॥ १३ ॥ तूर्णं गत्वा तत्समीपं तदा भागवतोत्तमाः ॥ भूम्यां प्रणामं संचक्रुः यतिराजाय भक्तितः ॥ १४ ॥ रामानुजश्च पूर्णाय स्वाचार्याय महात्मने ॥ अकरोद्वंदनं तस्मै मुदा भक्त्या च सत्वरम् ॥ १५ ॥ लक्ष्मणार्यादयः सर्वे रंगक्षेत्रनिवासिनः ॥ अन्योन्यवंदनं चक्रुर्वैष्णवाश्च महौजसः ॥ १६ ॥ पूर्णार्य्यं लक्ष्मणाचार्य्यः स्वाचार्य्यं देशिकप्रियः ॥ निधाय भक्त्या पुरतः श्रीवैष्णवशिखामणिः ॥ १७ ॥ श्रीवैष्णवानां

निवहैः संयुक्तः सत्वरं गुरुः ॥ संप्राप रंगनिलयं सप्तप्राकारशोभितम् ॥ १८ ॥ अनेकगोपुरयुतं मण्डपैः प्रविराजितम् ॥ देवालयं प्रविश्याशु क्रमेण यतिशेखरः ॥१९॥ विष्वक्सेनादिदेवेभ्यः कृत्वा वंदनमादरात्॥ रंगराजस्य सेवार्थं विमानं रंगमध्यगात् ॥२०॥ तदा रंगेश्वरः श्रीमान् यतिराजस्य धीमतः॥प्रतस्थेभिमुखो देवः कृपया भक्तवत्सलः॥२१॥ स्वस्याभिमुखमायांतं रंगेशं वीक्ष्य विस्मितः ॥ किमेतदिति संचिंत्य समीपं प्राप्य रंगिणः ॥ २२ ॥ संसेव्य चरणौ तस्य यतींद्रो वाक्यमब्रवीत् ॥ रंगनाथ हरे विष्णो त्वद्दासस्य जगत्पते ॥ २३ ॥ ममाभिमुखमायातुं युष्माकं न हि सांप्रतम् ॥ यतिराजस्य तद्वाक्यं श्रुत्वा रंगस्तमब्रवीत् ॥२४॥आगता मे यथा यूयं वयं तेऽभिमुखं तथा ॥ को वात्रातिशयस्तावद्विद्यते यतिभूमिप ॥ २५ ॥ द्वयोर्विभूत्योः सर्वेषामास्थितानां यतीश्वर ॥ जनानामभयं दत्त्वा योगक्षेमं वहन् वस ॥२६॥ एतावंतमहं कालं रक्षंस्तानास्थितोऽभवम्॥संप्रत्यहं विश्रमितुमिच्छामि शृणु मद्वचः ॥ २७ ॥ अधुना मद्वचः श्रुत्वा लोकान् रक्षस्व शीघ्रतः॥ समस्तानि च कार्याणि कुर्वन्नस्माकमादरात् ॥ २८ ॥ सर्वान् जनाञ्च्छेषभूतान्कृत्वा तव यतीश्वर ॥ सुपोष्यास्मत्परिकरं शेषीभूत्वा महामते ॥ २९ ॥ जगद्गुरो पालयस्व ममाज्ञां तं यतीश्वर ॥ विभूतिद्वयमस्माकं त्वदधीनं स्थितं किल ॥ ३० ॥ मत्सन्निधौ मदीयस्त्वं मां पुष्यन्मत्परायणः ॥ इहैव वस योगीश मत्प्रियार्थं विचक्षण ॥ ३१ ॥ यथाशेमुषि योगींद्र तथा कुरु महामते॥ इत्युक्त्वा लक्ष्मणमुनिं रंगेशः कृपया हरिः ॥ ३२ ॥ अकरोद्यतिराजाय विभूतिद्वयनायकम् ॥ इति तस्मै नामधेयं मुदा श्रीरंगनायकः ॥ ३३ ॥ यतींद्रो रंगिणः श्रुत्वा वचनं विस्मयान्वितः ॥ विनयेन स्तुतिं कृत्वा रंगेशाय महौजसे ॥ ३४ ॥ अवदद्वदतां श्रेष्ठो वचनं मधुराक्षरम् ॥पूर्णार्य्यकृपया मेऽद्य वैभवोऽयं महानभूत् ॥ ३५ ॥ पूर्णाचार्यस्तु तच्छ्रुत्वा यतिराजमथाब्रवीत् ॥ वैकुंठलोकादागत्य शठकोपो महामुनिः ॥३६॥

पुरा धरायां जननं कृत्वा करुणया तदा॥भवबंधविनिर्मुक्तान् कर्तुकामो जनानिमान् ॥ ३७ ॥ अशक्यमिति मत्वाथ तेषां संरक्षणं महत् ॥ त्रिकालज्ञो मुनिरिदं स्वप्रबंधे स चाब्रवीत् ॥ ३८ ॥ क्षित्यामग्रे महान्कश्चित्पुरुषोऽत्र भविष्यति ॥ स महात्मा सर्वजनान् रक्षिष्यति न संशयः ॥ ३९ ॥ कलिधर्मस्तदा पूर्णस्तेन नष्टो भविष्यति ॥ इम-मर्थं जना यूयं जानीत निश्चयं बुधाः ॥ ४० ॥ कारिपुत्रस्य वचसः तव संप्रति जन्मनः ॥ तुल्यमासीदत्र चार्थे विचिकित्सा न विद्यते ॥४१॥ रंगराजस्ततस्तेद्य विभूतिद्वयमप्यदात् ॥ अत्रैव वासं योगीश कुरु रंगाज्ञया सुखम् ॥ ४२ ॥ अस्मिँल्लोके वर्त्तमानान् जनान् सर्वान् रमापतेः ॥ पादाब्जयोर्मधुलिहः कुर्वन् लक्ष्मणदेशिक ॥ ४३ ॥ अनेकान् वत्सरान् भूम्यां सुखं तिष्ठ यतीश्वर ॥ महता वैभवेनात्र पालयन् परितो जनान् ॥ ४४ ॥ पूर्णाचार्य्यस्य वचनं निशम्यात्यं-तविस्मितः ॥ रंगेशाय पुनर्भक्त्या नत्वा रामानुजस्तदा ॥ ४५ ॥ कृतांजलिपुटो भूत्वा श्लक्ष्णं वचनमब्रवीत् ॥ आज्ञा यथा त्वया दत्ता तथैव क्रियते मया ॥ ४६ ॥ आज्ञां विहातुं युष्माकं कथमर्हाम्यहं हरे ॥ मम त्वद्दासभूतस्य त्वदाज्ञापरिपालनम् ॥ ४७ ॥ विना किमन्यद्भगवन् कर्तव्यं कार्यमस्ति हि॥ एवमुक्त्वा रंगराजं यतिराजो रमापतिम् ॥४८॥ अंतर्गृहं प्रविश्याशु कृत्वा तत्र प्रदक्षिणम् ॥ शयानं शेषशय्यायामपश्यद्रंगशायिनम् ॥४९॥ विवस्वत्कोटिसंकाशं शरच्चं-द्रनिभाननम् ॥ नवीनरत्नखचितकवचेन विराजितम् ॥ ५० ॥ का-लांबुदनिभाकारं पीतांबरधरं हरिम् ॥ हर्षेणोत्फुल्लनयनः पुलकांकित-विग्रहः ॥ ५१ ॥ आनंदबाष्पनयनस्तस्य चापादमस्तकम् ॥ यति-राजो महाभक्त्या ननाम बहुधा तदा ॥ ५२ ॥ तत्तीर्थं शठकोपं च गृहीत्वा भक्तिपूर्वकम् ॥ मंडपे वैनतेयस्य निषसाद यतीश्वरः ॥ ५३ ॥ पूर्णाचार्यादयः सर्वे वैष्णवा वैष्णवोत्तमम् ॥ लक्ष्मणार्यं महात्मानं परिवार्योपतस्थिरे ॥ ५४ ॥ आनयामास योगींद्रः स्वभटैः परिचा-

रकान् ॥ अर्च्चकान् पाचकांश्चैव प्रस्थानसमयोचितान्॥ ५५ ॥वैष्णवान् गणकान् वैश्यान् शैलूषान् रजकांस्तदा ॥ मालाकारान्वादकांश्च लेखकानधिकारिणः ॥ ५६ ॥ ये चान्ये रंगराजस्य सेवकाः परमात्मनः ॥ ते सर्वे लक्ष्मणाचार्य्यशासनात्तूर्णमागताः ॥ ५७ ॥ तान् दृष्ट्वा लक्ष्मणाचार्यः सर्वानेवं वचोऽब्रवीत् ॥ सेवाकालेषु सर्वेषु रंगराजस्य भक्तितः ॥ ५८ ॥ सावधानेन वर्तध्वं कैंकर्य्येष्वनिशं हरेः ॥ अवज्ञया न वर्त्तध्वं न क्वचिल्लीलयापि वा ॥ ५९ ॥ युष्माभिः सावधानेन यथाशास्त्रं यथाविधि ॥ कर्त्तव्यान्यखिलान्यस्य कैंकर्य्याणि जगत्पतेः ॥ ६० ॥ अन्यान् विधाय चतुरान्कैंकर्य्ये रंगभूपतेः ॥ परकालकृतं भक्त्या कैंकर्य्यं यदनुत्तमम् ॥ ६१ ॥ द्रष्टुं प्रतस्थे स्वजनैस्तस्माद्गरुडमंडपात् ॥ पूर्णाचार्य्यमुखाच्छ्रुत्वा तत्कैंकर्य्यं विलोक्य च ॥ ६२ ॥ विस्मयाविष्टहृदयः संतुष्टो यतिभूपतिः ॥ तत्रैव वासमकरोच्छ्रीरंगे रंगशासनात् ॥६३॥ श्रीरंगेश्वरशासनाद्यतिपतिः कूरेश्वराख्यादिभिः शिष्यैः शास्त्रविदुत्तमैः श्रुतिवरैर्वेदांतयुग्माधिकैः ॥ कालक्षेपपरायणो हरिपरः सर्वाञ् जनान्पूर्णया पुष्णन् सौम्यदृशा निवासमकरोत्तत्रैव रंगे महान् ॥ ६४ ॥ येये दृष्टिपथं गता यतिपतेर्निर्व्याजसंरक्षतस्तेतेऽगाधमहाभवाब्धितरणं मन्नाथपादांबुजम् ॥ संप्राप्ताः सकलाघकोटिनिवहानुन्मूल्य तूर्णं जनाः सर्वे विष्णुरता बभूवुरमला निर्मुक्तमायान्वयाः॥६५॥ रंगेशात्करुणादहर्निशमसौ पूर्णार्यसंलापनात् पौराणां प्रियपूर्वकात् प्रतिदिनं सन्मानतः सादरात्॥ दुःखं हस्तिगिरीश्वरस्य महतो यद्विप्रयोगोत्थितं त्यक्त्वा लक्ष्मणदेशिकः सुखतरं तत्रैव वासं व्यधात् ॥ ६६ ॥ आख्यानमेतच्छुभदं शुभाढ्यं रंगेशदेवेशयतीश्वराणाम् ॥ संवादभूतं च पठंति संतस्ते यांति वैकुंठपदं हि सत्यम् ॥ ६७ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे रामानुजस्य विभूतिद्वयाधिपत्यं नाम सप्तदशोऽध्यायः ॥ १७ ॥

# अष्टादशोऽध्यायः ।

गोविंदरक्षणार्थाय यतिराजेन वैष्णवाः ॥ श्रीशैलपूर्णमुद्दिश्य ये तु संप्रेषिताः पुरा ॥ १ ॥ कृतकार्यास्ततस्ते तु रामानुजादिदृक्षया ॥ आययू रंगनगरं वैष्णवाः कृतसत्वराः ॥ २ ॥ यतीश्वरः स तान् दृष्ट्वा वैष्णवान् कृतवंदनान् ॥ उवाच मधुरं वाक्यं तेषां हर्षं विधाय च ॥ ३ ॥ श्रीशैलपूर्णः कुशली वर्तते किं तु वैष्णवाः ॥ गोविन्दस्तस्य कृपया जुष्टः किं सत्पथे स्थितः ॥ ४ ॥ लक्ष्मणार्यस्य तद्वाक्यं श्रुत्वा ते वैष्णवास्तदा ॥ सर्वं निवेदयामासुर्लक्ष्मणार्याय तत्त्वतः ॥५॥ तानाह लक्ष्मणाचार्यः कथमासीत्समागमः ॥ तस्य श्रीशैलपूर्णस्य गोविंदस्य शिवात्मनः॥६॥अयमग्रे किमवदत्सोपि तं किमथाब्रवीत्॥ मम कौतूहलं श्रोतुं विस्तराद्वदताधुना ॥ ७ ॥ निशम्य तद्वाक्यमतिप्रहृष्टास्ते वैष्णवास्तत्र यतीश्वराय ॥ ऊचुस्तयोस्तां सकलां कथां च महात्मने लक्ष्मणदेशिकाय ॥८॥ आज्ञापितास्त्वया ब्रह्मन् वयं लक्ष्मणदेशिक ॥ वेंकटाचलमारूढाश्चतुर्थदिवसे तदा ॥९॥ नत्वा रमापतिं नाथं श्रीनिवासं जगद्गुरुम् ॥ नत्वा श्रीशैलपूर्णार्य्यं त्वदुक्तार्थं महामते॥ १०॥ तस्मै विज्ञापितं सम्यगस्माभिःश्रीप्रगामिभिः ॥ तत्तदाकर्ण्य सुप्रीतः स सम्यग्वाचमब्रवीत् ॥ ११ ॥ मत्स्वस्रियस्तु गोविंदो धीमान् शास्त्रविचक्षणः ॥ यादवस्य सहायेन गंगास्नानपरोऽभवत् ॥१२॥ तस्य तेनाशु शैवत्वं गोविंदस्य तदोत्थितम्॥अहो दुर्जनसंसर्गः सतामपि विमोहकः॥१३॥ब्रह्मेशानादयो देवा मायया यस्य मोहिताः॥ किमुतान्ये नरास्तस्मै विष्णवे महते नमः॥१४॥ब्राह्मणा अपि शास्त्रज्ञा न जानंति महर्षयः॥ ब्रह्मेशानादिकर्तारं नारायणमनामयम् ॥ १५ ॥ पुरैवाहमिदं कार्य्यं कर्तुकामः समास्थितः ॥ रामानुजोपि संचख्याविति युष्माभिरीरितम् ॥ १६ ॥ तेनोदीरितमस्माकं सुतरां कार्य्यमेव हि ॥ इति हृष्टमनाः शीघ्रं शिष्यैः सह यतीश्वर ॥ १७ ॥ श्रीशैलपूर्णः प्रय-

यावस्माभिर्वेंकटाचलात् ॥ कालहस्तिपुरं प्राप्य तस्योद्याने स वैष्ण-
वः ॥ १८ ॥ तत्रत्यैः पुरुषैर्ज्ञात्वा गोविंदगमनागमम् ॥ तं दिदृक्षु-
स्तदा ब्रह्मन् गोविंदहितकारणात् ॥१९॥तडागतीरे शिष्येभ्यो ग्रंथानु-
पदिशन् स्थितः ॥ मृगाहरणकामस्तु मृगार्थं मृगयुर्यथा ॥ २० ॥
तदा रुद्राभिषेकार्थं घटमादाय भक्तितः ॥ ग्रहीतुकामस्तत्तोयं गोविं-
दस्तत्र चागमत् ॥२१॥ पठन् रुद्रपराञ् श्लोकान् गाथास्ता द्राविडी-
स्तथा ॥ गृहीततोयस्तानस्मान्संपश्यन्मौनमास्थितः ॥ २२ ॥
स गोविंदो यतिश्रेष्ठ यातुकामस्ततोऽभवत् ॥ श्रीशैलपूर्णस्तं प्राह
गोविंदं वैष्णवोत्तमः ॥ २३ ॥ चूडारग्वधपुष्पस्य शिवस्य कृतमज्ज-
नात् ॥ शीतलेन च तोयेन श्रमेण महता तव ॥ २४ ॥ किं फलं
भवति ब्रह्मंस्तत्त्वं ब्रूहि तपोधन ॥ गोविंदस्तद्वचः श्रुत्वा तं च दृष्ट्वा
क्षणं स्थितः ॥ २५ ॥ पूर्णं दृष्ट्वा यतिश्रेष्ठ न किंचिद्विस्मितो ययौ ॥
श्रीशैलपूर्णः स तदा गोविंदस्य विचेष्टितम् ॥ २६ ॥ विलोक्य पुन-
रायातो ह्यस्माभिर्वेंकटाचलम् ॥ ततः कतिषु यातेषु वासरेषु गुरू-
त्तमः ॥ २७ ॥ स गोविंदहितार्थाय शिष्यैश्चास्माभिरादरात् ॥
कालहस्तिपुरं प्राप्य पूर्णः श्रीशैलपूर्वकः ॥ २८ ॥ तीरे तस्य तडा-
गस्य वटच्छायासमाश्रितः ॥ दयानिधिः पूर्वरीत्या तस्थौ तस्य दिदृ-
क्षया ॥ २९ ॥ जलार्थं घटमादाय गोविंदस्तत्र चागतः ॥ ददर्श स
तमायांतं गोविंदं घटहस्तकम् ॥ ३० ॥ भस्मोद्धूलितसर्वांगं त्रिपुंड्रां-
कितमस्तकम् ॥ रुद्राक्षमालाभरणं कृतपंचाक्षरीजपम् ॥ ३१ ॥
मौनेन महता युक्तमकंप्यं गिरिसन्निभम् ॥ प्रशस्तं शिवभक्तानां
बाणादीनां महत्तरम् ॥ ३२ ॥ शिवात्मकमिदं विश्वं भावयंतमह-
र्निशम् ॥ शिवादन्यत्परं नास्ति शिवः सत्यमहं शिवः ॥ ३३ ॥ इति
भावनया नित्यं पुलकांकितविग्रहम् ॥ श्रीशैलपूर्णः स तदा तन्मनः
शोधनाय च ॥ ३४ ॥ चिंतयित्वा पत्रिकायां कांश्चिच्च द्राविडाग-
मान् ॥ स्तोत्रराजे यामुनेन कृते पूर्वं महात्मना ॥ ३५ ॥ स्वाभावि-

केति यः श्लोको विद्यते यतिशेखर॥ तं च श्लोकं विलिख्याशु गोविंदागमनेऽध्वनि ॥ ३६ ॥ निधाय सत्वरं धीमान् तूष्णींभूतो यतीश्वर ॥ दृष्ट्वा तां पतितां भूमौ गोविंदः पत्रिकां तदा॥ ३७॥स गृहीत्वा पठित्वाशु केनात्र पातिता भुवि॥तत्रेति तां वाचयित्वा घटेनादाय तज्जलम्॥ ३८॥ शिवालयं यातुकामः प्रत्यावृत्य विशोध्य च ॥ तां पत्रिकां समादाय शनैरवनतस्तदा ॥ ३९ ॥ धृतोदकघटो ह्यस्मान्पश्यन्नथ यतीश्वर ॥ वाल्मीकेभगवतः पूर्वं शोकः श्लोकत्वमागतश्च: ॥ ४० ॥ यथेति तमसातीरे तद्वत्सोयमचिंतयत्॥ततोऽग्रे सहसा स्थित्वा गोविंदःसस्मितस्तदा ॥४१॥श्रीशैलपूर्णमाहेदं वचनं देशिकोत्तमम् ॥ येर्थाः करस्था भवतां गलिता वैष्णवोत्तमाः ॥ ४२ ॥ त इमे इति तां तस्मै दर्शयामास पत्रिकाम् ॥ श्रीशैलपूर्णस्तच्छ्रुत्वा स गोविंदमथाब्रवीत् ॥४३॥ अन्येषामर्थजालानि गलितानि भवंति हि ॥ अस्माकं त्वर्थजालानि न स्कन्नानि कदाचन ॥ ४४ ॥ तच्छ्रुत्वा तमुवाचेदं गोविंदो वैष्णवोत्तमम् ॥ अलं चातुर्य्यवचनैस्तानि तिष्ठंत्विदं शृणु ॥ ४५ ॥ बहवः संति पंथानस्तान्विहाय महामते ॥ किमर्थमेकमार्गेस्मिन्वर्त्तंते वैष्णवाः सदा ॥ ४६ ॥ एकस्मिन्नपि मार्गेस्मिन्वर्त्तमाना वयं सदा ॥ मार्गस्यास्य सुगम्यत्वादित्युवाच स तं तदा ॥ ४७ ॥ तस्य तद्वचनं श्रुत्वा गोविंदः प्रत्यभाषत ॥ संप्रेषणाय बंधूनां भवंतः किं समागताः ॥ ४८ ॥ तेनैवमुक्तस्तं प्राह पूर्णः श्रीशैलपूर्वकः ॥ क्रेतुकामा वयं धेनूर्गोविंदात्र समागताः ॥ ४९ ॥ तन्निशम्य स गोविंदस्तं पूर्णं प्रत्यभाषत ॥ अनुष्ठातुर्गवां पादरजः किं पावनं न हि ॥ ५० ॥ इत्युक्तवंतं तं प्राह स पूर्णो यतिशेखर ॥ उचितस्थानलब्धं चेत्पावनं तद्भवेद्ध्रुवम् ॥ ५१ ॥ पूर्णाचार्य्यवचः श्रुत्वा गोविंदः पुनरब्रवीत् ॥ऋजुर्वास च वक्रो वा को भेदो ऋजुवक्रयोः ॥ ५२ ॥ एवमुक्ते तु गोविंदे स पूर्णः पुनरब्रवीत् ॥विद्यमाने ऋजौ वक्रे भेद एव किलानघ॥५३॥

अंगीकृत्य वचस्तस्य प्रत्यभाषत स द्विजः ॥ इदं वाग्बंधनं वाक्यं त्वया पूर्ण प्रभाषितम् ॥ ५४ ॥ तस्य तद्वचनं श्रुत्वा भूयः पूर्णोऽब्रवीद्वचः ॥ सद्वाक्यानामिदं शीलमिति गोविंद भावय ॥ ५५ ॥ स तद्वाक्यं समाकर्ण्य गोविंदस्तमथाब्रवीत् ॥ तत्रात्यंतविचारः किमस्ति श्रीवैष्णवोत्तम ॥ ५६ ॥ गोविंदवचनं श्रुत्वा स पूर्णः पुनरब्रवीत् ॥ परत्वे तद्विचारोस्ति गोविंद विदुषां वर ॥ ५७ ॥ श्रीशैलपूर्णवाक्यानि युक्तियुक्तानि स द्विजः ॥ निरुत्तरः संप्रतस्थे निशम्य यतिपुंगव ॥ ५८ ॥ दृष्ट्वा श्रीशैलपूर्णोऽपि गोविंदाचार्यलक्षणम् ॥ प्रसादमगमच्चित्तमिति वाक्यमनुस्मरन् ॥ ५९ ॥ तं साध्यकोट्यां निःक्षिप्य शिष्यैः सह यतीश्वर ॥ प्रहर्षमाणः प्रययौ भूयः श्रीवेंकटाचलम् ॥ ६० ॥ तद्वैष्णवानां वचनं श्रुत्वा रामानुजस्तदा ॥ अतिहर्षसमायुक्तो वैष्णवांश्च सभासदः ॥ ६१ ॥ शिष्यं दाशरथिं दृष्ट्वा कूरनाथं वचोऽब्रवीत् ॥ युष्माभिस्तत्कथाः सम्यक्छ्रुताः किं वैष्णवोत्तमाः ॥ ६२ ॥ श्रीसूक्तिर्यामुनार्य्यस्य सक्ता गोविंदमानसे ॥ दृष्ट्वा वैतांडिकच्छायां वाङ्मात्रेण महात्मना ॥ ६३ ॥ श्रीशैलपूर्णो वचसां चातुर्येण सदुत्तरम् ॥ कृपया तस्य वाक्यानां छायामात्रेण दत्तवान् ॥ ६४ ॥ विदग्धत्वाच्च शास्त्रेषु गोविंदस्य महात्मनः ॥ विद्यावैदग्ध्यवाक्येषु तेन सक्तोभवत्तदा ॥ ६५ ॥ यूयं मां तत्कथमिति यदि पृच्छथ वैष्णवाः ॥ शृणुध्वं तत्त्वतो वक्ष्ये सावधानेन तन्मनाः ॥ ६६ ॥ तेनैव मुक्तस्तं प्राह पूर्णः श्रीशैलपूर्वकः ॥ क्रेतुकामा वयं धेनूर्गोविंदं त्वां समागताः ॥ ६७ ॥ श्रुतिस्मृतिपुराणेषु सेतिहासेषु सर्वशः ॥ वीक्ष्य प्रमाणजालानि कश्चिन्मां वेत्ति तत्त्वतः ॥ ६८ ॥ क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ ६९ ॥ ज्ञानं नराणामधिकं विशेषं ज्ञानेन हीनः पशुभिः समानः ॥ ये वा ललाटफलके लसदूर्ध्वपुंड्रास्ते वैष्णवा भुवनमाशु पवित्रयंति ॥७०॥ ऊर्ध्वपुंड्रं द्विजातीनां शंखचक्रादिधारणम् ॥

वेदमूलप्रमाणाद्धि धर्मं सर्वं प्रतिष्ठितम् ॥ ७१ ॥ अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ ७२ ॥ प्रणवो धनुः शरोह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ॥ अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ७३ ॥ सदेवेत्यादिवाक्यानि सत्यज्ञानादिकान्यपि ॥ एकमेवेति वाक्यानि बहुस्यां प्रभृतीनि च ॥ ७४ ॥ आपादितानि गोविंदे तत्रतत्र बुधर्षभाः ॥ एतैः प्रमाणजालैश्च प्रतिपाद्यो जनार्दनः ॥७५॥ नारायणो जगत्कर्ता कल्याणगुणसागरः ॥ अतो मुमुक्षुभिः कार्यं सुतरां विष्णुपूजनम् ॥ ७६ ॥ शंखचक्रोर्द्धपुंड्रादिधारणं च द्विजोत्तम ॥ इत्येवं मनसा सम्यग्विचार्य च पुनः पुनः ॥ ७७॥दोलायमानचित्तस्तु तद्वाक्येभ्यो निरुत्तरः ॥ शास्त्रज्ञत्वात्स गोविन्दस्तूष्णीं भूतोभवत्तदा ॥ ७८ ॥ स पूर्णोपि महाप्राज्ञस्तज्ज्ञात्वा तस्य मानसम् ॥ न्ययोजयत्साध्यकोट्यां तं तदा वैष्णवोत्तमः ॥७९॥ सभासदः सतानुत्का वैष्णवान्यतिपुंगवः ॥ तं पूर्णं श्लाघयित्वार्य्यं वैष्णवांस्तानुवाच ह ॥८०॥ ततः किमासीत्तत्सर्वं ब्रूत विस्तरतो मम ॥ तच्छ्रुत्वा यतिराजस्य वाक्यं वैष्णवसत्तमाः ॥ ८१ ॥ इदमूचुर्लक्ष्मणार्य्यं ब्रह्माणमृषयो यथा ॥ ८२ ॥ यंयं स्पृशति पाणिभ्यां यंयं पश्यति चक्षुषा ॥ स्थावराण्यपि मुच्यंते किं पुनर्बांधवा जनाः ॥ ८३ ॥ इत्युक्तरीत्या भवतः संबन्धेन गतिर्भवेत् ॥ विभूतिद्वयनाथस्य स्थावराणामपि ध्रुवम् ॥ ॥ ८४ ॥ को विचारोस्ति गोविंदे यतीश्वर जगद्गुरो ॥ इत्युक्त्वा लक्ष्मणाचार्य्यं वैष्णवास्ते महात्मनः ॥ ८५ ॥ अवशिष्टां कथां तस्मै प्रवक्तुमुपचक्रिरे ॥ ८६ ॥ कूरेशादिसमस्तशिष्यनिकरैर्विद्वत्सभामंडले ह्यासीनः परमासने यतिपतिर्लोकैकशिक्षाकरः ॥ श्रोतुं तस्य कथां महाद्भुततरां चक्रे मनः सादरं गोविंदस्य महात्मनः प्रियतमां तेभ्यो जनेभ्यो महान् ॥ ८७ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे भूरिश्रीशैलपूर्णगोविन्दसंवादो नामाष्टादशोऽध्यायः ॥ १८ ॥

# एकोनविंशोऽध्यायः ।

तेन संचोदितास्तत्र यतिराजेन वैष्णवाः ॥ कृतांजलिपुटा वाक्यं ते तमूचुर्महौजसम् ॥ १ ॥ कक्षे तृतीये वक्ष्यामः कार्य्यसिद्धिं शृणुष्व च ॥ भूयः श्रीशैलपूर्णार्य्यो नत्वा श्रीवेंकटेश्वरम् ॥ २ ॥ अस्माभिः शिष्यसंघैश्च कालहस्तिसमीपतः ॥ गत्वा तत्र वने स्थित्वा सुवर्णमुखरीतटे ॥ ३ ॥ सहस्रगीतेर्व्याख्यानं शिष्येभ्यो बोधयन् स्थितः ॥ पुष्पाण्युपचितुं तत्र गोविंदश्च समागतः ॥४॥ पाटलीवृक्षमारुह्य पुष्पाण्युपचयान्स्थितः ॥ द्वितीयशतके तत्र श्रीपरांकुशसत्कृतौ ॥ ५ ॥ गतासु दशगाथासु महतीषु ततः परम् ॥ तृतीयगाथाव्याख्यानपर्यंतं तत्र स द्विजः ॥६॥ पुष्पाण्युपचयंस्तस्थौ तच्छृण्वन्मौनमास्थितः ॥ अर्थश्चतुर्थगाथायामेवंभूतः समास्थितः ॥७॥ स्वनाभिपंकजोत्पन्नसृष्टिकर्तृचतुर्मुखात् ॥ तस्मान्नारायणाद्देवात्कल्याणगुणसागरात् ॥८॥ सम्यगाराधनं पुष्पं चान्येषां कथमर्हति ॥ श्रुत्वा तमर्थं गोविंदः संपूर्णमिदमब्रवीत् ॥ ९ ॥ तस्यैवाराधनं पुण्यं किमन्येषां तु नार्हति ॥ श्रीशैलपूर्णस्तद्वाक्यं निशम्य यतिपुंगव ॥ १० ॥ तमुवाच ततो धीमान् गोविंदं प्रति सत्वरम् ॥ तस्यैवार्हति गोविंद पूजापुष्पं च चक्रिणः ॥ ११ ॥ तं विना पूजनं पुष्पं चान्येषां नार्हति ध्रुवम् ॥ ततस्त्रिवारं तं पूर्णं सम्यक् पप्रच्छ बुद्धिमान् ॥ १२ ॥ तस्यैवार्हत्यदः पुष्पं किमन्येषां तु नार्हति ॥ स च श्रीशैलपूर्णार्यस्तमाचख्यौ यतीश्वर ॥ १३ ॥ नार्हतीति त्रिवारं च परेषामर्चने ध्रुवम् ॥ तदाकर्ण्य च तान्वीक्ष्य वैष्णवान्मुक्तसंशयः ॥ १४ ॥ वृक्षस्थ एव गोविंदश्छिन्नां कृत्वाथ मालिकाम् ॥ दूरेण पुष्पसंपूर्णां हित्वा तां पुष्पपेटिकाम् ॥१५॥ रुद्राक्षमालिकास्त्यक्त्वा भस्म वस्त्रेण मार्जयन् ॥ त्रिवारं नार्हतीत्येवं स्वरेण महतावदत् ॥ १६ ॥ महापातकसंवृत्तः पर्वताग्रादगो भुवि ॥ तथा पपात वृक्षाग्रात्सहसा मुक्तसंशयः ॥१७॥ तदा गोविंदमायांतं

पूर्णः पूर्णमनोरथः ॥सहस्रगीतिर्बहुधा मानयन् विस्मितोभवत् ॥१८॥ गोविंदः सहसा तस्य पादयोरपतत्तदा ॥ अज्ञश्चाचारहीनश्च विस्तीर्णे दुःखसागरे ॥१९॥ पतितोहं दयासिन्धो रक्ष मां शरणागतम् ॥ इति निर्वेदमापन्नः स्वापराधमथाब्रवीत् ॥ २० ॥ विभूतिद्वयनिर्वाही किरीटधरमस्तकम्॥हित्वा विस्रस्तकेशाग्रमस्तके मोहितोभवम्॥२१॥विश्वकंठं विहायाग्रे विषकंठे विमोहितः॥श्रीवक्षसं परित्यज्यनिःश्रीवक्षाः समाश्रितः ॥२२॥ विहाय पुंडरीकाक्षं विरूपाक्षे विमोहितः॥ गिरिमुद्धृत्य हस्तेन महावर्षाच्च गोकुलम् ॥२३॥ योरक्षत्तं विसृज्याहं कपालकरमाश्रितः ॥ ब्रह्मादिस्थावरांतेषु स्थितं सर्वेश्वरं हरिम् ॥ २४ ॥ हित्वा नारायणं देवं सृष्टिस्थित्यंतकारकम्॥श्मशानवासिरुद्राय कृतसम्यक्प्रदक्षिणः ॥२५॥ हेमांबरं परित्यज्य दिगंबरमुपाश्रितः ॥ देवरूपमिदं त्यक्त्वा तुलसीवनमादरात् ॥ २६ ॥ तिक्तकोशातकीवल्ली मया संवर्द्धिता वृथा ॥ वाक्यान्येतानि बहुशश्चोक्त्वा स द्विजपुंगवः ॥ ॥ २७ ॥ नोत्थितः पादयोस्तस्य तूष्णींभूतो भवत्तदा ॥ तं च श्रीशैलपूर्णार्यो दृष्ट्वास्मान्निदमब्रवीत् ॥ २८ ॥ भविष्यत्सिद्धियोगस्य गोविन्दस्याधुनाभवत् ॥ महात्मनो यामुनस्य करुणा न वृथा भवेत् ॥ २९ ॥ पाणिभ्यां शिर उद्धृत्य तस्यांगं प्रममार्ज च ॥ सांत्ववाक्यैर्बहुविधैर्गोविन्दं लालयन्मुहुः ॥ ३० ॥ तं पिबन्निव चक्षुर्भ्यां पूर्णः श्रीशैलपूर्वकः ॥ सुखसंल्लापकथनैर्गोविन्दं लालयन्स्थितः ॥ ३१ ॥ एतस्मिन्नंतरे शैवास्तच्छिवालयपालकाः ॥ सम्यग्विज्ञाय वृत्तांतं कालहस्तिनिवासिनः ॥ ३२ ॥ आगत्य सहसा तत्र परिवार्य समंततः ॥ विलोक्य विमुखं स्वेषां तेषामभिमुखं च तम् ॥ ३३ ॥ दृष्ट्वा श्रीशैलपूर्णार्यं वाक्यमूचुर्यतीश्वर ॥ अस्मद्दर्शननिर्वाहं गोविन्दं यूयमागताः ॥ ३४ ॥ चूर्णैर्विकीर्य्य भैषज्यैर्मोहयित्वा च मायया ॥ युक्तं खलु वशीकर्तुं भवतां वैष्णवोत्तमाः॥३५॥ शैवानां वचनं श्रुत्वा पूर्णस्तान् वाक्यमब्रवीत्॥ युष्माभिरेव गोविंदः प्रष्टव्योयं शिवद्विजाः३६

अस्माभिरौषधैः क्षिप्तः किमर्थमिति विग्रहः ॥ तथ्यमन्यादृशं मार्गं यूयं जानीथ नो द्विजाः ॥ ३७ ॥ अन्यमार्गं न गच्छामः सन्मार्गे ह्यास्थिता वयम् ॥ ततः श्रीशैलपूर्णस्य वचः श्रुत्वा शिवद्विजाः ॥ ३८ ॥ तं विहायाथ गोविंदं परिवार्यैदमब्रुवन् ॥ गोविंद शिवभक्ताय्र्ये पूजाकालोतिवर्तते ॥ ३९ ॥ कालहस्तीश्वरस्त्वद्य तव पूजां प्रतीक्षते ॥ किमर्थमत्र हे तात वर्त्तसे नाभिभाषसे ॥ ४० ॥ तद्धस्तमिति संगृह्य गच्छाम इति तेब्रुवन् ॥ हस्तबंधं विधूयाशु गोविंदो मुक्तसंशयः ॥ ४१ ॥ तानुवाच वचः श्रेष्ठं सर्वेषां शृण्वतां तदा ॥ पाणिं ग्रहीतुं युष्माकमयुक्तं मे शिवद्विजाः ॥ ४२ ॥ अस्माकं चाद्य युष्माकं संबंधो नास्ति नास्ति हि ॥ वयमेव पुरा यूयं यूयमेव पुरा वयम् ॥ ४३ ॥ इदानीं विष्णुसंबंधाद्यूयं यूयं वयं वयम् ॥ अंगुलीयाद्यशेषाणि स्नग्द्रव्यादीनि कानि च ॥ ४४ ॥ तेभ्यो विसृज्य सहसा हस्ततालध्वनिं व्यधात् ॥ शैवैः परमधर्मोयं शिव एवामृतप्रदः ॥ ४५ ॥ इति प्रलोभितोत्यंतं स तेषां विमुखोभवत् ॥ तेषामासाद्य चास्माकं कलहः सुमहानभूत् ॥ ४६ ॥ युष्मत्कृतमिदं कार्यं युष्मत्कृतमिदं त्विति ॥ तेषां दुरभिमानत्वाच्छैवानां यतिपुंगव ॥ ४७ ॥ तथापि विमुखस्तेषां स युष्मत्कृपया गुरो ॥ शैवैर्निवारितः पूर्णस्तत्र वै स दृढव्रतः ॥ ४८ ॥ गोविंदसहितो धीमान्न तं वासरमवर्तत ॥ तस्यां रात्र्यां व्यतीतायां कृतनित्यक्रियो महान् ॥ ४९ ॥ श्रीशैलपूर्णस्तत्रैव निश्चलः सुखमास्थितः ॥ ततो निराशास्ते शैवास्तं पूर्णमिदमब्रुवन् ॥ ५० ॥ गोविंदानयनार्थाय यूयमत्रागता इति ॥ विदित्वा कलहायाथ सन्नद्धा ह्यास्थिता वयम् ॥५१॥ कालहस्तीश्वरः स्वप्ने वाक्यमेवं जगाद तान् ॥ पाषंडबौद्धचार्वाकैस्त्रयीधर्मो विलोपितः ॥ ५२ ॥ त्रिदंडधारिणा पूर्वं विष्णुना रक्षिता त्रयी ॥ दत्तात्रेयस्वरूपेण लोके पाषंडसंकुले ॥ ५३ ॥ विष्णोः पारषदास्त्वद्य शेषशेषाशनादयः ॥ अवतीर्णाः क्षितावासन् दत्तात्रेया-

दयो यथा ॥ ५४ ॥ शेषशेषारिशंखादिभागैर्भूमिं समागताः ॥रामानुजार्य्यगोविंददाशरथ्यादिदेशिकाः ॥ ५५ ॥ गंगास्नानेच्छया पूर्वं गोविंदस्तु यदागतः ॥ इदमस्मत्प्रियतया गोविंदकृतपूजनम् ॥५६॥ तदा ह्यपोह्य तद्बुद्धिं लिंगं तस्य करे कृतम् ॥ गंगांभसि मया पूर्वं गोविंदस्य महात्मनः ॥ ५७ ॥ तेन व्याजेन गोविंदो मां नित्यं पूजयन्स्थितः ॥ अतो गोविंदभट्टाद्या नास्माकं वशवर्तिनः ॥५८॥ स्वेच्छाविहारिणस्ते च न कर्मवशवर्तिनः ॥ तेनेदं भाषितमिति शंकरेणैव वैष्णवाः ॥ ५९ ॥ श्रीशैलपूर्णं प्रत्युक्त्वा प्रतियाताः शिवद्विजाः ॥ तस्मिन् क्षणे स पूर्णार्यो गोविंदं तं यतीश्वर ॥ ६० ॥ आदाय वेंकटगिरिं स्वजनैः प्रविवेश ह ॥ वपनं कारयित्वाशु गोविंदस्य यतीश्वर ॥ ६१ ॥ अकरोत्पंचसंस्कारान्पूर्णः श्रीशैलपूर्वकः ॥ विष्णुचित्तादियोगींद्रैः कृतां द्राविडसंहिताम् ॥ ६२ ॥ स तेनाध्यापयित्वाथ चतुष्टयसहस्रिकाम् ॥ अर्थपंचकविज्ञानं मंत्रार्थज्ञानमुत्तमम् ॥ ६३ ॥ संपूर्णं बोधयामास गोविंदाय यतीश्वर ॥ गोविंदोपि विनीतात्मा प्राप्तसर्वार्थसंचयः ॥ ६४ ॥ अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ इति रामाय सौमित्रिः शुश्रूषामकरोद्यथा ॥ ६५ ॥ तथा श्रीशैलपूर्णार्यगुरवे विनयान्वितः ॥ अधुना लक्ष्मणाचार्य्यं शुश्रूषणपरायणः ॥ ६६ ॥ नित्यानपायी शुश्रूषां कुर्वन्नास्ते यतीश्वर ॥ श्रुत्वा गोविंदवृत्तांतं सम्यक् तेभ्यः प्रहर्षितः ॥६७॥ यथार्हं पूजयामास वैष्णवांस्तान्यतीश्वरः ॥ ततः सभासदः सर्वान् वैष्णवान्यतिपुंगवः ॥ ६८ ॥ विसर्जयित्वा स्वमठं प्रविवेश महायशाः ॥ इदं गोविंदचरितं यः शृणोतीह मानवः ॥ मुकुंदे तस्य सुदृढा भवेद्भक्तिर्न संशयः ॥ ६९ ॥ संवादमेतत्सकलार्थसारं श्रीशैलपूर्णस्य महात्मनोथ । गोविंददेवस्य च ये पठंति शृण्वंति ते विष्णुरता भवेयुः ॥ ७० ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे गोविंदार्यस्य श्रीशैलपूर्णाश्रयणं नामैकोनविंशोऽध्यायः ॥ १९ ॥

## विंशोऽध्यायः ।

अथ श्रीलक्ष्मणाचार्य्यः पूर्णाचार्यगृहं प्रति ॥ गत्वा सम्यक् प्रणम्याह पादयोर्दैशिकस्य सः ॥ १ ॥ यामुनादर्शजः शोको गलितस्त्वत्पदाश्रयात् ॥ मम त्वद्दासभूतस्य विशेषार्थान् त्वयि स्थितान् ॥ २ ॥ पूर्णार्य्य कृपया ब्रूहि गुरूत्तम दयानिधे ॥ तच्छ्रुत्वा वचनं तस्य महापूर्णः कृपानिधिः ॥ ३ ॥ अहो द्वयस्य माहात्म्यमहो वीर्यं महोबलम् ॥ मंत्ररत्नं शुभकरं वेदसारं सनातनम् ॥ ४ ॥ सर्वपापक्षयकरं सर्वपुण्यविवर्द्धनम् ॥ श्रीकरं लोकवश्यं च सद्यः संसारतारणम् ॥५॥ मूर्खो वा धर्मशीलो वा निंदितो वाप्यनिंदितः ॥ द्वयोच्चारणमात्रेण नरः पूज्यो विशेषतः॥ ६ ॥ मानसं वाचिकं पापं कायिकं च त्रिधा कृतम् ॥ द्वयस्मरणमात्रेण नाशं याति सुनिश्चितम् ॥७॥ नारी वा पुरुषो वापि गुरुवंदनपूर्वकम् ॥ द्वयेन प्राप्नुयाच्च तद्विष्णोः परमं पदम् ॥ ८ ॥ संसारार्णवमग्नानां सद्यः संसारतारणम् ॥ द्वयमेकं तु विप्रेंद्र नास्त्यस्य सदृशं भुवि ॥ ९ ॥ एवं द्वयं प्रशस्याथ यतिराजाय तत्त्वतः ॥ द्वयार्थं लोकरक्षार्थं कृपया चोपदिश्य च ॥ १० ॥ न्यासतत्त्वं महाशास्त्रं शास्त्रं पुरुषनिर्णयम् ॥ गीतार्थसंग्रहं नाम ग्रंथं सिद्धित्रयं तथा ॥ ११ ॥ व्याससूत्राणि सर्वाणि पंचरात्रागमं महत् ॥ पूर्णार्य्यो लक्ष्मणाचार्य्यं मत्वा सर्वोत्तमं तदा॥१२॥ स्वपुत्रं यतिराजाय पुंडरीकाक्षनामकम् ॥ शिष्यं कृत्वा ततः प्रीतो यतिराजं वचोऽब्रवीत् ॥ १३ ॥ गोष्ठीपुरे यतिश्रेष्ठ गोष्ठीपूर्ण इति श्रुतः ॥ सर्वशास्त्रार्थतत्त्वज्ञो वर्त्तते वैष्णवोत्तमः ॥ १४ ॥ महार्थाः कतिचित्तस्मिन् स्थापिता यामुनेन तै ॥ तत्र गत्वांजसा तस्मात्तान् शृणुष्व महात्मनः ॥ १५ ॥ पूर्णाचार्यवचः श्रुत्वा सुप्रीतो यतिपुंगवः ॥ गोष्ठीपुरं तदासाद्य गोष्ठीपूर्णपदाब्जयोः ॥ १६ ॥ प्रणामं विधिवत्कृत्वा गोष्ठीपूर्णमुवाच सः ॥ मंत्रार्थमधुना मह्यं दत्वा रक्ष

कृपानिधे ॥ १७ ॥ यतिराजस्य तद्वाक्यं गोष्ठीपूर्णो निशम्य सः ॥
व्यवसायस्य बाहुल्यं ज्ञातुकामो महात्मनः ॥ १८ ॥ गौरवं दर्श-
यँल्लोके मंत्रार्थस्य महामतिः ॥ रामानुजमुवाचेदं गोष्ठीपूर्णो यती-
श्वरम् ॥ १९ ॥ मंत्रार्थस्याधुना लोके नाधिकारी च विद्यते ॥
कथं दास्यामि योगींद्र मंत्रार्थं तव सत्वरम् ॥ २० ॥ एवमुक्त्वा तत-
स्तस्य स पूर्णो विमुखः स्थितः ॥ गोष्ठीपूर्णस्य तद्वाक्यं निशम्य स
विलोक्य तम् ॥ २१ ॥ अवाप रंगनिलयं सहसा यतिशेखरः ॥
ततः श्रीरंगनगरे रंगराजमहोत्सवम् ॥ २२ ॥ गोष्ठीपूर्णो द्रष्टुकामः
श्रीरंगं सहसाभ्यगात् ॥ गोष्ठीपूर्णे ततस्तस्मिन् गमनाभिमुखे तदा
॥२३॥ स्वतीर्थशठकोपादीन् दापयित्वा प्रयत्नतः ॥ रंगराडर्चकमुखै-
र्गोष्ठीपूर्णमुवाच तम् ॥२४॥ गोष्ठीपूर्ण गुरुश्रेष्ठ रहस्यार्थान्विशेषतः ॥
मामकाय वद प्राज्ञ लक्ष्मणार्याय धीमते ॥ २५ ॥ गोष्ठीपूर्णस्तदाक-
र्ण्य रंगराजमभाषत॥इदं ते नातपस्काय नाभक्ताय न मानिने॥२६॥
न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ संवत्सरं तदर्द्धं वा मा-
सं मासार्द्धमेव च ॥ २७ ॥ परीक्ष्य विविधोपायैः कृपया निस्पृहो व-
देत् ॥ युष्माभिरेव गदितं पूर्वं श्रीरंगभूपते ॥ २८ ॥ रंगेशस्तान्निशम्या-
शु गोष्ठीपूर्णं वचोऽब्रवीत् ॥ न तथायं शृणुष्वाद्य गोष्ठीपूर्ण वदामि ते
॥२९॥ शरीरं वसु विज्ञानं वासः कर्म गुणानसून् ॥ गुर्वर्थं धारयेद्यस्तु
स शिष्यो नेतरः स्मृतः ॥ ३० ॥ इत्यादिगुणयुक्ताय यतिराजाय
धीमते ॥ मंत्रराजोपदेशाय न्यूनता नास्ति सत्तम ॥३१॥ रंगभर्तृवचः
श्रुत्वा तदलंघ्यं स वैष्णवः ॥ श्रीमते रंगराजाय विज्ञाप्य स तथोमि-
ति ॥ ३२ ॥ तेनानुज्ञापितो धीमान् तत्पादकृतवंदनः ॥ आगच्छेति
यतिश्रेष्ठ गोष्ठीपुर्यां यतीश्वर ॥ ३३ ॥ गोष्ठीपूर्णो ययौ धीमान्
स्वगोष्ठीनगरं प्रति ॥ ततः श्रीलक्ष्मणाचार्यो गत्वा गोष्ठीपुरं च सः
॥ ३४ ॥ गोष्ठीपूर्णं तदर्थाय प्रार्थयामास भक्तितः ॥ गौरवं दर्शयँल्लो-

के मंत्रार्थस्य च देशिकः ॥ ३५ ॥ लक्ष्मणार्याय विमुखो गोष्ठीपूर्णो- भवत्पुनः ॥ तत्राष्टादशवारं तु गत्वागत्वा पुनः पुनः ॥ ३६ ॥ आ- यातो रंगनगरमेवं तूष्णीं यतीश्वरः ॥ ततः कदाचित्तेनाशु गच्छ ग- च्छेति भाषितः ॥ ३७ ॥ रामानुजो रुदन् यातस्तत्सकाशात्स्वमाल- यम् ॥ स पूर्णो लक्ष्मणार्यस्य विलोक्यार्तिं ततः परम् ॥३८॥ प्रदा- तुमैच्छन्मंत्रार्थं यतींद्राय विचक्षणः ॥तत्रत्यो वैष्णवः कश्चित्सकाशा- द्रंगमागतः ॥ ३९ ॥ परितप्तं लक्ष्मणार्यं मंत्रार्थाय दिवानिशम् ॥ विलोक्य पुनरागत्य स गोष्ठीनगरं प्रति ॥ ४० ॥ गोष्ठीपूर्णाय तां सर्वां यतींद्रार्तिं न्यवेदयत्॥ गोष्ठीपूर्णस्ततस्तस्य मंत्रे भक्तिं महात्मनः ॥ ४१ ॥दृष्ट्वा पूर्णं पुनः श्रुत्वा पश्चात्तापसमाकुलः ॥ प्राहिणोद्यतिरा- जाय शिष्यं कंचिज्जवेन सः ॥ ४२ ॥ स शिष्यो रंगमागत्य यतींद्रप- दपंकजम् ॥ नत्वा तमूचे वचनं तेन संमानितस्तदा ॥ ४३ ॥ प्रेषि- तस्तेन पूर्णेन यतिराज तवांतिकम् ॥ त्वामानेतुं यतिश्रेष्ठ गोष्ठीपुर्या- स्समागतः॥४४॥मंत्रार्थमधुना तुभ्यं गोष्ठीपूर्णः प्रदास्यति ॥ एक एव त्वमागच्छ सदंडः सपवित्रकः ॥ ४५ ॥ तस्य वाक्यं तदाकर्ण्य लक्ष्म- णार्यो मुदान्वितः॥शिष्यद्वययुतः श्रीमान्गमनायोपचक्रमे ॥ ४६ ॥ वृत्तांतमेतत्सकलं हि तस्मै विज्ञाप्य भक्त्या यतिसार्वभौमः॥ आज्ञापि- तो येन स रंगभर्त्रा गोष्ठीपुरं शिष्ययुतः प्रतस्थे ॥ ४७ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे मन्त्रोपदेशार्थं गोष्ठीपुराभिगमनं नाम विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः ।

गोष्ठीपुरमवाप्याथ गोष्ठीपूर्णपदाब्जयोः ॥ प्रणम्य शिरसा ताभ्यां शिष्याभ्यां विनयान्वितः ॥ १ ॥ हर्षेण महता युक्तस्तस्थौ लक्ष्मण- देशिकः ॥ शिष्याभ्यां सहितं दृष्ट्वा गोष्ठीपूर्णो यतीश्वरम् ॥२॥ उवाच वाक्यं सहसा तदा लक्ष्मणदेशिकम् ॥ मया यथोक्तं योगीश न तथा-

द्य त्वया कृतम् ॥३॥ तस्मादलभ्यो मंत्रार्थस्त्वया गोप्यो महानयम्॥ तच्छ्रुत्वा लक्ष्मणाचार्यो गोष्ठीपूर्णमुवाच सः ॥ ४ ॥ उपवीतत्रिदंडाभ्यामागंतव्यं त्वयाधुना ॥ यथैव भाषितं वाक्यं तथैव क्रियते मया ॥ ५ ॥ दंडोपवीतस्थानीयौ तावेतौ मम वैष्णवौ ॥ तस्य तद्वचनं श्रुत्वा गोष्ठीपूर्णो महामतिः ॥ ६ ॥ अवोचल्लक्ष्मणाचार्यमिदं वचनमर्थदम् ॥ को वोपवीतं भवतः कश्चिद्दंडो वदैतयोः ॥ ७ ॥ विशेषं ज्ञातुमिच्छामि शिष्ययोर्योगिपुंगव ॥ गोष्ठीपूर्णस्य वचनं निशम्य यतिपुंगवः ॥ ८॥ गोष्ठीपूर्णमुवाचेदं तयोर्वृत्तांतकारणात् ॥ दर्शयित्वा ततः शिष्यौ गोष्ठीपूर्णाय तावुभौ ॥ ९ ॥ यज्ञोपवीतं कूरेशो दण्डो दाशरथिर्मम ॥ एवं जानीहि भगवंस्तस्मान्नान्योत्र विद्यते ॥ १० ॥ प्रतिगृह्य वचस्तस्य गोष्ठीपूर्णस्तमब्रवीत् ॥ एतयोरेव योगींद्र ब्रूहि मंत्रं स्वशिष्ययोः ॥ ११॥ कदाचिदपि तं गोप्यं नान्येषां वक्तुमर्हसि॥ तथाप्येतौ परित्यज्य त्वमेवायाहि सत्वरम् ॥ १२ ॥ अधिकारस्तवैवात्र मन्त्रार्थे यतिपुंगव॥ नान्येषामधिकारोस्ति मन्त्रार्थे मोक्षसाधने ॥ १३ ॥ लक्ष्मणार्यं तमादाय रहः प्रीतिपुरःसरम् ॥ अनेकशपथांस्तेन कारयित्वा महात्मना ॥ १४ ॥ गोष्ठीपूर्णः कृपापूर्णो लक्ष्मणार्याय निश्चलः ॥ प्रणवाद्यं नमोमध्यं नारायणपदांतिमम् ॥ १५ ॥ सन्यासं च समुद्रं च सर्षिछन्दोधिदैवतम् ॥ सार्थं सजपं सध्यानमिमं मंत्रमुदीरयेत् ॥ १६ ॥ मन्त्रमष्टाक्षरं दिव्यं सर्वसिद्धिकरं तदा ॥ मुमुक्षूणां सदा जप्यं भुक्ति मुक्तिफलप्रदम्॥१७॥ वैष्णवानां सदा जप्यं भक्तिज्ञानप्रवर्द्धकम् ॥ श्रीमदष्टाक्षरो मंत्रो नित्यं प्रियतमो हरेः॥१८॥ आसीनो वा शयानो वा तिष्ठन् वा यत्र कुत्रचित् ॥ जपेदष्टाक्षरं मंत्रं तस्य विष्णुः प्रसीदति॥१९॥ब्रह्मघ्नो वा कृतघ्नो वा महापापयुतोपि वा॥ अष्टाक्षरस्य जप्तारं दृष्ट्वा पापैर्विमुच्यते ॥ २० ॥ अष्टाक्षरस्य जप्तारो यथा भागवतोत्तमाः ॥ पुनंति सकलं लोकं सदेवासुरमानुषम् ॥ २१ ॥ अष्टाक्षरस्य जप्तारं प्रणमेद्यस्तु भक्तितः ॥ सर्वपाप-

विनिर्मुक्तो विष्णुलोके महीयते ॥ २२ ॥ अवैष्णवाद्गुरोर्मंत्रं यः पठे-
द्वैष्णवं द्विजः ॥ कल्पकोटिसहस्राणि पच्यते नरकाग्निना ॥ २३ ॥
अचक्रधारिणं विप्रं मंत्रमध्यापयेत्तु यः ॥ रौरवं नरकं प्राप्य चांडालीं
योनिमाप्नुयात् ॥२४॥ अचिंत्यमेतन्माहात्म्यं मनोरम्यं जगत्पतेः ॥
न हि वक्तुं मया शक्यं ब्रह्मादित्रिदशैरपि ॥ २५ ॥ किमत्र बहुनोक्तेन
सर्वसिद्धिप्रदं नृणाम् ॥ एवंविधं मंत्रराजं मंत्रार्थं सम्यगेव च ॥२६॥
उपदेशं चकाराशु यतिराजाय धीमते ॥ मुमोद सुतरां तस्य सत्पात्र-
विनियोगतः ॥ २७ ॥ स तदा लब्धमंत्रार्थः कृतार्थो यतिपुंगवः ॥
कृतसम्यक्प्रणामश्च तेनानुज्ञापितो ययौ ॥ २८ ॥ गोष्ठीपुर्यां तदा
तस्यां नृसिंहस्वामिनो हरेः ॥ महोत्सवं द्रष्टुकामान्नानादिग्भ्यः समा-
गतान् ॥ २९ ॥ वैष्णवान्वीक्ष्य हृष्टात्मा लक्ष्मणार्यः कृपानिधिः ॥
सन्निधौ तस्य देवस्य वैष्णवेभ्योंजसा तदा ॥ ३० ॥ गोपुरादथ
रात्र्यर्द्धे वदन्नुच्चस्वरेण तम् ॥ चतुःसतति संख्याकाः श्रुत्वा तद्ब्राह्म-
णोत्तमाः ॥ ३१ ॥ कृपयाष्टाक्षरं तेभ्यो प्रददौ मंत्रमुत्तमम् ॥ गोष्ठी-
पूर्णस्तदाकर्ण्य तत्रत्यैः स्वजनैस्तदा ॥ ३२ ॥ आनयित्वा यतिश्रेष्ठं
वचनं चेदमब्रवीत् ॥ अतिगोप्यमिमं मंत्रं न कस्यापिं वदेति च
॥ ३३ ॥ एवं नियम्य योगींद्र तत्प्रदानं मया कृतम् ॥ सर्वं विधूय
सहसा कथं मो साहसं कृतम् ॥ ३४ ॥ किं फलं भवति ब्रह्मन् गुरु-
द्रोहकृतस्य ते ॥ तस्य तद्वचनं श्रुत्वा यतींद्रस्तमथाब्रवीत् ॥ ३५ ॥
गुरुद्रोहकृतस्यास्य फलं नरकमेव हि ॥ तच्छ्रुत्वा तमुवाचाथ गोष्ठी-
पूर्णो यतीश्वरम् ॥ ३६ ॥ एवं ज्ञात्वा किमर्थं त्वं कृतवानसि किल्बि-
षम् ॥ यतीश्वरस्तदाकर्ण्य गोष्ठीपूर्णमभाषत ॥ ३७ ॥ पतिष्ये एक
एवाहं नरके गुरुपातकात् ॥ सर्वे गच्छंतु भवतां कृपया परमं पदम्
॥ ३८ ॥ निशम्य यतिराजस्य वाक्यमद्भुतवत्तरम् ॥ एवं संचिंतया-
मास ममायं नोत्थितो गुणः ॥ ३९ ॥ अमानवं तदा मत्वा लक्ष्म-

णार्यं जगद्गुरुम् ॥ इहावतीर्णं वैकुंठाज्जगद्रक्षणकारणात् ॥ ४० ॥
स्वानिष्टं परवृद्धिं च को वा लोके करोति हि ॥ स रंगनायकोस्माकं
त्वमेवाद्य यतीश्वर ॥ ४१ ॥ इत्युक्त्वा लक्ष्मणाचार्य्यं गोष्ठीपूर्णः
प्रहृष्टधीः ॥ मन्नाथ इति हर्षात्तं नाम दत्त्वाथ सस्वजे ॥ ४२ ॥
तत्रत्यान् तान् स पूर्णार्यो वैष्णवानिदमब्रवीत् ॥ इमं वैष्णवसिद्धां-
तमस्माभिस्त्वद्य वैष्णवाः ॥ ४३ ॥ रामानुजार्य्यसिद्धांतमिति
सर्वत्र कीर्त्यताम् ॥ एतदारभ्य लोकेस्मिन् श्रीमद्वैष्णवदर्शनम् ॥४४॥
रामानुजार्य्यसिद्धांतमिति सत्यं भविष्यति ॥ ततः प्रभृति लोकेस्मिन्निदं
वैष्णवदर्शनम् ॥ ४५ ॥ रामानुजार्य्यसिद्धांतमिति सर्वैः प्रकाशि-
तम् ॥ मन्नाथ इति चाहूय गोष्ठीपूर्णो यतीश्वरम् ॥ ४६ ॥
हर्षेण महता युक्तो रहसीदं वचोऽब्रवीत् ॥ पुरा रंगेश्वरः श्रीमान्
समाहूय यतीश्वर ॥ ४७ ॥ जगाद वचनं प्रीत्या दृष्ट्वा कल्या-
त्मकं जगत् ॥ कतिभ्यश्चरमश्लोकं जनेभ्यो मोक्षसाधनम् ॥ ४८ ॥
त्वं ब्रूहि कृपया विद्वन्नधुना मम शासनात् ॥ तच्छ्रुत्वाहं यतिश्रेष्ठ रंगे-
शं तमथाब्रुवम् ॥४९॥ अस्याधिकारी रंगेश कोपि नास्त्यधुना भुवि ॥
ब्रवीम्यहं कथं गोप्यं चरमार्थं जनाय च ॥ ५० ॥ न शास्त्रसंमतमिदं
प्रदानं नास्तिकाय तत् ॥ निशम्य लक्ष्मणाचार्य मद्वाक्यं रंगभूपतिः
॥ ५१ ॥ तथ्यं मत्वा पुनः प्राह मामेवं जगदीश्वरः ॥ अहं मृगित्वा
मेदिन्यां पुरुषं बुधसंमतम् ॥ ५२ ॥ प्रयत्नेन च संपाद्य सहसा वै-
ष्णवोत्तमम् ॥ त्वदंतिकं प्रेषयामि तस्मात्त्वं गच्छ सांप्रतम् ॥ ५३ ॥
स एव त्वं यतिश्रेष्ठ तस्मात्तेद्य ब्रवीम्यहम् ॥ इदं गुह्यतमं मंत्रं ब्रूहि क-
स्यापि न क्वचित् ॥ ५४ ॥ एवं वदंतं स्वाचार्य्यं यतींद्रो वाक्यमब्रवी-
त् ॥ आज्ञा त्वया यस्य दत्ता तस्यैवार्थोयमुच्यते ॥ ५५ ॥ शपे त्व-
त्पादपद्माभ्यां नोल्लंघ्यं तव शासनम् ॥ यतिराजस्य तद्वाक्यं निशम्य
गुरुपुंगवः ॥ ५६ ॥ प्रशस्य बहुधा वाक्यं गोष्ठीपूर्णोभ्यभाषत ॥ इदं
ते नातपस्काय नाभक्ताय न मानिने ॥ ५७ ॥ न चाशुश्रूषवे वाच्यं

न च मां योऽभ्यसूयति ॥ संवत्सरं तदर्द्धं वा मासत्रयमथापि वा॥५८॥ परीक्ष्य विविधोपायैः कृपया निःस्पृहो वदेत् ॥ इत्येवमभिधायाथ रहः प्रीतिपुरःसरम् ॥ ५९॥ अर्जुनाय यथा कृष्णश्चरमार्थं समादिशत् ॥ तथैव लक्ष्मणार्याय गोष्ठीपूर्णो महात्मने ॥ ६० ॥ ततः स्वपुत्रमाहूय सौम्यनारायणाभिधम् ॥ शिष्यं कृत्वा यतींद्रस्य भूयो वचनमब्रवीत् ॥ ६१ ॥ स्वपुत्रे वररंगे तु यामुनेन विपश्चिता ॥ सुनिक्षितान्नरहस्यार्थान्गृहाण यतिपुंगव ॥६२॥ कृतकृत्यः स पूर्णार्यो मुमुदे तत्प्रदानतः ॥ अनुज्ञातोथ गुरुणा यतिराजो महायशाः ॥ ६३ ॥ शिष्यसंघयुतः श्रीमान् गमनायोपचक्रमे ॥ यतिराजः स्वशिष्याभ्यां गुरुपुत्रेण धीमता ॥ ६४ ॥ श्रीरंगनगरं प्राप्य स्वमठे सुखमास्थितः ॥ ६५ ॥ मंत्रद्वयं प्राप्य गुरोः प्रयत्नात्तत्राद्यमेकं स हि भूरिदानम् ॥ विधाय सर्वं जगदाशु विष्णोस्तच्छेषभूते च ररक्ष धीरः ॥ ६६ ॥ रंगेश्वरं तं प्रणिपत्य भक्त्या विज्ञाप्य वृत्तं सकलं स तस्मै ॥ मतं प्रविश्याशु तदीयसंघैः सुखेन तस्थौ यतिसार्वभौमः ॥६७॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कथंचिद्गोष्ठीपूर्णकृपया मंत्रराजभूरिप्रदानं नामैकविंशोऽध्यायः॥२१॥

## द्वाविंशोऽध्यायः ।

ततः कूरेश्वरः श्रीमान्यतिराजांघ्रिपंकजम् ॥ प्रणम्यावनतो भूत्वा वचनं चेदमब्रवीत् ॥ १ ॥ दासभूताय मे देहि चरमार्थं दयानिधे ॥ तच्छ्रुत्वा यतिराजस्तमेवमाह वचस्तदा ॥ २ ॥ गोष्ठीपूर्णेन गुरुणा भाषितं यच्छृणुष्व तत् ॥ शुश्रूषां वत्सरं यो वा करोति श्रद्धयान्वितः ॥ ३ ॥ योत्यंतभक्तितो धीमाञ्शमादिगुणसंयुतः ॥ तस्मै शिष्याय वक्तव्यः श्लोकोयं सार्थकस्त्वया ॥ ४ ॥ गुरोर्वचनमाकर्ण्य कूरनाथस्ततोऽब्रवीत् ॥ शरीरमस्थिरं ज्ञात्वा सहिष्ये वत्सरं कथम् ॥ कूरनाथवचः श्रुत्वा यतींद्रस्तमथाब्रवीत् ॥ ५ ॥ मासोपवासं कृतवान् यद्याचार्य्यगृहोत्तमे ॥ स तत्फलमवाप्नोति शास्त्र-

इष्टमिदं ध्रुवम् ॥६॥ धन्योस्मीति वदन् भक्त्या प्रतिगृह्य गुरोर्वचः ॥ मासोपवासं कूरेशः कृत्वा लक्ष्मणदेशिकात् ॥ ७॥ जग्राह चरमश्लोकं तत्तात्पर्यं च तत्त्वतः॥ अथ दाशरथिर्धीमान्प्रणम्य यतिपुंगवम्॥८॥ ममापि चरमश्लोकं प्रदेहीति तमब्रवीत् ॥ निशम्य तद्वचः प्राह स तं दाशरथिं गुरुः ॥९॥ कूरेशस्यैव वक्ष्यामि चरमार्थं न कस्यचित् ॥ गुरवेभिहितं पूर्वं मयैवं विबुधर्षभ ॥ १० ॥ त्वं तमेवानुवर्तस्व तत्र गत्वा गुरूत्तमम् ॥ स्वगुरोर्वचनं श्रुत्वा धीमान् दाशरथिस्तदा ॥११॥ गोष्ठीपूरं समासाद्य गोष्ठीपूर्णपदांबुजम् ॥ प्रणम्य बहुधा भक्त्या तदर्थं प्रार्थयन् स्थितः ॥ १२ ॥ स तस्य विमुखः पूर्णस्तदा दाशरथेरभूत् ॥ सोपि दाशरथिस्तं च षण्मासाननुवर्तयन् ॥ १३ ॥ ततः प्रसन्नः पूर्णार्यस्तं तथा वाक्यमब्रवीत् ॥ सम्बन्धेन भवानद्य द्योतते यतिभूपतेः ॥ १४ ॥ को भवान्सत्त्वसंपन्नः किमर्थं चागतोधुना ॥ गोष्ठीपूर्णस्य वचनं श्रुत्वा दाशरथिस्तदा ॥ १५ ॥ बद्धांजलिपुटो भूत्वा गोष्ठीपूर्णमुवाच सः ॥ दासोहं लक्ष्मणार्यस्य नाम्ना दाशरथिर्गुरो ॥ १६ ॥ रहस्यचरमार्थाय तेनैव प्रेषितोस्म्यहम् ॥ ममोपदिश्य मन्त्रार्थं रक्ष मां करुणानिधे ॥ १७ ॥ स तदाकर्ण्य तं प्राह गोष्ठीपूर्णो द्विजोत्तमम् ॥ विद्यामदो धनमदस्तृतीयोभिजनो मदः ॥ १८ ॥ एते मदावलिप्तानामेत एव सतां दमाः॥एतैर्मदैर्वियुक्तो यस्तमेव शरणं व्रज ॥१९॥ स एव चरमार्थं हि तुभ्यं दास्यति देशिकः॥इत्यनुज्ञापितस्तेन तदा दाशरथिर्जवात् ॥ २० ॥ श्रीरंगनगरं प्राप्य शमादिगुणसंयुतम्॥ प्रणम्य लक्ष्मणाचार्य्यं सर्ववृत्तांतमादितः ॥२१॥ तस्मै निवेद्य पुरतः प्रांजल्यवनतः स्थितः ॥ एतस्मिन्नंतरे साध्वी महापूर्णस्य पुत्रिका ॥ २२ ॥ अत्तुलायीति विख्याता महाशोकसमाकुला ॥ श्वश्रोर्गृहात्समागत्य जगाद पितरं प्रति ॥ २३ ॥ शृणु तात प्रवक्ष्यामि मद्वार्त्तां श्वश्रुमंदिरे ॥ एकयैव मया रात्रावानेतव्यं ह्रदाज्जलम् ॥२४॥सहायार्थं मयाहूता श्वश्रूर्मामिवमब्रवीत् ॥ किं वा दासी तवानार्यैं त्वया यातुं ह्रदं

प्रति ॥२५॥ दासीं कृत्वा प्रयच्छाशु तदर्थं जनकाधुना ॥ तयैवमुक्तः पूर्णार्यः पुत्रिकां वाक्यमब्रवीत् ॥ २६ ॥ त्वं जानासि वदस्वेति अत्रे स्वस्था मठे शुभेः ॥ तमेव प्रतिगच्छाशु स ते शोकविनाशनः ॥ २७ ॥ सा तथोक्ता स्वपित्रा च यतिराजमुपागता ॥ सर्वं निवेदयामास स्वदुःखं बालिकांजसा ॥ २८ ॥ गुरुपुत्रीवचः श्रुत्वा यतिराजो विचक्षणः ॥ याचंतं चरमार्थं च दृष्ट्वा दाशरथिं तदा॥२९॥ वैष्णवानां सभामध्ये तमुवाच यतीश्वरः ॥ शृणु दाशरथे वाक्यं वक्ष्यामि हितकाम्यया ॥ ३० ॥ गत्वा त्वमनया सार्द्धं योषितोस्या गृहं प्रति ॥ यान्युक्तानि च कार्याणि तत्र तानि कुरुष्व ह ॥३१॥ तस्याज्ञां शिरसा धृत्वा धीमान् दाशरथिस्तदा ॥ तथा गत्वा स तत्सर्वं कुर्वंस्तत्र समास्थितः ॥ ३२ ॥ कदाचिद्वैष्णवः कश्चित्तत्रत्यो द्विजपुंगवः ॥ शास्त्रार्थं संपरित्यज्य तत्रान्यं चार्थमब्रवीत ॥ ३३ ॥ श्रुत्वा दाशरथिस्तत्र तद्वाक्यं तमथाब्रवीत् ॥ त्वयोक्तोर्थः समीचीनो न पदस्य महामते ॥ ३४ ॥ अर्थोन्यो विद्यते विद्वन्संप्रदायागतोमहान् ॥ तच्छ्रुत्वा कुपितः प्राह सोपि दाशरथिं तदा ॥ ३५ ॥ किमन्येन विचारेण जलार्थं गच्छ पाचक ॥ क्व गोमायुर्देवलोकः क्व शास्त्रं क्व च पाचकः ॥ ३६ ॥ स तेनोक्तः पुनस्तस्मै प्रोवाच द्विजसत्तमः ॥ पूर्वोत्तरानुरोधेन तद्वाक्यार्थमुदीरयन् ॥३७॥ स वैष्णवः सातुलायी सर्वे ते वैष्णवोत्तमाः ॥ तच्छ्रुत्वा भयवित्रस्ता वाक्यमूचुरिदं तदा ॥ ३८ ॥ अभूत्कथं दासवृत्तिस्तव सर्वार्थवेदिनः ॥ तैरुक्तास्तानुवाचाथ धीमान् दाशरथिर्द्विजान् ॥ ३९ ॥ अनुज्ञया नियुक्तोहं गुरोर्मे यतिभूपतेः ॥ अस्मिन्कर्मणि विप्रेंद्रा भवतां भवनोत्तमे ॥ ४० ॥ तेनैवमुक्तास्ते सर्वे ह्यावालवनितादयः ॥ तं पूजयित्वा बहुधा वस्त्रैर्माल्यैश्च भूषणैः ॥ ४१ ॥ ऊचुर्दाशरथिं वाक्यं स्वापराधक्षयेच्छवः ॥ त्वं दास इति चाज्ञानादस्माभिर्य-

त्कृतं द्विज ॥ ४२ ॥ ये तु त्वय्यपराधाश्च क्षम्यंतां ते कृता द्विज ॥ कृपां निक्षिप्य चास्मासु स्वस्थाने गम्यतां त्वया ॥ ४३ ॥ तैरेवमुक्तस्तानाह धीमान् दाशरथिस्तदा ॥ यस्याज्ञया नियुक्तोहमस्मिन्कर्मणि वैष्णवाः ॥ ४४ ॥ वदत क्वनु गच्छामि विना तस्याज्ञया द्विजाः तेनैवमुक्तास्ते तूर्णं यतिराजपदांतिकम् ॥ ४५ ॥ प्राप्य विज्ञापनं चक्रुस्तत्सर्वं विशदं तदा ॥ ततस्तमानयामास शिष्येण यतिपुंगवः ॥ ४६ ॥ तेनाहूतो यतींद्रेण धीमान् दाशरथिस्तदा ॥ लक्ष्मणार्यमुपागम्य विनीतः प्रांजलिस्थितः ॥ ४७ ॥ तमवेक्ष्य महात्मानं विनिर्मुक्तमदत्रयम् ॥ सहसा चरमश्लोकं तस्मै शिष्याय सादरम् ॥ ४८ ॥ कृतवैष्णवदास्याय लक्ष्मणार्यो दयानिधिः ॥ उपदिश्य ययौ वेगाद्वररंगगृहं प्रति ॥ ४९ ॥ यतः श्रीवैष्णवगृहे दास्यं दाशरथिर्व्यधात् ॥ तेन वैष्णवदासाख्या तस्याभूत्प्रथिता भुवि ॥ ५० ॥ मासोपवासेन च कूरनाथो दास्येन वै वैष्णवदासनामा ॥ गीतार्थसारं चरमं विदित्वा मोदं गतौ तौ सुतरां कृतार्थौ ॥ ५१ ॥ वररंगांतिकं गत्वा वररंगान्महात्मनः ॥ द्राविडाम्नायसर्वस्वं गृहीत्वा यतिपुंगवः ॥ ५२ ॥ दाशरथ्यादिशिष्येभ्यस्तत्सर्वमुपदिश्य च ॥ स्वमठे कतिचिन्मासानुवास स महायशाः ॥ ५३ ॥ श्रीयामुनाचार्यसुतात्समस्तां स द्राविडीयां सकलार्थसाराम् ॥ संप्राप्य तस्याः स चकार बुद्धिमर्थाधिकारे मतिमान्महात्मा ॥ ५४ ॥ इति श्रीप्रपन्नामृते रामानुजचारित्रे दाशरथिकूरेशाभ्यां चरमश्लोकोपदेशो नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## त्रयोविंशोऽध्यायः ।

ततः कदाचिच्छ्रीरंगे गोष्ठीपूर्णः समागतः ॥ मालाधरं समादाय यतींद्रमठमाविशत् ॥ १ ॥ नत्वा यतींद्रस्तं पूर्णं तस्थौ प्रांजलिरग्रतः ॥ स च रामानुजं वीक्ष्य पूर्णो वाक्यमभाषत ॥ २ ॥

मालाधरस्य निकटे शृणु लक्ष्मणदेशिक ॥ सहस्रगीतेर्व्याख्या-
नमिति गोष्ठीपुरं ययौ ॥ ३ ॥ ततो मालाधरस्याग्रे मन्नाथो
विनयान्वितः ॥ सहस्रगीतेर्व्याख्यानं शृण्वंस्तत्र समास्थितः ॥ ४ ॥
यामुनोक्तप्रकारेण मालाधरगुरूत्तमः ॥ यतिराजाय गाथानां तत्रार्थ-
मुपदिश्य च ॥ ५ ॥ अर्थांतरेण गाथायाः कस्याश्चिद्वैष्णवोत्तमः ॥
उक्तवानश्रुतत्वेन शिष्यायार्थं विचक्षणः ॥ ६ ॥ तच्छ्रुत्वा लक्ष्मणा-
चार्यो मालाधरमथाब्रवीत् ॥ न चैवमर्थो गाथायास्तस्याश्चान्योस्ति
देशिक ॥ ७ ॥ यतींद्रेणैवमुक्तस्तु मालाधरगुरुस्तदा ॥ विसृज्याशु
च तस्योक्तिं दृष्ट्वा लक्ष्मणदेशिकम् ॥ ८ ॥ इदं पुनः शिष्टवचो
ममाग्रे नोपपद्यते ॥ एवमुक्त्वा ततः कोपात्प्रपेदे स्वनिकेतनम् ॥ ९ ॥
गोष्ठीपूर्णस्ततः श्रुत्वा तद्वृत्तान्तं जवात्तदा ॥ श्रीरंगनगरं प्राप्य
मालाधरमथाब्रवीत् ॥ १० ॥ शठारिसूक्तेर्व्याख्यानं मालाधर महा-
मते ॥ कच्चिन्नोपदिशँस्तस्मै यतींद्रायाद्य वर्त्तसे ॥ ११ ॥ गोष्ठीपूर्ण-
वचः श्रुत्वा स तं मालाधरोब्रवीत् ॥ यथाश्रुतं यामुनार्यात्तथार्थमह-
मूचिवान् ॥ १२ ॥ न तथेति यतींद्रेण भाषितं विदुषां वर ॥ माला-
धरवचः श्रुत्वा गोष्ठीपूर्णस्तमब्रवीत् ॥ १३ ॥ सांदीपनेर्यथा कृष्णो
विद्यां जग्राह सादरम् ॥ तथाभ्यस्यति योगींद्रस्त्वत्तो मालाधरा-
धुना ॥ १४ ॥ हृदि योर्थस्थितस्तस्य यामुनस्य महात्मनः ॥ अधु-
ना लक्ष्मणार्यस्य स एवार्थः प्रकाशते ॥ १५ ॥ अज्ञातज्ञापनं तस्य
करोमीति न चिंतय ॥ हृदयं यामुनार्यस्य हृदयं यतिभूपतेः ॥ १६ ॥
एकमेव च तस्मात्त्वं विद्यां ब्रूहि महात्मने ॥ अयं रामानुजः श्रीमान्न
सामान्यजनः परः ॥ १७ ॥ तथेति प्रतिगृह्याशु तद्वाक्यं तस्य
वैष्णवः ॥ मालाधरो यतींद्राय तत्पुनर्वक्तुमुद्यतः ॥ १८ ॥ गोष्ठी-
पूर्णस्ततो धीमान्न मालाधरगुरुं तदा ॥ तं च पूर्णार्यमादाय यतीश्वर-
मठं ययौ ॥ १९ ॥ तान् दृष्ट्वा लक्ष्मणाचार्य्यः संप्रणम्य कृतां-
जलिः ॥ यथार्हं पूजयामास देशिकान् भक्तिसंयुतः ॥ २० ॥

विलोक्य लक्ष्मणाचार्यं गोष्ठीपूर्णोऽभ्यभाषत ॥ सहस्रगीतेर्व्याख्यानं मालाधरगुरूत्तमात ॥ २१ ॥ शृणु भूयोवशिष्टं तज्जनरक्षणहेतुना ॥ गोष्ठीपूर्णवचः श्रुत्वा यतिराजस्तथाकरोत् ॥ २२ ॥ मालाधरश्च तत्त-त्स्मै ददन्तसम्यक् समास्थितः ॥ अर्थप्रसंगे तत्सूक्त्यां कस्मिंश्चिद्भा-षितं वचः ॥ २३ ॥ श्रुत्वा मालाधरं वाक्यमवोचद्यतिपुंगवः ॥ अत्रार्थे यामुनाचार्यो नैवं वदति देशिक ॥ २४ ॥ तेनैवमुक्तस्तं प्राह मालाधरगुरुस्तदा ॥ त्वया न दृष्टो दृष्ट्या वा कदाचिदपि यामुनः ॥ २५ ॥ एवं तन्मानसं ज्ञात्वा वक्तुं को हेतुरुच्यताम् ॥ मालाधरवचः श्रुत्वा यतींद्रस्तमथाब्रवीत् ॥ २६ ॥ यामुनस्यैकलव्योऽहं द्रोणार्य्य-स्य यथा गुरोः ॥ निशम्य तद्वचस्तस्य मालाधरगुरुस्तदा ॥ २७ ॥ गोष्ठीपूर्णोक्तवचनं तत्सत्यमिति हृष्टधीः ॥ अवतारं हरेर्मत्वा तदा लक्ष्मणदेशिकम् ॥ २८ ॥ यामुनादश्रुताश्चार्थाः श्रुतास्त्वत्तोऽधुना मया ॥ इत्युक्त्वा तं परिक्रम्य प्रणम्य मुदितोऽभवत् ॥ २९ ॥ कृत्वा समाप्तिं ग्रंथस्य तस्य लक्ष्मणदेशिकः ॥ गुरुं मालाधरं भक्त्या संपूज्य मुदितोऽभवत् ॥ ३० ॥ ततो मालाधरो धीमान् यतींद्रस्य महात्मनः ॥ पुत्रं सुंदरबाह्वाख्यं शिष्यं कृत्वा जगाद तम् ॥ ३१ ॥ वररंगे विशे-षार्थः कश्चिदस्ति यतीश्वर ॥ शृणुष्व तं महाप्राज्ञ वररंगान्महात्म-नः ॥ ३२ ॥ तेनैवमुक्तो योगींद्रो गुरुणा लोकरक्षकः ॥ तदर्थप्राप्तये धीमान् वररंगाय भक्तितः ॥ ३३ ॥ क्षीरं क्षपायां षण्मासानश्रांतं चाददन्मुदा ॥ धनुर्मासोत्सवे तस्य विष्णोः श्रीरंगशायिनः ॥ ३४ ॥ कृतनाट्यश्रमांगाय वररंगाय भक्तितः ॥ हरिद्रालेपनं कृत्वा स्वयमे-व यतीश्वरः ॥ ३५ ॥ कालेकालेऽनुरूपेण शरीरोद्वर्तनादिभिः ॥ शुश्रूषामकरोत्तस्मै भक्त्या लक्ष्मणदेशिकः ॥३६॥ वररंगः स तं दृष्ट्वा संतुष्टो यतिपुंगवम् ॥ अवोचत्प्रहसन् वाक्यं यामुनाचार्य्यनंदनः ॥ ३७ ॥ गृहीतुं मम सर्वस्वं त्वमित्थं कृतवानसि ॥ शृणु वक्ष्यामि

चरमं पुरुषार्थं यतीश्वर ॥ ३८ ॥ दैवमन्यमजानानः शठकोपगुरुं वि-
ना ॥ यथातिष्ठद्यतिश्रेष्ठ पुरा स मधुरः कविः ॥ ३९ ॥ तथा त्वमधु-
ना तिष्ठ लक्ष्मणार्य यतीश्वर ॥ गुरुरेव परं ब्रह्म गुरुरेव परं धनम्
॥ ४० ॥ गुरुरेव परः कामो गुरुरेव परायणम् ॥ गुरुरेव परा वि-
द्या गुरुरेव परा गतिः ॥ ४१ ॥ यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः
॥ आचार्य्यस्तु हरिः साक्षान्नररूपी न संशयः ॥४२॥ न मर्त्यबुद्ध्या-
सूयेत सर्वदेवमयो गुरुः ॥ इत्युक्तेन प्रकारेण हृदि लक्ष्मणदेशिक
॥ ४३ ॥ उपायश्चाप्युपेयश्च गुरुरेवेति भावय ॥ इति तस्मै यतींद्रा-
य पंचमोपायमुक्तवान् ॥ ४४ ॥ अनपत्यतया तस्य वररंगस्य भक्ति-
तः॥ अनुजं शोट्टनम्ब्याख्यं लक्ष्मणार्य्याय सत्वरम् ॥ ४५ ॥ शिष्यं
कृत्वा महाप्राज्ञः कृतकृत्यो बभूव सः ॥ लब्ध्वा यतींद्रः सकलां
गुरुभ्यो विद्यां च लोकस्य हिते प्रवृत्तः ॥ श्रीरंगपुर्य्यां सह शिष्य-
संघै रेजे मुदा विष्णुरिवामरेंद्रैः ॥ ४६ ॥ राजा स्वपुत्रस्य कृते यथा
निधिं निक्षिप्तवान्मंत्रिषु सत्सु संमतः ॥ तथा यतींद्रस्य हिताय
यामुनः शिष्येषु पंचस्वखिलार्थसंपदम् ॥ ४७ ॥ अथो यतींद्राय
महात्मने तदा पूर्णार्यमालाधरदेशिकादयः ॥ दत्त्वाखिलार्थान्स्वय-
मेव शीघ्रतः शिष्यान्सुपुत्रान्विदधुः प्रहृष्टाः ॥ ४८ ॥ तच्छीर्षसंबं-
धबलाच्च देशिकाः पूर्वं स्थिता मुक्तिमवापुरंजसा ॥ तदंघ्रिसंबंधब-
लादिह स्थिताः स्वरूपसिद्धिं परमां गता जनाः ॥ ४९ ॥ विना च
संबंधबलेन तस्य जगद्गुरोर्लक्ष्मणदेशिकस्य ॥ तद्दुर्गमं विष्णुपदं
जनानां पूर्वस्थितानामधुना स्थितानाम् ॥ ५० ॥ यथा मणिमौक्ति-
कहारमध्ये विराजयंस्तं परितस्तथैव ॥ महात्मनां देशिकपुंगवानां
मध्ये विरेजे यतिसार्वभौमः ॥ ५१ ॥ ॥ इति श्रीप्रपन्नामृते रामा-
नुजचरित्रे रामानुजार्य्यसार्थोपदेशो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः ।

अथ श्रीलक्ष्मणाचार्य्यो धीमान् लोकहिताय सः ॥ गद्यत्रयं तदा कृत्वा विष्णोराराधनक्रमम् ॥ १ ॥ श्रीमन्नारायणो देवः परमात्मा सनातनः ॥ परब्रह्म स एवेति लोकेभ्यः प्रतिपादयन् ॥२॥ वैष्णवं दर्शनं लोके वर्द्धयन्वैष्णवोत्तमः ॥ कालेकालेर्चकैर्नित्यं कैंकर्य्यं रंगभूपतेः ॥ ३ ॥ कारयन्वैष्णवान् सर्वान्कुर्वन् रंगे सुखं स्थितः ॥ यतींद्रशासनं तेषामर्चकानां तु रंगिणः ॥४॥ नित्यं च द्रव्यहर्तॄणां बंधनं समजायत ॥ अर्चकानां तदा तेषां प्रधानः पुरुषाधमः ॥ ५ ॥ हिंसितुं लक्ष्मणाचार्यं सूद्युक्तः कश्चिदर्चकः ॥ वित्तेन स्ववशं कृत्वा द्विजं कंचिद्धनातुरम् ॥ ६ ॥ विषान्नं लक्ष्मणार्याय दीयतामिति सोब्रवीत् ॥ सोंगीकृत्य वचस्तस्य भार्यामाहूय चाब्रवीत् ॥ ७ ॥ विषान्नं लक्ष्मणार्याय प्रदेयं हि त्वयाधुना ॥ सा साध्वी तद्वचः श्रुत्वा मतिं तत्र न चाकरोत् ॥ ८ ॥निर्भर्त्स्यमाना सा भर्त्रा विषान्नं भर्तृसन्निधौ ॥ दत्त्वा साध्वी यतीन्द्राय कृत्वा पादाभिवंदनम् ॥ ९ ॥ लिलेख नखधाराभिर्यतीन्द्रपदपंकजे ॥ इंगितज्ञो मनो ज्ञात्वा दृष्ट्वाश्रुनयनां स्त्रियम् ॥ १० ॥ शुने तदन्नमदिशत्सोपि जग्ध्वा क्षयं गतः ॥ मृतं श्वानं तदा दृष्ट्वा हित्वा भिक्षाशनं सुधीः ॥ ११ ॥ रामानुजस्तदा तस्थौ पीत्वा त्रीनुदकांजलीन् ॥ गोष्ठीपूर्णस्ततस्तस्य वृत्तांतं यतिभूपतेः ॥ १२ ॥ श्रुत्वा रंगं प्रति ययौ कृपया शिष्यवत्सलः॥ तच्छ्रुत्वा लक्ष्मणाचार्यः स्वाचार्यागमनं तदा ॥१३॥ रंगदक्षिणकावेर्य्यां स्वशिष्यजनसंवृतः ॥अभिचक्राम सहसा गोष्ठीपूर्णं यतीश्वरः ॥ १४ ॥ घर्मकाले च मध्याह्ने कावेर्य्यास्तप्तसैकते ॥ प्रणामं दण्डवत्तस्य पादयोः सहसाकरोत् ॥ १५ ॥ ज्ञातुमिच्छुः स तन्मित्रं तमुत्तिष्ठेति नावदत् ॥ प्रणतार्तिहरः कश्चिदात्रेयान्वयभूषणः ॥ १६ ॥ तीक्ष्णांशुतिग्मकिरणैः प्रतप्ते सैकते गुरुम् ॥ असहि-

ष्णुर्विलोक्याशु गोष्ठीपूर्णमभाषत ॥ १७ ॥ किमागतोस्यमुं हंतुं महरुं चोलियाधुना ॥ ततोसहिष्णुर्महता प्रेम्णा तं यतिपुंगवम् ॥ १८ ॥ उद्धृत्योपरि निक्षिप्य स्वस्यैवासुकृतादरः ॥ प्रणतार्त्ति हरस्तस्थौ तदा संततसैकते ॥ १९॥ तदाकर्ण्य तमुद्वीक्ष्य तमुत्थाप्य कृतादरः ॥ यतींद्रपाणिं संगृह्य गोष्ठीपूर्णोभ्यभाषत ॥ २० ॥ अनेन कारयित्वा त्वं पाकं लक्ष्मणदेशिक ॥ भोजनं कुरु योगींद्र वैष्णवेषु दयां कुरु ॥ २१ ॥ गोष्ठीपूर्णाज्ञया धीमान् यतींद्रः स तथाकरोत् ॥ ततः कदाचिद्योगींद्रः प्रेम्णा परवशो हरौ ॥ २२ ॥ रंगराजस्य सेवार्थमेक एवाभ्यगान्मुदा ॥ तदंतरं समालोक्य सोर्चको विषमिश्रितम् ॥ २३ ॥ यतींद्रायादिशत्तीर्थं नृशंसस्तज्जिघांसया ॥ जानन्नपि स योगींद्रस्तत्तीर्थमपिबन्मुदा ॥ २४ ॥ हरौ न्यस्तभरः श्रीशे निर्भरो निश्चलो महान् ॥ शेषावतारे योगींद्रे हरिभक्ते जगद्गुरौ ॥ २५ ॥ हरिपादोदकाक्रांतं निर्वीर्यमभवद्विषम् ॥ एवं हि बहवः क्रूराश्चाभिचारादयः कृताः ॥ २६ ॥ अर्चकैर्मरणोपायाः नृशंसैस्तज्जिघांसया ॥ यतींद्रतेजसैवाशु तत्सर्वं निहतं महत् ॥२७॥ वशिष्ठब्रह्मदंडेन विश्वामित्रबलं यथा ॥ ततस्तैर्भग्नसंकल्पैः श्रीमानाराधितोर्चकैः ॥ २८ ॥ यतिराजः स तान् सर्वान् कृपया पर्यपालयन् ॥ ततो नैपुण्यवशतो मित्रोदासीनशात्रवान् ॥ स्वशेषभूतांस्तांसर्वान्कृत्वा जगदपालयत् ॥२९॥ दिगंतकीर्तिर्यतिसार्वभौमो ह्यासेतुशीताचलभूमिभागे ॥जितारिवर्गः सुतरां विरेजे महेंद्रवत्सर्वबुधैः सुसेव्यः ॥ ३० ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे यतींद्राय विषपानादिप्रदानं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## पञ्चविंशोऽध्यायः ।

ततो विद्वान्महान्कश्चिद्यज्ञमूर्तीरिति श्रुतः ॥ गत्वा भागीरथीतीरं जित्वा सर्वविपाश्चितः॥ १ ॥ लब्ध्वा तत्र च संन्यासं मायावादमते

स्थितः ॥ शिष्यविद्यादिसंपद्भिः संयुक्तोऽप्रतिवैभवः ॥ २ ॥ स श्रुत्वा
यतिराजस्य वैभवं वैष्णवं प्रभुम् ॥ जेतुकामो लक्ष्मणार्यं यज्ञमूर्तिः
स तं जवात् ॥ ३ ॥ शास्त्राणि लेखयित्वाथ पुस्तकेषु बहूनि
च ॥ तत्पुस्तकसहस्राणि निधाय शकटे मुदा ॥ ४ ॥ विद्यागर्-
वेण महता शिष्यसंघैः समावृतः ॥ आसाद्य रंगनगरं लक्ष्मणार्य्यं
तमब्रवीत् ॥ ५ ॥ रामानुज मया सार्द्धं शास्त्रवादं कुरु स्वयम् ॥
यज्ञमूर्तेर्वचः श्रुत्वा लक्ष्मणार्यस्तमब्रवीत् ॥ ६ ॥ मया यदि
जितो वादे का शिक्षा तव तां वद ॥ तेनैवमुक्तस्तं प्राह यज्ञमूर्तिर्यती-
श्वरम् ॥ ७ ॥ अहं त्वया यदि जितस्त्वन्मते संप्रविश्य च ॥ शिरसा
पादुके धृत्वा नामधेयं वहामि ते ॥ ८ ॥ एवं त्वं लक्ष्मणाचार्य यज्जि-
तश्चेन्मयाधुना ॥ तच्छ्रुत्वा लक्ष्मणाचार्यो यज्ञमूर्तिं जगाद तम् ॥९॥
यदि त्वया जितो विद्वन् ग्रंथत्यागं करोम्यहम् ॥ एवं कृतप्रतिज्ञौ तौ
यज्ञमूर्तियतीश्वरौ ॥ १० ॥ अष्टादशदिनं कृत्वा शास्त्रवादावधिं तदा ॥
दर्शयंतौ स्वसामर्थ्यं शास्त्रेषु विगतक्रमौ ॥ ११ ॥ सिंहाविव विनर्दंतौ
वने मत्तगजाविव ॥ वादं चक्रतुरन्योन्यं परस्परजयैषिणौ ॥ १२ ॥
दिने सप्तदशे तत्र यज्ञमूर्तेः कुयुक्तिभिः ॥ सुष्ठूक्तयो यतींद्रस्य बाधिता
इव ताः स्थिताः ॥ १३ ॥ यज्ञमूर्तिः स संतुष्टस्तदा स्वमठमाविशत् ॥
ततः स्वमठमाविश्य लक्ष्मणार्यो विचक्षणः॥ १४॥सव्याकुलांतःकरणः
कृतस्नानादिसत्क्रियः ॥ आराधनीयं तं देवमाराध्य वरदं हरिम्॥ १५॥
परिक्रम्य प्रणम्याह भगवंतं कृतांजलिः ॥ मम विज्ञापनं स्वामिन्छृ-
णुष्व करुणाकर ॥ १६ ॥ बहुकालादनुस्यूतवादं वैष्णवदर्शनम् ॥
श्रीपरांकुशनाथादिकालेषु पुरुषोत्तम ॥ १७ ॥ कुत्राप्यव्याहतं
देव त्वया सम्यक्प्रवर्तितम् ॥ मम काले जगन्नाथ तद्व्याहतमिव
स्थितम् ॥ १८ ॥ त्वमेतत्कालपर्यंतं त्वत्स्वरूपगुणादयः ॥
सत्या इति प्रमाणानां वर्त्तनं कृतवानसि ॥ १९ ॥ इदानीं कंचि-
दादाय मृषावादिनमादरात् ॥ मम काले प्रमाणानि तान्यद्योपर-

तानि च ॥ २० ॥ तेन कारयितुं तेद्य संकल्पः समजायत ॥ तथा कुर्विति विज्ञाप्य शेतेस्माकृतभोजनः ॥ २१ ॥ स्वप्ने प्रसन्नो भगवान् देवो वै यतिभूपतेः ॥ हरिः प्रोवाच तमिदं लक्ष्मणार्यं कृपानिधिः ॥ २२ ॥ विषादं मागमस्तात समर्थौ यतिशेखर ॥ दत्तः शिष्यो मया तेद्य यत्नः संपादितो महान् ॥ २३ ॥ भवतः परमाचार्य्ययामुनार्य्यकृतं महत् ॥ निर्दुष्टं वर्त्तते लोके मायावादस्य खंडनम् ॥२४॥ तेन तत्त्वं जयस्वाशु यज्ञमूर्तिं यतीश्वर ॥ यतिराजः संप्रहृष्टो हरिर्हरिरितीरयन् ॥ २५ ॥ स्वप्नादुत्थाय सहसा परं विस्मयमागतः ॥ कृतनित्यक्रियो धीमान् स्वप्नोक्तिं हृदि भावयन् ॥ २६ ॥ ववंदे चरणौ तस्य देवराजस्य भक्तिमान् ॥ २७ ॥ ततो यतींद्रः सह शिष्यसंघैस्तद्वादगोष्ठीं विदुषां वरिष्ठः ॥ तं यज्ञमूर्तिं सहसा विजेतुं प्रसन्नगंभीरमनाः प्रतस्थे ॥ २८ ॥ ततः सभायां तमतिप्रहृष्टं स यज्ञमूर्तिर्यतिसार्वभौमम् ॥ प्रवृद्धसत्वं गजराजतुल्यं दृष्ट्वा तदा विस्मितमानसोभूत ॥२९॥ इतो गतः पूर्वदिने यतीश्वरो भृशं विषण्णस्सहसा स्वमालयम् ॥ स चातिगंभीरगजेन्द्रवद्भृशं प्रहृस्यतेद्यायमिति व्यचिंतयत् ॥ ३० ॥ दृष्ट्वैनं यतिभूपतिं भुवि हरेर्भागेन जातं तदा मत्वा तं परिवृत्य पादकमलं धृत्वा च शीर्षे मुदा॥सोयं मायिमतैकलग्नहृदयस्तद्यज्ञमूर्तिस्तदा शिष्यत्वं समवाप तस्य यमिनां धुर्यस्य मान्याकृतेः ॥ ३१ ॥ यज्ञमूर्तिं लक्ष्मणार्यस्तं दृष्ट्वा विस्मितोब्रवीत् ॥ किमिदं यज्ञमूर्तेद्य किं वादं न करोषि च ॥३२॥ तस्य तद्वचनं श्रुत्वा यतींद्रस्य महात्मनः ॥ बद्धांजलिर्यज्ञमूर्तिर्बभाषेदं यतीश्वरम् ॥ ३३ ॥ भवतो भगवान्विष्णुर्देवः प्रत्यक्षतां गतः ॥ इदानीं तव विष्णोश्च को भेदोस्ति यतीश्वर ॥ ३४ ॥ अतस्तवाग्रे गदितुं कथमर्हामि तद्वचः ॥ तच्छ्रुत्वा लक्ष्मणाचार्य्यः संतुष्टः पुनरब्रवीत् ॥ ३५ ॥ त्वन्मायावादिसिद्धांते ब्रह्मणः प्रतिपादितम् ॥ निर्गुणत्वं प्रमाणानि तद्ब्रह्मणि भवंति हि ॥ ३६ ॥

संत्येवं गुणयुक्तानि वेदवाक्यानि सर्वशः ॥ अविद्ययाभिभूतस्य ब्रह्म-
णः सगुणात्मनः ॥ ३७ ॥ अतो निर्गुणवाक्यानां न विरोधो गुण-
श्रुतेः ॥ इति यत्त्वन्मतं विद्वन् तन्न युक्तिसहं भवेत् ॥ ३८ ॥ यदि
मां तत्कथमिति त्वं पृच्छसि वदामि ते ॥ ज्ञानरूपं परब्रह्म तन्निवर्त्यं
मृषात्मकम् ॥ ३९ ॥ अज्ञानं चेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्तने ॥
नाशाभावादविद्यायाः सा नित्या स्यान्महामते ॥४०॥ अविद्या ब्रह्म-
णोऽसत्वे ब्रह्माद्वैतं कथं भवेत् ॥ अतोऽद्वैतगजो ह्यंधो द्वैतपंके निमज्जति
॥ ४१ ॥ इत्याद्युक्तिं स तं चोक्त्वा संतुष्टोऽभूद्यतीश्वरः ॥ यज्ञमू-
र्तिश्चैकदंडं दूरतोत्सार्य सत्वरम् ॥ ४२ ॥ प्रणम्य लक्ष्मणा-
चार्यं बद्धांजलिपुटोऽब्रवीत् ॥ त्वया जितोऽहं योगींद्र रक्ष मां
शरणागतम् ॥ ४३ ॥ उपवीतत्रिदंडादीन् दत्वांतेवासिनं कुरु ॥
यज्ञमूर्त्तेर्वचः श्रुत्वा यतींद्रः करुणाकरः ॥४४॥ यज्ञमूर्तिं पूर्णदृष्ट्या
दृष्ट्वा वाचमभाषत ॥ विचारं मा कुरुष्वात्र तथैव क्रियते मया ॥
॥ ४५ ॥ उपवीतशिखात्यागस्त्वया पूर्वं कृतो द्विज ॥ प्रायश्चित्तं
यदस्यास्ति शास्त्रे वक्ष्यामि तच्छृणु ॥ ४६ ॥ हीनो यज्ञोपवीतेन
यदि स्याज्ज्ञानभिक्षुकः ॥ तस्य क्रिया निष्फलाः स्युः प्रायश्चित्तं
विधीयते ॥ ४७ ॥ गायत्रीसहितानेव प्राजापत्यान्षडाचरेत् ॥ पुनः
संस्कारमाहृत्य धार्य्यं यज्ञोपवीतकम् ॥ ४८ ॥ एवमुक्ता ततस्तस्य
त्यागस्य यतिपुंगवः ॥ प्रायश्चित्तं कारयित्वा तथा वै यज्ञमूर्तिना
॥ ४९ ॥ धारयित्वा ततस्तेन ब्रह्मसूत्रं शिखां च सः ॥ प्रधार्य
तापसंस्कारं वैष्णवं मुनिभिः स्मृतम् ॥ ५० ॥ सर्वाश्रमेषु वसतां
स्त्रीणां च द्विजसत्तम ॥ इत्युक्तेन प्रकारेण यज्ञमूर्त्तेर्यतीश्वरः ॥ ५१ ॥
तापादिपंचसंस्कारान्कृत्वा लक्ष्मणदेशिकः ॥ उपवीतं त्रिदंडं च
पात्रं जलपवित्रकम् ॥ ५२ ॥ कौपीनं कटिसूत्रं च न त्याज्यं
यावदायुषम् ॥ तं यज्ञमूर्तिमित्युक्त्वा हर्षेणमहता तदा ॥ ५३ ॥ उपकारस्य मे
स्वप्ने कृतस्य वरदेन च ॥ ज्ञानपूर्णस्य मे चास्य यज्ञमूर्त्तेरिदं मुदा ॥ ५४ ॥

तन्नामधेयं कर्तव्यमिति मत्वा स्वनाम च॥नामद्वयं समाहृत्य यज्ञमूर्तेर्य-तीश्वरः ॥ ५५ ॥ देवराड्देवमन्नाथ इति नाम चकार सः॥ देवराज-मुनिश्चेति नामांतरमथाकरोत् ॥ ५६ ॥ ततस्तं शिष्यमादाय समीपं रंगभूपतेः ॥ प्रणामं कारयित्वाथ तेन लक्ष्मणदेशिकः ॥ ५७ ॥ तत्तीर्थशठकोपादीन् दापयित्वा तदर्चकैः ॥ ततः स्वमठमाविश्य वरदस्य महात्मनः ॥ ५८॥ मुनिना देवराजेन कारयित्वा च वंदनम्॥ तमालोक्य प्रसन्नात्मा देवराजमुनेर्धुना ॥ ५९ ॥ भगवान् देवराजोयं त्वय्यनुग्रहकारकः ॥ इत्युक्त्वाथ समाराध्य वरदं भक्तवत्सलम्॥६०॥ यतिराजः स्वयं भुक्त्वा शिष्टान्नं पादयोर्जलम् ॥ शिष्याय प्रददौ तस्मै कृपया यतिभूपतिः ॥ ६१ ॥ देवराजमुनिर्भक्त्या तत्सर्वं संगृ-हीतवान् ॥ भट्टनाथप्रबंधादिचतुष्टयसहस्रकम् ॥ ६२ ॥ सर्वं च द्राविडाम्नायं यावत्तत्त्वार्थसंपदम् ॥ देवराजमुनिर्भक्त्या जग्राह यति-पुंगवात्॥ ६३ ॥ कूरेशदाशरथ्याद्यैः संवृतो यतिपुंगवः ॥ देवराजेन मुनिना श्रीरंगे सुखमास्थितः ॥ ६४ ॥ श्रीदेवराजस्य कृपावशेन निर्जित्य वादेन स यज्ञमूर्तिम् ॥व्यरोचतादित्य इवाद्वितीयः स्वतेजसा क्रांततमो यतींद्रः ॥ ६५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे यज्ञमू-र्त्तिपराजयोनाम पंचविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः ।

ततो विचिंतयामास यतींद्रः करुणाकरः ॥ प्रज्ञया विद्यया वापि तेजसा यशसा श्रिया ॥ १ ॥ मत्तोधिको न सन्देहो यज्ञमूर्तिरयं महान् ॥ देवराजकटाक्षेण शिष्योभून्मम सांप्रतम् ॥ २ ॥ वादेन जेतुं कः शक्तस्तमिमं विबुधोत्तमम् ॥ उपर्युपरि वर्तंते युक्तयः शतश-स्तदा ॥ ३ ॥ पर्वकाले समुद्रस्य यथा शीघ्रं महोर्मयः ॥ बृहस्पतेः फणींद्रस्य वाक्पतेश्चापि नास्ति हि ॥ ४ ॥ वादेन जेतुं सामर्थ्यं यज्ञ-मूर्त्तिं महामतिम्॥ तस्मादस्य पृथक्स्थानं उपकल्प्यांजसा महत्॥५॥

महता वैभवेनैव प्रतिष्ठाप्यो महानयम् ॥ इत्येवं सम्यगालोच्य देवराजमुनेः पृथक् ॥ ६ ॥ मठं प्रकल्प्य सुमहद्बहुकक्ष्यासमावृतम् ॥ स तं निवेशयामास स्वतुल्यं वैभवेन च ॥ ७ ॥ देवराड्देवमन्नाथ इति नामद्वयं तदा ॥ रराज तुल्यं महसा यतींद्रकृतवैभवात् ॥ ८ ॥ ततस्तमखिलाचार्या यतिराजं समाश्रिताः ॥ स भक्तग्रामपूर्णाख्यो यो महान् वैष्णवोत्तमः ॥९॥ मरुधग्रामपूर्णश्च महाभागवतोत्तमः ॥ अनंतार्यश्च यज्ञेशः श्रुत्वा तद्वैभवं परम् ॥१०॥ समाश्रितुं लक्ष्मणार्य-मेते चत्वार आगताः ॥ चतुर्णां पंचसंस्कारान्वैष्णवानां यतीश्वरः ॥११॥ देवराजेन मुनिना तेषां कारितवांस्तदा ॥ देवराजमुनिर्भीतः शिष्यांस्ता-न्वाक्यमब्रवीत् ॥१२॥ इदं कार्य्यं मयेदानीं लक्ष्मणार्य्येण कारितम् ॥ ग्रामटिट्टिभकंठाग्रे बद्धं तालफलं यथा ॥१३॥ जानीध्वं यतिराजस्य पाद-मेव हि रक्षकम् ॥ ततः श्रीरंगनगरं वैष्णवाः केचिदागताः ॥ १४ ॥ दिशः प्रतीच्याः सेवार्थं मन्नाथस्य जगद्गुरोः ॥ श्रीरंगपुरवीथिस्थमपृ-च्छन्वैष्णावा जनाः ॥ १५ ॥ मन्नाथस्य मठं कुत्र वदास्माकं हि स-त्वरम् ॥ तेषां तद्वचनं श्रुत्वा जनस्तान् वाक्यमब्रवीत् ॥ १६ ॥ मन्नाथस्य मठं कस्य यूयं पृच्छत वैष्णवाः ॥ प्रतिगृह्य वचस्तस्य वै-ष्णवास्ते तमब्रुवन् ॥१७॥ एक एव हि मन्नाथो लोकेऽप्रतिमवैभवः ॥ द्वितीयो न श्रुतोस्माभिर्मन्नाथो हि कदाचन ॥ १८ ॥ तेषां तद्वचनं श्रुत्वा स जनो वाक्यमब्रवीत् ॥ देवराड्देवमन्नाथ इति कश्चित्समागतः ॥ १९ ॥ अत्र श्रीरंगनगरे वर्त्तते यतिपुंगवः ॥ तदाकर्ण्य वचस्तस्य वैष्णवास्तमथाब्रुवन् ॥ २० ॥ योस्मद्वैष्णवसिद्धांतनिर्वोढा करुणा-करः ॥ रामानुज इति ख्यातो यो मन्नाथो जगद्गुरुः ॥ २१ ॥ तमेवा-र्यं महात्मनं पृच्छामो वयमादरात् ॥ ततः संदर्शयामास वैष्णवेभ्योंज-सा मठम् ॥ २२ ॥ स जनो लक्ष्मणार्यस्य तेभ्यो यतिपतेस्तदा ॥ देवराजमुनिः सम्यक् तद्वृत्तांतं निशम्य सः ॥ २३ ॥ प्रव्याकुलांतः-करणो विषसाद महामनाः ॥ उन्मूल्य तरसा सर्वं दूरादुत्सृज्य तन्म-

ठम् ॥२४॥ दृढं गृहीत्वा योगींद्रपदपंकजमंजसा ॥ एवं विज्ञापनं चक्रे देवराजमुनिर्गुरुम् ॥२५॥ अयमात्मा यतिश्रेष्ठ भगवन्मायया वृतः ॥ लक्षेषु लक्ष्मणाचार्य्य मूढश्चतुरशीतिषु ॥ २६ ॥ भ्रमन्नानाविचित्रासु कृमिकीटादियोनिषु ॥ भूत्वाभूत्वा महद्दुःखमनुभूयानुभूय च॥२७॥ मृत्वामृत्वा महाघोरं नरकाननुभूय च ॥ केनचित्पुण्यलेशेन बहुकालादनंतरम् ॥२८ ॥ घुणाक्षरलिपिन्यायादयं देहः समागतः ॥ एतादृशो ह्यहंकारयुक्तः शास्त्रविदुत्तमः ॥ २९ ॥ सोहं ब्रह्मेति विज्ञानान्मूढोस्मिन्भवसागरे ॥ पतितः कृपयैवाद्य त्वया सम्यक् समुद्धृतः ॥ ३० ॥ भूयः संमोहनार्थाय कृता पृथगवस्थितिः ॥ एतस्मादात्मनाशो मे यतींद्रान्यो न विद्यते ॥ ३१ ॥ तत्र पादांबुजाभ्यासे वसाम्यत्रैव सुस्थिरम् ॥ किमन्यच्छरणं मेद्य त्वत्पादकमलं विना ॥ ३२ ॥ भवदुक्तप्रकारेण कैंकर्य्यं भवतोनिशम् ॥ कुर्वन्नत्रैव वत्स्यामि ध्रुवमादेहपातनम् ॥ ॥ ३३ ॥ स च सम्यङ् निशम्याशु वृत्तांतं तस्य विस्तरात् ॥ मंदस्मितमुखः श्रीमान् पूर्णदृष्ट्या यतीश्वरः ॥ ३४ ॥ देवराजमुनिं दृष्ट्वा प्रियवाक्यैरतोषयत् ॥ कृत्वा यतींद्रो नित्याख्यं विष्णोराराधनक्रमम् ॥ ॥ ३५ ॥ देवराजाय मुनये तत्सम्यगुपदिश्य च ॥ तमुवाच कृपासिंधुर्यतींद्रो लोकदेशिकः ॥३६॥ आराधनक्रमेणैव त्वमेतेन दिनेदिने ॥ अस्मद्वरदराजस्य कुरुष्वाराधनं मठे ॥ ३७ ॥ इदमेवहि कैंकार्य्यमादेहपतनं तव ॥ इत्यादिश्य यतिश्रेष्ठो देवराजमुनिं तदा ॥ ३८ ॥ महात्मा सुप्रसन्नात्मा श्रीरंगे न्यवसत्सुखम् ॥ देवराजमुनींद्रश्च यतिराजाज्ञया तदा ॥ ३९ ॥ चकार लोकरक्षार्थं स्फुटं द्राविडभाषया ॥ प्रबंधं ज्ञानसाराख्यं सर्वशास्त्रोपबृंहितम् ॥ ४० ॥ अन्यं प्रमेयसाराख्यं सम्यगेतद्द्वयं बुधः ॥ गुरुरेवात्र शिष्यस्य परं दैवमिति ध्रुवम् ॥ ४१ ॥ गुरुपादाब्जकैंकर्य्यं परमप्राप्यमेव हि ॥ गुरुं भगवतः साक्षादवतारं विचिंतयेत् ॥ ४२ ॥ इत्यादिकान्विशेषार्थानुक्तवान्छास्त्रवित्तमः ॥ देवराजमुनिर्भक्त्या यतींद्रपदपद्मयोः ॥ ४३ ॥ नित्यकैं-

कर्य्यनिरतः सुखं तस्थौ महायशाः ॥ पृथक्स्थितिं तां स विहाय धीमान् यतींद्रकैंकर्य्यपरोमलात्मा ॥ अशोभताद्योखिलवैष्णवानां मध्ये तरूणामिव कल्पवृक्षः ॥४४॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे ज्ञानसारप्रमेयसारग्रंथद्वयनिर्माणं नाम षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः ।

सहस्रगीतेर्व्याख्यानं यतिराजस्ततो महान् ॥शिष्येभ्यो बोधयंस्तस्थौ विद्वद्गोष्ठीसमावृतः ॥ १ ॥ तत्रैकत्र स्थितः कस्यां गाथायामर्थ ईदृशः ॥ वेंकटेशाय कैंकर्य्यं कर्तव्यं यावदायुषम् ॥२॥ तदा यतींद्रस्तान् दृष्ट्वा वैष्णवानिदमब्रवीत् ॥ महच्छ्रीवेंकटगिरौ वैष्णवाः पुष्पमंडपे ॥ ३ ॥ अनुकूलतया तस्य वेंकटेशस्य भक्तितः ॥ महद्वृंदावनं तत्र कृत्वा पुष्पवनैः सह ॥ ४ ॥ नित्यं श्रीवेंकटेशाय नित्यं श्रीवत्सधारिणे ॥ प्रदाता तुलसीदाम्नः को वास्त्यत्रार्चको महान् ॥ ५ ॥ निशम्य तस्य वचनमनंतार्य्यः समुत्थितः ॥ दासोहमधुनैवेदं करिष्यामि तवेरितम् ॥ ६ ॥ इत्युक्त्वा यतिराजाय वैष्णवः कृतवंदनः ॥ वेंकटाचलमासाद्य नत्वा श्रीवेंकटेश्वरम् ॥ ७ ॥ तत्र वृंदावनं कृत्वा वेंकटाद्रौ महायशाः ॥ तस्य रामानुज इति नामधेयं विधाय च ॥ ८ ॥ श्रीपुष्पतुलसीमालां वेंकटाचलवासिने ॥ अनंतार्य्योर्पयंस्तस्थौ लक्ष्मणार्याज्ञया मुदा ॥९॥ तच्छ्रुत्वा लक्ष्मणाचार्य्यः संतोषं परमं गतः ॥ शठारिसूक्तेर्व्याख्यानं त्रिवारमनुभूय सः ॥ १० ॥ अनुज्ञातो रंगभर्त्रा तदा लक्ष्मणदेशिकः ॥ द्रष्टुं प्रतस्थे सहसा सशिष्यो वेंकटाचलम् ॥ ११ ॥ जगाम महितक्षेत्रं यतींद्रः सहसा तदा ॥ तत्र विष्णुं प्रणम्याथ महितं पद्मलोचनम् ॥ १२ ॥ विधाय पथि पाथेयं पुंडरीकाक्षमव्ययम् ॥ पाथेयं पुंडरीकाक्षनामसंकीर्तनामृतम् ॥ १३ ॥ इत्येवं संस्मरन् वाक्यं तथोदीचीं दिशं ययौ ॥ मार्गस्थितान् दिव्यदेशान् प्रणम्य यतिपुंगवः ॥ १४ ॥ देहलीनगरं प्राप्य

त्रिविक्रममवंदत ॥ तदा शैवसमाक्रांतं चित्रकूटं विचार्य्यं च ॥ १५ ॥
नेदानीं समयोस्माकं समीकर्तुमिदं स्थलम् ॥ इति मत्वाष्टसाहस्र-
ग्रामं प्रति ययौ तदा ॥१६॥ तस्मिन्नष्टसहस्राख्यग्रामे विद्वज्जनावृते ॥
विद्येते यतिराजस्य शिष्यवर्यौ द्विजोत्तमौ ॥१७॥ वरदाचार्य्ययज्ञेशना-
मानौ लोकविश्रुतौ॥ कर्पासारामवरदो दरिद्रः शिष्ययोस्तयोः ॥१८॥
यज्ञेशस्तु महाप्राज्ञो धनाढ्यो गुरुभक्तिमान् ॥ धनाधिकस्य शि-
ष्यस्य तेषामाराधनेच्छया ॥ १९ ॥ प्रथमं प्रेषयामास शिष्यौ
रामानुजस्तदा ॥ स्वस्यागमनवृत्तांतं तस्मै शंसितुमादरात् ॥२०॥
तौ गत्वा चाशु तं ग्रामं तस्मै सर्वं शशंसतुः ॥ शिष्यैः समागतं
ज्ञात्वा यतिराजं स वैष्णवः ॥ २१ ॥ अपूजयित्वा पूजार्हौ
स्वगुरोराज्ञयागतौ ॥ अध्वश्रमपरिक्लिन्नौ तांबूलासनभोजनैः ॥
रामानुजस्य पूजार्थं वस्तु संपादयन्स्थितः ॥ २२ ॥ शिष्यौ
निराशौ प्रत्येत्य तद्वृत्तांतं तमूचतुः ॥ २३ ॥ तदुपाकर्ण्य भगवांस्त-
द्वृत्तांतनिवृत्तधीः ॥ तस्मिन् शिष्ये शिष्यजनैर्दरिद्रस्य सहानुगैः
॥ २४ ॥ कार्पासारामवरददेशिकस्य गृहं ययौ ॥ वरदार्य्यः शिलं
कर्तुं ग्रामसंचरणोद्यमः ॥ २५ ॥ अक्षयं पात्रमादाय वैष्णवः कृपणो-
ऽभ्यगात् ॥ कार्पासारामलक्ष्म्याख्या जीर्णवस्त्रधरा तदा ॥ २६ ॥
विहाय चीरं सा साध्वी तस्य पत्नी गृहांतरे ॥ मंत्ररत्नानुसंधानं
कुर्वंती सा समास्थिता ॥ २७ ॥ यतिराजः समागत्य सशिष्यैस्त-
द्गृहं प्रति ॥ अभावेन गृहस्थस्य वरदार्य्यस्य तत्र सः ॥ २८ ॥
कुत्रेति वरदाचार्य्यस्तदा वाचमभाषत॥ यतिराजरवं श्रुत्वा सा साध्वी
भक्तिशालिनी ॥ २९ ॥ कार्पासारामलक्ष्म्याख्या मनस्येवमचिंत-
यत् ॥ आगतो देशिको मेद्य कृपया शिष्यवत्सलः ॥ ३० ॥ इदानीं
वस्त्रहीनाहं कथमर्हामि सेवितुम् ॥ निराशो गच्छति गुरुर्यदि तूष्णी-
महं स्थिता ॥ ३१ ॥ दिग्वासा वेपमानांगी ह्रिया किंचिदवाङ्मु-
खी ॥ इत्यालोच्य तदा साध्वी हस्ततालध्वनिं व्यधात् ॥ ३२ ॥

इंगितज्ञो निशम्याशु तस्याः पाणिरवं गुरुः ॥ स्वशिरःप्रावृतं वस्त्रं गृहांते क्षिप्तवान्जवात् ॥ ३३ ॥ आच्छाद्याच्छादनं साध्वी दत्तं तेन महात्मना ॥ प्रणामं प्रथमं कृत्वा यतींद्राय महात्मने ॥ ३४ ॥ भक्त्या संपूजयामास पाद्यार्घ्यासनवंदनैः ॥ सर्वेषामप्यपचितिं विधायार्घ्यादिभिः क्रमात् ॥ ३५ ॥ तेषां विधातुमातिथ्यं मनश्चक्रे द्विजांगना ॥ अस्माभिः किं कृतं पुण्यं किं तप्तं परमं तपः ॥ ३६ ॥ किं दानं चार्हते दत्तं सुमहत्पूर्वजन्मनि ॥ विष्णोर्भगवतः साक्षादंशेन यतिशेखरः ॥३७॥ अवतीर्णोभवद्भूम्यां क्षेमाय जगतोधुना ॥ स निक्षिप्य कृपां मेद्य शिष्यैर्मद्गृहमागतः॥२८॥यतीश्वरो विशेषेण विष्णोरंशधरो महान् ॥ गुरुर्देवः परं ब्रह्म गुरुरेव परा गतिः ॥ ३९ ॥ शरीरमर्थं प्राणांश्च सद्गुरुभ्यो निवेदयेत्॥शरीरं वसु विज्ञानं वासो धान्यादिकान् वसून् ॥ ४० ॥ गुर्वर्थं धारयेद्यस्तु स शिष्यो नेतरः स्मृतः ॥ इति श्रुतिपुराणेषु बहुशः प्रतिपादितम् ॥ ४१ ॥ धान्यस्य प्रस्थमेकं वा वराकमपि नास्ति मे ॥ किं करोमि यतिश्रेष्ठः श्रमेण महता वृतः ॥ ४२ ॥ भर्त्ता गतः शिलं कर्त्तुं तेनैषां किं भविष्यति ॥ अकार्य्यमपि कृत्वाहं करोम्याराधनं गुरोः ॥ ४३ ॥ श्रमेण महता युक्ता न दोषस्तत्र मे गुरोः॥कलिघ्नेन कृतं पूर्वं तदीयाराधनं महत्॥४४॥ कौटिल्यवृत्त्या चौर्य्येण धनं संपाद्य संततम् ॥ निषादवृत्तिमास्थाय दुर्गं वनमुपागतः ॥ ४५ ॥ चौरैरनेकैः सहितो रुद्धमार्गो विचक्षणः ॥ गतागतानां तन्मार्गे जनानां बहुलं धनम् ॥ ४६ ॥ हृत्वा श्रीवैष्णवेभ्यश्च नित्यमाराधनं व्यधात् ॥ धनं रंगेश्वरस्यापि परकालः पुराध्वनि ॥ ४७ ॥ तदीयाराधनार्थाय जहार गुरु यत्नतः ॥ न दोषलेशस्तत्रापि तस्मान्मुक्तिप्रदोभवत् ॥ ४८ ॥ जंतुः संसृतिचक्रस्थो भ्राम्यमाणः स्वकर्मभिः ॥ गुरुज्ञानोपदेशेन तस्मै मुक्तिं प्रदास्यति ॥ ४९ ॥ तद्गुरोर्निष्क्रयं कर्तुं न शक्यं पुरुषायुषा ॥ तस्माद्देहं च विक्रीय कर्तव्यं गुरुपूजनम् ॥ ५० ॥ मन्निमित्तकृतं पापं मयि पुण्याय

कल्पते ॥ मामनादृत्य पुण्यं च ह्यपि पापाय विद्यते ॥ ५१ ॥ एवं भगवतैवोक्तं तत्तस्मादधिको गुरुः॥ग्रामेस्मिन्वैश्यजः कश्चिद्धनाढ्यो मदनातुरः ॥ ५२ ॥ स मामाकांक्षते नित्यं रूपयौनशालिनीम् ॥ तस्याधीनमिदं कृत्वा शरीरं मलपूरितम् ॥ ५३ ॥ तस्माद्वित्तं समादाय देशिकाय महात्मने ॥ करोम्याराधनं तेषां वैष्णवानां च सत्वरम् ॥५४॥ मनस्येवं समालोच्य यतीश्वरमभाषत ॥ भवतः कृपयैवाद्य तदीयाराधनाय च ॥ ५५ ॥ स्वयमेवागमिष्यंति पदार्थाः सकला ध्रुवम्॥ क्षणं विश्रम्यतां स्वामिन्नत्रैव सुसमाहितैः ॥ ५६ ॥ ततो गुणवती साध्वी गता तद्गृहमंजसा ॥ संप्राप्य तमुवाचेदं मन्दस्मितमुखी सती ॥ ५७ ॥ श्रूयताममभिधास्यामि वचनं हितमात्मनः ॥ मनोरथो हि भवतः सफलोद्य भविष्यति ॥ ५८ ॥ अस्मद्गुरुः शिष्यसंघयुतो मद्गृहागतः ॥ तदीयाराधनार्थाय सर्वद्रव्याणि सत्वरम् ॥ ५९ ॥ संप्रेषयाधुना शीघ्रं पात्राणि निखिलानि च ॥ दृष्ट्वा तामूरुजः साध्वीं वरांगीं मदनातुरः ॥ ६० ॥ संतुष्टहृदयः श्रीमान्मनस्येवमचिंतयत् ॥ आहूता या मया पूर्वं नागता नाभिभाषिता ॥६१ ॥ प्रियाभरणवस्त्रादीन्प्रेषितांश्चाप्यगृह्णती ॥ सप्तकक्षानतिक्रम्य ममांतःपुरमंजसा ॥ ६२ ॥ आगता सुस्मितमुखी सुंदरी सा स्वयंवरा ॥ बहुकालाच्च बहुशः प्रार्थितो मे मनोरथः ॥६३ ॥ध्रुवमस्मिन्दिने सम्यक् सफलः संभविष्यति ॥ एवं संचित्य बहुधा स्वपार्श्वस्थां मनोहराम्॥ ६४॥दृष्ट्वा गुणवतीं साध्वीमत्यंतं मुदमाप सः॥ततःसंप्रेषयामास वरदार्यगृहं प्रति ॥६५॥ सूपतंडुलशाकानि सर्वाणि विविधानि च ॥ पयोदधिघृताद्यानि तानि वेगेन सादरम् ॥ ६६ ॥ साध्वी तु यतिराजस्य सन्निधौ भक्तिसंयुता॥ निधाय सर्ववस्तूनि तदा सा प्रांजलिः स्थिता ॥६७॥ रामानुजस्तदा दृष्ट्वा तानि वस्तूनि तां सतीम् ॥ प्रज्ञां शीलं च भक्तिं च ज्ञानं तस्या यतीश्वरः ॥ विस्मयाविष्टहृदयो बभाषे विनयोज्ज्वलाम् ॥ ६८ ॥ स्नात्वा त्वमेवाशु कुरुष्व पाकमाराधनार्थं वरदस्य विष्णोः ॥ इत्येवमुक्त्वा यतिराज-

शिष्यान् नियोज्य तत्कर्मणि कांश्चिदार्यान् ॥ ६९ ॥ स्वयं विगाह्याशु धृतोर्ध्वपुंड्रो विष्णुं समाराध्य स लक्ष्मणार्यः ॥ श्रीवैष्णवैर्वेदविदां वरिष्ठैः साकं तदन्नं बुभुजे महात्मा ॥ ७० ॥ भुक्त्वा तदन्नं परमं पवित्रं भक्त्यार्पितं लक्ष्मणदेशिकेंद्रः ॥ सुखोपविष्टोऽखिलभक्तसंघैर्मुमोद तत्रैव तयार्चितो हि॥७१॥ इति श्रीप्रपन्नामृते रामानुजचरित्रेऽष्टसहस्राख्यग्रामे कार्पासारामवरदाचार्य्यगृहे रामानुजार्याराधनं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशतितमोऽध्यायः ।

ततः स तास्मिन्यतिराजचंद्रे सुखोपविष्टे परितुष्टचित्ते ॥ व्याख्यायमाने स्वजने महार्थान् कृतोञ्छवृत्तिर्गृहमाजगाम ॥ १ ॥ निशम्य वृत्तांतमतीव संभ्रमः पत्न्यास्ततस्तत्सकलं स वैष्णवः ॥ उवाच वाक्यं वरदार्य्यनामको विलोक्य तृप्तं स्वगुरुं यतीश्वरम् ॥ २ ॥ बालापि बुद्धिर्महती तवाबले यया त्वयेदं महदद्भुतं कृतम् ॥ भार्या न मे सुंदरि देवता परा मद्भाग्यलेशेन समागताधुना ॥ ३ ॥ येन प्रकारेण शरीरमर्थं प्राणान्परित्यज्य गुरोर्निमित्तात् ॥ यो वै मुदा ह्यर्चति देशिकेंद्रं स एव शिष्यो गुरुवंचकोन्यथा ॥ ४ ॥ येन केन प्रकारेण देशिकाय महात्मने ॥ शरीरमर्थं प्राणानामर्पणं सम्यगेव हि ॥ ५ ॥ मानयित्वा बहुविधं तां साध्वीं वैष्णवोत्तमः ॥ जग्राह चरणौ तस्य लीलामानुषरूपिणः ॥ ६ ॥ बद्धांजलिः स्तुतिं चक्रे संहृष्टो यतिशेखरम् ॥ नमस्ते पुरुषश्रेष्ठ यतीश्वर नमोनमः ॥ ७ ॥ हिताय लोकस्य चराचरस्य तवावतारः किल लक्ष्मणार्य्य ॥ यथावतारो जगतां हिताय हरेश्च विष्णोर्जगदाश्रयस्य ॥ ८ ॥ त्वं सर्ववित्सर्वविदां वरिष्ठः साक्षाद्धरेः संप्रतिपन्नरूपः ॥ तस्माच्च ते लक्ष्मणदेशिकेंद्र कर्माणि चित्राणि विलक्षणानि ॥ ९ ॥ विष्णोश्च मायारचितेषु पुत्रजायाप्तबंधुष्वधिरूढचित्तः ॥ भ्रमत्ययं संप्रति जीवलोके

यथांधकूपे पतितो हि जंतुः ॥ १० ॥ पातुं त्वदन्यो भुवि विद्यते कस्तं जीवलोकं यतिराज शक्तः ॥ यथाहिना नान्यजनस्समर्थो दष्टं जनं जीवयितुं नरेंद्रात् ॥ ११ ॥ ध्वांतं यथा नाशयितुं रविं विना निदाघतप्तस्य यथोदकं विना ॥ अन्यत्समर्थं न हि विद्यते तथा संसारतप्तस्य तवांघ्रिपूजनात् ॥ १२ ॥ यदंघ्रिसंस्पर्शनतो विसृज्य तां तद्ब्रह्मरक्षः स्वकलेवरं स्वयम् ॥ जगाम लोकं सुरसिद्धसेवितं तस्मै नमस्ते गुरवे महात्मने ॥१३॥ भूम्यां त्वयाद्य जननं न कृतं यदि स्याद्योगीश मादृशजनस्य गतिः कथं स्यात् ॥ विद्वज्जना अपि भृशं कलिदत्तचित्ताः पाषंडवृत्तिनिरता निरये पतंति ॥ १४ ॥ कृपां विनिक्षिप्य मयि त्वमागतो ह्यकिंचने संप्रति शिष्यसंवृतः ॥ विसृज्य कार्पासनगांचितं गृहं पूतं विधातुं स्वपदाब्जरेणुभिः ॥ १५ ॥ संदर्शनाच्च भवतामधुना यतींद्र पूर्वार्जितानि दुरितानि विनाशमापुः ॥ धन्योहमस्मि कृतकृत्यतमोहमस्मि सर्वे च मत्पितृगणाः सुरलोकमापुः॥१६॥ ततस्तथानेन यतीश्वरेणाप्याज्ञापितोसौ वरदार्य्यनामा ॥ तत्पादतोयं परमं च पीत्वा भुक्त्वा तदन्नं मुमुदे सभार्यः ॥१७॥ दंपत्योस्तु तयोर्विलोक्य स तदा चित्तैक्यतां शिष्ययोः संहृष्टः सकलार्थतत्त्वनिपुणः शिष्यैर्यतीनां वरः ॥ विख्यातः सकलावनौ जनमहापापेध्मवैश्वानरस्तस्मिन्नेव गृहे निवासमकरोत्ताभ्यां सदा पूजितः ॥ १८ ॥ तत्पादतोयं च तदन्नमादरात्तौ दंपती वैश्यगृहं प्रजग्मतुः ॥ वैश्याय तस्मै व्यदिशत्तदोदनं संप्राप्य शुद्धांतमचंचला सती ॥ १९ ॥ तत्पादोदकपानेन तदन्नस्य निषेवणात् ॥ महान्विवेकः संजज्ञे तस्य वैश्यस्य दुर्मतेः ॥ २० ॥ प्रदक्षिणनमस्कारं तस्याः कृत्वा स तूरुजः ॥ बद्धांजलिपुटो भूत्वा वचनं चेदमब्रवीत् ॥ २१ ॥ माता त्वं मम ते भर्त्ता पिता साध्वि न संशयः ॥ अज्ञानतिमिरांधोहं दुष्प्रज्ञो मदनातुरः ॥ २२ ॥ अजानानः स्वरूपं ते पापचिन्तापरोभवम् ॥ त्वयि तत्क्ष-

म्यतां मातस्तस्माद्रक्षस्व मां सुतम् ॥ २३ ॥ तव देशिकपदाब्जे मां निधाय महामते ॥ मया कृतापराधानां प्रायश्चित्तं विधाय च ॥२४॥ येन केन प्रकारेण सा त्वं दीनं नयस्व माम् ॥ सा साध्वी तद्वचः श्रुत्वा वैश्यस्यात्यंतविस्मया ॥ २५ ॥ भर्त्रे निवेदयामास तद्वृत्तांतं महात्मने ॥ तयोदीरितमाकर्ण्य तत्सर्वं विस्मयान्वितः ॥ २६ ॥ कार्पासारामवरददेशिकः करुणाकरः ॥ वैश्योत्तमं तमादाय यतींद्रपदपद्मयोः ॥ २७ ॥ शिष्यं समर्पयामास सहसा देशिकप्रियः ॥ निर्व्याजरक्षकः श्रीमांस्तस्य वैश्यस्य सत्वरम् ॥ २८ ॥ विधाय पंचसंस्कारान् ररक्ष कृपया स तम् ॥ वैश्यः श्रीवैष्णवो भूत्वा जितकामो महातपाः ॥ २९ ॥ रराज कृपया तस्य शरच्चंद्र इवामलः ॥ धनं बहुविधं सर्वं निधाय गुरुसन्निधौ ॥ ३० ॥ बहुशः प्रार्थयामास तदंगीकरणाय तम् ॥ अंगीकृत्याथ कृपया यतींद्रस्तन्महद्धनम् ॥ संतोषं जनयामास वैश्यस्य करुणानिधिः ॥३१॥ तदा यतींद्रोखिलशिष्यसंघैः संसेव्यमानो वरदार्य्यगेहे ॥ दिगंतकीर्तिः कृतलोकरक्षस्तस्थौ सुखं लक्ष्मणदेशिकेंद्रः ॥ ३२ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे वैश्यस्य श्रीवैष्णवत्वसिद्धिर्नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

## एकोनत्रिंशोऽध्यायः ।

यज्ञेशो यतिपुंगवस्य सहसा श्रुत्वागमं संभ्रमात्तस्याराधनसिद्धये बहुविधं द्रव्यं समस्तं क्षणात् ॥ संपाद्यागमनं स्वबंधुसहितो वाञ्छन् गुरोः सादरं तस्थौ तत्र यथा प्रभातसमये सूर्योदये पंकजम् ॥ १ ॥ शीघ्रं पुष्कलमेव वस्तु सकलं निक्षिप्य सम्यग् गृहे चिंताव्याकुलमानसो यतिपतेः संदर्शनाभावतः ॥ तस्यान्वेषणवांछया निजगृहान्निर्गत्य तूर्णं जनानन्वेष्टुं पथि तत्र देशिकपदं प्रस्थापयामास सः ॥ २ ॥ तद्यतींद्रस्य वृत्तांतं श्रुत्वा शिष्यजनात्तदा ॥ सहसा ते जनाः सर्वे यज्ञेशाय न्यवेदयन् ॥ ३ ॥ सर्वं निशम्य वृत्तांतं यज्ञेशो देशिकस्य

तत् ॥ प्रव्याकुलांतःकरणो विषादमगमत्तदा ॥ ४ ॥ संप्राप्य तस्य निकटे यतींद्रपदपद्मयोः ॥ यज्ञेशः सहसा धीमान्निपपात रुरोद ह ॥ ५ ॥ उद्धृत्य पाणिना शीघ्रं यज्ञेशं कृपया गुरुः ॥ व्याजहार शुभं वाक्यं लोकशिक्षार्थमादरात् ॥ ६ ॥ श्रूयतामभिधास्यामि यज्ञेश हितमात्मनः ॥ पंचसंस्कारसंपत्तिः श्रीमद्भगवदर्चनम् ॥ ७ ॥ अर्थपंचकविज्ञानमाचार्याधीनवृत्तिता ॥ विना भवंति पंचैते न तदीयानुवर्तनम् ॥ ८ ॥ पूर्वोक्तार्थवतस्तस्य प्रपन्नस्य महात्मनः ॥ यदात्मोज्जीवनं लोके वैष्णवातिथिपूजनम् ॥ ९ ॥ अतिथिं वैष्णवं दृष्ट्वा श्रमयुक्तं समागतम् ॥ हर्षेण व्यजनेनाशु भक्त्या संवीज्य सादरम् ॥ १० ॥ अध्वग्लानिनिवृत्त्यर्थं वैष्णवस्यातिथेः पुरः॥ पाद्यार्घ्याचमनीयाद्यैरुपचारैः प्रपूजयेत् ॥ ११ ॥ प्रियवाक्यैर्महाभक्त्या तं मत्वा विष्णुरूपिणम् ॥ अंतर्गृहे सुखासीनं विधाय परमासने ॥ १२ ॥ यथाशक्त्यान्नपानाद्यैर्भोजनं कारयेत्तदा ॥ स्ववेश्मनि यथा भुंक्ते निर्भयः सुसमाहितः ॥ १३ ॥ पुष्पचंदनतांबूलैर्यथाशक्त्या प्रतोषयेत्॥ तद्भुक्तशेषं सहसा स्वयं भुंजीत भक्तितः ॥ १४ ॥ यद्यस्त्येतदनुष्ठानं यज्ञेश हि मयोदितम् ॥ न्यूनता वैष्णवत्वस्य कदाचिदपि नास्ति हि ॥१५॥ एतत्तत्त्वार्थयुक्तस्य प्रपन्नस्यैतदेव हि ॥ हितं मयोदितं सत्यं वैष्णवातिथिपूजनम्॥ १६॥ त्वयि यज्ञेश तन्नास्ति वैष्णवातिथिपूजनम्॥ धर्मं करोति दंभार्थं ख्यातिलाभपरो भवान् ॥ १७ ॥अस्माकं दांभिकगृहा यज्ञेश न कृतालयाः ॥ लोके यत्सात्त्विकं चान्नं तत्तदेवेश्वरार्पणम् ॥ १८ ॥ यज्ञेशो यतिराजस्य वाक्यं श्रुत्वातिलज्जितः ॥ बद्धांजलिपुटो भूत्वा चक्रे विज्ञापनं तदा ॥ १९ ॥ मया कृतापराधानामपराधक्षमापणम् ॥ कारयित्वा दयासिंधो मामंगीकुरु सर्वथा ॥२०॥त्वदागमनहर्षेण विस्मृत्यागतवैष्णवान् ॥ श्रीवैष्णवमहासंघसमेतस्य महात्मनः॥२१॥ तवैवाराधनार्थाय यतमानः स्थितोभवम् ॥

मयोदितमिदं वाक्यं न मिथ्या यतिभूपते ॥ २२ ॥ निर्गर्वेण कृतं कार्य्यं सम्यगेतद्विचार्य्यताम् ॥ तद्रक्ष कृपया दीनं शिष्यं मां करुणाकर ॥ २३ ॥ यतिराजस्तदाकर्ण्य तं जगाद स वैष्णवम् ॥ शृणु वत्स प्रवक्ष्यामि वृत्तिं तव महामते ॥ २४ ॥ त्वयि सर्वगुणाः संति विना ह्यतिथिपूजनम् ॥ तदर्थमेतदारभ्य वैष्णवानां महात्मनाम ॥ २५ ॥ क्रमेणात्रास्थितानां च कुरु शुश्रूषणं मुदा ॥ प्रदेह्यनुदिनं तेभ्यो रोचते मानसे यदि ॥ २६ ॥ एतत्कार्य्यं प्रयत्नेन त्वं कुरु श्रद्धयान्वितः॥एवमाज्ञाप्य यज्ञेशं परिवारेण संयुतः ॥२७॥ ग्रामादष्टसहस्राख्यान्निश्चक्राम यतीश्वरः ॥ गत्वा सत्यव्रतं क्षेत्रं कांचीपूर्णेन संगतः ॥ २८ ॥ देवेशं वरदं नत्वा स्थित्वा तत्र दिनत्रयम् ॥ कांचीपूर्णादिभिः सम्यग् यतींद्रः प्रेषितो महान् ॥ २९ ॥ श्रीवैष्णवमहासंघैः प्रतस्थे वेंकटाचलम् ॥ वृषाद्रियाम्यदिग्भागे सर्वपापहरं वरम् ॥३०॥ वर्तते कापिलं तीर्थं श्रीशैलारोहवर्त्मनि ॥ तत्तीर्थतीरे योगींद्राः शठकोपादयो दश ॥ ३१ ॥ अनिशं सेवमानास्ते वर्तंते वृषभूधरम् ॥ तस्य कापिलतीर्थस्य नामांतरमतोभवत् ॥३२॥ यद्दिव्यसूरितीर्थाख्यं विश्रुतं तज्जगत्त्रये॥ योगिराजो लक्ष्मणार्यस्तं देशमुपगम्य सः ॥३३॥ तत्रैव वासमकरोच्छठकोपादिसन्निधौ ॥ तस्मिंस्तीर्थे विगाह्याशु कृतपूजो यतीश्वरः ॥३४॥ शठकोपादियोगींद्रान्नत्वा भक्त्या दशामलान्॥ विलोक्य विस्मयं गत्वा गिरिराजं वृषाचलम् ॥ ३५ ॥ तत्रैव वासमकरोत्कंचित्कालं यतीश्वरः ॥ ततो विठ्ठलदेवाख्यो राजा तद्देशपालकः ॥ ३६ ॥ यतींद्रवैभवं श्रुत्वा तस्य सेवार्थमागतः ॥ संसेव्य लक्ष्मणाचार्य्यमतिमानुषवैभवम् ॥ ३७ ॥ विस्मयं परमं गत्वा तस्य शिष्योभवत्तदा ॥ तस्य विठ्ठलदेवस्य यतींद्रः करुणाकरः ॥ ३८ ॥ विधाय पंचसंस्कारान् ररक्ष कृपया स तम् ॥ राजा विठ्ठलदेवोथ यतींद्राय महात्मने ॥ ३९ ॥ भक्त्या समर्पयामास धनं च बहुलं तदा ॥ तौंडीरमंडले ग्राममिलमंडियनामकम् ॥ ४० ॥ त्रिंशत्क्षेत्रसमायुक्तं तं

ग्रामं यतिपुंगवः॥आश्रितेभ्यो द्विजेभ्योऽपि त्रिंशद्भ्यस्सादरं ददौ॥४१॥ अभिप्रायं ततो ज्ञात्वा यतींद्रस्य जगद्गुरोः ॥ अनंतार्यादयः सर्वे मिलित्वा वैष्णवोत्तमाः ॥ ४२ ॥ यतिराजांतिकं गत्वा यतींद्रपदपंकजम् ॥ भक्त्या प्रणम्य योगीशं चक्रुर्विज्ञापनं तदा ॥ ४३ ॥ मंगलाशासनं कर्तुं शेषशैलेश्वरं हरिम् ॥ पर्वतारोहणं स्वामिन् कुरुष्व जगतां गुरो॥४४॥मंगलाशासनेनैव भवतो वेंकटेश्वरः॥जगत्यव्याहतैश्वर्यः शेषशैले जगत्प्रभुः ॥४५॥ तेषां तद्वचनं श्रुत्वा यतींद्रो देशिकप्रियः ॥ सरोयोग्यानुपंथानमनुध्यायाब्रवीत्तदा॥४६॥ सरोयोग्यादियोगींद्रास्तं मत्वा शेषरूपिणम् ॥ अकृत्वारोहणं तस्य नम्रश्चात्रैव ते स्थिताः ॥ ४७ ॥ मंगलाशासनं चक्रुः श्रीनिवासाय चाद्रये ॥ पूर्वैर्यद्यदनुष्ठानं कृतं वै दिव्यसूरिभिः ॥४८॥ तदंतेवासिना तेन तदेव क्रियते मया ॥ वत्स्याम्यत्रैव संसेव्य शठकोपादिदेशिकान् ॥४९॥ अनंतार्यः स तच्छ्रुत्वा यतिराजमभाषत ॥ आरोहणं वेंकटाद्रौ न कृतं स्यात्त्वया यदि ॥ ५० ॥ क्रियते सर्वदास्माभिः शिष्यैर्योगीश तत्तदा ॥ ५१ ॥ उक्तं निशम्य निखिलैः स तदेकवाक्यं यत्संघशो बुधजनैर्विबुधाग्रगण्यः ॥ तद्दिव्यसूरिचरितं च विचार्य सम्यग् दोलायमानहृदयः स चकार चिंताम् ॥ ५२ ॥ संचिंत्य सम्यगवधार्य परं महांतं तत्रैवमर्थमतुलं महनीयकीर्तिः ॥ तेनैव शासनवशेन स वैष्णवानामारोहणेंजनगिरेरकरोन्मनीषाम् ॥ ५३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे विठ्ठलदेवनृपते रामानुजाश्रयणं नाम एकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## त्रिंशोऽध्यायः ।

ततो यतींद्रः संचिंत्य कृतदेहादिशोधनः ॥ नत्वा प्रथमसोपाने महांतं वेंकटाचलम् ॥ १ ॥ चकारारोहणं श्रीमान् वेंकटाद्रौ यतीश्वरः ॥ श्रीशैलपूर्णः कृपया तत्प्रसादं सुपावनम् ॥२॥ आदाया-

भिमुखं प्राप्य सच्छात्रं च यतीश्वरम् ॥ यतींद्रायादिशत्तस्मै प्रसादं तीर्थमुत्तमम् ॥ ३ ॥ भक्त्या श्रीशैलपूर्णस्य प्रणम्य पदपंकजम् ॥ प्रसादं प्रतिगृह्याशु यतींद्रः पूर्णमब्रवीत् ॥ ४ ॥ मह्यं प्रसादमानेतुं किं युक्तं भवतो गुरो ॥ केनचिद्बालकेनेदं प्रेषितुं न हि शक्यते ॥५॥ स पूर्णस्तद्वचः श्रुत्वा यतिराजमभाषत ॥ वेंकटाद्रौ च सततं वीथीष्वालोकितं मया ॥६॥ मद्विना बालको नास्ति कुत्रापि यति-पुंगव ॥ तच्छ्रुत्वा लक्ष्मणाचार्यो विस्मयं परमं ययौ ॥ ७ ॥ सर्वैः श्रीवैष्णवैस्तीर्त्वा यतींद्रो वायुगोपुरम् ॥ सोपानरहिते मार्गे ह्यागच्छति यतीश्वरे ॥ ८ ॥ एकांतिनो वैष्णवाश्च यतयश्चार्चका स्तदा ॥ तस्याभिमुखमायाताः सर्वे तच्छैलवासिनः ॥ ९ ॥ तं विलोक्य यतींद्रार्यं चक्रुः सत्कारमादरात् ॥ ततो यतींद्रः संप्राप्य वृषाद्रिं वैष्णवैः सह ॥ १० ॥ स्नात्वा भक्तियुतो धीमानूर्द्ध्वपुंड्र-धरो महान् ॥ वीथीचतुष्टये तत्र कृतसम्यक्प्रदक्षिणः ॥ ११ ॥ अनर्घमणिमुक्तानि गोपुराणि महांति च ॥ विमानमण्डपादीनि कूटानि विविधानि च ॥ १२ ॥ विलोक्य विस्मयं प्राप तत्रानंतकृतं महत् ॥ वृंदावनमनंतार्ये कृतवान् महतीं दयाम् ॥ १३ ॥ महावनानि रम्याणि वृक्षशाखासमास्थितान् ॥ विलोक्य वानरान्सर्वान्पक्षिसंघा-न्मृगानपि ॥ १४ ॥ अन्यानपि विशेषांश्च तान्मत्वा नित्यसू-रिणः ॥ महावराहं देवेशं प्रणम्य यतिपुंगवः ॥ १५ ॥ कुलशेखर-सोपानप्रभृतन्यतिलंघ्य च ॥ सोपानानि यतिश्रेष्ठो बलिपीठं प्रणम्य च ॥ १६ ॥ यामुनार्याभिधानं च पुष्पमंडपमादरात् ॥ प्रदक्षिणेन चागत्य यतींद्रः शिष्यसंवृतः ॥ १७ ॥ धनुर्मासे सिते पक्षे द्वादश्या-मरुणोदये ॥ आयांति सर्वतीर्थानि स्वामिपुष्करिणीजले ॥ १८ ॥ एवं माहात्म्ययुक्तायां पुष्करिण्यां यतीश्वरः ॥ विधाय तीर्थस्वीकारं वेंकटालयमाविशत् ॥ १९ ॥ महानसं यागशालां नत्वा श्रीमणिमं-डपम् ॥ सेनेशादीन्प्रणम्याथ यतीन्द्रः शिष्यसंवृतः ॥ २० ॥ आनं-

दनिलयं दिव्यं विमानं वीक्ष्य हर्षितः ॥ आनंदबाष्पनयनः प्रणम्य
यतिपुंगवः ॥ २१ ॥ तत्रांतः संप्रविश्याशु देवदेवं रमासखम् ॥ नत्वा
हरिं वेंकटेशं तस्थौ प्रांजलिरग्रतः ॥ २२ ॥ तत्तीर्थशठकोपादीन्
गृहीत्वा भक्तिसंयुतः ॥ अत्याश्चर्ययुतो मत्वा भूवैकुंठमिदं त्विति
॥ २३ ॥ तस्य मज्जनकालं च संसेव्य यतिपुंगवः ॥ तत्रास्थितान्स-
र्वजनान्पशुपक्षिमृगानपि ॥ २४ ॥ नित्यसूरीन्समालोच्यं॒ःस्थातुं
मम न सांप्रतम् ॥ इति मत्वा गिरेरासीदवरोहणतत्परः ॥ २५ ॥
ततः श्रीशैलपूर्णार्यः समागत्येदमब्रवीत् ॥ दिनत्रयं हि वस्तव्यं
दिव्यदेशे यतीश्वर ॥२६॥ प्रतिगृह्य वचस्तस्य यतींद्रस्त्यक्तभोजनः॥
देवदेवं सेवमानो दिनत्रयमपूर्ववत् ॥ २७ ॥ अवर्त्तत यतिश्रेष्ठस्ततो
निर्गमनोदये ॥ पूर्णाचार्य्यं पुरस्कृत्य गाथां द्वादशसंमिताम् ॥ २८ ॥
भट्टनाथकृतिं चोक्त्वा बद्धांजलिपुटस्तदा ॥ वेंकटेशस्ततः स्वीयं
प्रसादं तीर्थमादरात् ॥ २९ ॥ ( ततः स श्रीश्वरो देवः शठकोपं तीर्थ-
मुत्तमम् ॥ ) दापयित्वार्चकैस्तस्मै संतुष्टो वाक्यमब्रवीत् ॥ ३० ॥
भवतो भवदीयानां विभूतिद्वयमेव च ॥ मया दत्तं यतिश्रेष्ठ त्रिवारं
नात्र संशयः ॥ ३१ ॥ इत्युवाच प्रवालोष्ठः स्फुरद्दशनसुप्रभः ॥
धन्योस्मीति यतिश्रेष्ठः प्रतिगृह्य स तद्वचः ॥ ३२ ॥ तेनानुज्ञापितो
धीमान् पूर्णाचार्यपुरःसरः ॥ तद्गिरेरवरुह्याथ तत्समीपस्थपत्तने
॥३३॥ श्रीशैलपूर्णसदने भुक्त्वा लक्ष्मणदेशिकः ॥ शृण्वन् रामायणं
तस्य सन्निधौ वत्सरं स्थितः ॥३४॥ कुर्वंतमनिशं तस्य गृहे कैंकर्य्य-
मादरात् ॥ गोविंदार्य्यं तदा दृष्ट्वा यतींद्रः प्रीतिमानभूत् ॥ ३५ ॥
शय्यां श्रीशैलपूर्णाय रचित्वा तत्र संस्थितम् ॥ कस्मिंश्चिद्दिवसे दृष्ट्वा
गोविंदं यतिपुंगवः ॥३६ ॥ ज्ञात्वेमं दुर्गुणं तस्य गुरवे तन्न्यवेदयत् ॥
ततः श्रीशैलपूर्णार्यो गोविंदमिदमब्रवीत् ॥ ३७ ॥ मदर्थं रचिते तल्पे
त्वया सुप्तमिति श्रुतम्॥ किमेवमुचितं कर्तुं तस्मात्किं फलमाप्स्यसि
॥३८॥तन्निशम्य स गोविंदस्तं गुरुं प्रत्यभाषत ॥ गुरोस्तल्पे शयानस्य

फलं नरक एव हि ॥ ३९ ॥ गोविंदवचनं श्रुत्वा स पूर्णः पुनरब्रवीत् ॥ एवं ज्ञात्वा किमर्थं त्वं तदिदं कृतवानसि ॥ ४० ॥ स गुरोर्वचनं श्रुत्वा भूयो विज्ञापनं व्यधात् ॥ निर्बाधं भवतो निद्रा स्याच्चेन्मे नरकं हितम् ॥ ४१ ॥ एतच्छ्रुत्वा यतिश्रेष्ठो भक्त्येदं कृतवानयम् ॥ इति संतुष्टचित्तोभूत्तदा लक्ष्मणदेशिकः ॥ ४२ ॥ कदाचिल्लक्ष्मणाचार्य्ये पूर्णाचार्यवनं प्रति ॥ गते तत्र स गोविन्दो द्विजिह्वस्याननै करम् ॥४३॥ निक्षिप्याथ कृतस्नानः कैंकर्य्यार्थं तदोद्यतः ॥ दृष्ट्वैतल्लक्ष्मणाचार्य्यस्तं गोविन्दमथाब्रवीत्॥४४॥ भो गोविन्दाधुना कार्यं कृतवानसि किं वद ॥ इत्युक्तो यतिराजेन गोविन्दः प्राह तं तदा ॥ ४५ ॥ जिह्वायां कंटकस्यूतं द्विजिह्वं परमापदम् ॥ प्राप्तं दृष्ट्वाथ तद्वक्त्रे हस्तं निक्षिप्य कंटकम् ॥ ४६ ॥ आकृष्य सरसि स्नात्वा समायातो यतीश्वर ॥ यतीन्द्रो भूतकरुणा कियत्यस्येति विस्मितः ॥ ४७ ॥ ततो रामायणं सार्थमधीत्य यतिपुंगवः ॥ नत्वा गुरुं पूजयित्वा तं वाक्यमिदमब्रवीत् ॥४८॥ श्रीरंगस्य प्रयाणाय ममाज्ञां देहि देशिक ॥ श्रीशैलपूर्णस्तं प्राह यतिराजं दयापरः ॥ ४९ ॥ स दूरादागतस्यार्थं तव किं दीयते मया ॥ मन्नाथस्तद्वचः श्रुत्वा पूर्णमाह गुरूत्तमम् ॥ ५० ॥ यदि स्थितं मनस्येवं गोविंदं देहि मे गुरो ॥ ततः श्रीशैलपूर्णार्यः संतुष्टो गुरुपुंगवः ॥ ५१ ॥ गोविन्दं यतिराजाय ददौ तोयपुरःसरम् ॥ प्रेषितस्तेन गुरुणा ततो लक्ष्मणदेशिकः ॥ ५२ ॥ गोविन्दसहितः प्राप्य घटिकाचलमादरात् ॥ नत्वा नृसिंहं देवेशं वसंतं घटिकाचले ॥ ५३ ॥ श्रीगृध्रसरसस्तीरे भांतं विजयराघवम् ॥ प्रणम्य कांचीं गत्वाथ कांचीपूर्णमुपागतः ॥ ५४ ॥ गुरुसेवाविहीनस्य गोविन्दस्य महात्मनः ॥ मुखादिषु च स्वांगेषु वैवर्ण्यं समजायत ॥ ५५ ॥ दृष्ट्वा मुखादिवैवर्ण्यं गोविंदस्य महात्मनः ॥ गोविंद वेंकटगिरिं गत्वा पूर्णं प्रणम्य च ॥ ५६ ॥ तस्मात्त्वं पुनरा-

गच्छ तमित्युक्त्वा यतीश्वरः ॥ गोविंदं प्रेष्य तत्राथ वृषाद्रिं वैष्णवैः सह ॥ ५७ ॥ कांचीपूर्णेन वरदं सेवयन् सुखमास्थितः ॥ गोविंदो वेंकटगिरिं संप्राप्य सहसा तदा ॥ ५८ ॥ श्रीशैलपूर्णसदन-द्वारदेशमुपागतः ॥ तत्रत्या वैष्णवास्तस्मै तं पूर्णाय न्यवेदयन् ॥ ५९ ॥ श्रीशैलपूर्णस्तच्छ्रुत्वा कुपितो वाक्यमब्रवीत् ॥ गोविंदं प्रति-वक्तव्यं भ्रांत याहीति वैष्णवाः ॥ ६० ॥ तस्य देवी तु तच्छ्रुत्वा भर्त्तारमिदमब्रवीत् ॥ बहुदूरादागताय गोविंदायाश्रिताय च ॥ ६१ ॥ तीर्थप्रसादमपि च प्रदातुं नहि शक्यते ॥ भार्याया, भाषितं वाक्यं श्रुत्वा पूर्णोऽब्रवीदिदम् ॥६२॥ विक्रीतस्य पशोर्लोके को वा घासं प्रदा-स्यति ॥ ततो निराशो गोविंदः प्रणम्य गुरुमंदिरम् ॥६३॥ सहसा वेंक-टगिरेः कांचीं प्रति समागतः ॥ तद्वृत्तांतं वैष्णवेभ्यो गोविंदस्य नि-शम्य सः ॥ ६४ ॥ संश्लाघ्य तस्य पूर्णस्य सर्वज्ञत्वं सविस्मयः ॥ स्ववात्सल्यगुणैस्तस्य व्यपोह्यार्त्तिं यतीश्वरः ॥ ६५ ॥ कारयित्वाथ पूर्णाय गोविंदेनाभिवादनम् ॥ कांचीपूर्णेन सहसा प्रेषितो यतिपुंगवः ॥६६॥ प्रतस्थे रंगनगरं गोविंदसहितस्तदा ॥ ग्राममष्टसहस्राख्यं भूयः संप्राप्य सत्वरम् ॥ ६७ ॥ यज्ञेशेन कृतां पूजामंगीकृत्य यतीश्वरः ॥ गोविंदसहितो धीमाञ् श्रीरंगं प्रतिपेदिवान् ॥ ६८ ॥ श्रीरंगवासिनः सर्वे प्रत्युद्गम्याभिवाद्य च ॥ वैष्णवा यतिराजाय संतोषं परमं ययुः ॥६९॥ ततो यतीन्द्रो रंगेशं प्रणम्य प्रांजलिः स्थितः ॥ प्रेम्णा रंगे-श्वरो वीक्ष्य यतिराजं प्रहर्षितः ॥ ७० ॥ इत्युवाच प्रवालोष्ठः स्फुरद्द-शनसुप्रभः ॥ यतींद्र वेंकटगिरिं गत्वा नत्वा रमासखम् ॥७१॥ किमाग तोसि मन्नाथ क्षेमेण स्वजनैः सह ॥ शिष्यसंघसमेताय मन्नाथाय म-हात्मने ॥ ७२ ॥ शठकोपं च तीर्थं च प्रसादं प्रददौ हरिः ॥ यतींद्रं प्रतिगृह्याशु तत्सर्वं निर्गतस्ततः ॥ मठं प्रविश्य संतुष्टः स्वशिष्यैः सुखमास्थितः ॥ ७३ ॥ रामायणार्थमधिकृत्य बहुप्रकारं श्रीशैलपूर्णे-

निकटे मतिमान् कृतार्थः ॥ प्राप्ताखिलार्थनिचयः परमं प्रहर्षं संप्राप्य रंगनगरं सुखमध्युवास ॥ ७४ ॥ इतिश्रीप्रपन्नामृते रामानुजचरित्रे भूरिश्रीशैलपूर्णाचार्याच्चतुर्विंशतिप्रकारेण रामायणार्थश्रवणं नाम त्रिंशोऽध्यायः ॥ ३० ॥

## एकत्रिंशोऽध्यायः ।

अथ गोष्ठ्यां यतींद्रस्य गोविंदो गुरुदैवतः॥ विहारं सुमहत्तस्य विग्रहानुभवं तथा ॥ १ ॥ तत्पादकैंकर्य्यमपि तत्संलापादिकं च यत् ॥ जितनिद्रो जितालस्यः प्रत्यहं गुरुसेवया ॥ २ ॥ तदेवानुभवंस्तस्थौ लक्ष्मणार्यस्य सन्निधौ ॥ ततः कदाचित्सदसि वैष्णवाश्च यतीश्वरः ॥ ३ ॥ गोविंदज्ञानवैराग्यगुरुभक्त्यादिसद्गुणान् ॥ विलोक्य विस्मयं गत्वा गोविंदं तुष्टुवुस्तदा ॥४॥ गोविंदस्तु स तं श्रुत्वा ममायं चार्हति स्तवः ॥ इत्यात्मश्लाघनं चक्रे सुतरां गुरुसन्निधौ ॥ ५ ॥ यतिराजस्तु तं दृष्ट्वा गोविंदं प्रत्यभाषत ॥ भवतो हि जनाः स्तोत्रं कुर्वंति कृपया यदि॥ ६ ॥ कार्य्यं नैच्यानुसंधानं हित्वात्मश्लाघनं कृतम्॥ तवानुरूपं किमिदं गोविंदार्य्य विपश्चितः ॥ ७ ॥ तच्छ्रुत्वा लक्ष्मणार्यस्य वचनं विनयान्वितः ॥ बद्धांजलिरुवाचेदं सर्वेषां शृण्वतां तदा ॥ ८॥ अयमात्मा कृपासिंधो भगवन्माययावृतः ॥ मूढश्चतुरशीत्यां तु लक्षेषु यतिपुंगव ॥ ९ ॥ सोहं नानाविचित्रासु क्रिमिकीटादियोनिषु ॥ भूत्वाभूत्वा महद्दुःखमनुभूयानुभूय च ॥ १० ॥ मृत्वामृत्वा महाघोरान्नरकाननुभूय च ॥ केनचित्पुण्यलेशेन बहुकालादनंतरम् ॥ ११ ॥ घुणाक्षरलिपिन्यायादयं देहः समागतः ॥ देहेऽस्मिन्मूढभावेन मार्गभ्रष्टोभवं किल ॥ १२ ॥ कालहस्त्यां जटां धृत्वा भस्मोद्धूलितदेहवान् ॥ शैवनामधरश्चैव समयाचारतत्परः ॥ १३ ॥ नीरवत्क्षीरसंक्षिप्तवर्णाभेदेन हीदृशः ॥ एतादृशो दुरात्मापि स्वामिन्नारायणात्मनः ॥ १४ ॥ भवतः परमहंसस्य नैपु-

ण्याद्यतिभूपते ॥ यदहं प्राप्तवान् भेदं यस्मादास्यमुपागतः ॥ १५ ॥
यस्मादियं कृपा जाता भवतो दुर्लभामरैः ॥ आत्मानमप्यहं तस्मात्
स्तौमि सा भवतः स्तुतिः ॥ १६ ॥ तच्छ्रुत्वा लक्ष्मणाचार्य्यः सा-
धुसाध्विति हृष्टवान् ॥ निर्मलेन हृदा नित्यं भवतो नः स्मरादरात्
॥ १७ ॥ तदेवालं ममेत्युक्त्वा गोविंदं परिषस्वजे ॥ कदाचित्तु गृह-
द्वारे वेश्यायाश्चारुणोदये ॥ १८ ॥ नित्यकर्मादिरहितं दृष्ट्वा गोविंद-
मास्थितम् ॥ सभायां वैष्णवः कश्चिद्यतींद्राय न्यवेदयत् ॥ १९ ॥
यतिराजः स तच्छ्रुत्वा गोविंदमिदमब्रवीत् ॥ वारांगनागृहद्वारे किमर्थं
स्थीयते त्वया ॥ २० ॥ प्रतिगृह्य वचस्तस्य यतींद्रस्य जगद्गुरोः ॥
एवं विज्ञापनं चक्रे गोविंदः स कृतांजलिः ॥ २१ ॥ गायंति मधुरं
गाथा भवदीयाश्च गायकाः ॥ तत्र स्थितो यतिश्रेष्ठ ताः शृण्वन्ना-
स्थितोभवम् ॥ ॥२२ ॥ गाथापारायणं तस्माद्विदित्वा वैष्णवाद्गुरो ॥
प्रावण्यातिशयस्तस्य कियानिति यतीश्वरः ॥ २३ ॥ गोविंदस्य वचः
श्रुत्वा भक्तिपूतमकल्मषम् ॥ यतींद्रस्तु प्रहृष्टात्मा विस्मयं परमं
ययौ ॥ २४ ॥ कालत्रये यतीन्द्रस्य कैंकर्य्यं करणत्रयैः ॥ कुर्वन्न-
नन्यहृदयः स गोविंदः सुखं स्थितः ॥ २५ ॥ श्रीशैलपूर्णभगिनी
गोविंदजननी तदा ॥ साध्वी द्युतिमती नाम गोविंदमिदमब्रवीत
॥ २६ ॥ जाता ऋतुमती भार्या तव गोविंद संप्रति ॥ तच्छ्रुत्वा ता-
मुवाचेदं गोविंदो मातरं प्रति ॥ २७ ॥ यतिराजं विसृज्याहं यदैकांते
समास्थितः॥तदा मे दर्शयस्वार्यै भार्यामादाय सत्वरम्॥२८॥बहुकालं
समाश्रित्य तेनोक्तसमयं सती ॥ अनवाप्य यतींद्राय शशंस निखिलं
हि तत् ॥ २९ ॥ मन्नाथः स तदाकर्ण्य द्युतिमत्याः शुभं वचः ॥गोविं-
दार्य्यं समाहूय व्याजहार यतीश्वरः॥३०॥तां कुरुष्वार्त्तिविश्रांतिं ऋतु-
काले यथाविधि ॥ तमो विमृग्य शय्यायां शयनं कुरु सुव्रत ॥३१॥
प्रतिगृह्य गुरोर्वाक्यं गोविन्दो गृहमागतः ॥ शय्यायां सुखमासीनो
भार्यायै जितमन्मथः ॥ ३२ ॥ ज्ञानं भक्तिं च वैराग्यं बुबोध निखिलं

निशि ॥ स्नुषायाः सर्ववृत्तांतं विदित्वा विशदं तदा ॥ ३३ ॥ चिंताशोकसमाविष्टा माता सुतमथाब्रवीत् ॥ कर्तुं तवेदं गोविंद शास्त्रज्ञस्योचितं किमु ॥ ३४ ॥ मातुर्वचनमाकर्ण्य गोविंदः प्रत्यभाषत ॥ अंतर्यामिप्रकाशे तु संपूर्णप्रभया प्रसूः ॥ ३५ ॥ न तमो लक्ष्यते चित्ते कामलोभादिकारकम् ॥ आचार्य्यकृपया मेद्य को दंडश्चात्र विद्यते ॥ ३६ ॥ वृत्तांतमात्मजस्यास्य तान्निशम्यांजसा तदा ॥ न्यवेदयद्यतींद्राय सा विषण्णा भृशं सती ॥ ३७ ॥ तन्निशम्याथ तद्वाक्यं यतींद्रः करुणाकरः॥आनयित्वा स गोविंदं सस्मितं वाक्यमब्रवीत् ॥३८॥ भवता किं कृतं कार्य्यं निशायां साधु वैष्णव॥ प्रतिगृह्य गुरोर्वाक्यं चक्रे विज्ञापनं सुधीः ॥ ३९ ॥ तमो विमृग्य भार्यां त्वं भजस्वेति त्वयेरितम् ॥ अंतर्यामिप्रकाशे तु न तमो लक्ष्यते क्वचित् ॥ ४० ॥ निशम्य तद्वचो हृष्टः संतुष्टो विस्मयं गतः ॥ व्याजहार शुभं वाक्यं गोविंदं शास्त्रवित्तमः ॥ ४१ ॥ यत्राश्रमे स्थितो धर्मस्तत्र तं हि समाचरेत् ॥ पातित्यमन्यथैवेति सर्वशास्त्रेषु निर्णयः ॥ ४२ ॥ अनाश्रमो न संतिष्ठेदित्येषा शास्त्रपद्धतिः ॥ आश्रमस्थेन विदुषा तेषु धर्मोपयोगिषु ॥ ४३ ॥ भोगेषु योग्यताबुद्धिः कर्त्तव्या न कदाचन ॥ कैंकर्य्यबुद्धिः कर्तव्या तेषु भोगेषु संततम् ॥ ४४ ॥ शास्त्रदृष्टेषु महतां गृहस्थाश्रमधर्मिणाम् ॥ विषयादिषु संजाता विरक्तिर्भवतो यदि ॥ ४५ ॥ गोविंदार्याधुना शीघ्रं संन्यासः संभविष्यति ॥ तद्वचः प्रतिगृह्याशु यतींद्रं प्रणिपत्य सः ॥ ४६ ॥ संन्यासं देहिदेहीति प्रार्थयामास भूरिशः ॥ प्रार्थितस्तेन बहुधा गोविंदेन यतीश्वरः ॥ ४७ ॥ संन्यासं प्रददौ तस्मै शिष्याय कृपया तदा ॥ वैराग्यज्ञानभक्त्यादिसद्गुणैः संप्रहर्षितः ॥ ४८ ॥ मन्नाथ इति तन्नाम स्वीयं तस्य चकार सः ॥ भीतस्तेन स गोविंदः प्रणिपत्य यतीश्वरम् ॥ ४९ ॥ एवं विज्ञापनं

चक्रे बद्धांजलिपुटस्तदा ॥ मन्नाथ इति लोकेषु त्वां तु लोकास्त्रयो विदुः ॥ ५० ॥ जगद्गुरुर्भवान्त्साक्षात्फणिराजो न संशयः ॥ लोके-श्वरेश्वरगुरुर्विभूतिद्वयनायकः ॥ ५१ ॥ अहं कृतघ्नो दुर्मानी पापिष्ठः परवंचकः ॥ मिथ्याचाररतो मूढो नृशंसो दांभिकः शठः ॥ ५२ ॥ कथमर्हति तन्नाम ममैतस्य दुरात्मनः ॥ जगद्गुरोर्भगवतो भवतः सर्वपूजितम् ॥ ५३ ॥ यन्नाम जप्यं सर्वेषां पापिनामपि मुक्तिदम् ॥ लोके न युज्यते स्वामिन्नामैकं गुरुशिष्ययोः ॥ ५४ ॥ यज्ञमूर्त्तेर्यथा हानिर्भविष्यति तथा मम ॥ तव नाम ततो भर्तुं सामर्थ्यं नाऽस्ति मे गुरो ॥५५॥ लक्ष्मणार्यः संप्रहृष्टस्तद्वाक्येन यतीश्वरः ॥ मन्नाथनाम-पर्यायद्राविडाख्यापितं परम् ॥ ५६ ॥ आद्यंतवर्णमाहृत्य यंबाराख्यं विधाय च ॥ गोविंदाय ददौ तस्मै कृपया शिष्यवत्सलः ॥ ५७ ॥ तदा-प्रभृति तस्यासीद्गोविंदस्य महात्मनः ॥ यंबाराख्यं ततो नाम त्रैलोक्य-विदितं महत् ॥५८॥ निवृत्ततर्षो यतिसार्वभौमात्संप्राप्य संन्यासमचं-चलात्मा ॥ यंबारनाम्ना सुतरां विरेजे गोविंददेवो यतिराजवत्सः॥५९॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे गोविंदार्य्यस्य चतुर्थाश्रमस्वीकरणं नामैकात्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ।

ततो यतींद्रो मतिमान्मनस्येवं व्यचिंतयत् ॥ पुरात्र रंगनगरे यामु-नांत्यदशागमे ॥ १ ॥ प्रतिज्ञानं नदीतीरे श्रीवैष्णवसभास्थले ॥ श्रीभाष्यं लोकरक्षार्थं करिष्यामि न संशयः ॥ २ ॥ तस्मादवश्यं कर्तव्यं श्रीभाष्यमधुनैव हि ॥ ततो यतींद्रः श्रीभाष्यं कर्तुकामो महायशाः ॥ ३ ॥ विलोकनं विनाशक्यं वृत्तेर्बौधायनस्य वै ॥ वेदांतभाष्यकरणमिति निश्चित्य योगिराट् ॥४॥ कूरेशसहितो धीमान् शारदापीठमभ्यगात् ॥ यतींद्रो विबुधान्सर्वान् शारदापीठमाश्रितान् ॥ ५ ॥ शास्त्रवादेन निर्जित्य तोषयामास शारदाम् ॥ संतुष्टया तया

दत्तां वृत्तिं बौधायनस्य ताम् ॥ ६ ॥ संगृह्य सहसा धीमान् रंगं प्रति समाययौ ॥ शारदापीठविबुधा राहित्यात्पुस्तकस्य च ॥ ७ ॥ तस्य तत्र हि कोशानां विशोधनदिने तदा ॥ तत्पंथानं ययुर्वेगाज्जातशंका यतीश्वरे ॥ ८ ॥मासादनंतरं मार्गे तत्कोशं यतिपुंगवात् ॥ बलात्संगृह्य ते दुष्टाः शारदापीठमाययुः ॥ ९ ॥ ततो विषण्णं योगीशं कूरेशो वाक्यमब्रवीत् ॥ मा विषादं कुरुष्वात्र योगिराज जगद्गुरो ॥ १० ॥ रात्रिकालेषु तत्सव मयैवालोकितं दृढम् ॥ तत्सर्वं हृदये मेद्य वर्तते त्वत्कटाक्षतः ॥ ११ ॥ सन्तुष्टस्तेन वाक्येन लक्ष्मणार्यो महायशाः॥ कूरेशसहितः श्रीमान् श्रीरंगं प्राप सत्वरम् ॥ १२ ॥ ततो यतींद्रः कूरेशदाशरथ्यादिदेशिकान् ॥ इत्थं जगाद वचनं लोकानुग्रहतत्परः ॥ १३ ॥ तत्त्वमस्यादिवाक्यार्थज्ञानमेव हि साधकम् ॥ निःश्रेयसस्य वदतां कुदृष्टीनां दुरात्मनाम् ॥ १४ ॥ मोक्षसाधनमित्येषां ज्ञानं कर्मसमुच्चयम् ॥ वदतां च कुदृष्टीनां निराकृत्याहमद्य तत् ॥ १५ ॥ ध्यानोपासनशब्दादिवेदैश्च प्रतिपादितम् ॥ यज्ज्ञानमेव कर्मांगं भक्तिरूपं तथैव च ॥ १६ ॥ उपासनात्मकं चैव वेदांतप्रतिपादितम् ॥ मोक्षहेतुतयालोक्य कर्तुं वेदांतमुद्यतः ॥ १७ ॥ तेन प्रहृष्टास्ते सर्वे तथा कुर्विति चाब्रुवन् ॥ ततो यतींद्रः कूरेशं विलोक्येदं वचोऽब्रवीत् ॥ १८ ॥ मयोक्तं भाष्यवाक्यं ते मानसे रोचते यदि ॥ लेखनं कुरु कूरेश नोचेत्तूष्णीं स्थितो भव ॥ १९ ॥ तथेति प्रतिगृह्याशु लिखन् कूरेश आस्थितः ॥ तत्रैवं वाक्यमवदज्जीवस्य यतिभूपतिः ॥ २० ॥ विष्णुशेषत्वरहितज्ञातृत्वप्रतिपादकम् ॥ विष्णुशेषत्वराहितज्ञातृत्वेप्यविशेषतः ॥ २१ ॥ देहाभिमानजीवस्य को विशेषस्तदेति च ॥ मत्वा श्रीवत्सचिह्नस्तु न लिलेख स तद्वचः ॥ २२ ॥ व्याजहार यतींद्रस्तं लिखस्वेति पुनःपुनः ॥ न लिखित्वा स कूरेशस्तदा तूष्णीं समास्थितः॥ २३ ॥ यतींद्रः कुपितो भूत्वा कूरेशमिदमब्रवीत् ॥ एवं चेत्कुरु कूरेश श्रीभाष्यं तु त्वमेव हि॥२४॥

तदा विसर्जयामास इति कूराधिपं गुरुः ॥ तदा श्रीवैष्णवाः केचित्कूरेशमिदमब्रुवन् ॥ २५ ॥ आचार्यस्त्यक्तवानद्य कुपितस्त्वं तपोधन॥ तद्वदास्माकमधुना किं विचार्याद्य वर्तसे ॥ २६॥ तेषां तद्वचनं श्रुत्वा कूरेशस्तानथाब्रवीत् ॥ गुरुणोक्तप्रकारेण शिष्यो वास्तव्य एव हि ॥ २७ ॥ तत्कृते कोपकार्ये तु मम नास्त्यन्वयः क्वचित् ॥ ततो यतींद्रः संचिंत्य तद्वाक्यार्थं पुनःपुनः ॥ २८ ॥ आनयित्वाशु कूरेशमनुतापं गतोत्र सः ॥ विष्णुशेषत्वसंयुक्तज्ञातृत्वप्रतिपादकम् ॥२९॥ लक्ष्मणार्योदितं वाक्यं लिलेखाशु तदा सुधीः ॥ श्रीभाष्यमित्थं कृपया लोकानुग्रहकारणात् ॥३०॥ वेदांतदीपं वेदांतसारं वेदार्थसंग्रहम् ॥ गीताभाष्यं च योगींद्रः सुस्पष्टं शास्त्रसंमतम् ॥ ३१ ॥ विधाय लक्ष्मणाचार्यः सर्वलोकैकपूजितः ॥ प्रथमं यामुनार्यस्य दुःखं महदपोहयत ॥ ३२ ॥ श्रीभाष्यं विरचय्य लोकविदितं श्रीरंगिणः शासनादाचंद्रार्कमखंडितं महदिदं संस्थाप्य भूमंडले ॥ दुःखं प्राथमिकं व्यपोह्य महतो यद्यामुनार्यस्य तद्विख्यातामलदिव्यकीर्तिरतुलं भेजे प्रमोदं परम ॥ ३३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे बौधायनवृत्तिमतानुसारेण श्रीभाष्यनिर्माणकथनं नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

## त्रयस्त्रिंशोऽध्यायः ।

ततो यतींद्रं नत्वा ते वैष्णवाश्चेदमब्रुवन् ॥ भवतेतरसिद्धांतनिराकरणपूर्वकम् ॥ १ ॥ भगवन् गुरुवर्यायं दर्शनस्थापनं कृतम् ॥ इतः परं दशादिशो गत्वा कृत्वा च दिग्जयम् ॥ २ ॥ तत्र स्थितान् दिव्यदेशान्प्रणम्यागंतुमर्हसि ॥ लक्ष्मणार्यो वैष्णवानां प्रतिगृह्य वचः शुभम्॥३॥ अनुज्ञातो रंगभर्त्रा शिष्यैः श्रीवैष्णवैर्वृतः ॥ प्रतस्थे सहसा तस्माच्छ्रीरंगाच्चोलमंडलम् ॥४॥ तत्र स्थितान् दिव्यदेशान् कुंभकोणादिकानपि ॥ नत्वा तत्रत्यविबुधाञ्जित्वा तान् शास्त्रवादतः ॥ ५ ॥ स्वशिष्यभूतांस्तान्कृत्वा तत्रत्यानखिलान् जनान् ॥ यतींद्रः सहसा धीमान्

पांड्यमंडलमाविशत् ॥ ६ ॥ पांड्यमंडलमागत्य दिव्यदेशान्प्रणम्य च ॥ जित्वा तत्रत्यविबुधान् कुरुकानगरं ययौ ॥ ७ ॥ शठकोपं तत्र नत्वा शठारिप्रतिपादितम् ॥ तं प्रबंधं पपाठार्यो दशगाथासमन्वितम् ॥ ८ ॥ शठारिरपि योगींद्रे विधाय महतीं दयाम् ॥ तीर्थं प्रसादं मालां च दापयामास चार्चकैः ॥ ९ ॥ तीर्थं प्रसादं संगृह्य संतुष्टो यतिपुंगवः ॥ जगाद परमं श्लोकमेकं शठरिपुं प्रति ॥ १० ॥ बकुलधवलमालावक्षसं वेदबाह्यप्रबलसमयवादच्छेदनं पूजनीयम् ॥ विपुलकुरुकनाथं कारिसूनुं कवीशं शरणमुपगतोहं चक्रहस्तेभवक्रम् ॥ ११ ॥ ततः संप्रेषितस्तेन यतिराजः शठारिणा ॥ कुरंगनगरं प्राप्य बहुशिष्यसमावृतः ॥ १२ ॥ कुरंगनगरीपूर्णं तं महोत्तुंगविग्रहम् ॥ प्रणम्य बहुधा भक्त्या मुमोद यतिशेखरः ॥ १३ ॥ एकांतिभिर्द्वादशभिः सहस्रैः पीठैश्चतुस्सप्ततिभिः समेतः ॥ अन्यैरनंतैरपि विष्णुभक्तैः श्रीरंग आस्ते यतिसार्वभौमः ॥ १४ ॥ इत्युक्तेन प्रकारेण बहुसंघसमावृतम् ॥ विलोक्य विस्मयं गत्वा यतिराजं महौजसम् ॥ १५ ॥ कुरंगनगरीपूर्णो व्याजहार वचः शुभम् ॥ श्रीसहायेन योगीश जनरक्षणहेतुना ॥ १६ ॥ अवताराः कृताः पूर्वं रामकृष्णादयो मया ॥ अवतारेषु मां सर्वे मन्यंते प्राकृता जनाः ॥ १७ ॥ राजानं चापि गोपालं प्राकृतं पुरुषं यथा ॥ अस्माकं रक्षणार्थाय वैकुंठादागतो हरिः ॥ १८ ॥ एवं न मेनिरे दुष्टाः मां जगत्कारणं परम् ॥आसुरप्रकृतित्वेन तेषां कोपि न मां गतः ॥१९॥ केनोपायेन ते सर्वे त्वयैते स्ववशीकृताः ॥ मन्नाथ मह्यं तेनाशु तमुपायं वदाधुना ॥ २० ॥ कुरंगनगरीशस्य तद्वचः प्रतिगृह्य सः ॥ तं दृष्ट्वा लक्ष्मणाचार्यश्चक्रे विज्ञापनं तदा ॥ २१ ॥ तद्वक्ष्याम्यधुनैवाशु क्रमेण यदि पृच्छसि ॥ निशम्य तद्वचस्तस्य सत्यं मत्वा जगत्पतिः ॥ २२ ॥ कुरंगनगरीपूर्णो यतींद्राय महात्मने ॥ ऽदिशत्सिंहासनं दिव्यं कुथास्तरणशोभितम् ॥ २३ ॥ तुंगात्सिंहासनाद्दिव्या

द्वतीर्णोथ भूतले ॥ हरिर्जगत्पतिः श्रीमांस्तस्थौ भक्तिसमन्वितः ॥ २४ ॥ तत्र स्वाचार्य्यमासीनं नत्वा पूर्णार्यमादरात् ॥ स तस्य दक्षिणे कर्णे भूमिस्थस्य यतीश्वरः॥ २५ ॥ सर्वेषामेव मंत्राणां मंत्ररत्नं शुभावहम् ॥ सकृत्स्मरणमात्रेण ददाति परमं पदम् ॥२६॥ मंत्ररत्नं द्वयं न्यासः प्रपत्तिः शरणागतिः ॥ लक्ष्मीनारायणश्चेति हितं सर्वफलप्रदम् ॥ २७ ॥ नामानि मंत्ररत्नस्य पर्यायेण निबोध मे ॥ प्रशस्यैवं मंत्ररत्नमुपदेशं विधाय च ॥ २८ ॥ ततो वैष्णवनंबीति दास्यनामाकरोद्धरेः ॥ स हरिः पूर्णनामा च तथा ब्रह्मरथे गुरुम् ॥ २९ ॥ स्थापयित्वा लक्ष्मणार्य्यं श्लाघयामास चेश्वरः ॥ यतींद्रः श्रीहरिं पूर्णं तं प्रणम्य कृतांजलिः ॥३०॥ अपचारानिमान् सर्वान् क्षमस्व पुरुषोत्तम ॥ इति विज्ञाप्य योगीन्द्रः स तेन प्रेषितो गुरुः ॥ ३१ ॥ हरिणा लोकगुरुणा कुरंगनगराद्वरात् ॥ प्रतस्थे केरलं देशं शिष्यसंघैर्यतीश्वरः ॥ ३२ ॥ पूर्णाय तस्मै स हि मंत्ररत्नं दत्वा क्रमेणैव कुरंगपूर्णात् ॥ संप्राप्य तद्ब्रह्मरथं यतींद्रो लोकेऽद्वितीयां स जगाम कीर्तिम् ॥ ३३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कुरंगनगरीपूर्णाय मंत्ररत्नोपदेशो नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ।

ततः कुरंगनगरात्परिवारैर्यतीश्वरः ॥ चतुःसप्ततिपीठैश्च निर्ययौ केरलं प्रति ॥ १ ॥ तत्रतत्र स्थितं विष्णुस्थलं नत्वा यतीश्वरः ॥ अनंतशयनं गत्वा त्रिभिर्द्वारैः प्रणम्य च ॥ २ ॥ पादादिकेशपर्यंतं पद्मनाभमनंतकम् ॥ तत्र स्थितांश्च विबुधाञ्जित्वा कृत्वा मठं च तम् ॥ ३ ॥ रामानुजमिति ख्यातं ततः केरलमागतः ॥ नत्वा केरलदेशस्थस्थलानि परमात्मनः ॥ ४ ॥ लक्ष्मणार्यः स्थितांस्तत्र जित्वा बाह्यकुदृष्टिकान् ॥ पश्चिमांभोधिरोधेन तदोदीचीं दिशं ययौ ॥ ५ ॥ ततो द्वारावतीं गत्वा मथुरां च यतीश्वरः ॥ शालग्रामं च

साकेतं तथा बदरिकाश्रमम् ॥ ६ ॥ नैमिषं पुष्करं चैव वनं वृंदावनं च यत् ॥ एतान्यन्यानि यानि स्युः स्थलानि प्रणिपत्य सः ॥ ७ ॥ तेषु स्थितान्विजित्याशु कुदृष्टिविबुधान्स तान् ॥ भद्रमंडपमासाद्य शारदापीठमागतः ॥ ८ ॥ वाग्देवी स्वयमेवाशु श्रुत्वाचार्यस्य पावनम् ॥ तन्मंदिराद्विनिर्गत्य विलोक्य यतिभूपतिम् ॥ ९ ॥ कप्यासश्रुतितात्पर्यं वदेति व्याजहार सा ॥ तामुवाच ततो विद्वान् शारदां यतिपुंगवः ॥ १० ॥ श्रूयतां तच्छ्रुतेरर्थं वक्ष्यामि तव शारदे॥ कं जलं पिबतीत्यस्मात्कपिरित्युच्यते रविः ॥ ११ ॥ तेन संस्फुरितं पद्मं कप्यासमिति गीयते ॥ तत्तुल्ये लोचने विष्णोरित्यर्थोऽस्याः श्रुतेर्मतः ॥ १२ ॥ तच्छ्रुत्वा शारदा हृष्टा श्रीभाष्यं तत्कृतं महत् ॥ शिरस्यारोप्य संभाव्य ततो बाहू प्रसार्य्य च ॥ १३ ॥ यतींद्रपाणिं संगृह्य न प्रक्षिप्तमिदं निजम् ॥ इत्यंगीकृत्य वाग्देवी श्रुत्यर्थं तेन भाषितम् ॥ १४ ॥ तस्याकरोद्भाष्यकार इति नाम मुदा तदा ॥ हयग्रीवं कारयित्वा तस्मै दत्त्वा महौजसे ॥ १५ ॥ यतींद्रं श्लाघयामास शारदा मुदितानना ॥ भाष्यकारोपि वाग्देवीं विस्मितो वाक्यमब्रवीत् ॥१६॥त्वं मह्यं शारदे कर्तुं दयां को हेतुरुच्यताम्॥ तेनैवमुक्ता वाग्देवी भाष्यकारं वचोऽब्रवीत् ॥१७॥पुरात्र शंकराचार्य्यः प्राप्तः पृष्टो मया हि सः ॥ कप्यासश्रुतितात्पर्य्यमेवमाह यतीश्वर ॥१८॥ मर्कटासनसंकाशमिति हास्यकरं वचः ॥ स्वाभाविकतयार्थस्य त्वयोक्तस्याधुना श्रुतेः ॥१९॥ संतुष्टया मया तेन पूजितस्त्वं बुधर्षभ॥विपश्चितोथ आगत्य सर्वे तद्देशवासिनः ॥ २० ॥ तच्छ्रुत्वान्ये यतींद्रेण वादं कृत्वा पलायिताः ॥ श्रुत्वा तद्देशभूपालो विबुधानां पराजयम् ॥२१॥ सर्वेषां महतां चैव विस्मयं परमं गतः॥ अवतारं हरेर्ज्ञात्वा लक्ष्मणार्यं स भूपतिः ॥ २२ ॥ अवाप सहसा धीमान् शिष्यत्वं यतिभूपतेः ॥ दृष्ट्वा सहिष्णवः सर्वे महांतं तस्य वैभवम् ॥ २३ ॥ अभिचारं यतीं-

द्राय प्रचक्रुस्ते पराजिताः ॥ स निशम्य यतिश्रेष्ठो मनस्वी स्वांतरंगिभिः ॥ २४ ॥ अजानान इवातिष्ठत्परिहृत्याभिचारकम् ॥ तं पीडितुमशक्तः सन् सोभिचारो यतीश्वरम् ॥ २५ ॥ प्रगोक्तृन पीडयामास तानेव विबुधांस्तदा ॥ अवाच्यानि प्रभाषंतो वचांसि बिबुधाश्च ते ॥ २६ ॥ वीथ्यांवीथ्यां प्रधावंतो ग्रहाविष्टा इवाभवन् ॥ दृष्ट्वेदं भूपतिस्तावत् प्रणम्याह यतीश्वरम् ॥ २७ ॥ तानेवमीदृशान्कर्तुं किं युक्तं भवतां गुरो ॥ स्वस्थानेतान्कुरुष्वेति प्रार्थयामास देशिकम् ॥ ॥ २८ ॥ कारयित्वा ततः सर्वान्स तान्स्वस्थान्विपश्चितः ॥ संप्रहृष्टोभवद्राजा गुरुणामिततेजसा ॥ २९ ॥ अथ ते विबुधाः सर्वे तेन राज्ञा प्रचोदिताः ॥ निर्मुक्तमदमात्सर्या यतिराजं समाश्रिताः ॥ ३० ॥ ततः स सैन्यैः संयुक्तो भाष्यकारं जगद्गुरुम् ॥ योजनद्वयपर्यंतं मार्गे संप्रेष्य भक्तितः ॥ तेनानुज्ञापितो राजा स्वपुरं प्रविवेश ह ॥ ३१ ॥ गत्वा तु पीठं स हि शारदायाः श्रीभाष्यकारेत्यभिधानमाप्य ॥ तद्देशभूपार्चितपादपद्मो गंगामगान्निर्जितशत्रुवर्गः ॥ ३२ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे दिग्विजयकथने शारदापीठविबुधपराजयो नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

## पञ्चत्रिंशोऽध्यायः ।

तया संप्रेषितो धीमान् सरस्वत्या यतीश्वरः ॥ प्रतस्थे शारदापीठात्काशीं कलिमलापहाम ॥ १ ॥ गंगावगाहनं सम्यक् कृत्वा लक्ष्मणदेशिकः ॥ काश्यां तु भोगिशयनं प्रणम्य हरिमव्ययम् ॥ २ ॥ तत्रत्यान्विबुधान्त्सवाञ्स् जित्वा संपूजितः स तैः ॥ संतुष्टो विबुधैः सर्वैर्ययौ श्रीपुरुषोत्तमम् ॥ ३ ॥ जगन्नाथं तत्र नत्वा जित्वा प्रच्छन्नसौगतान् ॥ रामानुजाख्यं सहसा मठं कृत्वा यतीश्वरः ॥ ४ ॥ सुखेन न्यवसत्तत्र दिनानि कतिचित्तदा ॥ ततो यतींद्रः संचिन्त्य लक्ष्मणार्यो जगद्गुरुः ॥ ५ ॥ जगन्नाथार्चकान् सर्वान् समानीयेदमब्रवीत् ॥ पञ्चरात्रा

गमोक्तेन वर्त्मनार्चकपुंगवाः ॥ ६ ॥ पूजोत्सवादिकार्याणि श्रीहरेरखिलानि च ॥ प्रकुर्वंत्यधुना सर्वे श्रीरंगादिस्थलेषु च ॥ ७ ॥ पञ्चरात्रागमेनैव कृतं पूजादिकं हरेः ॥ तदक्षयफलं मोक्षसाधनं चैतदेव हि ॥ ८ ॥ अनेनैव हि कर्तव्यं मुख्यमाहुर्मनीषिणः ॥ यूयं तेन प्रकारेण जगन्नाथस्य चार्चकाः ॥ ९ ॥ पूजोत्सवादिकार्याणि भक्त्या प्रकुरुतादरात् ॥ न्यूनता नास्ति चैतेन परं श्रेयो भविष्यति ॥ १० ॥ तस्य तद्वचनं श्रुत्वा यतींद्रस्य तदर्चकाः ॥ अनंगीकृत्य चोत्थाय तूष्णीं ते सत्वरं गताः ॥ ११ ॥ ततो यतीन्द्रः कुपितस्तेषां विज्ञाय तन्मतम् ॥ तानर्चकांस्तृणीकृत्य सहसोद्धृत्य संमतान् ॥ १२ ॥ बलात्कारेण तत्रत्यान् स्थापयित्वा दृढव्रतान् ॥ तैर्जनैः पांचरात्रेण श्रीरंगस्थलवत्तदा ॥ १३ ॥ जगन्नाथस्थलं कर्तुमुद्युक्तो यतिभूपतिः ॥ स्ववशीकृतभूपालः स बभूव जगद्गुरुः ॥ १४ ॥ तस्यां रात्र्यां तदा सर्वे जगन्नाथार्चकास्तदा ॥ ज्ञात्वा ते तदभिप्रायं मिलित्वामंत्र्य सत्वरम् ॥ १५ ॥ जगन्नाथालयं प्राप्य देवस्याग्रे जगत्पतेः ॥ बद्धांजलिपुटाः सर्वे चक्रुर्विज्ञापनं तदा ॥ १६ ॥ देवदेव जगन्नाथ भक्ताभीष्टप्रदायक ॥ त्वद्दासभूताल्लँक्ष्मीश पाह्यस्मान्करुणाकर ॥ १७ ॥ रामानुजाभिधानोद्य यतींद्रः कश्चिदागतः ॥ मार्गांतरं समाश्रित्य भवतः स यतीश्वरः ॥ १८ ॥ पूजाकार्याणि सर्वाणि कर्तुकामः समास्थितः ॥ पूर्वस्थितेन मार्गेण त्वमस्माभिर्दयानिधे ॥ १९ ॥ पूजितः सर्वपूजाभिः सर्वाभीष्टप्रदोभवः ॥ भवतास्मत्कृता पूजा न चांगीक्रियते यदि ॥ २० ॥ वयमद्यैव ते सर्वे मरिष्यामो न संशयः ॥ इत्युक्त्वा तेर्चकाः सर्वे गुर्वीश्च दृषदस्तथा ॥ २१ ॥ गृहीत्वा स्वशिरांस्याशु हंतुमारेभिरे परम् ॥ ततः प्रसन्नो भगवाञ्जगन्नाथः कृपानिधिः ॥ २२ ॥ स तेभ्यो ह्यभयं दत्त्वा कृपया तानपालयत् ॥ अर्चकास्ते ततः सर्वे संप्रहृष्टाः कृपादरात् ॥ २३ ॥ प्रपेदिरे स्ववेश्मानि शासनाज्जगतीपतेः ॥ जगन्नाथं समासाद्य मतिमान्सत्वरं ततः ॥ २४ ॥ प्रणम्य लक्ष्म-

णाचार्यः कृतांजलिरभाषत ॥ जगन्नाथ जगद्वंद्य जगदीश जगन्मय ॥ २५ ॥ विज्ञापनं ममेदानीं भगवन्नवधार्यताम् ॥ श्रीरंगादिस्थलानीडच वर्त्तते जगतीतले ॥२६॥ पंचरात्रागमेनैव तानि सर्वाणि सांप्रतम् ॥ तथैव चांगीक्रियतां स्थलस्यास्य जगत्पते ॥ २७ ॥ नांगीकृत्य वचस्तस्य तमाह पुरुषोत्तमः ॥ यतींद्र शृणु मे वाक्यं मन्नाथ जगतां गुरो ॥ २८ ॥ श्रीरंगादिस्थलानीह वर्तंते जगतीतले ॥कृतानि त्वदधीनानि मया तत्र जगद्गुरो ॥ २९ ॥ मदधीनमिदं क्षेत्रं देहि मे पुरुषोत्तम ॥ स्वैरमत्र जनैरेतैर्विहरामि सुखं यथा ॥ ३० ॥ तदाकर्ण्य वचस्तस्य जगन्नाथस्य योगिराट् ॥ पुनःपुनस्तथैवेदं क्रियतामित्युवाच सः ॥ ३१ ॥तमब्रवीज्जगन्नाथस्तथैवात्र न वर्तते ॥ एवमुक्तोपि हरिणा जगन्नाथेन योगिराट् ॥ ३२ ॥ पांचरात्रागमेनैव कर्तव्यं निश्चयं स्थलम् ॥ इति निश्चित्य मनसा प्रणम्य जगदीश्वरम् ॥ ३३ ॥ अनुज्ञातोथ हरिणा विवेश मठमंजसा ॥ तस्यां निशायां सुष्वाप यतिराजो जगद्गुरुः ॥ स्वमठे शिष्यसंघैश्च संवृतः साधुसंमतः ॥ ३४ ॥नृपं वशीकृत्य समत्रिवर्गं सर्वं जनं चाशु स लक्ष्मणार्यः ॥ श्रीरंगवत्कर्तुमलं प्रयत्नादियेष बुद्ध्या पुरुषोत्तमं हि ॥३५॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे जगन्नाथश्रीरामानुजार्यसंवादो नाम पंचत्रिंशोऽध्यायः ॥ ३५ ॥

## षट्त्रिंशोऽध्यायः ।

ततो भक्तपराधीनो जगन्नाथोप्यचिंतयत् ॥ अयं रामानुजः श्रीमान् सुमहात्मा दृढव्रतः ॥ १ ॥ उल्लंघ्य मद्वचः सत्यं तत्तथैव करिष्यति ॥ पंचरात्रागमेनैव स्थलस्यास्यापवर्त्तनम् ॥ २ ॥ अर्चकास्तेन मे शीघ्रं मरिष्यंति न संशयः ॥ अतोद्यैव योगींद्रः प्रापितव्यः सुदूरतः ॥३॥ इत्यालोच्य जगन्नाथो लक्ष्मणार्यं महामतिः ॥ तद्रात्रावेव योगींद्रं प्रापयामास सत्वरम् ॥ श्रीकूर्मे लक्ष्मणाचार्यं

श्रीहरियोंगमायया ॥ ४ ॥ प्रभातायां तु शर्वर्य्यां तस्यां लक्ष्मण-
देशिकः ॥ उत्थाय सहसा धीमान् हरिर्हरिरितीरयन् ॥ ५ ॥ दृष्ट्वा
दशदिशः सम्यक् चिंताव्याकुलमानसः ॥ श्रीकूर्ममिति तत्क्षेत्रं ज्ञात्वा
विस्मयमागतः ॥ ६ ॥ श्रीकूर्मनायकं मत्वा शिवलिंगमितीरितम् ॥
उपवासेन तत्रैकं वासरं स्थितवान् गुरुः ॥ ७ ॥ राहित्यात्क्षेत्रमृ-
त्स्नाया विष्णवर्चायाश्च सत्तमः ॥ स्वप्ने प्रसन्नो भगवांस्तस्य श्री-
कूर्मनायकः ॥ ८ ॥ व्याजहार शुभं वाक्यं कृपया यतिभूपतिम् ॥
यतींद्राज्ञानदोषेण शिवलिंगं जना इति ॥ ९ ॥ मां वदंति मृषा सर्वे
मायांधीकृतलोचनाः ॥ वत्स्याम्यत्र स्वरूपेण शंखचक्रगदाधरः
॥ १० ॥ लक्ष्मणार्याधुना शीघ्रं त्वं मां सम्यग्विलोकय ॥ शुद्धा
मदालयस्याग्रे वर्तते श्वेतमृत्तिका ॥ ११ ॥ सम्यक्कृतयोर्ध्वपुंड्राणि
धृत्वा वैष्णवसत्तम ॥ मामाराध्याशु नैवेद्यं भक्त्या सम्यक् समर्प्य
च ॥ १२ ॥ भोजनं कुरु योगींद्र मत्प्रसादं सुपावनम् ॥ अत्रैव
पूजयन् मां त्वं दिनानि कतिचिद्वस ॥ १३ ॥ अत्रैव चागमिष्यंति
जगन्नाथेन चोदिताः ॥ त्वदीयाः सत्वरं सर्वे लक्ष्मणार्य्य न संशयः
॥ १४ ॥ विचारं मा कुरुष्वात्र तवाधीनमिदं कृतम् ॥ पूर्वमेव
मया तात विभूतिद्वयमादरात् ॥ १५ ॥ ततः स्वप्नात्समुत्थाय
संतुष्टो विस्मयान्वितः ॥ तथा विधाय योगीन्द्रस्तेनोक्तेनैव वर्त्म-
ना ॥ १६ ॥ कूर्मनाथं समाराध्य तन्निवेदितभोजनम् ॥ विधाय
तस्य पादाग्रे सुखं तत्रावसत्तदा ॥ १७ ॥ तदाप्रभृति सर्वत्र
यतींद्रागमवैभवात् ॥ विष्णुस्थलमिति ह्यासीच्छ्रीकूर्मं विदितं महत्
॥ १८ ॥ श्रीकूर्मवासिनः सर्वे यतिराजं तमाश्रितम् ॥ पुत्रदारादिस-
हिता यतिराजं समाश्रिताः ॥ १९ ॥ श्रीकूर्मे च जगन्नाथे वृ-
त्तांतं यतिभूपतेः ॥ तच्छ्रुत्वात्यद्भुतं सर्वे तत्रतत्र जनाः स्थिताः
॥ २० ॥ श्रीकूर्मं तरसागत्य नानादेशस्थिता जनाः ॥ तं च दृष्ट्वा
यतिश्रेष्ठं कूर्मेशं विष्णुरूपिणम् ॥ २१ ॥ विस्मयं परमं गत्वा यति-

राजं समाश्रिताः ॥ जगन्नाथे स्थिताः शिष्या जगन्नाथेन चोदिताः ॥ २२ ॥ श्रीकूर्मक्षेत्रमासाद्य प्रणेमुर्यतिभूपतिम् ॥ ततो यतींद्रस्तैः शिष्यैः सहितः संप्रहर्षितः ॥ २३ ॥ संप्रेषितस्तदा तेन कूर्मेशेन दयालुना ॥ मन्नाथः सहसा धीमान् सिंहाचलमथाविशत् ॥ २४ ॥ सिंहाचले महासिंहं प्रणम्य हरिमव्ययम् ॥ तस्मान्निर्गत्य सहसा सिंहाद्रेः शिष्यसंवृतः ॥२५॥ अहोबलं गारुडाद्रौ प्रविवेश महायशाः॥ नारसिंहं परं नत्वा वेंकटाचलमागतः ॥ २६ ॥ तदा शैवाः समागत्य वेंकटाद्रिं कृतत्वराः ॥ शंखचक्रादिरहितं दृष्ट्वा तं वेंकटेश्वरम् ॥ २७॥ स्वामिपुष्करणीतीरे स्कंदं मत्वा तदाक्रमन् ॥ स्कंदमित्येव शैवास्ते वैष्णवा वेंकटेश्वरम् ॥ २८ ॥ शैवानां वैष्णवानां च कलहः सुमहानभूत् ॥ भाष्यकारोथ तान् सर्वान् वचनं चेदमब्रवीत् ॥ २९ ॥ देवस्य भवतां शैवा यान्यसाधारणानि च ॥ ननु शूलादिचिह्नानि स्कंदस्य किल भूसुराः ॥ ३० ॥ शंखचक्रादिचिह्नानि मम देवस्य यानि च ॥ आयुधानि च सर्वाणि कारयित्वाधुना तयोः ॥ ३१ ॥ निक्षिपामोद्य तान् सर्वान् वेंकटेश्वरसन्निधौ ॥ स धत्ते यानि पश्यामः किं वृथा कलहेन वः ॥ ३२ ॥ तथेति प्रतिगृह्याशु शैवास्सत्संमतिं गताः ॥ अथायुधानि सर्वाणि तान्यादाय यतीश्वरः ॥ ३३ ॥ स्वकीयः परकीयो वा पुरुषो नास्ति वै यथा ॥ तथा संशोध्य मतिमांस्तत्र गर्भगृहे हरेः ॥ ३४ ॥ सन्निधौ वेंकटेशस्य निधाय यतिपुंगवः ॥ बद्ध्वा कपाटं सुदृढं शैवैः सह विनिर्गतः ॥ ३५ ॥ उभावपि समागत्य प्रातस्तौ शैववैष्णवौ ॥ ददृशतुर्वेंकटेशं शंखचक्रधरं तदा ॥ ३६ ॥ चरणेथ स्थितं शूलं दृष्ट्वा डमरुकं हरेः ॥ पलायिता गिरेस्तस्माच्छैवास्ते लज्जितास्तदा ॥ ३७ ॥ भाष्यकारोथ संहृष्टो नत्वा श्रीवेंकटेश्वरम् ॥ शंखचक्रधरं देवं भक्तवत्सलमव्ययम् ॥ ३८ ॥ मंगलाशासनं चक्रे यावदाचंद्रतारकम् ॥ वक्षस्थले स्वर्णलक्ष्मीं स दत्त्वा तस्य सादरम् ॥ ३९ ॥ वेंकटेशस्य योगींद्रः संतुष्टोभून्महायशाः ॥

श्वशुरो देशिकश्चासीत्तेन योगीश्वरो हरेः ॥ ४० ॥ स्थलसंरक्षणार्थाय संन्यासिद्वयमादरात् ॥ निक्षिप्य निपुणं तत्र वेंकटेश्वरसन्निधौ ॥ ॥ ४१ ॥ तस्मात्सत्यव्रतक्षेत्रमाजगामांजसा गिरेः ॥ देवराजं प्रणम्याथ मधुरांतकमागमत् ॥ ४२ ॥ वीरनारायणपुरं गत्वा नाथमुनेर्महत् ॥ योगाभ्यासस्थलं नत्वा ततः श्रीरंगमागतः ॥ ४३ ॥ एवं प्रदक्षिणं कृत्वा भुवः श्रीरंगनायकम् ॥ प्रणिपत्य यतिश्रेष्ठः स्वमठं प्रविवेश ह ॥ ४४ ॥ इदं महत्पुण्यफलं पुरातनं कृतं यतींद्रेण भुवः प्रदक्षिणम् ॥ शृण्वंति गायंति सदा नरोत्तमास्ते यांति लोकं मधुवैरिणो हरेः ॥ ४५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे श्रीकूर्मवेंकटनिबर्हणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ।

कांच्यां पश्चिमदिग्भागे क्रोशमात्रादनंतरम् ॥ अग्रहारो महानासीत्कूर इत्यभिविश्रुतः ॥ १ ॥ यो हि तस्याधिपत्येन कूराधिप इति श्रुतः ॥ स श्रीमान्कूरनाथार्यस्तस्मिञ्छ्रीकूरनामके ॥ २ ॥ अन्नदानपरो नित्यमुवास कतिचित्समाः ॥ कुबेरधनसंपत्तिः सकुटुंबो महायशाः ॥ ३ ॥ धर्मैकनिरतो धीमान् सर्वशास्त्रविशारदः ॥आदित्योदयमारभ्य निशि यामद्वयावधि ॥ ४ ॥ पंग्वंधकृपणादिभ्यः सर्वेभ्यो ह्यन्नमादरात् ॥ प्रददौ भक्तिभावेन निरंतरमतंद्रितः ॥ ५ ॥ कदाचिदन्नशालायां तं महांतं रवं निशि ॥ तस्य कांच्यां कपाटानां निमीलनसमुद्भवम् ॥ ६ ॥ मेघनादनिभं श्रुत्वा लक्ष्मीर्वरदवल्लभा ॥ विस्मिता वरदं प्राह प्रभो कोयं महान् रवः ॥ ७ ॥ निशीथे सांप्रतं देव श्रुतः कश्चिन्महान् रवः ॥ तस्याहं ज्ञातुमिच्छामि ब्रूहि कौतूहलं हि तत् ॥ ८ ॥ तस्यास्तद्वचनं श्रुत्वा तत्सर्वं वरदस्तदा ॥ न्यवेदयन्महादेवीं सम्यक् कूरेशवैभवम् ॥ ९ ॥ तच्छ्रुत्वा विस्मिता देवी वरदं पुनरब्रवीत् ॥ तमहं द्रष्टुमिच्छामि त्वमिहानय

सत्वरम् ॥ १० ॥ तदंगीकृत्य वचनं महादेव्याः श्रियः पतिः ॥ दिदे-
शानयने तस्य कांचीपूर्णं हरिजेवात् ॥ ११ ॥ तदंगीकृत्य शिरसा
भगवच्छासनं परम् ॥ कांचीपूर्णो ययौ धीमान् कूरेशांतिकमादरात्
॥ १२ ॥ कांचीपूर्णं महात्मानं कूरेशो भगवत्परः ॥ यथार्हं पूजया-
मास प्रत्युत्थानाभिवादनैः ॥ १३ ॥ एवं संपूजितस्तेन कृतासनपरि-
ग्रहः ॥ अवोचदखिलं तस्मै यत्तदाह्वानकारणम् ॥ १४ ॥ कांची-
पूर्णस्य वचनं कूरेशस्तन्निशम्य सः ॥ विचार्य सुचिरं तत्र कांची-
पूर्णमभाषत ॥ १५ ॥ क्वाहं कृतघ्नो दुर्मानी पापिष्ठः परवंचकः ॥
क्वासौ लक्ष्मीर्जगन्माता ब्रह्मरुद्रादिवंदिता ॥ १६ ॥ नारायणप्रिया
देवी विष्णुवक्षस्थलालया ॥ जगज्जन्मलयौ स्यातां पालनं च भवे-
त्किल ॥ १७ ॥ यदुन्मेषनिमेषाभ्यां श्रियै तस्यै नमोनमः ॥ मद-
त्रयविहीनस्य मुक्तिस्तस्य करे स्थिता ॥ १८ ॥ मदत्रयैकनिद्रस्य
नैव मोक्षः कदाचन ॥ इत्युक्त्वा कूरराट् शीघ्रं सर्वं संत्यज्य तत्क्षणात्
॥ १९ ॥ श्रीरंगाभिमुखो धीमान् प्रतस्थे विगतस्पृहः ॥ कांची-
पूर्णः स तत्सर्वं विलोक्यात्यंतविस्मयः ॥ २० ॥ श्रीहस्तिशैलमा-
साद्य वरदाय न्यवेदयत् ॥ देवराजः श्रिया सार्द्धं श्रुत्वा तस्य विचे-
ष्टितम् ॥ २१ ॥ मदहीनं च वैराग्यं प्रमुमोद जगत्पतिः ॥ आंडाला-
ख्याथ तत्पत्नी सा भर्त्तारं विलोक्य तम् ॥२२॥ सर्वं विसृज्य गंतारं
श्रीरंगं प्रति सत्वरम् ॥ सुवर्णचषकं चैकं कृत्वा वस्त्रेण वेष्टितम्॥२३॥
आदाय सहसा तस्य सा साध्वी पुरतो ययौ ॥ आयांतीं पुरतो वीक्ष्य
तां स्वधर्मानुरोधिनीम् ॥ २४ ॥ अपांगवीक्षणैरीषत्संपश्यन्सत्वरं
ययौ ॥ अरण्यमार्गे कस्मिंश्चित्साज्ञातगमना तदा ॥ २५ ॥ सुभीता
पुरतो यांतं भर्त्तारमिदब्रवीत् ॥ब्रह्मन् भो नाथ मार्गेस्मिन् भयं किं
नास्ति वै किल ॥ २६ ॥ भार्यावचनमाकर्ण्य कूरेशस्तामथाब्रवीत् ॥
भयं वित्तवतस्तस्य मार्गे सर्वत्र चास्ति हि ॥ २७ ॥ यथामिषं जले

मत्स्यैर्भक्ष्यते श्वापदैर्भुवि ॥ आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ २८ ॥ भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ यदि त्वदंतिके द्रव्यमस्ति तद्देहि मेधुना ॥ २९ ॥ भर्तुर्वचनमाकर्ण्य मुग्धेवं वाक्यमब्रवीत् ॥ पयःपानाय भवतो हिरण्यचषको मया ॥३०॥ सर्वस्वदाने तत्सर्वं विसृज्यैकः समाहृतः ॥ स एष वस्त्रसंछन्न इति भर्त्रे ददौ भयात् ॥ ३१ ॥ तमनर्घमणिप्रोतं हैरण्यं चषकं मुदा ॥ दूरे विसर्जयामास कानने विगतस्पृहः ॥ ३२ ॥ ततो भार्यामुखं वीक्ष्य व्याजहार वचश्शुभम् ॥ भयं कुत्रापि ते नास्ति समागच्छ यथासुखम् ॥३३॥ तूष्णींभूता विलोक्येदं साध्वी भर्तृविचेष्टितम् ॥ निशम्य तद्वचः सत्यं गतभीरन्वगात्तदा ॥ ३४ ॥ स धर्मचारिणीं भार्यां समादायाथ कूरराट् ॥ श्रीरंगं सत्वरं प्राप रंगराजदिदृक्षया ॥ ३५ ॥ कूरेशागमनं श्रुत्वा भाष्यकारः प्रहर्षितः ॥ शिष्यैस्तमानयामास कूरेशं स्वमठे तदा ॥ ३६ ॥ स तेन सम्यग्योगींद्रः कूरेशेनाभिवन्दितः ॥ तं परिष्वज्य बाहुभ्यां प्रहर्षमतुलं ययौ ॥ ३७ ॥ कृताधिवासः श्रीरंगे कूरेशो देशिकप्रियः ॥ उंछवृत्तिपरो नित्यमुवास स महायशाः ॥३८॥ विसृज्य कूरे महतीं श्रियं च तेनाशुभं[1] त्यक्तमदत्रयं सन् ॥ श्रीरंगमासाद्य ततोंछवृत्या भार्यासमेतः सुखमध्युवास ॥ ३९ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कूरेशस्य सर्वसंपत्परित्यागपूर्वकश्रीरंगनित्यवासो नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[1] तेनाशु सन्त्यक्तमदत्रयः सन् इति पाठो भाति।

## अष्टात्रिंशोऽध्यायः ।

अथ कूरेश्वरः श्रीमान् सर्वशास्त्रविशारदः ॥ आचार्याचैंकानिरतः पंचकालपरायणः ॥१॥ विषयेष्वपि सर्वेषु विशेषेण पराङ्मुखः ॥ उंछवृत्त्यैव दिवसान् क्षिपन् रंगे सुसंस्थितः ॥ २ ॥ वृष्टिः कदाचिद्वर्षंती चामध्यंदिनमप्यभूत् ॥ कालातिक्रमणेनास्य नोंछवृत्तिस्तदाभवत् ॥ ३ ॥ द्रव्यस्य संचितस्यास्य तत्राभावाद्गृहे तदा ॥ स्नात्वा हरिं समाराध्य फलं किंचिन्निवेद्य च ॥ ४ ॥ शालिग्रामशिलातीर्थं स्वीकृत्य

स्वगृहे स्थितः ॥ ततः सायंतनीयं तत्कर्म कृत्वा महातपाः ॥ ५ ॥
रंगेशं संप्रणम्याथ स्वगृहं प्राप्य कूरराट् ॥ शठारिसूक्तमजपञ्शेते
गुरुपरायणः ॥ ६ ॥ तदा महद्रंगनाथनैवेद्यसमयोभवत् ॥
काहलीनादमाकर्ण्य भार्या कूरेश्वरस्य सा ॥ ७ ॥ व्याजहार शुभं वा-
क्यं रंगेशं भर्तृतत्परा ॥ त्वद्भक्तः क्षुधया शेते करोषि त्वं तु भोजनम्॥
॥ ८ ॥ तन्निशम्याथ रंगेशो भगवान् भक्तवत्सलः ॥ स तस्योत्त-
मपूर्णस्य स्वश्रीरंगाधिकारिणः ॥९॥ स्वप्ने प्रसन्नः कृपया व्याजहार
वचः शुभम् ॥ शर्कराज्यादिसहितं मत्प्रसादं सुपावनम् ॥ १० ॥
छत्रचामरवाद्यादिसहितं सहसाधुना ॥ समर्पय समादाय कूरेशाय म-
हात्मने ॥ ११ ॥ उत्तमः सहसोत्थाय यथा स्वप्नं तथैव सः ॥ तत्प्र-
सादं समादाय कूरेशायादिशत्तदा ॥ १२ ॥ श्रीवत्सचिह्नः सहसा त-
त्प्रसादं सुपावनम् ॥ भक्त्यांगीकृत्य सहसा ततो धीमानचिंतयत
॥ १३ ॥ सर्वाभीष्टानि रंगेशो दत्तवान्पूर्वमेव मे ॥ किमर्थमधुना दत्तः
प्रसादो रंगिणाधुना ॥ १४ ॥ किमिदं चैतदाश्चर्यमिति संचिंत्य भूय-
शः ॥ भार्यां ततोब्रवीद्देवीं किं त्वया हृदि चिंतितम् ॥ १५ ॥ तेनैव-
मुक्ता भर्त्तारं प्रांजलिर्वाक्यमब्रवीत् ॥ न प्रार्थितं मया स्वामिन् किम-
प्येतं जगत्पतिम् ॥१६॥ रंगेशभुक्तिसमये श्रुतः काहलिकारवः ॥ त्वं
तु भोक्ष्यसि रंगेश भक्तस्ते क्षुधयान्वितः ॥ १७ ॥ इत्येतन्मात्रमेवा-
द्य चिंतितं हृदि नापरम् ॥ तयैवमुक्तः कूरेशस्तां भार्यामिदमब्रवीत
॥ १८ ॥ किमेवं गतितुं युक्तमिति निर्भर्त्स्य चिंतितम् ॥ तत्प्रसादं
समादाय भार्यायै प्रददौ मुदा ॥ १९ ॥ तेनैव हेतुना साध्वी तत्पत्नी
गर्भमादधौ ॥ पराशरस्य व्यासस्य भागेन विबुधोत्तमौ ॥२०॥ रंगे-
शानुग्रहाज्जातौ पुत्रौ तस्यां महौजसौ ॥ कूरेशाच्छुभकृद्वर्षे वैशाखे पू-
र्णिमातिथौ ॥ २१ ॥ अनुराख्यनक्षत्रे पुरा कुशलवाविव ॥ शिष्योर्य-
तीश्वरः कर्त्ता जातनामादिकर्माणि ॥ २२ ॥ स्वातंत्र्यं मम नास्तीति
कूरेशो निर्भरः स्थितः॥जाताशौचावसाने तु कृपया यतिपुंगवः॥२३॥

कूरेशगृहमागत्य गोविंदमिदमब्रवीत् ॥ कूरेशपुत्रावादाय समा गच्छ सुसत्वरम् ॥ २४ ॥ प्रतिगृह्य गुरोर्वाक्यं गृहांतः संप्रविश्य च ॥ कूरेशपत्न्यै तत्सर्वं निवेद्यागमनं गुरोः ॥ २५ ॥ दृष्टिदोषनिवृत्यर्थं रक्षायै च विचक्षणः ॥ मंत्ररत्नजपेनैव शिशुभ्यां कृतमंगलः ॥२६ ॥ कूरेशपुत्रावादाय यतींद्राभ्याशमभ्यगात् ॥गोविंदो दर्शयामास लक्ष्मणार्याय तौ शिशू॥२७॥ दृष्ट्वा यतींद्रः संतुष्टस्तयोः सर्वांगसौष्ठवम् ॥ बालयोर्मुखलावण्यं गोविंदं चाब्रवीदिदम् ॥ २८ ॥ द्वयगंधः समायाति भवता किं कृतं वद ॥एवं वदति योगीन्द्रे गोविंदो वाक्यमब्रवीत ॥ २९ ॥ कुर्वन् द्वयानुसंधानं तावादायागतोभवम् ॥ तच्छ्रुत्वा लक्ष्मणाचार्यो गोविंदमिदमब्रवीत् ॥ ३० ॥ शिष्यौ गोविंद कर्त्तव्यौ भवानेव हि कारणम् ॥ एतयोर्बालयोः सर्वानर्थान्ब्रूहि यथाहेतः ॥ ३१ ॥ पंचायुधयुते चैव तयोराभरणे शुभे ॥ धारयित्वा तयोः कंठे स्वहस्तेन यतीश्वरः ॥ ३२ ॥ कूरेशपुत्रयोस्तेन गोविंदेन महात्मना ॥ कारयामास विधिना शंखचक्रादिलांछनम् ॥ ३३ ॥ श्रीपराशरनाम्ना च तयोर्ज्येष्ठस्य बालयोः ॥ श्रीपराशरभट्टार्य्य इति नामाकरोत्तदा ॥ ३४ ॥ वेदव्यासाभिधानेन कृत्वा नामापरस्य च ॥ अभिराम्यतया तस्य ज्येष्ठपुत्राद्विशेषतः ॥ ३५ ॥ श्रीरामदेशिक इति नाम कृत्वा द्वयं गुरुः ॥ द्वितीयं यामुनार्यस्य तद्दुःखं प्रममार्ज सः ॥ ३६ ॥ उत्तीर्णितो रंगधुरंधरेण पराशरः कूरकुलप्रदीपः ॥ गोविंदशिष्यस्स तु यामुनार्य्यमनोरथं पूरितवान् द्वितीयम् ॥ ३७ ॥ एवमुक्तमपूर्णेन लक्ष्मीकांते च भाषिते ॥ गोविंदस्यानुजः कश्चिद्बालगोविंद इत्यभूत् ॥ ३८ ॥ तस्य गोविंदभट्टस्य तदा पुत्रो व्यजायत ॥ भाष्यकारोथ तच्छ्रुत्वा परं हर्षमवाप सः ॥ ३९ ॥ गोविंदगृहमागत्य सुतं तस्य विलोक्य च ॥ श्रीपरांकुशपूर्णार्य इति नाम विधाय च ॥ ४० ॥ बालगोविंदपुत्रस्य संतुष्टो यतिभूपतिः ॥ तृतीयं

यामुनार्य्यस्य तद्दुःखमुदवासयत् ॥ ४१ ॥ गोविंदराजान्वयजो मनीषी परांकुशो यामुनवैमनस्यम् ॥ अपाचकार प्रसभं तृतीयं विराजते वृत्तमणिप्रदीपः ॥ ४२ ॥ एवमुत्तमपूर्णेन लक्ष्मीकांते च भाषितम् ॥ यतिराजकटाक्षेण ते च संवर्धितास्त्रयः ॥ ४३ ॥ सम्यग् ववृधिरे भूम्यामुदितार्कसमप्रभाः ॥ ४४ ॥ श्रीयामुनार्यस्य जगद्धितार्थमपूरयत्त्रीणि मनोरथानि ॥ अवाप्तकामः स जगाम हर्षं रंगेशतो लक्ष्मणदेशिकेंद्रः ॥ ४५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे श्रीपराशरभट्टार्याद्यवतारकथायां श्रीयामुनार्यमनोरथत्रयपूरणं नाम अष्टत्रिंशोऽध्यायः ॥ ३८ ॥

## एकोनचत्वारिंशोऽध्यायः ।

श्रीपराशरभट्टार्यं रंगेशो भक्तवत्सलः ॥ पुत्रस्वीकारमकरोत्पीतहारिद्रशंबरः ॥ १ ॥ श्रीरंगनायकी तं च पुत्रं पोषितवत्यभूत् ॥ तया संवर्द्धितो नित्यं लालितो योषितस्तदा ॥ २ ॥ स बालो ववृधे श्रीमान् बालसूर्य इवोदितः ॥ स्वनिवेदनतः पश्चात्प्रसादं षड्गुणैर्युतम् ॥ ३ ॥ दापयामास सततं पुत्राय भगवान् हरिः ॥ एवं विवर्द्धितो बालो रंगेशेन दयालुना ॥ ४ ॥ श्रीपराशरभट्टार्यो ववृधे पूजितो जनैः ॥ ततः कदाचित्संप्राप्ते स्वजन्मर्क्षमहोत्सवे ॥ ५ ॥ पठंतं शठजित्सूक्तिं बालः कूरेशमब्रवीत्॥ भो तात पठिते ग्रंथे बकुलाभरणेरिते ॥ ६ ॥ महत्त्वाणुत्वयोरेकवस्तुवासित्वमुच्यते ॥ तयोर्विरुद्धयोः कस्मात्तत्संभवति मे वद॥ ७ ॥ सामानाधिकरण्यं तु न तेजस्तमसोर्यथा ॥ श्रीवत्सचिह्नस्तद्वाक्यं पुत्रोक्तं युक्तिसंमतम्॥८॥श्रुत्वा सम्यक्सम्यगिति प्रहृष्टः प्रत्युवाच तम् ॥ हे पुत्र नोपनीतस्त्वं श्रुतिं न श्रोतुमर्हसि ॥ ९॥ अथ वीथ्यां रंगपुत्रे क्रीडासक्तेऽर्भकैर्जनैः ॥ सर्वज्ञभट्टागमनसूचके काहलीरवे ॥ १० ॥ श्रुते लक्ष्मणयोग्याद्या संगतास्तद्दिदृक्षया ॥ तत्रांतरे रंगसुतो गृहीत्वा वालुकां तदा ॥ ११ ॥

सम्यगंजलिना वेगाद्राजमार्गे निरंकुशः ॥ सर्वज्ञभट्टं संप्राप्य तमेवं वाक्यमब्रवीत् ॥ १२ ॥ सर्वज्ञश्चेद्वदेमां त्वं कियती सिकताधुना ॥ स किंचिदपि तं वक्तुमशक्तो लज्जितोभवत् ॥ १३ ॥ सोर्भकः प्रहसन् वाक्यं तं सर्वज्ञमथाब्रवीत् ॥ किं वा न शक्यते वक्तुमित्येषांजलिवालुका ॥ १४ ॥ इत्येतन्मात्रवचनमप्यशक्तोसि भाषितुम् ॥ सर्वज्ञभट्टनामेदं भवतो युज्यते कथम् ॥ १५ ॥ तस्मात्त्वमज्ञतां प्राप्तः संप्रत्युत्सृज्य नाम तत् ॥ आडंबराणि सर्वाणि तूर्णं याह्यत्र मा वस ॥ १६ ॥ कूरेशसुतमित्येवं ज्ञात्वा तत्र स्थितैर्जनैः ॥ सर्वज्ञभट्टः सहसा तं बालं सुमहौजसम् ॥ १७ ॥ कूरेशपुत्रं शिरसि निधायात्यंतविस्मयः ॥ कूरेशस्य गृहद्वारसमीपं सहसा ययौ ॥ १८ ॥ हेमांबा नाम वै काचिद्योषिदागत्य संभ्रमात् ॥ तं पुत्रं सहसादाय दोर्भ्यामालिंग्य सत्वरम् ॥ १९ ॥ ब्रह्मरंध्रं समाघ्राय चुचुंब बहुधार्भकम् ॥ रक्षां कृत्वा द्वयेनाथ तस्मै श्रीरंगसूनवे ॥ २० ॥ उत्तरीयेण संच्छाद्य विवेशांतःपुरं सती ॥ जनन्यै सादिशत्पुत्रं भट्टार्यं मुदितानना ॥ २१ ॥ श्रीपादतीर्थं सा माता पुत्रप्रेमवती तदा ॥ कृताशिषो बहुविधा पुत्राय प्रददौ मुदा ॥ २२ ॥ अथोपनीतं तं पुत्रं कूरेशो गुरुसंन्निधौ ॥ वेदाध्ययनसिद्ध्यर्थं स्थापयामास बालकम् ॥ २३ ॥ आरंभदिनमात्रं तु स्थित्वा तत्र स बालकः ॥ क्रीडासक्तोभवद्भूयो राजमार्गे निरंकुशः ॥ २४ ॥ क्रीडंतं पुत्रमालोक्य कूरेशस्तमथाब्रवीत् ॥ बालकेष्वद्य सर्वेषु वेदाध्ययनमादरात् ॥ २५ ॥ कुर्वत्सु पुत्र कस्मात्त्वमागतः क्रीडितुं जवात् ॥ एवं वदति कूरेशे भट्टार्यो वाक्यमब्रवीत् ॥ २६ ॥ आधीतं पूर्वदिवसे वेदमस्मिन्दिनेपि च ॥ पठंति बालकास्तात तस्मादद्यागतोभवम् ॥ २७ ॥ तत्पुत्रवचनं श्रुत्वा कूरेशो वाक्यमब्रवीत् ॥ त्वं ब्रूहि पुत्र पूर्वेद्युः पठितं पूर्वमद्य मे ॥ २८ ॥ तथास्त्विति स भट्टार्यस्तत्सर्वं व्याजहार ह ॥ तच्छ्रुत्वा पितरौ तस्य भिया संक्रांतचेतसौ ॥ २९ ॥ इदानीं प्रेषितं बालं विद्या-

भ्यासाय नोचितम् ॥ इत्यालोच्य सुतं स्थाप्य कृतरक्षं कुमा-
रकम् ॥ ३० ॥ निन्यतुस्सदनं वेगाद्दंपती तौ महौजसम् ॥
अथ कूरेशगोविंदौ चक्रतुः शास्त्रवित्तमौ ॥ ३१ ॥ तत्त्वशि-
क्षामर्थशिक्षां सर्वशिक्षां च सादरम् ॥ श्रीपराशरभट्टार्यमहते
रंगसूनवे ॥ ३२ ॥ श्रीपराशरभट्टार्यं ततः संजातयौवनम् ॥
दृष्ट्वा कूरेश्वरः प्राह प्रणिपत्य यतीश्वरम् ॥ ३३ ॥ स्वामिन् यतीश
भट्टार्यस्त्वद्दासः प्राप्तयौवनः ॥ तस्य भाव्यं विवाहेन कुत्र कार्यं द्विजा-
तिषु ॥ ३४ ॥ ब्राह्मण्यवैष्णवत्वाद्यैरस्मत्सदृशबंधुषु ॥ विवाहं भवता
कार्य्यं सम्यगालोच्य धीमता ॥ ३५ ॥ इत्युक्तः कूरनाथेन यतीशः
प्रत्युवाच तम् ॥ पूर्णार्यवंशे महति बृहच्चरणनामके ॥ ३६ ॥ कन्यका
वर्तते रम्या त्वत्पुत्रस्योचितैव सा ॥ स्वसूत्रशाखाब्रह्मण्यवैष्णवत्वादि-
लक्षणैः ॥ ३७ ॥ बृहच्चरणसंताना ह्यस्मद्वंशसमीकृताः ॥ तत्तत्र कार्यं
भट्टस्य पाणिग्रहणमंगलम् ॥ ३८ ॥ तच्छ्रुत्वा वचनं तस्य कूरेशो
यतिभूपतेः ॥ अंगीकृत्याशु संतुष्टः पत्न्या संमंत्र्य सादरम् ॥ ३९ ॥
गुरुणा वैष्णवैः सर्वैर्यतींद्रेण च संवृतः ॥ तत्र गत्वा करनाथः
कन्यकां तामयाचत ॥ ४० ॥ स चाभिजात्यं भट्टस्य बृहच्चरणवंशजः ॥
निशम्य तस्मै तां कन्यां प्रदातुं संमतिं गतः ॥ ४१ ॥ ततो नवीनसं-
बन्ध इति तत्संशयं गतः ॥ ततः कूरपतेर्भार्या भर्त्तारमिदमब्रवीत् ॥
॥ ४२ ॥ अधीतसर्ववेदस्य प्राप्तयौवनसंपदः ॥ सूनोर्विवाहः कर्तव्यः
सांप्रतं धीमता त्वया ॥ ४३ ॥ तयैवमुक्तस्तां भार्यां प्राह कूराधिपो
महान् ॥ अस्यैश्वर्यकुटुंबस्य न्यूनता किमतोधुना ॥ ४४ ॥ ततो
रंगेश्वरं प्राह कूरेशो भक्तवत्सलम् ॥ स्वामिन् रंगेश भट्टार्य्यस्त्वत्पुत्रः
प्राप्तयौवनः ॥ ४५ ॥ तस्य वैवाहिकं कार्यं कर्त्तव्यं किं न वाधुना ॥
इत्युक्तं रंगनाथस्तं कूरेशमिदमब्रवीत् ॥ ४६ ॥ तस्योद्वाहं च भट्टस्य
कर्त्ता तु न भवान् भवेत् ॥ अहमेव हि तत्कर्त्ता निर्भरस्त्वं सुखं

वस ॥ ४७ ॥ ततो रंगेश्वरः स्वप्ने तस्येदं वाक्यमब्रवीत् ॥ मत्पुत्राय प्रदेहीति भट्टार्यायाशु कन्यकाम् ॥ ४८ ॥ ततः पूर्णार्यदायादः रंगेशेन प्रचोदितः ॥ अकरोत्कंन्यकादानं रंगपुत्राय धीमते ॥ ४९ ॥ ततः कदाचिच्छ्रीरंगे सभायां यतिपुंगवः ॥ कथायां तु प्रवृत्तायां विविधायां महायशाः ॥५०॥ लक्ष्मणार्योऽब्रवीद्वाक्यं वैष्णवांश्च सभासदः ॥चतुर्थाश्रममापन्ने तस्मिन्काले पुरा मयि ॥५१॥ विना दाशरथिं देहसंबंधो वर्जितो मया ॥ ततस्ते वैष्णवाः सर्वे यतिराजमथाब्रुवन् ॥ ५२ ॥ स्वामिन्तवेदं गदितुं किं युक्तं यतिपुंगव॥तानाह यतिराजोथ शिष्यानेवं वचस्तदा ॥ ५३ ॥ यथा त्रिदंडः संग्राह्यो तथा दाशरथिर्मम ॥ ततः पठति योगींद्रे शठजित्सूक्तिमालिकाम् ॥ ५४ ॥ तदा दाशरथिः श्रुत्वा मोहितस्तद्रशंगतः ॥ लक्ष्यणार्यः स तं दृष्ट्वा प्रोवाचेदं विमोहितम् ॥ ५५ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे ॥ वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ तद्वद्रामायणादासीद्वेदो द्राविडरूपतः ॥ ५६ ॥ एतादृशैः शिष्यवरैर्यतींद्रः पीठैश्चतुःसप्ततिभिस्समेतः ॥ दिगंतकीर्तिः सुखमेव तस्थौ रंगे पुरे लक्ष्मणदेशिकेंद्रः ॥ ५७ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे श्रीपराशरभट्टार्यविवाहादिकथनं नाम एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

## चत्वारिंशोऽध्यायः ।

तस्यामानुषवैभवस्य महतः श्रीरंगपृथ्वीपतेः कैंकर्याणि यथा तथा प्रतिदिनं चाव्याहतं कुर्वतः ॥ लोके सज्जनसंमता गुरुजना येन्ये च वै दुर्जनास्ते सर्वे करुणार्द्रदृष्टिविषयाः शिष्या बभूवुः क्षणात् ॥१॥ निचुलानगरे कश्चिन्मल्लवर्यो महाबलः ॥ चाणूर इव दुर्धर्षो धनुर्दासो बभूव ह ॥ २ ॥ ते तस्य मल्लवर्य्यस्य मल्ला ये चाखिला भुवि ॥ बिभ्यंति सर्वभूतानि मृत्योरिव समागमे ॥ ३ ॥ धुनर्दासस्य तस्यासीत्प्रिया काचिद्वरांगना ॥ हेमांबाख्या विशालाक्षी पूर्णचन्द्रनिभानना ॥४॥ तया संमोहितो नित्यं स मल्लो मदनातुरः ॥ मुखावलोकनं कु-

र्वन् तस्या एव समास्थितः ॥ ५ ॥ ततः कदाचिच्छ्रीरंगे रंगेशस्य जगत्पतेः॥चैत्रोत्सवो महानासीत्सर्वेषां नयनोत्सवः॥६॥ रंगराजोत्सवं श्रुत्वा हेमाम्बाख्या वरांगना ॥ द्रष्टुकामा ययौ शीघ्रं श्रीरंगं प्राति सादरम् ॥ ७॥ स तामनुययौ तूर्णं तन्मुखालोकनातुरः ॥ द्विपदाग्रे मुखस्यास्याः छत्रं कृत्वा प्रयत्नतः ॥ ८ ॥ मुखावलोकनं कुर्वन् स्खलद्गतिरसौ ययौ ॥ एतद्विचित्रं संदृष्टं यतींद्रेण महात्मना ॥ ९ ॥ कृतस्नानेन कावेर्य्यां शिष्यसंघावृतात्मना ॥ तच्चित्रं स विलोक्याथ शिष्यान्प्रोवाच योगिराट् ॥ १० ॥ संपश्यताधुना चित्रमेतद्वैष्णवपुंगवाः ॥ भगवन्मायया ग्रस्तं स्त्रीदासं पुरुषाधमम् ॥ ११ ॥ अयमेव हि लोकेस्मिन्दृढं मूढतमो जनः ॥ लज्जाविरहितो मार्गे वेश्यादास्यं करोत्यलम् ॥ १२ ॥ लोके कामातुराः स्त्रीणां रहः कुर्वंति केचन ॥ दास्यादिव्यवहाराणि न बहिः केपि वैष्णवाः ॥ १३ ॥ मदनांबुधिनिमग्नं मत्तं स्त्रीदासमातुरम् ॥ निर्लज्जं कामिनीभूतं मोहितं मूढचेतसम् ॥१४॥ रंगेशाभिमुखं शीघ्रं करिष्याम्यधुनैव तम् ॥ इत्युक्त्वा वैष्णवान्सर्वान् स्वपार्श्वस्थान् यतीश्वरः ॥ १५ ॥ आप्तान् कांश्चित्तदा शीघ्रं धनुर्दासस्य पृष्ठतः ॥ प्रेषयामास तत्स्थानं ज्ञातुकामो महामतिः ॥ १६ ॥ ततः स्वमठमाविश्य यतींद्रः करुणार्णवः ॥ आनयामास सहसा धनुर्दासं तथाविधम् ॥ १७ ॥ तत्कटाक्षेक्षितः सम्यक्ताहृशोपि स मल्लराट् ॥ आनीतो यतिराजेन तदंतिकमुपागमत् ॥ १८ ॥ सम्यक्संपूर्णदृष्ट्याथ यतींद्रो वीक्ष्य सस्मितम् ॥ कृत्वा संमानमत्यंतं धनुर्दासं वचोब्रवीत् ॥ १९ ॥ को भवान् वत्स कुत्रत्यः किन्निमित्तमिहागतः ॥ ॥ किं कार्य्यं वद तत्त्वेन तव श्रेयो भविष्यति ॥ २० ॥ इत्युक्तस्तेन गुरुणा धनुर्दासः कृतांजलिः ॥ स्ववृत्तांतमशेषेण यतींद्राय न्यवेदयत् ॥ २१ ॥ निचुलापट्टणस्थोहं धनुर्दास इति श्रुतः ॥ नियुद्धशास्त्रनिरतः सर्वमल्लमहीपतिः ॥ २२॥ अयं चैत्रोत्सवः स्वामिन् रंगेशस्याधुना किल ॥

श्रीहरेरस्य सेवार्थमागतोहं यतीश्वर ॥ २३ ॥ तच्छ्रुत्वा तमुवाचेदं यतींद्रः सस्मितं तदा ॥ श्रूयतामभिधास्यामि मा कोपं कुरु मां प्रति ॥ २४ ॥ रहः कुर्वंति दास्यानि स्त्रीणां कामातुरा जनाः ॥ त्वादृशः कोपि न मया दृष्टः कामातुरो भुवि ॥ २५ ॥ जुगुप्सितमिदं कार्यं शूरेण भवता कथम् ॥ कृतं सर्वेषु पश्यत्सु राजमार्गे निरंकुशम् ॥ २६ ॥ तच्छ्रुत्वा यतिराजस्य वचनं लज्जितो भृशम् ॥ स नम्रवदनो भीतः प्रांजलिर्वाक्यमब्रवीत् ॥ २७ ॥ नाहं कामातुरः स्वामिन् न वेश्याजनलोलुपः ॥ हेमांबाख्या विशालाक्षी काचिदस्ति वरांगना ॥ २८ ॥ महाविशाले तस्यास्ते नेत्रे पद्मदलायते ॥ विशालयोस्तयोः स्वामिन् निमग्नं मानसं मम ॥ २९ ॥ संततं सूर्यकिरणैर्यदि तन्मुखपंकजम् ॥ भवेत्संम्लानितेे नेत्रे तथैव न भविष्यतः ॥ ३० ॥ अतो मे हृदयं शीघ्रं वैकल्यं याति निश्चितम् ॥ एतावन्मात्रमेवार्य व्यापारो मम देशिक ॥ ३१ ॥ तदेव शाधि शिष्याय मह्यमद्यैव यत् स्थितम् ॥ तच्छ्रुत्वा प्रहसन् वाक्यं यतींद्रः पूर्णवत्सलः ॥ ३२ ॥ स्वपादपद्मप्रवणं कर्तुकामस्तमब्रवीत् ॥ संदृष्टाभ्यां त्वया वत्स नेत्राभ्यामतिविस्तृते ॥ ३३ ॥ नेत्रे लोकोत्तरे दिव्ये विद्येतेऽस्याधुनैव ते ॥ सुंदरे दर्शयाम्यत्र मा तेभूदत्र संशयः ॥ प्रतिगृह्य वचस्तस्य धनुर्दासोभ्यभाषत ॥ ३४ ॥ तल्लोचनादप्याधिकाक्षिलाभो भवेदिदानीं यदि मे यतींद्र ॥ तदा भवेन्मे महदर्थलाभः प्राप्तो महात्मन् भवतः कटाक्षात् ॥ ३५ ॥ यतीश्वरस्तत्क्षणमेव शीघ्रं स तं समादाय जगाम तत्र ॥ रंगेश्वरो यत्र फणींद्रतल्पे शेते महात्मा जगतां हिताय ॥ ३६ ॥ रंगं समासाद्य फणींद्रतल्पे शयानमाद्यं रघुवंशभाग्यम् ॥ रंगेश्वरं मल्लवराय तस्मै प्रदर्शयामास यतींद्रनाथः ॥ ३७ ॥ आजानुबाहुमरविंददलायताक्षं मंदस्मितं मधुरकोमलगंडभागम् ॥ माणिक्यरंजितविभूषणभूषितांगं रंगेश्वरं वरतनुं स हरिं

ददर्श ॥ ३८ ॥ सम्यक् प्रदर्श्याशु विशालनेत्रं रंगेश्वरं मल्ल-वराय तस्मै ॥ हस्तं प्रगृह्यार्हवरस्स तस्य जगाद वाक्यं कृप-यार्थसारम् ॥ ३९ ॥ अयं धनुर्दास रमाधिनाथः श्रीरंगनाथो जगतामधीशः ॥ अस्याक्षिवैपुल्यमिदं त्वयाद्य दृष्टं किलैवाप्र-तिमं हि सम्यक् ॥ ४० ॥ निशम्य तद्वाक्यमतीव सत्त्वं विलोक्य रंगेशविशालनेत्रे ॥ प्रहृष्टचित्तः स तयोर्निमग्नस्तस्थौ सदक्षणः कृपयैव तस्य ॥ ४१ ॥ नीत्वोपायबलेन तस्य पुरतः श्रीरंगपृथ्वीपतेः कृत्वा लोचनलोलनेत्रयुगलं तं मल्लमत्यादरात् ॥ निर्व्याजेन यती-श्वरः करुणया निर्व्याजसंरक्षकः सन्तोषेण मठं जगाम महता कारु-ण्यपाथोनिधिः ॥ ४२ ॥ अयं जनो लक्ष्मणदेशिकेंद्रसम्बन्धिभूतो मम रक्षणीयः ॥ इत्येव मत्वा भगवांश्चकार दयां स तस्मिन्नथ चा-पदासे ॥ ४३ ॥ यतीशसंबंधमहाबलेन श्रीरंगराजस्य कृपाबलेन ॥ निरस्तकामादिमहारिवर्गो बभूव मल्लाधिपतिर्महात्मा ॥ ४४ ॥ जित-निद्रो जिताहारः प्रत्यहं हरिसेवया ॥ अचंचलेक्षणस्तत्र तस्थावनि-मिषो यथा ॥ ४५ ॥ ततो यतींद्रः सहसा धनुर्दासं तमादरात् ॥ मठमानीय भक्ताय स तस्मै करुणानिधिः ॥ ४६ ॥ तीर्थं प्रसादं प्रददौ कृपया शिष्यवत्सलः ॥ ततः संप्रार्थितस्तेन धनुर्दासेन योगि-राट् ॥ ४७ ॥ चकार पञ्चसंस्कारान् मल्लस्य विदितात्मनः ॥ धनु-र्दासो यतींद्रस्य शिष्यो भूत्वा महामतिः ॥ ४८ ॥ नित्यकैंकर्य निरतः सन्तस्थौ गुरुसन्निधौ ॥ धनुर्दासस्य वृत्तांतं श्रुत्वा हेमांगना तदा ॥ ४९ ॥ विस्मयाविष्टहृदया जितकामा बभूव सा ॥ संजात-ज्ञानवैराग्या सा च लक्ष्मणदेशिकम् ॥ ५० ॥ प्रणम्य प्रार्थयामास पंचसंस्कारकर्मणि ॥ अपारकरुणासिन्धुर्हेमांबां तां दृढव्रताम् ॥ ५१ ॥ धनुर्दासेन तेनाशु पूर्ववत्समयोजयत् ॥ हेमांबायास्तदा तस्या धनुर्दासाच्छताधिकाः ॥ अवर्धंत प्रतिदिनं ज्ञानभक्त्यादिसद्गुणाः ॥ ५२ ॥ तौ दंपती लक्ष्मणदेशिकेंद्रपादारविंदामृतपानसक्तौ ॥

तन्नित्यकैंकर्यरतौ महांतौ बभूवतुः संततमादरेण ॥ ९३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे धनुर्दासकनकांगनयोर्यतिराजकृपालब्धश्रीवैष्णवसिद्धिर्नाम चत्वारिंशोऽध्यायः ॥ ४० ॥

## एकचत्वारिंशोऽध्यायः ।

श्रीमान् लक्ष्मणयोगींद्रः श्रीरंगे शिष्यसंवृतः ॥ व्यरोचत महातेजा द्वितीय इव रंगराट् ॥१॥रामस्य नित्यकैंकर्य्ये यथासीन्मारुतात्मजः ॥ तथैव लक्ष्मणार्यस्य धनुर्दासो दृढव्रतः॥२॥कदाचिदुत्सवो जातः सुमहान् रंगभूपतेः॥तीर्थदातरि रंगेशे तीर्थवारिदिने तदा ॥३ ॥ धनुर्दासस्य पाणिं तु समालंब्य यतीश्वरः ॥ तत्र गत्वा ततः स्नात्वा पुनरागमने तदा ॥४॥ धनुर्दासस्य सहसा पाणिमालंब्य पाणिना ॥ शिष्यैः सह यतिश्रेष्ठः स्वमठं प्रविवेश सः ॥ ५ ॥ तं दृष्ट्वा विस्मयाविष्टाः प्रोचुर्ब्राह्मणपुंगवाः ॥ धर्मात्मन्तस्यको हेतुरुच्यतां यतिपुंगव ॥ ६ ॥ तच्छ्रुत्वा तानुवेदं वैष्णवान्भगवान् गुरुः ॥ विद्यामदो धनमदस्तृतीयोभिजनो मदः ॥ ७ ॥ एते मदावलिप्तानामेत एव सतां दमाः ॥ एतैर्मदत्रयैर्मल्लो रहितोयं विपश्चितः ॥ ८ ॥ अतः पाणिर्गृहीतोस्य मया स्नातेन वैष्णवाः ॥ तेनैवमुक्तास्ते सर्वे बभूवुर्लज्जिता भृशम् ॥ ९ ॥ मल्लोयं मदनातुरोयमशुचिः शूद्रोयमत्यल्पको विद्वद्भिः श्रुतिपारगैर्द्विजवरैः साम्यं कथं यास्यति ॥ इत्येवं प्रवदंति सात्त्विकनिधिं तं चापदासं मुदा केचिद्वैष्णवपुंगवा यतिपतेः कैंकर्यधुर्यं सदा ॥ १० ॥ असूयया तेखिलवैष्णवा भृशं वेदांतयुग्मार्थविशारदा अपि ॥ तद्भावविज्ञानविहीनमानसाश्चक्रुर्हि तस्मिन्महतीं तिरस्क्रियाम्॥११॥ वैष्णवानामभिप्रायं तेषां ज्ञात्वा यतीश्वरः ॥ धनुर्दासगुणांश्चैव दोषांस्तेषां च सादरम् ॥ १२ ॥ स्फुटं दर्शयितुं लोके यत्कार्यं समचिंतयत ॥ शिष्यं कंचित्समाहूय स्वांतरंगं रहोब्रवीत् ॥ १३ ॥ अस्यां निशायां शालायां मठे वेदांतवेदिनाम् ॥ शोष्यमाणेषु वस्त्रेषु वैष्णवा-

नां च रज्जुषु ॥ १४ ॥ कौपीनमानमात्रेण खंडयित्वा गृहाण भोः ॥ केनाप्यलक्षितगतिः सर्ववस्त्रेषु सत्वरम् ॥ १५ ॥ प्रतिगृह्य गुरोर्वाक्यं स च शिष्यो महानिशि ॥ कौपीनानि जहाराशु तेषु वस्त्रेषु तत्तथा ॥ १६ ॥ प्रभातायां तु शर्वर्यां तस्यां वैष्णवपुंगवाः ॥ उत्थायालोक्य वस्त्राणि तानि सर्वाणि सत्वरम् ॥ १७ ॥ अवाच्यानि मिथः सर्वे परुषाणि वचांसि ते ॥ वदंतः सुमहाघोरं संग्रामं चक्रुरद्भुतम् ॥ १८ ॥ यतिराजोपि तच्छ्रुत्वा मन्दस्मितमुखस्तदा ॥ स तानाश्वासयामास वैष्णवान् प्रियभाषणैः ॥ १९ ॥ ततः कदाचिद्योगींद्रस्तं धनुर्दासमादरात् ॥ रात्रावानीय तेनैव संभाषणपरोभवत् ॥ २० ॥ याममात्रे गते तस्मिंस्तत्र लक्ष्मणदेशिकः ॥ नष्टांबरान् समाहूय तान् रहो वाक्यमब्रवीत् ॥ २१ ॥ मदंतिके धनुर्दासः सांप्रतं वर्त्तते किल ॥ तस्य भार्या गृहे सुप्ता निद्रयापहृता स्थिता ॥ २२ ॥ यूयं गूढचराः शीघ्रं धनुर्दासगृहं प्रति ॥ गत्वा तस्याः प्रसुप्ताया भूषणानि महांति च ॥ २३ ॥ येन केनाप्युपायेन तान्यादायाशु सांप्रतम् ॥ आगच्छंतु महाभागा ह्यज्ञातगमनागमाः ॥२४॥ ततो निशीथे सहसा वैष्णवा गुरुचोदिताः ॥ धनुर्दासगृहं प्राप्य तत्र शय्यागृहस्थिताम् ॥ २५ ॥ शयानां मृदुशय्यायां हेमांबां तां दृढव्रताम् ॥ धनुर्दाससतीं सुप्तां दृष्ट्वा हर्षं प्रपेदिरे॥२६॥ ततस्ते वामशायिन्यास्तस्या श्रीवैष्णवोत्तमाः॥सर्वाभरणभूषिण्याःभूषणान्याखिलानि च ॥२७॥एकपार्श्वस्थितान्याशु कंकणादीनि यानि च ॥ तूर्णं गृहीतुमुद्यक्ताः बभूवुर्निपुणास्तदा ॥ २८ ॥ हेमांबा किंचिदुन्मील्य नेत्रे श्रीवैष्णवप्रिया ॥ दृष्ट्वा श्रीवैष्णवान् सर्वान् हरतो भूषणानि तान् ॥ २९ ॥ निमील्य लोचने भूयस्तूष्णीं तस्थौ पतिव्रता ॥ एकपार्श्वस्थितान्याशु भूषणानि प्रदाय सा ॥ ३० ॥ वैष्णवेभ्यो महाभागा भक्त्या श्रीवैष्णवप्रिया ॥ वामपर्श्वे स्थितान्याशु भूषणान्यपि स-

वशः॥३१॥ प्रदातुकामा सा भक्त्या वैष्णवेभ्योखिलानि च ॥ पार्श्वेन
दक्षिणेनैव लुठंती शयने त्वभूत् ॥ ३२ ॥ तां प्रबुद्धां ततो ज्ञात्वा तूर्णं
निर्गत्य वैष्णवाः ॥ भूषणानि तदा तानि यतींद्रायादिशन् रहः॥३३॥
ततस्तं प्रेषयामास धनुर्दासं यतीश्वरः ॥ प्रेषितो यतिराजेन धनुर्दासो
महात्मना ॥ ३४ निशीथे सहसा धीमान् जगाम स्वगृहं प्रति ॥ त-
तो यतींद्रः संचिंत्य तानेव पुनरब्रवीत् ॥ ३५ ॥ अज्ञातगतयस्तस्य
पृष्ठतोद्यैव सत्वरम् ॥ गत्वा तद्गृहपर्यंतं स्थित्वा गूढेन तद्बहिः॥३६॥
तयोः संजातवृत्तांतं दंपत्योर्निखिलं तदा ॥ ज्ञातव्यमवधानेन युष्मा-
भिर्निपुणं यथा ॥ ३७ ॥ अंगीकृत्याथ तद्वाक्यं वैष्णवा गुरुचोदिताः
॥ तथैव चक्रुः सहसा यतिराजाज्ञया तदा ॥ ३८ ॥ हेमांबाशु ततो
ज्ञात्वा भर्तुरागमनं सती ॥ घटेनोदकमादाय तस्याभिमुखमभ्यगात्
॥ ३९ ॥ अर्धांगभूषितां भार्यां तां विलोक्य सुविस्मितः ॥ उवाच प्र-
हसन् वाक्यं धनुर्दासो महामनाः ॥४०॥ किमर्थमेकपार्श्वे तु भूषणैर्भू-
षितं त्वया ॥ एतत्पार्श्वे विहायाद्य वद तत्कारणं मम ॥४१॥ निश-
म्य भर्तुर्वचनं सा सती वाक्यमब्रवित् ॥ अधुनैतत्क्षणात्पूर्वं समाग-
त्यात्र वैष्णवाः॥४२॥ निद्रिताया ममांगेषु भूषणाहेरणाद्यताः ॥ प्रबुद्धां
किंचिदुन्मील्य तदा नेत्रे विलोक्य तान् ॥ ४३ ॥ मत्वा धन्याहम-
स्मीति सुप्ता इव समास्थिता ॥ हृतं दक्षिणपार्श्वस्थं तदा तैः
सर्वभूषणम् ॥ ४४ ॥ तदिदं वामभागस्थं भक्त्या निखिल-
भूषणम् ॥ प्रदातुकामा तेभ्योहं निद्रापरवशा इव ॥ ४५ ॥ भागेन द-
क्षिणेनाशु लुठंती ह्यभवं तदा ॥ मां प्रबुद्धामिति ज्ञात्वा कारणेनैव तेन
ते ॥४६॥ पलायिता यद्युभीताः मा ते भूदत्र संशयः ॥ तच्छ्रुत्वा वचनं
तस्याः कुपितः कृष्णसर्पवत् ॥ ४७ ॥ व्याजहार शुभं वाक्यं भार्यां
हेमांगनां तदा ॥ स्वामिनः स्वं हरिष्यंति स्वातंत्र्यं किं तवास्ति हि
॥ ४८ ॥ स्वातंत्र्येण हतं सर्वं स्वातंत्र्यान्नरकं ध्रुवम् ॥ स्वातंत्र्याद्देहच-
लनं कृतं मूढे त्वाया तदा ॥४९॥ हित्वा समस्ताभरणं तेन ते वैष्णवा

गताः ॥ यत्तदाभरणं व्यर्थंतवांगे भूषितं ध्रुवम् ॥ ५० ॥ वैष्णवांगीकृतं सर्वं भूषणं सफलं भवेत् ॥ इत्येवमनुशास्यार्यस्तां तत्त्ववचनैस्तदा ॥ ५१ ॥ गुरुपादांबुजं ध्यायन् निद्रां लेभे महायशाः ॥ वैष्णवाः सर्ववृत्तांतं तच्छ्रुत्वा तत्रसंभवम् ॥ ५२ ॥ गुरुपादांबुजं प्राप्य यतींद्राय न्यवेदयन् ॥ तन्निशम्य यतिश्रेष्ठस्तैरेवोदीरितं वचः ॥ ५३ ॥ संप्रहृष्टस्ततः सर्वान्वैष्णवानिदमब्रवीत ॥ वस्त्रखंडापहरणं केनचित्कुटिलात्मना ॥ ५४ ॥ कृतं तदपि चाज्ञाना-द्यूयं वैष्णवपुंगवाः ॥ अवाच्यानि प्रभाषंतो वचांसि कुटिलाशयाः ॥ ५५ ॥ सुमहाघोरसंग्रामं कृतवंतः किल स्फुटम् ॥ एतत्कार्येण तस्यासीन्न किंचिच्चित्तवैकृतम् ॥५६॥ तस्या अपि विशेषेण तस्मा च्चित्तं सुनिर्मलम् ॥ युष्माभिरेव संदृष्टं ज्ञानमप्रतिमं तयोः ॥५७॥ न जातेः कारणं लोके गुणाः कल्याणहेतवः ॥ एवं बहुविधं तेभ्यः शास्त्रार्थमुपदिष्टवान् ॥ ५८ ॥ तान्निशम्याथ ते सर्वे बभूवुर्लज्जिता भृशम् ॥ प्रभातायां तु शर्वर्यां तस्यां लक्ष्मणदेशिकः ॥५९॥ आनयित्वा धनुर्दासं वृत्तांतं तन्निवेद्य सः॥ भूषणानि ददौ तस्मै मुदा तानि महायशाः ॥ ६० ॥ परतंत्रः स तत्सर्वं प्रतिगृह्याज्ञया गुरोः ॥ नित्यकैंकर्यनिरतस्तस्थौ तत्रैव सर्वदा ॥ ६१ ॥ एवं बहुविधं तस्य धनुर्दासस्य विद्यते ॥ विचित्रं तच्चरित्रं तु केन वर्णयितुं क्षमम् ॥६२॥ यतिक्षोणीनाथः कनकतटिनीमज्जनसुखाद्यहःकृत्यं कृत्वा करधृतधनुर्दास असकृत् ॥ असूयाग्रस्तानामपि विशदयंस्तच्छुभगुणान् धनुर्दासं व्यासाद्यधिकृतमतिं स व्यतनुत ॥ ६३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे धनुर्दासहेमांगनयोर्गुणकृतोत्कर्षप्रकटनं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥

---

## द्विचत्वारिंशोऽध्यायः ।

मारणेराख्यपूर्णस्य महापूर्णो महायशाः ॥ ब्रह्ममेधेन संस्कारं चकार गुरुशासनात् ॥१॥ तच्छ्रुत्वा वैष्णवाः सर्वे निनिंदुः पूर्णदेशिक-

म् ॥ शूद्रसंस्कारकारीति तच्छ्रुश्रषणकृत्सदा ॥ २ ॥ ब्राह्मणेषु कथं योग्यो वर्णधर्मव्यतिक्रमः ॥ अत्तुलायी ततः श्रुत्वा संप्राप्तं दुर्यशः पितुः ॥ ३ ॥ ततोधिकतमं सम्यग्रंगिण्यापाद्य दुर्यशः ॥ सम्यक्छ्रीपाणियोगींद्रभक्षणाद्ब्रह्मणीश्वरे ॥ ४ ॥ तीर्थप्रसादग्रहणं वंदनं च ततो हरेः ॥ नैव कर्त्तव्यमित्येवं वैष्णवानाह निर्भया ॥ ५ ॥ श्रीपरांकुशपादाभ्यां शप्ता हरिपरायणा ॥ गुरुशुश्रूषणरता सा तस्थौ पितुरंतिके ॥ ६ ॥ तच्छ्रुत्वा लक्ष्मणाचार्यो देशिकं प्राप्य सत्वरम् ॥ पूर्णार्यं प्रणिपत्याह वचस्सानुनयं तदा ॥ ७ ॥ मयि कुर्वंति संस्कारान्वियुक्तानिमाञ् जनान् ॥ कथं च तेन मार्गेण वर्णधर्मविरोधिना ॥ ८ ॥ भवानपोह्य तन्मार्गं मार्गांतरमुपाश्रितः ॥ तच्छ्रुत्वा तमुवाचेदं पूर्णार्यो यतिपुंगवम् ॥ ९ ॥ सामान्यधर्मं लोकेषु प्रवर्त्तयितुमादरात् ॥ इक्ष्वाकुवंशसंभूताद्राघवात्किमहं महान् ॥ १० ॥ अयं पूर्णो निकृष्टः किं गृध्रराजाज्जटायुषः ॥ सामान्यधर्मनिरताद्धर्मपुत्रादहं महान् ॥ ११ ॥ किमयं विदुरात्पूर्णो निकृष्टः किं यतीश्वर ॥ न शूद्रा भगवद्भक्तास्ते वै भागवता इति ॥ १२ ॥ न कर्मबंधनं जन्म वैष्णवानां च विद्यते ॥ स शूद्रो नैव शूद्रः स्यादिति श्रुत्यर्थमेव च ॥ १३ ॥ प्रतिगृह्य गुरोर्वाक्यं संतुष्टोभूद्यतीश्वरः ॥ ततः कदाचिद्योगींद्रः कंचिन्मूकं प्रगृह्य च ॥ १४ ॥ बद्ध्वा कपाटं सुदृढं गृहांते संप्रवेश्य तम् ॥ स्पृष्ट्वा स्वदेहं मूकाय प्रदर्श्योवाच संज्ञया ॥ १५ ॥ इममेव हि जानीहि शरणं गुरुविग्रहम् ॥ तदेव रक्षकमिति मूकः सम्यगमन्यत ॥ १६ ॥ कपाटरंध्रमार्गेण कूरनाथो विलोक्य तत् ॥ अत्याश्चर्ययुतो धीमान् दुःखितो वाक्यमब्रवीत् ॥ १७ ॥ कुले महति संजातः षट्शास्त्राण्यप्यधीतवान् ॥ अहं स्यां यदि मूको वै मह्यं दास्यति योगिराट् ॥ १८ ॥ इदं रहस्यमित्युक्त्वा मोहितोभून्महामतिः॥यतींद्रः संशयं तेषां हृदिस्थमपि नोदयन्॥१९॥

कूरेशादिकशिष्यैस्तु गत्वा श्रीरंगधामतः ॥ गोष्ठीपुरेंतःसदने दृढबद्धकपाटके ॥ २० ॥ ध्यायंतं स्वगुरुं धीरं गोष्ठीपूर्णं विलोक्य तम् ॥ यतींद्रः प्रणिपत्याह बद्धांजलिपुटस्तदा ॥ २१ ॥ को मंत्रः किं च ते ध्यानं ब्रूहि मे गुरुपुंगव ॥ एवं ब्रुवति योगींद्रे गोष्ठीपूर्णोऽब्रवीदिदम् ॥ २२ ॥ जपतो यामुनार्यस्य कावेर्यामघमर्षणम् ॥ कूर्मपृष्ठमिवाभाति पृष्ठं तस्य यतीश्वर ॥ २३ ॥ तदेव हि मम ध्यानं मंत्रो यामुननाम च ॥ तस्माद्गुरुशरीरं च ध्येयं जप्यं च नाम तत ॥ २४ ॥ बालमूकजडांधाश्च पंगवो बधिरास्तथा ॥ सदाचार्य्येण संदृष्टा गमिष्यंति परां गतिम् ॥ २५ ॥ ध्यानमूलं गुरोर्मूर्त्तिः पूजामूलं गुरोः पदम् ॥ मंत्रमूलं गुरोर्नाम मोक्षमूलं गुरोः कृपा ॥२६॥ इत्युक्तेन प्रकारेण बालमूकजडादिकान् ॥ सर्वान्संशयनिर्मुक्तान्कुर्वन् लक्ष्मणदेशिकः ॥ २७ ॥ कूरेशदाशरथ्यादिशिष्येभ्यः प्रतिपादयन् ॥ श्रीभाष्यार्थं रंगधाम्नि न्यवसत्स महायशाः ॥ २८ ॥ जप्यं नाम गुरोर्न चान्यदनिशं स्मर्य्यं च तद्वै वपुस्तद्वत्सोयमुपास्य नित्यवसतौ हेतुर्गुरुः सर्वथा ॥ इत्याद्यर्थचयं यतिक्षितिपतिः स्वस्वाश्रितानां मुदा गोष्ठीपूर्णसमीरितं प्रवितरन् रंगे विभात्यन्वहम् ॥ २९ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे गुरोर्मोक्षोपायत्वप्रकाशनं नाम द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

---

## त्रिचत्वारिंशोऽध्यायः ।

ततो रंगेश्वरः श्रीमान् यतींद्रे लोकरक्षके ॥ निवृत्तलक्ष्मीकलहो जगन्मात्रा जगत्पतिः ॥१॥ निवृत्तलोकव्यापारो रममाणोनिशं तया ॥ सुखं सुष्वाप भगवान्कंचित्कालं जगत्प्रभुः ॥२॥ तस्मादवाप्तसकलकामः श्रीवल्लभस्तदा ॥ आत्मभारं विनिक्षिप्य दक्षे पुत्रे पिता यथा ॥३॥ तं पूर्णकामं विदधे यतींद्रः श्रीसखं तथा ॥ लोकसंरक्षणेनाथ सुपुत्रः पितरं यथा ॥ ४ ॥ तदंतरं समालभ्य यतींद्रो लोकरक्षकः ॥ मंत्ररत्न-

धनं सम्यगतिगोप्यं च मुक्तिदम् ॥ ५ ॥ कृपया सर्वलोकानां भूरिदा-
नं तदाकरोत् ॥ चतुःसप्ततिपीठस्था देशिका सुमहौजसः ॥ ६ ॥
तेषां शिष्याश्च तच्छिष्याः प्रशिष्याश्चापरे तथा ॥ यतींद्रशासनात्सर्वे
गत्वा दशादिशोंजसा ॥७॥ बालमूकजडांधेभ्यो जनेभ्यो मंत्रमुत्तमम् ॥
रामानुजाख्यमनघमतिगोप्यं सुखप्रदम् ॥ ८ ॥ सर्वेभ्यश्चोपदिश्याशु
मुक्तिदं सुलभं महान् ॥ श्रीवैष्णवमयं चक्रुर्जगत्सर्वं तदांजसा ॥ ९ ॥
दर्शनस्थापकेत्यंतं विष्णोः परमवैदिके ॥ विद्यमाने यतिश्रेष्ठे सर्वं
विष्णुमयं जगत् ॥ १० ॥ इति यन्नैगमं वाक्यं तत्सत्यमभवत्तदा ॥
तैरेवं शिक्षिताः सर्वे ब्राह्मणा वेदपारगाः ॥११॥ सर्वधर्मरताः शांता
वेदांतद्वयपारगाः ॥ कृत्वा सर्वाणि कर्माणि कैंकर्य्यविधिना तथा
॥ १२ ॥ फलसंघपरित्यागाद्ययुर्विष्णोः परं पदम् ॥ एवं हि क्षत्रिया
वैश्याः स्त्रियः शूद्रास्तथेतराः ॥ १३ ॥ स्वधर्मनिष्ठास्ते सर्वे द्राविडा-
म्नायपारगाः ॥ श्रीरामानुजसंबंधाद्ययुर्विष्णोः परं पदम् ॥ १४ ॥
उद्धृत्यनरकात्सर्वान्सहसा स्वकुलोद्भवान् ॥ नृत्यंति पितरः सर्वे प्रनृ-
त्यंति पितामहाः ॥ १५ ॥ वैष्णवो नः कुले जातः स नः संतारयिष्य-
ति ॥ इत्युक्तेन प्रकारेण पितृलोकनिवासिनः ॥ १६ ॥ तेनैव हेतुना
सर्वे ह्यगमन्वैष्णवं पदम् ॥ संप्रशासाति धर्मेण राज्यं रुक्मांगदे पुरा
॥ १७ ॥ एकादशीव्रतेनैव निरस्ताखिलकल्मषाः ॥ वैकुंठमगमन्सर्वे
श्वेतद्वीपं यथा जनाः ॥१८॥ तथैव लक्ष्मणार्यस्य संबंधेनैव मानवाः॥
प्रपत्तिधर्मनिरताः सर्वे श्रीवैष्णवोत्तमाः ॥ १९ ॥ विरजोत्तरतीर-
स्थं तद्विष्णोः परमं पदम् ॥ अवापुरंजसा धीराः कुलकोटिसमावृताः
॥ २० ॥ भूम्यां रामानुजेत्यंतवैभवे लोकदेशिके ॥ विद्यमाने यतिश्रेष्ठे
सर्वलोकैकरक्षके ॥ २१ ॥कलिर्नष्टोभवच्छीघ्रं निर्व्यापारो यमस्तदा॥
अतो हि पोलिहेत्यस्य पद्यस्य महतस्तदा ॥ २२ ॥ अर्थो बभूव सु-
स्पष्टः सर्वेषामपि भूतले ॥ तं दृष्ट्वा भारतं वर्षं श्वेतद्वीपमिव स्थितम्
॥२३॥ महाश्चर्यसमायुक्तश्चिंताशोकपरायणः ॥ यमोभ्येत्यांजसा ब्र-

ह्मलोकामिंद्रादिभिः सह ॥ २४ ॥ सर्वं विज्ञापयामास ब्रह्मणे तद्विचेष्टितम् ॥ यमेन प्रार्थितः सम्यग्ब्रह्मा त्रिभुवनेश्वरः ॥ २५ ॥ ईशानादिस्तुतो धीमान् रंगक्षेत्रं ययौ जवात् ॥ निवृत्तलोकव्यापारं लक्ष्मीपरवशं हरिम् ॥ २६ ॥ सम्यक् प्रबोधयामासुः ब्रह्मेशानादयः सुराः ॥ ते सर्वे बंदिनो भूत्वा यमेन प्रार्थितास्तदा ॥ २७ ॥ ततः प्रबोधितो देवैर्भगवान् भक्तवत्सलः ॥ तदंगीकृत्य देवानां वचनं संमतं परम् ॥ २८ ॥ यतींद्राद्भुतसामर्थ्यं दर्शनौत्सुक्यहेतुना ॥ सविस्मयो जगत्सर्वमपश्यत्पद्मलोचनः ॥२९॥ लक्ष्मणार्यस्य नैपुण्यादेकरूपमिव स्थितम् ॥ शुद्धसत्त्वमयं शुद्धं विभूतिद्वयमीश्वरः ॥ ३० ॥ विलोक्य विस्मयाविष्टो मनस्येवमचिंतयत् ॥ लीलाभोगोपकरणं यद्विभूतिद्वयं हि मे ॥ ३१ ॥ अनादिसिद्धमेतस्य नैकरूप्यं कदाचन ॥ लीला विभूतिरेषा मे ह्यनित्या त्रिगुणात्मिका ॥ ३२ ॥ नित्या भोगविभूतिस्तु शुद्धसत्त्वमयी सदा ॥ इदानीं लक्ष्मणार्यस्य नैपुण्याद्यतिभूपतेः ॥ ३३ ॥ तदेकमेव भात्यद्य विभूतिद्वयमद्भुतम् ॥ शुद्धसत्त्वमयं ह्येतज्जगदद्य विभात्यहो ॥ ३४ ॥ शास्त्रं गुरूत्तमं सत्यमर्थं गूढतमं परम् ॥ उपदिश्याशु सर्वत्र भूरिदानं यतीश्वरः ॥ ३५ ॥ अपालयज्जगत्पूर्वं यन्मया चाप्यरक्षितम् ॥ मूकांधबधिरादीनां सर्वेषां चापि पापिनाम् ॥ ३६ ॥ स्वसम्बन्धबलेनैव प्रयच्छति परं पदम् ॥ स्वाधीनसर्वलोकोद्य लक्ष्मणार्यो जगद्गुरुः ॥ ३७ ॥ तदीया एव ते सर्वे भूम्यां सर्वत्र जंतवः ॥ पश्यंत्यद्य परे व्योम्नि नित्यमुक्ता यथामलाः ॥ ३८ ॥ महान् प्रमादो मे जातो विभूतिद्वयदानतः ॥ लक्ष्मीपरवशेनैव मद्विभूतिद्वयं मया ॥ ३९ ॥ तत्सन्निधौ च निर्बंधादनंताय महात्मने ॥ लोकसंरक्षणार्थाय सहसा दत्तमादरात् ॥ ४० ॥ योषित्परवशः सत्यं कार्याकार्ये न वेत्त्यहो ॥ न तु देवो मनुष्यो वा विपश्चिदपि चेश्वरः ॥ ४१ ॥ सर्वेषामपि देवानामतो योषित्सुदुर्जया ॥ मानवानां तु किमुत कामक्रोधरतात्म-

नाम् ॥ ४२ ॥ तथाप्येते हि मन्नाथशिष्या नैतादृशा भुवि ॥ अतस्तैरेव योगींद्रशिष्यैर्गुरुपरायणैः ॥ ४३ ॥ निर्जितं मत्पदं नित्यं योगिनामपि दुर्गमम् ॥ अत्यन्तदूरं यद्ध्यातुं ब्रह्मेशसनकादिभिः ॥ ४४ ॥ तत्पदं मनुजाः सर्वे सुकरोपायतोंजसा ॥ गच्छंति सांप्रतं शिष्या भूत्वा लक्ष्मणयोगिनः ॥ ४५ ॥ ममाप्येतन्महाश्चर्य्यं जनयत्यद्य मायिनः ॥ अहो हि तस्य माहात्म्यं केन वर्णयितुं क्षमम् ॥ ४६ ॥ एष श्रीमाञ्जितारातिर्महाँल्लोकैकदेशिकः ॥ निर्व्यापारं हि मां सत्यं करिष्यत्याशु निश्चितम् ॥ ४७ ॥ सर्वे संबंधिनस्तस्य मन्नाथस्य महात्मनः ॥ आचार्यसेवैकरताः कामक्रोधादिवर्जिताः ॥ ४८ ॥ द्राविडाम्नायनिरतास्तत्त्वज्ञास्समदर्शिनः ॥ अर्थपंचकतत्त्वज्ञाः पंचसंस्कारसंस्कृताः ॥ ४९ ॥ आकारत्रयसंपन्ना महाभागवताः स्मृताः ॥ अतस्तैरेव सहसा निर्जितं मत्परं पदम् ॥ ५० ॥ इदानीं लक्ष्मणाचार्यसंबंधरहितो जनः ॥ न कश्चिद्दृश्यते लोके सेतुशीताचलांतरे ॥ ५१ ॥ दिनैः कतिपयैः शीघ्रं यतींद्रेण महात्मना ॥ लीलाविभूतिरास्माकी तदा नष्टा भविष्यति ॥ ५२ ॥ निर्व्यापारो भविष्यामि तेनाहं नात्र संशयः ॥ एवं संचिन्त्य भगवाँल्लीलैकरतिरीश्वरः ॥ ५३ ॥ भगवद्द्वेषिणं कंचिच्चोलराजं महाबलम् ॥ स्वलीलाहेतुभूतं च जनयामास रंगराट् ॥ ५४ ॥ हिरण्यकहिरण्याक्षरावणादीन्यथासुरान् ॥ धर्मविध्वंसनार्थाय कृमिकंठाभिधं नृपम् ॥ ॥ ५५ ॥ एवं भूम्यां समुत्पाद्य मायी विश्वसृगीश्वरः ॥ अजानान इवातिष्ठत्किंचिदप्यखिलेश्वरः ॥ ५६ ॥ रममाणः श्रिया सार्द्धं रंगेशः प्रियया तदा ॥ अनुज्ञातास्ततस्तेन संतुष्टाः सकलास्तदा ॥ ५७ ॥ ब्रह्मेशानादयो देवाः स्वान्स्वाँल्लोकान्प्रपेदिरे ॥ अतिगुह्यतमं चार्थं ये शृण्वंति पठंति च ॥ ते सर्वे पापनिर्मुक्ता भविष्यंत्याशु वैष्णवाः ॥ ५८ ॥ क्षोणीमंडलमीक्ष्य संयमिवरः श्रीवैष्णवत्वाश्रयं

घोषव्रातवशीकृतस्वनगरं चालोक्य कालो विधिः ॥ प्राप्योक्त्वा स्ववृत्तिं समेत्य विधिना साकं रमेशं ययौ स्वव्यापारमुदीर्य तत्करुणया मित्रं स चोलाधिपम् ॥ ५९ ॥ प्राप्ते संयमिपुंगवेन जगति प्राणिप्रवाहे तदा याते वैष्णवतां परं निबिडतां मार्गैश्चिरादौ गते ॥ प्रीतो दण्डधरार्थिताब्जभवनाद्याकांक्षितार्थप्रदो भूत्वा तं क्रिमिकंधरं यमसखं श्रीशस्तदा सृष्टवान् ॥ ६० ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे क्रिमिकंठचोलराजनिर्माणहेतुकथनं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

---

## चतुश्चत्वारिंशोऽध्यायः ।

अथाभूच्चोलभूपालश्चित्रकूटे महाबलः ॥ क्रिमिकंठ इति ख्यातो दक्षिणाशामहीपतिः ॥ १ ॥ दुःशीलो नैगमान् धर्मांश्च शैवधर्मपरान् हि तान् ॥ इति मत्वा शैवधर्मनिरतो विष्णुदूषकः ॥ २ ॥ पुरोधसं पुरस्कृत्य वादयामास वैदिकान् ॥ तस्य बुद्धिः समुत्पन्ना क्रिमिकंठस्य दुर्मतेः॥३॥स्वदेशस्थैर्विपश्चिद्भिः कर्तव्यं लेखनं बलात् ॥ शिवात्परतरं नास्तीत्येवमात्मविनाशके ॥ ४ ॥ केचित्तस्याज्ञया चक्रुर्लेखनं विबुधा जनाः ॥ अपेक्षितगृहक्षेत्रलोभेनान्ये विपश्चितः ॥ ५ ॥ केचित्पलायितास्त्यक्त्वा गृहक्षेत्रादिकान् पशून् ॥ तत्रैको वैष्णवः कश्चिन्न लिलेखेदमब्रवीत् ॥ ६ ॥ रामानुजयतिः ख्यात इति रंगे समास्थितः ॥ तस्य शिष्यः स कूरेशो विप्रो वेदविदां वरः ॥ ७ ॥ तस्य कूरेश्वरस्यासीच्छिष्यः कश्चिद्द्विजोत्तमः ॥ प्रसिद्धः सर्वलोकेषु चतुर्ग्रामाधिपो महान् ॥ ८ ॥ मंत्रिश्रेष्ठोभवत्तस्य नृपतेः स द्विजो महान् ॥ तं विलोक्य स राजानमिदं वचनमब्रवीत् ॥ ९ ॥ लिखितेन किमेतेन प्राकृतैर्विविधैर्नृप ॥ यौ यतीश्वरकूरेशौ विपश्चिद्वैष्णवोत्तमौ ॥ १० ॥ तौ लिखेतां यदि तदा सफलस्ते मनोरथः॥तथा चेल्लिखिलं ताभ्यां त्रैलोक्यलिखितं भवेत्॥११॥

प्रतिगृह्य वचस्तस्य चतुर्ग्रामाधिपस्य सः ॥ तयोरानयनार्थाय रंगक्षेत्रं महाबलः ॥ १२ ॥ स राजा सत्वरं दूतान् प्रेषयामास संमतान् ॥ दूतास्ते रंगिणः क्षेत्रं संप्राप्य त्वरयान्विताः ॥ १३ ॥ क्व मन्नाथः क्व मन्नाथ इति तन्मठमागताः ॥ यतींद्रमज्जनार्थाय जलकुंभधरस्य च ॥ १४ ॥ श्रीवत्सचिह्नमिश्रस्य कर्णे कश्चिद्द्विजर्षभः ॥ सर्वं निवेदयामास तद्वृत्तांतं रहस्तदा ॥ १५ ॥ मन्नाथस्याशु कूरेशस्त्रिदंडं च कमंडलुम् ॥ काषायमंबरं धृत्वा तस्मै नोक्त्वा विनिर्गतः ॥ १६ ॥ पूर्णाचार्यः स कूरेशमनुयातो जवात्तदा ॥ आचख्यौ गुरवे वृत्तं सर्वं दाशरथिस्तदा ॥ १७ ॥ एवं चेत्कूरनाथस्य श्वेतवस्त्रं समानय ॥ इत्युक्त्वा परिधायाशु श्वेतवस्त्रं यतीश्वरः ॥ १८ ॥ पूर्णार्यकूरनाथाभ्यां कुर्वन्नाशीर्वचः स्थितः ॥ अत्र स्थातुमयुक्तं ते शिष्यैरेवं प्रभाषितः ॥१९ ॥ प्रतीचीं लक्ष्मणाचार्यः प्रतस्थे रंगशासनात्॥ अनुगच्छंति दूतास्ते यतिराजं समुद्यताः ॥ २० ॥ इति शिष्यैरुच्यमानः पाणिभ्यां वालुकां मुदा ॥ आदाय गाथामेकां च पठित्वा नियतः शुचिः ॥ २१ ॥ अवाकिरध्वं तन्मार्ग इत्यदाच्छिष्यपाणिषु ॥ मंत्रिता गुरुणा दत्तास्तास्समादाय वालुकाः ॥ २२ ॥ अवाकिरंस्ततः शिष्यास्तस्मिन् वर्त्मनि सत्वरम् ॥ ते राजदूतास्तत्प्रांतं प्राप्य गंतुं ततः परम् ॥ २३ ॥ अशक्ता वैष्णवैस्तैस्तु मंत्रवादाः कृता इति ॥ वंदतः स्वपुरं याताः प्रत्यावृत्य तदंतिकम् ॥२४॥ तन्मार्गे षडहोरात्रं निराहारो यतीश्वरः ॥ पीडितो वातवर्षाभ्यां षष्ठेह्नि निशि कानने ॥ २५ ॥ अभ्यासे पर्वतस्याग्निं ज्वलंतं वीक्ष्य विस्मितः ॥ तेनानुमीय पुरुषांस्तत्र शिष्यैः समागतः॥२६॥ तत्रत्यान्पुरुषान्सर्वें यतिराजादयस्तदा ॥ क्व मार्ग इति पप्रच्छुः शीतार्ता महतो रवात् ॥ २७ ॥ मंचस्थाः पुरुषाः श्रुत्वा रवं तेषां महात्मनाम् ॥ ब्राह्मणार्त्तरवं मत्वा तत्रैवागत्य सत्वरम् ॥ २८ ॥ आनीय वैष्णवान् सर्वान् संचाभ्याशे कृतादराः ॥ अग्निं प्रज्वाल्य सहसा

तेषां शीतापनोदने ॥ २९ ॥ दत्त्वा वस्त्राणि शुभ्राणि यथाशक्त्याभ्यपूजयन् ॥ पप्रच्छुरथ ते सर्वे शीतार्तान्वैष्णवानिदम् ॥ ३० ॥ कस्माद्देशाद्द्विजा यूयं किमर्थं वनमागताः ॥ तच्छ्रुत्वामिदधुश्चेदं वैष्णवा वनचारिणः॥३१॥ केन चित्कारणेनाद्य श्रीरंगाद्वनमागताः ॥ तदाकर्ण्याब्रुवन् वाक्यं वैष्णवान्वनवासिनः ॥ ३२ ॥ रंगस्थले लक्ष्मणार्य्यः किं सुखेनाद्य वर्तते ॥ वैष्णवा ऊचुः॥ लक्ष्मणार्य्यः कथं ज्ञातो भवद्भिर्वनचारिभिः ॥३३॥ इति तद्वाक्यमाकर्ण्य तानूचुर्वनचारिणः॥नदीपूरे समायातं शवं चक्रादिचिह्नितम् ॥ ३४ ॥दृष्ट्वा संस्कारमकरोद्यः पुरा कृपया महान् ॥ हस्त्यद्रिनायको विष्णुर्यमाह वरदः पुरा ॥ ३५ ॥ देशस्य त्वं समीचीनः समीचीनो भवान्मम ॥ समीचीनगुरोस्तस्य शिष्याः सर्वे वयं द्विजाः ॥३६॥ हितोपदेशसमये गुरुरेवं जगाद नः ॥ युष्माकं परमाचार्यो मन्नाथस्तत्पदांबुजम् ॥ ३७ ॥ जानीध्वं रक्षकमिति तस्मादन्यत्र विद्यते ॥ ततस्तद्दर्शयांचक्रुर्व्याधेभ्यो वैष्णवास्तदा ॥ ३८ ॥ अयमेव हि मन्नाथ इति योगींद्रमादरात् ॥ ते वैष्णवानां वचनं व्याधाः श्रुत्वा मुदान्विताः ॥ पतित्वा पादयोस्तस्य यतींद्रस्य महात्मनः ॥ ३९॥ प्रणम्य बहुधा भक्त्या तेन व्याकुलतां गताः ॥ कोरदूषादिधान्यानि क्षौद्राणि च यथार्हतः ॥ ४० ॥ अर्पयामासुरार्याय भूरीणि च महात्मने॥ नल्लानाख्यः कालमेघो वनमध्येप्यवर्षत ॥ ४१ ॥ इति लक्ष्मणयोगींद्रः संतोषं परमं ययौ ॥ स भक्त्यार्पितानि तान्याशु क्रम्यग् भुक्त्वा यथार्हतः ॥ ४२ ॥ तत्रैव सानुगो रात्रौ सुखं सुष्वाप योगिराट् ॥ ततः प्रभाते चोत्थाय कृतकर्मा यतीश्वरः ॥४३॥ एकं स्वशिष्यं संघे च व्याधेष्वेकं जनं तदा ॥ प्राहिणोन्मेलयित्वाशु श्रीरंगं प्रति सादरम् ॥ ४४ ॥ जिज्ञासया तयोस्तस्य वृत्तस्य गुरुशिष्ययोः॥चत्वारिंशच्छिष्यजनास्तत्र पंचाधिकास्तथा ॥ ४५ ॥ यतिराजं महात्मानमन्वयुर्देशिकप्रियाः ॥ गिरेः पश्चिमदिग्भागे तस्य गव्यूतिदूरतः ॥ ४६ ॥ तत्रत्याः शबराः केचि-

त्स्वकीयं शबरालयम् ॥ केचिंन्निन्युर्लक्ष्मणार्यं सानुगं वैष्णवप्रियाः ॥ ४७ ॥ तत्र लक्ष्मणयोगींद्रो गृहे व्याधस्य कस्यचित् ॥ तस्थौ श्रीवैष्णवैः साकं मुहूर्त्तं वैष्णवस्य सः ॥ ४८ ॥ कृत्वा ते मृगयां सर्वे ग्रामं व्याधाः समागताः ॥ निराहाराश्च वर्त्तंते वैष्णवाः सदनेधुना ॥ ४९ ॥ अतोस्माकं कथं भोक्तुं युक्तमित्येवमादरात् ॥ आलोच्य तेखिला व्याधाः प्रणिपत्य यतीश्वरम् ॥ ५० ॥ तस्योपकंठे कस्मिँश्चिद्ग्रामे विप्रगृहे तदा ॥ सव्यंजनांश्च संप्रेष्य तंडुलांस्तान् द्विजोत्तमान् ॥ ५१ ॥ निनाय तद्गृहं सर्वान्सुखं भुंजंतु वैष्णवाः ॥ इत्युक्त्वा वैष्णवैर्व्याधाः कृतानुज्ञा गृहं गताः ॥ ५२ ॥ चैलाचलांबासदनं समासाद्य स योगिराट् ॥ सप्तमे दिवसे सायं सुखं तस्थौ व्यपेतभीः ॥ ५३ ॥ व्याजेन क्रिमिकंधरस्य सहसा रंगं विहायोत्तमं देशं पश्चिममाससाद भगवाल्लँोकावनायांतरम् ॥ अंगीकृत्य तदर्चनं यतिपतिर्व्याधैः कृतं भक्तितो भेजे सप्तमवासरे विधिवशाच्चेलांचलांबागृहम् ॥ ५४ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे क्रिमिकंठव्याजेन पश्चिमदेशगमने समीचीनदेशिकशिष्यकृतचेलांचलांबानगरप्रवेशो नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

---

## पञ्चचत्वारिंशोऽध्यायः ।

ततः श्रीवैष्णवी साध्वी संतुष्टा वैष्णवागमात् ॥ तान् सर्वान्पूजयामास पाद्यार्घ्यासनवंदनैः ॥ १ ॥ सुखोपविष्टांस्तान्सर्वान् वैष्णवी प्राह वैष्णवान् ॥ भोजनं वः प्रदास्यामि सर्वेषां षड्रसैर्युतम् ॥ २ ॥ भुज्यतां मद्गृहे सम्यक् स्ववेश्मनि यथासुखम् ॥ तयैवमुक्तास्ते सर्वे वैष्णवीं तां वचोब्रुवन् ॥ ३ ॥ परितृप्ता वयं सर्वे तव सूनृतया गिरा ॥ मास्तु भोजनमस्माकं संप्रत्यंब दयापरे ॥ ४ ॥ चेलांचलांबा तच्छ्रुत्वा तानुवाच कृतांजलिः ॥ सन्देहो भवतां मास्तु शिष्याहं यतिभूपतेः ॥ ५ ॥ लक्ष्मणार्यांघ्रिसंबन्धः प्राप्तः पूर्वं यदा मया ॥ श्रूयतामव-

धानेन तद्वक्ष्यामि पुरातनम् ॥ ६ ॥ अस्मिन् देशे द्वादशाब्दान् अनावृष्टिरभूत्पुरा ॥ तेनोद्विग्नाः प्रजाः सर्वाः संप्राप्ताः सकला दिशः ॥ ७ ॥ अहं स्वपतिना साकं रंगं प्रति गताभवम् ॥ तदा यतीश्वरो दृष्टो मया सौधोपरिस्थया ॥ ८ ॥ भिक्षाशनरतो नित्यं स सप्तसु च सद्मसु ॥ पुनश्च वैष्णवैः सर्वैर्वेदवेदांतपारगैः ॥ ९ ॥अन्यैश्च पृथिवी-पालैः सेव्यमानो महात्मभिः ॥ ततः कदाचित्सहसा तस्मात्सौधा-द्विनिर्गता ॥ १० ॥ भिक्षां संगृह्य गच्छन्तं संरुध्याहं समास्थिता ॥ निवारयसि मां बाले किमर्थमिति सोब्रवीत् ॥ ११ ॥ तेनैवमुक्ता योगींद्रं तमपृच्छमहं तदा ॥ त्वं तु भिक्षाशनरतो भगवन् वर्तसे सदा ॥ १२ ॥ राजाधिराजैर्विबुधैर्वेदवेदांगपारगैः ॥ भवांस्तु पूज्यते नित्यं सर्वैः श्रीरंगराडिव ॥ १३ ॥ को हेतुरस्य भगवन् ब्रूहि मे भक्तव-त्सल ॥मयैवमुक्तो मामाह लक्ष्मणार्यः स वैष्णवः ॥ १४ ॥ भगवद्वि-षयो मन्त्रो समीचीनो मयोदितः ॥ तेभ्यस्तस्मात्सदा वत्से ते सर्वे मां भजंति हि ॥ १५ ॥ तन्निशम्य वचः साहं लक्ष्मणार्यं तमब्रवम् ॥ स मंत्रो यतिराजार्य्य दास्यै मह्यं त्वयोच्यताम् ॥ १६ ॥ एवमुक्तो लक्ष्मणार्यो मया वैष्णवपुंगवाः ॥ मह्यं प्रोवाच तं मंत्रं कृपया देशि-कोत्तमः ॥ १७ ॥ ततोयं वर्तते देशः सर्वसस्यसमृद्धिमान् ॥ इति वृत्तांतमाकर्ण्य स्वदेशगमनोत्सुका ॥ १८ ॥ विस्मृतत्वेन मंत्रस्य तदा तस्य यतीश्वरम् ॥ प्रणिपत्याब्रवं वाक्यं तमहं गुरुपुंगवम् ॥ १९ ॥ उक्तो मंत्रस्त्वया पूर्वं स मया विस्मृतोधुना ॥ स्वदेशं प्रति गच्छामि भर्त्रा साकं यतीश्वर ॥२०॥ तं मंत्रमधुना दास्यै कृपयैवोपदिश्य मे ॥ भवतः पादुके दत्त्वा सम्यग् योगीश रक्ष माम् ॥२१॥ तदा यतीश्वरो मह्यं पूर्वं गुरुपरंपराम् ॥ द्वयं सम्यक् चोपदिश्य पादुके प्रददौ शुभे ॥२२॥हृष्टस्तदा यतिश्रेष्ठं कदा द्रक्ष्यामि तं गुरुम् ॥ इत्युक्त्वा साश्रुनयना बभूव गुरुतत्परा॥२३॥ततो यतींद्रः संचिन्त्य तद्वृत्तं हृदि हर्षितः॥पचेति

साध्वीमादिश्य वैष्णवानिदमब्रवीत् ॥२४॥ कथं करोति सा पाकं द्रष्ट व्यमवधानतः ॥ तद्भवद्भिस्ततश्चक्रुस्तथा वैष्णवपुंगवाः ॥ २५ ॥ स्नात्वा वस्त्रांतरं साध्वी धृत्वा नत्वा शुचिव्रता ॥ मन्नाथपादौ शरणमित्युच्चार्य्यैव सादरम्॥२६॥ पादुकाग्रे यतींद्रस्य धृत्वा देवगृहे तदा ॥ ध्यानुसंधानपरा जप्त्वा गुरुपरंपराम् ॥ २७ ॥ प्रक्षाल्य पादुके भक्त्या कृत्वा पूजां विधानतः ॥ गंधपुष्पादिभिर्द्रव्यैर्दृढं बद्धांजलिस्तदा ॥ २८ ॥ गुरुध्यानपरा साध्वी नैवेद्यं सम्यगर्पयत् ॥ ततः सा वैष्णवान् सर्वान्प्रणम्य मुदितानना ॥ २९ ॥ प्रक्षाल्य पादपद्मानि तेषां भक्तिसमन्विता ॥ प्रार्थयामास तान् सर्वान् भुज्यतामिति सादरम् ॥३०॥श्रुत्वा तत्सर्ववृत्तांतं शिष्येभ्यो यतिपुंगवः ॥ तस्याश्चेलांचलाबायाः संप्रहृष्टो दयानिधिः ॥ ३१ ॥ आनीयतामिति प्राह पादुके ते त्वयाधुना॥आकर्ण्य वचनं तस्य ह्यानयामास पादुके॥ आनीते पादुके दृष्ट्वा तया भक्त्या प्रपूजिते ॥ ३२ ॥ हृष्टस्तामेवमाहाथ शिष्यां लक्ष्मणदेशिकः॥ लक्ष्मणार्येण यो मंत्रः श्रीरंगे गदितस्तव ॥ ३३ ॥ एकांते सांप्रतं मह्यं स मन्त्रो नोच्यते यदि ॥ त्वया त्वत्सदने साध्वि भोक्तुं नेच्छंति वैष्णवाः ॥ ३४ ॥ कर्णे ब्रूहि ततोस्माकं तं मन्त्रं भगवत्प्रियम् ॥ ततो यतींद्रकर्णे सा वैष्णवी देशिकाज्ञया ॥३५॥ तं मन्त्रमब्रवीत्साध्वी तेषामाराधनेच्छया ॥ ततो यतींद्रः संतुष्टस्तामाह भगवत्प्रियाम् ॥३६॥ तर्हि वैष्णवसंघेस्मिंस्तव मन्त्रप्रदो गुरुः ॥ वर्तते वा न वा शीघ्रमित्येवं दृश्यतां त्वया ॥ ३७ ॥ तथेति प्रतिगृह्याशु तद्वचो यतिभूपतेः ॥ वैष्णवी शिरसादाय दृष्ट्वा सर्वान् दृढव्रता ॥ ३८ ॥ यतिराजांतिकं गत्वा दृष्ट्वा तत्पादपंकजम् ॥ संतुष्टा सत्वरं प्राह वैष्णवान्प्रति सादरम् ॥ ३९ ॥ एतौ पादौ प्रकाशेते तदीयाविव सुंदरौ ॥ दंडकाषायराहित्यादेतस्य महतोधुना ॥ ४० ॥ यतींद्र इति निर्णेतुं तमिमं शक्यते कथम् ॥ ततोथ भगवान्प्राह संतुष्टस्तां दृढव्रताम् ॥४१॥ अहमेव हि मन्नाथः श्रीरंगादधुनागतः ॥ केन-

चित्कारणेनैव श्वेतवस्त्रधरोभवम् ॥ ४२ ॥ सा तस्य ज्ञातवृत्तांता पतित्वा पादयोस्तदा ॥ गुरुपादाब्जनिरता संतापमगमत्तराम् ॥४३॥ स तां दृष्ट्वा प्रहृष्टात्मा यतींद्रः सर्वसद्गुणान् ॥ तस्याः प्रमार्ज्य चाश्रूणि वैष्णवानिदमब्रवीत् ॥ ४४ ॥ दुर्योधनादिनृपतीन् हित्वा कृष्णो जगत्पतिः ॥ विदुरान्नानि बुभुजे शुचीनि गुणवंति च ॥ ४५ ॥ तस्मादत्यंतभोग्यत्वात् पावनत्वादिसद्गुणैः ॥ भोक्तुं श्रीवैष्णवानां तु न्यूनता नास्ति निश्चितम् ॥ ४६ ॥ ततः श्रीवैष्णवाः सर्वे तद्गृहे देशिकाज्ञया ॥ भुक्त्वा भक्त्यार्पितान्नानि निद्रां प्रापुर्यथासुखम् ॥ ४७ ॥ तेषामुच्छिष्टपात्रान्नं भक्त्या संगृह्य वैष्णवी ॥ स्वभर्तृज्ञानसिद्ध्यर्थं तदेकीकृत्य चोदनम् ॥ ४८ ॥ तमानीय च भर्तारं सौधोपरि समास्थितम् ॥ ब्राह्मणं भोजयामास भक्ष्यभोज्यपुरःसरम् ॥ ४९ ॥ सा शेते भर्तृसान्निध्ये पृथक् चाकृतभोजना ॥ तामाह ब्राह्मणो भार्यां निराहारामिदं वचः ॥ ५० ॥ भूमौ शेषे किमर्थं त्वं निराहाराधुनाबले ॥ कारणं वद कल्याणि संशयो जायते महान् ॥ ५१ ॥ इत्यब्रवीत्ततः साध्वी भर्तारं भगवत्प्रिया ॥ श्रीरंगाच्छिष्यसंघेन यतीशः संवृतो गुरुः ॥ ५२ ॥ केनचित्कारणेनाद्य सद्मास्माकमुपागतः ॥ मया संप्रार्थ्यमानोपि भोजनार्थं दृढव्रतः ॥ ५३ ॥ अवैष्णवत्वाद्भवतो गुरुर्मे समुपोषितः ॥ कथं भोक्ष्याम्यहं गेहे गुरौ मे समुपोषिते ॥ ५४ ॥ उक्तवत्यां ततस्तस्यां प्रोवाचेदं द्विजोत्तमः ॥ तस्माद्यतेर्गुरोः कार्यं किं कर्त्तव्यं मयाबले ॥ ५५ ॥ सा तद्वचनमाकर्ण्य भर्तारं मुदितानना ॥ इदं जगाद वचनं शुभे भर्तृहिते रता ॥ ५६ ॥ सुप्रातस्त्वं यतिश्रेष्ठं समाश्रय गुरुं मम ॥ करिष्यामि तथा साध्वि संशयोत्र न विद्यते ॥ ॥ ५७ ॥ इति तेन द्विजेनाथ बहवः शपथाः कृताः ॥ चेलांचलांबा संतुष्टा ततः साध्वी गुरुप्रिया ॥ ५८ ॥ भुक्त्वा यथेष्टं सा भर्तुस्तल्पे

शेते च पूर्ववत् ॥ प्रभातायां तु शर्वर्यां कृतकर्मा स भूसुरः ॥ ५९ ॥ गत्वा स हि यतिश्रेष्ठं प्रणम्य प्रांजलिः स्थितः ॥ तया संप्रार्थितस्तस्मै द्विजाय यतिपुंगवः ॥ ६० ॥ अकरोत्पंचसंस्कारान्सभार्याय कृतादरः ॥ श्रीरंगदासनामास्य दास्यनाम ददौ तदा ॥ ६१ ॥ श्रीरंगदासो योगींद्रं सभार्य्यः प्रणिपत्य तम् ॥ पूजयामास तान् सर्वान् वस्त्रैराभरणैर्द्विजान् ॥ ६२ ॥ स्थित्वा तत्र यातिश्रेष्ठः सुखं दिनचतुष्टयम् ॥ काषायवस्त्रं संपाद्य त्रिदंडं च कमंडलुम् ॥ ६३ ॥ निधाय वरदस्याग्रे तदा जग्राह पूर्ववत् ॥ ६४ ॥ श्रीरंगदासेन च लक्ष्मणार्यः संपूजितः सादरमार्यवर्यः ॥ सर्वाञ् जनान् ग्रामचरान्स्वशिष्याञ् चकार संपूर्णविलोकनेन ॥ ६५ ॥ विसृज्य रंगेशवियोगदुःखं चेलांचलांबादरणाद्यतींद्रः ॥ गतक्लमः शिष्यजनैः सुखेन तत्रैव तस्थौ कतिचिद्दिनानि ॥ ६६ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे चेलांचलाबाभर्त्तुः पंचसंस्कारसंपत्तिर्नाम पंचचत्वारिंशोऽध्यायः ॥ ४५ ॥

---

## षट्चत्वारिंशोऽध्यायः ।

ततस्संप्रेषितस्ताभ्यां दंपतिभ्यां यतीश्वरः ॥ शिष्यैः परिवृतो धीमान् प्रतस्थे पश्चिमां दिशम् ॥ १ ॥ तस्य पश्चिमदिग्भागे ग्रामस्याथ यतीश्वरः ॥ वह्निपुष्करिणीं गत्वा स्थित्वा तत्र दिनत्रयम् ॥ २ ॥ ततश्च मिथिलां गत्वा पुरीं लक्ष्मणदेशिकः ॥ कंचित्कालं स्थितस्तत्र शालग्राममथाययौ ॥ ३ ॥ मायावादितया तेषां तत्रत्या ये द्विजातयः ॥ रामानुजं यतिवरं नानर्चुर्वैष्णवोत्तमम् ॥ ४ ॥ तस्मिन्निमज्जतां तेषां दृष्ट्वा लक्ष्मणदेशिकः ॥ अनुग्रहार्थं प्रोवाच शिष्यं दाशरथिं तदा ॥५॥ ते सर्वे यत्र गृह्णंति तोयं ग्रामचरास्सदा ॥ पादौ प्रसार्य्य तत्र त्वं तटाके तिष्ठ सुव्रत ॥ ६ ॥ तथा कृतं तदा तेन गुरुभक्तेन धीमंता ॥ मुक्ताहंकारिणः सर्वे पादतीर्थप्रभावतः ॥ ७ ॥

अबला वृद्धवनिता यतिराजं समाश्रिताः ॥ ततो यतींद्रो ग्रामस्य तस्य चक्रे कृपानिधिः ॥ ८ ॥ शालग्रामाभिधं प्रीत्या विख्यातं सकलावनौ ॥ आंध्रपूर्णं विशेषेण कटाक्षित्वा यतीश्वरः ॥ ९ ॥ दर्शनार्थं चोपदिश्य पादच्छायामथ व्यधात् ॥ ततोथ वैष्णवैः सर्वैः सहसा यतिपुगवः ॥ १० ॥ आंध्रपूर्णेन सहितो नृसिंहक्षेत्रमागतः ॥ नारसिंहं परं दैवं प्रणम्य बहुधा मुदा ॥ ११ ॥ दिनानि कतिचित्तत्र चोषित्वा तदनंतरम् ॥ क्रिमिकंठवधार्थाय नृकंठीरवसन्निधौ ॥ १२ ॥ विदधे सुमहत्कार्यं शिष्यरक्षणहेतुकम् ॥ पाषंडो दुर्मतिः क्षुद्रः स चायं विष्णुदूषकः ॥ १३ ॥ संप्राप्य क्रिमिकंठत्वं तूर्णं चोलः प्रणश्यताम् ॥ इति चोलं समुद्दिश्य तत्र मंत्रविशारदः ॥१४॥ अभिचारं मंत्रवादं विदधे लोकरक्षकः ॥ ततोंतेवासिनं भक्तं ग्रामपूर्णं यतीश्वरः ॥ १५ ॥ द्रष्टुकामो ययौ शीघ्रं भक्तग्रामं महायशाः ॥ स भक्तग्रामपूर्णोथ निशम्यागमनं गुरोः ॥ १६ ॥ प्रत्युद्गम्य प्रहृष्टात्मा गृहमानीय सत्वरम ॥ यतींद्रं पूजयामास यथार्हं शिष्यसंवृतम् ॥ १७ ॥ स भक्तग्रामपूर्णेन पूजितो यतिपुंगवः ॥ कंचित्कालं सुखं तस्थौ भक्तग्रामे महायशाः ॥ १८ ॥ तदा विठ्ठलदेवाख्यस्तद्देशपृथिवीपतिः ॥ प्रशासयन् स्थितस्तस्य पुत्रीं रक्षोऽग्रहीत्तदा ॥ १९ ॥ स राजा दुःखितस्तेन मांत्रिकान् समुपाह्वयत् ॥ आगता बहवस्तत्र मांत्रिका राजशासनात् ॥ २० ॥ तस्या निर्मोचने शक्ता नाभवन् व्रीडिता ययुः ॥ दुष्टग्रहसमाक्रांतां प्रधावंतीं दिगंबराम् ॥ २१ ॥ दृष्ट्वा दुहितरं दीनां तन्माता दुःखिताभवत् ॥ सभक्तग्रामपूर्णार्यो वैष्णवो विदुषां वरः ॥ २२ ॥ उंछवृत्तिपरो धीरो यतिराजपदाश्रयः ॥ यतींद्राराधनार्थाय विठ्ठलेंद्रपुरं ययौ ॥ २३ ॥ तद्राजभवनं प्राप्य राजपत्नीं सुदुःखिताम् ॥ कृपया प्राह धर्मात्मा विलोक्येदं वचः शुभम् ॥ २४ ॥ किमर्थं शोचसे सुभ्रूर्वद दुःखस्य कारणम् ॥ तेनैवमुक्ता तत्सर्वं वृत्तं तस्मै न्यवेदयत् ॥ २५ ॥

स पूर्णः प्राह धर्मात्मा राजपत्नीं वचः शुभम् ॥ गुरुर्मे मंत्रकुशलो वर्तते यतिपुंगवः ॥२६॥ तेन दृष्टा यदि सुता तव सुश्रोणि योगिना ॥ दुष्टग्रहः स तां त्यक्त्वा बहुदूरं गमिष्यति ॥२७॥ इत्युक्त्वा कथयामास ब्रह्मराक्षसमोचनम् ॥ यतींद्रेण कृतं पूर्वं विस्तरेण महात्मना ॥ २८ ॥ तच्छुत्वा विस्मयाविष्टा राज्ञे सर्वं न्यवेदयत् ॥ स राजा तद्वचः श्रुत्वा तां भार्यामिदमब्रवीत् ॥२९॥ पिशाचं मोचयत्यस्याः यो मे पुत्र्याः स देशिकः ॥ तत्पादावधुनैवाथ संश्रयिष्ये न संशयः ॥ ३० ॥ भक्तपूर्णो यतींद्राय तत्सर्वं स न्यवेदयत् ॥ततः कदाचिद्बौद्धानां द्रव्यक्षणिकवादिनाम् ॥३१॥ गुरूणां भोजनं कर्तुं यतमानं महीपतिम् ॥ दृष्ट्वा प्रोवाच भर्त्तारं राजपत्नी शुचिव्रता ॥ ३२ ॥ आह्वानमात्रमेवाद्य नायांति गुरवो नृप ॥ अंगहीन इति त्वं तु नाह्वयस्व ततो गुरून् ॥ ३३ ॥ निवारितोपि बहुधा तयैवं भार्यया नृपः ॥ यथाहूता मया शीघ्रमायांत्येव हि देशिकाः ॥ ३४ ॥ इत्येवं हृदि निश्चित्य विठ्ठलेंद्रो गुरुप्रियः॥तेषामानयने दूतान्प्रेषयामास संमतान्॥३५॥ तान्दूतान्बौद्धगुरवो दृष्ट्वा प्रोचुरिदं वचः ॥ आक्रांतः किल वीर्येण दिल्लीशेन भवान्पुरा ॥३६॥ तदोत्सर्जनवेलायां राज्यानर्हत्वहेतुना ॥ अकरोदंगुलिच्छेदं भवतः किल भूपतेः॥३७॥ हीनांगस्य गृहे भोक्तुं गुरूणामुचितं कथम् ॥ इति तैर्गुरुभिश्चोक्तं दूता राज्ञे न्यवेदयन् ॥ तच्छुत्वा नृपतिः क्रुद्धस्तिरस्कृत्य गुरून् स्थितः ॥ ३८ ॥ तं विलोक्य स्वभर्त्तारं राजपत्नी वचोब्रवीत् ॥ कुतस्त्वं लक्ष्मणाचार्यमनाश्रित्याद्य वर्तसे॥३९॥ यद्याश्रितोसि योगींद्रं महत्फलमवाप्स्यसि ॥ स राजा चोदितः पत्न्या स्वसद्मनि यतीश्वरम् ॥ ४० ॥ आगच्छेति महाभक्त्या प्रार्थयामास देशिकम् ॥ इत्यथोवाच योगींद्रो न प्रवेक्ष्याम्यहं पुरीम् ॥ ४१ ॥ ते भक्तग्रामपूर्णादिवैष्णवाश्च तमब्रुवन् ॥ आनीतस्तु वशं राजा यदि लक्ष्मणदेशिक ॥ ४२ ॥ विष्णुदर्शननिर्वाहो महांस्तेन भविष्यति ॥ इत्येवं प्रार्थितः शिष्यैर्बहुधा यतिपुंगवः ॥४३ ॥प्रतस्थे

राजभवनं लीलामानुषविग्रहः ॥ स राजसैनिकैः सर्वैः प्रत्युद्गम्य यतीश्वरम् ॥ ४४ ॥ विधिवत्पूजयामास प्रतिष्ठाप्योन्नतासने ॥ पादतीर्थं पाययित्वा यतींद्रस्य तदा गुरोः ॥ ४५ ॥ राजपुत्र्याश्च शिरसि शिष्यैः संप्रोक्षणं कृतम् ॥ सा चित्तविभ्रमं तेन विहाय नृपतेः सुता ॥ ४६ ॥ परिधायांबरे रेजे पिशाचान्मोचिता तदा ॥ दुष्टग्रहेण निर्मुक्ता गगने रोहिणी यथा ॥ ४७ ॥ तां विलोक्य स भूपालः संप्रहृष्टतरां सुताम् ॥ प्रणामं विदधे सम्यग्गुरवे भुवि दंडवत् ॥४८॥राजपत्नी यतींद्राय सर्वपौरजनास्तथा॥सर्वेषां पञ्चसंस्कारान्सभार्यस्य महीपतेः॥४९॥सम्यक् चकार पौराणां कृपया चाशु योगिराट् ॥ विष्णुवर्द्धनदासाख्य इति नाम विधाय च॥५०॥तस्य प्रहृष्टो नृपतेस्तत्रैव न्यवसत्सुखम् ॥ ततोद्भुततरं श्रुत्वा तद्वृत्तांतं महोद्धताः॥५१॥बौद्धा दश सहस्राणि समागत्य यतीश्वरम् ॥ युगपत्प्राहुरत्युग्रं परिवार्य वचस्तदा ॥ ५२ ॥ वादेनास्मान्न निर्जित्य शिष्यं वैष्णवनामकम् ॥ स्ववशीकृत्य राजानं कथं गन्तासि कुत्र वै ॥ ५३ ॥ विद्वान्यदि भवानद्य तर्कवादं प्रदेहि नः॥इति तैर्भाषितो दृष्ट्वा यतींद्रः क्षपणायुतम् ॥ ५४ ॥ हृदि धैर्यपरो भूत्वा पश्यतां भीतवत्स्थितः ॥ द्विजिह्ववक्रसंक्रांतप्लववद्यातिभूपतिः ॥ ५५ ॥ किं करोमि हरे दैव क्व गच्छामि जगत्पते ॥ इत्येवं दीनया वाचा वदन् बौद्धांश्च मोहयन् ॥ ५६ ॥ मंडपे महति स्थित्वा प्रतिसीरासमावृते ॥ तदा फणीश्वरो भूत्वा सहस्रफणमंडितः ॥ ५७ ॥ एकेन क्षपणेनोक्तयुक्तेरेकस्य शीघ्रतः ॥ अयुतैर्युक्तिवचनैर्दत्त्वा प्रत्युत्तरं स्फुटम् ॥ ५८ ॥ जितवान् क्षपणान् सर्वान्क्षणेन यतिपुंगवः ॥ दिव्यशक्तिं यतींद्रस्य वीक्ष्य विस्मितचेतसः ॥ ५९ ॥ संतुष्टाः क्षपणाः केचित्तेषां लक्ष्मणदेशिकम् ॥ यतिराजं समाश्रित्य बभूवुर्वैष्णवास्तदा ॥ ६० ॥ केचित्पलायिताः केचिद्यतिराजेन शिक्षिताः ॥ ततः स्वां दिव्यशक्तिं तां शिष्येभ्यो यतिपुंगवः ॥ ६१ ॥ प्रकाशयामास तदा लोकानुग्रहकारणात् ॥ विष्णुवर्धनदा-

सश्च तां दृष्ट्वा विस्मयान्वितः ॥ ६२ ॥ प्रावण्यं सुमहत्प्राप यतिराजां-
घ्रिपंकजे॥ बौद्धान्विनिर्जित्य स दिव्यशक्त्या दत्त्वा मुदं शिष्यजनाय
राज्ञे ॥ अभ्यर्चितस्तत्र सुखेन तस्थौ दिगंतकीर्त्तिर्यतिसार्वभौमः
॥ ६३ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे बौद्धपराजयकथनं नाम
षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

## सप्तचत्वारिंशोऽध्यायः ।

भक्तग्रामे यतिश्रेष्ठः सर्वैः शिष्यैः समावृतः ॥ स भक्तग्रामपूर्णेन
तेन राज्ञा च संततम् ॥ १ ॥ पूजितः पालयन् सर्वाँल्लोकांस्तस्थौ
महायशाः ॥ आपादितश्वेतमृदो राहित्याद्रंगपट्टणात् ॥ २ ॥ व्याकु-
लात्मा तदा शेते शिष्यैः सह यतीश्वरः ॥ प्रणतार्तिहरस्तस्य यादवा-
चलनायकः ॥३॥ स्वप्ने प्रसन्नो भगवांस्तदा नारायणो हरिः ॥प्रोवाच
वचनं श्रीमान् यतिराजं जगद्गुरुम् ॥ ४ ॥ यादवाद्रौ श्वेतमृत्स्ना वर्तते
यतिपुंगव ॥ शीघ्रं तत्र समागच्छ मा विचारं कुरुष्व ह ॥ ५ ॥ तत्रा-
हमपि योगीश निवत्स्ये यादवाचले ॥ मामुद्धृत्य प्रतिष्ठाप्य मंदिरं
कारयाशु मे ॥ ६ ॥ ततो यतीश्वरः प्रातः स्वप्नादुत्थाय संभ्रमात् ॥
स्वप्नोक्तिं शिष्यसंघेभ्यो गदित्वा प्रीतिपूर्वकम् ॥ ७ ॥ विष्णुवर्द्धनमा-
हूय तस्मै सम्यङ् निवेद्य तत्॥ गमनाय मतिं चक्रे तदा यदुगिरिं प्रति
॥८॥ तं भूपतिं समादाय सहायार्थं यतीश्वरः ॥ जगाद वचनं प्रीत्या
संप्रयाहि मया सह॥ ९ ॥ तन्निशम्य स भूपालस्संतुष्टो विष्णुवर्द्धनः॥
तद्वनं छेदयित्वाशु सम्यङ् मार्गं विधाय च ॥ १० ॥ प्रतस्थ गु-
रुणा सार्द्धं यादवाद्रिं महात्मना ॥ वत्सरे बहुधान्याख्ये पुष्यमासे
यतीश्वरः ॥ ११ ॥ वेदपुष्करिणीं गत्वा परिधानाशिलां ततः ॥ दृष्ट्वा
प्रणम्य तत्तीर्थे स स्नात्वा विधिना तदा ॥ १२ ॥ वेदपुष्करिणीतीरे
परिधानाशिलातले ॥ परिधानं स जग्राह काषायं परमः पुमान्॥१३॥
दत्तात्रेय इव श्रीमान्परिधानाशिलातले ॥ काषायं परिधायाथ

परिधानं यतीश्वरः ॥ १४ ॥ नारायणं मृगित्वाथ तंत्रतत्र गिरौ तदा ॥
कुत्राप्यदृष्ट्वा तं देवं यादवाचलनायकम् ॥ १५ ॥ कदाचिन्न्यूनता ना-
स्ति प्रभावस्य हरेस्तदा ॥ इति चिंतापरः शेते भगवान्यतिपुंगवः
॥ १६ ॥ स्वप्ने प्रसन्नो भगवानेवमाह यतीश्वरम् ॥ तीरे कल्याणती-
र्थस्य दक्षिणे च गिरेरधः ॥ १७ ॥ तरवश्चंपकाः संति तत्रोदीच्यां म-
हादिशि ॥ वर्त्तते तुलसीवृक्षस्तस्याधो नांकुरः स्थितः ॥ १८ ॥ अ-
हमत्र वसाम्येव वल्मीके नास्ति संशयः ॥ श्वेतद्वीपात्खगेशेन शुद्धा
मृत्स्ना समाहृता ॥ १९ ॥ यादवाद्रौ विनिःक्षिता साक्षयाभून्ममाज्ञया ॥
कल्याण्याश्चोत्तरे देशे शैलमूले यतीश्वर ॥ २० ॥ श्वेतमृत्स्ना म-
हादिव्या वर्तते नास्ति संशयः ॥ प्रत्यक्षसदृशं वाक्यं स्वप्ने भगवतो-
दितम् ॥ २१ ॥ श्रुत्वा यतींद्रः संतुष्टः स्वप्नादुत्थाय सत्वरम् ॥ नि-
वेद्य राज्ञे तत्सर्वं स्वप्नवृत्तांतमादरात् ॥ २२ ॥ स्नातः शुचिर्निर्मला-
त्मा तेन राज्ञा यतीश्वरः ॥ तुलसीवृक्षमासाद्य संप्रहृष्टः प्रणम्य तम्
॥ २३ ॥ तद्वल्मीकं खनित्वाथ तत्र लक्ष्मणदेशिकः ॥ यादवाद्रिपतिं
किंचित्कांतिसिंधुं ददर्श ह ॥ २४ ॥ शकाब्दे वर्षसाहस्रे गते तद्वाद-
शाधिके ॥ ततोब्दे बहुधान्याख्ये पुष्यमासि शुभे तदा ॥ २५ ॥ शु-
क्लपक्षे चतुर्दश्यां सुप्रभावपुनर्वसौ ॥ आविर्बभूव भगवांस्तत्र नारा-
यणो हरिः ॥ २६ ॥ तद्वल्मीकाद्यदुगिरौ यतींद्राय महात्मने ॥ तं दृष्ट्वा
मुदिताः सर्वे सिंहनादं प्रचक्रिरे ॥ २७ ॥ भेरीमृदंगवाद्यानां रवश्च सुमहा-
नभूत् ॥ तं देवं दर्शयित्वाथ राज्ञस्तस्य यतीश्वरः ॥ २८ ॥ क्षीरा-
भिषेकं कृत्वास्य संपूज्य त्रिदिनं स्वयम् ॥ कृतकृत्यो महातेजाः परं
हर्षमवाप्तवान् ॥ २९ ॥ ततः कल्याणसरसः कौबेरदिशि चास्थितम् ॥
आसाद्य पर्वतं श्रेष्ठं तन्मूले यतिपुंगवः ॥ ३० ॥ त्रिदंडेन खनित्वाथ
ददर्श श्वेतमृत्तिकाम् ॥ मृत्स्नामादाय संभूतां स तां लक्ष्मणदेशिकः
॥ ३१ ॥ सम्यग्धृत्वोर्ध्वपुंड्राणि तथैव श्वेतमृत्स्नया ॥ त्रिदंडमंडितकर-
स्तेन राज्ञा यतीश्वरः ॥ ३२ ॥ छेदयित्वा वनं सर्वं कारयामास पत्त-

नम् ॥ ततो नारायणपुरं नाम चास्यादिशत्तदा ॥ ३३ ॥ प्राकारैर्गो-
पुरैरुच्चैर्मंडपैरुपशोभितम्॥तस्य नारायणस्याथ कारयामास मंदिरम्॥
॥ ३४ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेतरजातयः ॥ चक्रुर्गृहाणि
सर्वाणि यादवाद्रौ यथार्हतः ॥ ३५ ॥ पांचरात्रप्रकारैश्च सात्वतैस्संहि-
तैस्ततः ॥ श्रीरंगराजभट्टाख्यराजभट्टेन धीमता ॥ ३६ ॥ संप्रोक्षणा-
दिकार्याणि कारयित्वा यथाविधि ॥ नित्योत्सवादिकार्याणि कालेका-
ले यथार्हतः॥३७॥ कुर्वन् यदुगिरीशस्य देवस्य यतिभूपतिः ॥ महो-
त्सवं कर्तुकामस्तदा स यतिपुंगवः ॥ ३८ ॥ औत्सव्यास्तस्य राहि-
त्यादर्चायास्त्वस्य वै हरेः ॥ व्याकुलात्मतया शेते ध्यायंस्तत्पादपं-
कजम् ॥ ३९ ॥ तदा नारायणो देवः कृपया यतिभूपतेः ॥ स्वप्ने
प्रसन्नो भगवानेवमाह यतीश्वरम् ॥ ४० ॥ मदीयश्चौत्सवो बिंबो
रामप्रिय इति श्रुतः ॥ दिल्लीश्वरस्य सदने वर्तते वत्स संप्रति ॥ ४१ ॥
तत्र गत्वा तमादाय समागच्छाथ सत्वरम् ॥ ततः स्वप्नात्समुत्थाय
संतुष्टो यतिभूमिपः ॥ ४२ ॥ विष्णुवर्द्धनभूपाय शिष्याय स्वांतरं-
गिणे ॥ सम्यक् तत्स्वप्नवृत्तांतमवोचदखिलं मुदा ॥ ४३ ॥ यतिरा-
जवचः श्रुत्वा संतुष्टो विष्णुवर्द्धनः ॥ प्रणिपत्याब्रवीद्वाक्यं कृतांज-
लिपुटस्तदा ॥ ४४ ॥ साक्षान्नारायणो देवो भवान्सर्वजगद्गुरुः ॥
भवतः परमहंसस्य किमसाध्यं जगत्त्रये ॥ ४५ ॥ शिष्यसंघैर्भवानद्य
दिल्लीं प्रति गतो यदि ॥ अर्पयिष्यति दिल्लीशस्तव रामप्रियं ध्रुवम्
॥ ४६ ॥ अस्मिन्नर्थे न संदेहः सत्यं वच्मि यतीश्वर ॥ तदीयाराध-
नार्थाय धनमिष्टं प्रगृह्यताम् ॥ ४७ ॥ त्वदधीनमिदं सर्वं मम यद्यद्धि
वैभवम् ॥ एवमुक्त्वार्पयद्द्रव्यं स्वयमेवाग्रतस्तदा ॥ ४८ ॥ ततो यती-
श्वरः श्रीमान् बहुशिष्यैः समावृतः ॥ रामप्रियस्य देवस्य तस्यानय-
नकारणात ॥ ४९ ॥ दिल्लीं प्रतस्थे सहसा सुमुहूर्त्ते महायशाः ॥
धृतोर्ध्वपुंड्रः पद्माक्षतुलसीमालिकाधराः ॥ ५० ॥ अमलोष्णीषिणः

सर्वे पठंतो घाटिपंचकम् ॥ रामानुजचरित्राणि विद्युल्ललितवर्चसाम् ॥
समादाय सहस्राणि सैनिकाः सत्वरं ययुः ॥ ५१ ॥ एकांतिभिर्द्वा-
दशभिः सहस्रैः पीठैश्चतुःसप्ततिभिः समेतः ॥ अन्यैरनंतैरपि विष्णु-
भक्तैर्दिल्लीं प्रतस्थे यतिसार्वभौमः ॥ ५२ ॥ दिव्याज्ञया लक्ष्म-
णदेशिकस्य महात्मनश्छात्रजना अनंताः ॥ रामप्रियार्थं रणरंगधीरा
दिल्लीं पुरीं तां रुरुधुस्समंतात् ॥ ५३ ॥ असंख्येयं यतींद्रस्य दृष्ट्वा
सैन्यममानुषम् ॥ विस्मयं परमं गत्वा दिल्लीशस्साचिवैस्सह ॥ ५४ ॥
संमंत्र्य तद्बलं ज्ञात्वा ह्यजेयमिति बुद्धिमान् ॥ विशेषतः कारयित्वा
नगरद्वाररक्षणम् ॥ ५५ ॥ तदागमनकार्य्यस्य जिज्ञासुर्यवनेश्वरः ॥
चारान् प्रस्थापयामास यतीश्वरबलं प्रति ॥ ५६ ॥ तांश्चारान्वीक्ष्य
योगींद्रः शिष्यैस्संमंत्र्य सत्वरम् ॥ यथायोग्यं च सत्कृत्य दिल्लीश-
प्रेषितांस्तदा ॥ ५७ ॥ दिल्लीश्वरांतिकं वेगात् स्ववृत्तांतं निवेदितुम् ॥
नीतिज्ञान् प्रेषयामास शिष्यान् नयविशारदान् ॥ ५८ ॥ यतींद्रा-
गमनं ज्ञात्वा तच्छिष्यैर्यवनेश्वरः ॥ दिल्लीपुरंदरो द्रष्टुं भगवंतं यती-
श्वरम् ॥ ५९ ॥ आगतः सहसा हर्षात् स्वांतरंगैर्जनैः सह ॥
प्रत्युत्थायाभिवाद्याथ संपूज्य बहुधा तदा ॥ ६० ॥ भवदागमनं
ब्रूहीत्येवं पप्रच्छ सादरम् ॥ एवमुक्तो यतिश्रेष्ठः संतुष्टो वाक्यम-
ब्रवीत् ॥ ६१ ॥ अस्माकमधुना राजन्देवो रामप्रियः श्रुत ॥
वर्त्तते भवतो गेहे तं देवं देहि सत्वरम् ॥ ६२ ॥ वैष्णवीः प्रति-
माः शैवीः पुरा दिग्विजये हृताः ॥ दर्शयामास ताः सर्वा यतीं-
द्राय स भूपतिः ॥ ६३ ॥ तासु स्वाभिमतस्यास्य राहित्याद्विग्रहस्य
सः ॥ व्याकुलात्मा यतिश्रेष्ठो राजानमिदमब्रवीत् ॥६४॥ मम प्रिय-
तमो देवो राजन् रामप्रियो हरिः ॥ लक्ष्यते हि प्रदत्तासु नैतासु प्रति-
मासु सः ॥ ६५ ॥ ईदृश्यः प्रतिमाश्चान्या यदि संति तवांतिके ॥
दिल्लीश सांप्रतं वेगादानीयंतां तु ता नृप ॥ ६६ ॥ तस्य तद्वचनं

श्रुत्वा दिल्लीशो यतिभूपतेः ॥ सर्वेषां शृण्वतां तत्र मंदास्मितमुखोब्र-वीत् ॥ ६७ ॥ युष्मद्देवो यदि भवेत्सोयं रामप्रियो हरिः ॥ आहूतो यदि युष्माभिः किन्नायाति तवांतिके ॥ ६८ ॥ तन्निशम्य वचः सत्यं लज्जितोभून्निरुत्तरः ॥ चिंताशोकसमाविष्टो राजगेहाद्विनिर्गतः ॥६९॥ स्वस्थानं प्राप्य योगींद्रः सुप्तः शोकसमन्वितः ॥ रामप्रियस्तदा स्वप्ने प्रसन्नः प्राह तं हरिः ॥ ७० ॥ किमर्थं शोचसे विद्वन् राजपुत्र्या सुपू-जितः ॥ शय्यागृहे निवत्स्यामि तत्रागत्य गृहाण माम् ॥ ७१ ॥ यतींद्रस्वप्नवृत्तांतं श्रुत्वा राजातिविस्मयः ॥ तस्याः शय्यागृहाभ्यासं यतींद्रं प्रापयत्तदा ॥ ७२ ॥ पीतांबरधरः श्रीमान् कस्तूरीतिलको-ज्ज्वलः ॥ अनिर्देश्यवयोरूपतया सम्यगलंकृतः ॥ ७३ ॥ सर्वेषां पश्यतां तत्र कूजन्मंजुलनूपुरः ॥ तच्छय्यासदनाद्वेगाच्छ्रुत्वा तद्वाक्य-माहृतम् ॥ ७४ ॥ चल्वपिळ्ळेति परमस्नेहयुक्तं वशीकृतम् ॥ आज-गाम हरिः प्रीत्या तदा निर्गत्य संभ्रमात् ॥ ७५ ॥ निषसाद यतीं-द्रांके तदा रामप्रियो हरिः ॥ आनंदार्णवनिर्मग्नः पुलकांकितविग्रहः ॥ ७६ ॥ अस्मत्संपत्सुत इति तं तदा परिषस्वजे ॥ रामप्रियस्य देवस्य तदाप्रभृति विश्रुतम् ॥ ७७ ॥ संपत्कुमारनामाभूद्यतिराज-कृतं महत् ॥ यतींद्रपुत्र इत्येवं तं रामप्रियमादरात् ॥ ७८ ॥ अवो-चन्मनुजाः सर्वे तदा दिल्लीश्वरश्च सः ॥ पुनःपुनर्यतिश्रेष्ठः प्रेम्णा च महता तदा ॥ ७९ ॥ भवान्संपत्सुतोस्माकं पीडितं परिषस्वजे ॥ अत्याश्चर्ययुतो राजा यतींद्रपदपद्मयोः ॥ ८० ॥ प्रणम्य बहुधा भ-क्त्या सत्कृत्य यतिपुंगवम् ॥ मुमुदे मंत्रिभिस्सार्द्धं दृष्ट्वाश्चर्यं महा-यशाः ॥ ८१ ॥ संपत्पुत्रं समादाय यतींद्रो यादवाचलम् ॥ दिल्लीशे-नाभ्यनुज्ञातो गंतुं समुपचक्रमे ॥ ८२ ॥ दिल्लीश्वरात्मजा साध्वी तद्वृत्तांतं निशम्य सा ॥ तत्प्रेमपारवश्येन संतापमगमत्परम् ॥ ८३ ॥ दिल्लीशदुहितुः सख्यो रामप्रियवियोगतः ॥ दुःखितायाश्च वृत्तांतं राज्ञे सम्यङ् न्यवेदयन्॥८४॥स राजा दुःखितस्तेन गत्वा दुहितुरंतिकम् ॥

सांत्वयित्वा स तां सम्यगिदं वचनमब्रवीत्॥८५॥किमर्थं शोचसे बाले
वद दुःखस्य कारणम्॥ श्रीरामप्रियविश्लेषा भीरुर्दिल्लीश्वरात्मजा॥८६॥
साश्रुनेत्रमुखी बाला पितरं वाक्यमब्रवीत् ॥ संपत्पुत्रो यतींद्राय यदि
दत्तो मम प्रियः ॥ ८७ ॥ न सहिष्ये क्षणमपि तद्वियोगं सुदुःसहम्॥
दुःसहप्रेष्ठविरहात्त्यक्ष्याम्यद्यैव जीवितम् ॥८८॥ निशम्य दुहितुर्वाक्यं
राजा दुहितृवत्सलः ॥ यतींद्रं प्रार्थयामास संपूज्य बहुधा तदा
॥ ८९ ॥ दुहित्रे देहि मे देवं सुन्दरं संपदात्मजम् ॥ स राज्ञस्तद्वचः
श्रुत्वा यतींद्रो वाक्यमब्रवीत् ॥ ९० ॥ कथं दास्याम्यहं देवमस्माक-
मतिसुन्दरम् ॥ स्वयमेवागतं प्रीत्या दुहितुर्भवतो नृप ॥ ९१ ॥ एत-
दर्थं महत्कार्यं कृतं किल मयाधुना ॥ त्वयोक्तं वचनं पूर्वं नृपते
संस्मराधुना ॥ ९२ ॥ युष्मद्देवो यदि भवेत्सोयं रामप्रियो हरिः ॥
आहूतो यदि युष्माभिः किन्नायाति तवांतिकम् ॥ ९३ ॥ अतोधुना-
गतो राजन्नस्मद्देवोस्मदंतिकम् ॥ एतादृशमहं देवं कथं दास्यामि ते
हरिम् ॥ ९४ ॥ यतींद्रवचनं श्रुत्वा लज्जितस्सन्निरुत्तरः ॥ संमंत्र्य
सचिवैः सार्द्धं कंचिदर्थमवाप सः ॥ ९५ ॥ आरोप्य राजा शिबिकां
स्वपुत्र्या सहितं हरिम् ॥ बहूपहारसहितं तं रामप्रियमादरात् ॥ ९६ ॥
यतीनां सार्वभौमाय दत्त्वा मोदमवाप सः ॥ तथा दिल्लीश्वरः श्रीमान्
प्रेम्णा दुहितृवत्सलः ॥ ९७ ॥ पुत्रं कंचित्समाहूय चतुरंगबलान्वि-
तम् ॥ तस्याः संरक्षणार्थाय प्राहिणोद्दुहितुस्तदा ॥ ९८ ॥ संपत्पुत्रेण
संयुक्ता देवी दिल्लीश्वरात्मजा ॥ आरुह्य शिबिकां शीघ्रं प्रययौ याद-
वाचलम् ॥ ९९ ॥ चतुरंगबलोपेतः स महात्मा महायशाः ॥ शिबि-
कायाश्चतुर्भागं भगिनीं परिपालयन् ॥ यतींद्रसहितः श्रीमान् प्रतस्थे
यादवाचलम् ॥१००॥ सदारमादाय हरिं कृतार्थं संपत्सुतं साधुनृपा-
र्चितांघ्रिः ॥ स यादवाद्रिं सहसा प्रतस्थे रामस्त्वयोध्यां हि यथा
कृतार्थः ॥ १०१ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे दिल्लीनगरात्
दिल्लीशपुत्र्या सह संपत्सुतस्य यादवाद्रिं प्रत्यागमनं नाम सप्तचत्वा-
रिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ।

ततो यतीश्वरः श्रीमान्सुमुहूर्ते महायशाः ॥ संपत्सूनुं समादाय प्रतस्थे यादवाचलम् ॥ १ ॥ दिल्लीशसूनुः सद्भक्त्या भगवंतं सुनामकम् ॥ आरोप्य स्वर्णशिबिकां भगिन्या सह सादरम् ॥ २ ॥ संपत्सूनुं समादाय सबलः पितृशासनात् ॥ तूर्णं दिल्लीपुराद्धीमान्प्रययौ यादवाचलम् ॥ ३ ॥ शंखभेरीनिनादैश्च जयशब्दैश्च बन्दिनाम ॥ अनेकैर्मंगलैर्वाद्यैश्चतुरंगबलैस्सह ॥ ४ ॥ तत्र मार्गे तु सा देवी हरिणा कमलेक्षणा ॥ ऐक्यं जगाम सहसा तदद्भुतमिवाभवत् ॥ ५ ॥ संपत्पुत्रः स एवात्र शिबिकायामदृश्यत ॥ नालक्ष्यत तदा देवी लक्ष्मी दिल्लीश्वरात्मजा ॥ ६ ॥ लक्ष्मणार्यादयस्तेन सर्वे विस्मयमागताः ॥ दिल्लीशसूनुरगमद्दुःखं तेन च विस्मयम् ॥ ७ ॥ स जातभगवद्भक्तिः सह तेन महायशाः ॥ नारायणपुरं प्राप्य सार्द्धं लक्ष्मणयोगिना ॥ ८ ॥ ततस्तूर्णं समादाय संपत्पुत्रं यतीश्वरः ॥ यादवाचलमासाद्य कृत्वा संप्रोक्षणं तदा ॥ ९ ॥ रामप्रियस्य तस्याथ संपत्पुत्रस्य शास्त्रतः ॥ यादवाचलनाथेन तमेकीकृत्य सादरम् ॥ १० ॥ विधाय पुत्रवात्सल्यं तस्मिन् रामप्रिये तदा ॥ महोत्सवानां सर्वेषां कर्तारं तं विधाय च ॥ ११ ॥ सर्वान्महोत्सवान्नित्यं कुर्वन्सद्भक्तितो हरेः ॥ तीर्थप्रसादं सर्वेषां गृहीतं सर्वथाकरोत् ॥ १२ ॥ दिल्लीशपुत्री हरिणा तेनैक्यं समुपागता ॥ तामर्चां कारयित्वाथ तस्य श्रीपादपद्मयोः ॥ १३ ॥ अन्तरे स्थापयामास विधिवद्यतिपुंगवः ॥ अर्चारूपेण तां तत्र प्रतिष्ठाप्य यथाविधि ॥ १४ ॥ स स्वसारं यतींद्रस्य कृपया मुमुदे तदा ॥ यतींद्रेणाभ्यनुज्ञातस्तदा दिल्लीश्वरात्मजः ॥ १५ ॥ दिल्लीशं प्राप्य भूपाय तद्वृत्तांतं न्यवेदयत् ॥ ततो दिल्लीश्वरः श्रीमान् दुहितुर्हरिणा सह ॥ १६ ॥ निशम्य सशरीरैक्यं स्वसूनोर्मुखतस्तदा ॥ विस्मयं परमं प्राप दुःखं च स दयानिधिः ॥ १७ ॥ विबुधै-

बोधितः सम्यग् दिल्लीशो भक्तिमान् हरौ ॥ श्रीमान्दुहितृवात्सल्याद्य-
र्तींद्रं जगतां गुरुम् ॥ १८ ॥ पूजयित्वा महाभक्त्या संपत्पुत्राय
सादरम् ॥ वराय बहुशः सम्यग्दिल्लीशः प्रददौ धनम् ॥ १९ ॥ दिल्ली-
श्वरेण योगींद्रः पूजितो बहुधा तदा ॥ नारायणपुरे तत्र किंचित्काल-
मुवास सः ॥ २० ॥ कश्चित्कबीरदासाख्यो मतिमान् भगवत्परः ॥
तस्मिन्काले बभूवाथ सर्वलोकैकपूजितः ॥ २१ ॥ तदद्भुततमं श्रुत्वा
संपत्पुत्रेण सत्तमः ॥ ऐक्यं जगाम सहसा यवनेश्वरकन्यका ॥२२ ॥
अत्याश्चर्य्ययुतो धीमान् नारायणपुरं ययौ ॥ पादपंकजमध्यस्थां
संपत्सूनोर्जगत्पतेः ॥ २३ ॥ अर्चारूपेण तां कन्यां दृष्ट्वा विस्मयमा-
गतः ॥ यतिराजं तदा नत्वा तद्वृत्तांतं निशम्य सः ॥ २४ ॥ सतुष्ट-
हृदयः सम्यक् परं विस्मयमाप सः ॥ स दिव्यदेशसंचारे यवनः
कृतनिश्चयः॥२५॥यतींद्रेणाभ्यनुज्ञातःश्रीरंगाभिमुखोययौ॥रंगेशवैभवं
दृष्ट्वा विस्मयं परमं गतः२६॥तस्माद्रंगेश्वराल्लोके देवोऽन्यो नहि विद्यते॥
इत्येवं मनसा मेने तस्मिन्संजातभक्तिमान् ॥ २७ ॥ संजातभक्तिः
सहसा यवनो रंगिणीश्वरे ॥ ययाचे हरिमुद्दिश्य मोक्षं देहीति सादरम्
॥ २८ ॥ याचितो यवनेनाथ रंगेशः प्राह तं तदा ॥ प्रपन्नमोक्षदानेहं
दीक्षितो यवनेश्वर ॥ २९ ॥ पतितानां मोक्षदाने जगन्नाथः प्रदीक्षितः॥
हेतुं तत्र प्रवक्ष्यामि सावधानमनाः शृणु ॥ ३० ॥ विना मच्चक्रसंबं-
धान्नैव मोक्षो हि कस्यचित् ॥ चक्रांकनाद्वा चक्रस्य दर्शनात्पुरुषोत्त-
मे ॥ ३१ ॥ प्रविंदति नरो मोक्षं यच्चक्रेण हतोपि वा ॥ चक्रांकनेन
भक्तानां मोक्षो भवति निश्चितम् ॥ ३२ ॥ मच्चक्रेण हता मोक्षं गच्छंति
द्वेषिणोमलाः ॥ पतितास्तु जगन्नाथे मम चक्रस्य दर्शनात् ॥ ३३ ॥
अतो हि त्वं जगन्नाथं निर्गच्छ यवनोत्तम ॥ तत्रैव भवतो मोक्षो भ-
विष्यति न संशयः ॥ ३४ ॥ कबीरो रंगराजेन स तेनाज्ञापितस्तदा॥
जगन्नाथमवापाथ मुक्तिकामो महायशाः ॥ ३५ ॥ कबीरः पूजितः

सम्यक् स कलिंगमहीक्षिता ॥ जगन्नाथं विवेशाशु संतुष्टो यवनाधिपः ॥३६॥ प्रणम्य बहुधा भक्त्या तं जगन्नायकं हरिम् ॥ स्तुत्वा बहुविधं सम्यङ् ननर्त्त हरिसन्निधौ ॥३७॥ भक्त्या कबीरस्तत्रैव कंचित्कालमवर्तत ॥ जगन्नाथप्रसादेन स कुर्वन् देहपोषणम् ॥ ३८ ॥ ततः कदाचिद्भगवाञ्छ्रीजगन्नायको हरिः ॥ कबीरमोक्षदानाय मतिं चक्रे दयानिधिः ॥ ३९ ॥ सारमेयवपुर्भूत्वा भगवान् कृपया तदा ॥ तस्यांतिकमवाप्याथ यवनस्य शनैश्शनैः ॥ ४० ॥ जग्राह पैठरं भक्ष्यं तस्य किंचिज्जगत्पतिः ॥ तद्गृहीत्वा प्रदुद्राव स तस्मिन् पश्यतीश्वरः ॥ ४१ ॥ सर्वभूतसुहृद्धीमान् कबीरो वीक्ष्य तं शुनम् ॥ आदाय सहसैवाज्यं प्रोवाच कृपया तदा ॥ ४२ ॥ रूक्षं भक्ष्यं भक्षितं चेत्कुक्षिबाधा भविष्यति ॥ गृहाणाज्यमिदं स्वामिन्किमर्थं परिधावसि ॥४३॥ इत्येवं व्याहरन्भक्त्या धावंतं स तमन्वगात् ॥ सिंधुतीरं तदा नीत्वा तं कबीरं जगत्पतिः ॥ ४४ ॥ शंखचक्रधरः श्रीमान् प्रत्यक्षस्तस्य चाभवत् ॥ प्रणम्य बहुशो भक्त्या स्तुत्वा तं हरिमव्ययम् ॥ ४५ ॥ कबीरश्चागमन्मोक्षं जगन्नाथे महायशाः ॥ दत्त्वा मुक्तिं हरिस्तस्मै शीघ्रं दिल्लीशसूनवे ॥४६॥ तद्वृत्तांतं हि पौरेभ्यः स सर्वेभ्य न्यवेदयत् ॥ निशम्य भगवद्वाक्यं पौरा विस्मयचेतसः॥४७॥ तत्र गत्वा तथाभूतं कबीरं वीक्ष्य हर्षिताः ॥ संस्कारं चक्रिरे सर्वे यथोक्तं हरिणा तदा ॥ ४८ ॥ कबीरमुक्तिस्थानं तु सिंधुतीरेद्भुतं महत् ॥ सूचयन्निव तत्कीर्तिमद्यापि परिदृश्यते ॥ ४९ ॥ ततो दिल्लीश्वरः श्रीमान् पुत्रस्य दुहितुश्च सः ॥ तमद्भुततमं श्रुत्वा वृत्तांतं सादरं मुहुः ॥५०॥ विस्मयं परमं प्राप दुःखं च स दयानिधिः ॥ विबुधैर्बोधितः सम्यग्दिल्लीशो भक्तिमान् हरौ ॥ ५१ ॥ श्रीमान् दुहितृवात्सल्याद्यतींद्रं जगतां गुरुम् ॥ पूजयित्वा महाभक्त्या संपत्पुत्राय सादरम् ॥ ५२ ॥ वराय बहुशः सम्यग्दिल्लीशः प्रददौ धनम् ॥ अर्चारूपस्थितायाश्च दुहितुर्भूषणं बहु ॥ ५३ ॥ वाहनानि सुवर्णानि महीं कोटयधिकं धनम् ॥ दत्त्वा नृपः परं हर्षमवाप

वरमर्चयन् ॥ दिल्लीश्वरेण योगींद्रः पूजितो बहुधा तथा ॥ ५४ ॥ नारायणपुरे तत्र कंचित्कालमुवास सः ॥ संपत्सुतस्यानयने सहायार्थं समागताः ॥ ५५ ॥ ये वर्णबाह्याः सद्भक्त्या सदेहकृपया तदा ॥ मर्यादां विदधे नित्यां वैष्णवानां जगद्गुरुः ॥ ५६ ॥ कल्याणसरसि स्नानं प्रवेशो विष्णुमंदिरे ॥ महोत्सवे च त्रिदिनं प्रत्यब्दमिति निर्णयः ॥ ५७ ॥ तदाप्रभृति तत्रैव यादवाद्रौ जगद्गुरोः ॥ शासनादंत्यजास्सर्वे भगवद्भक्तिपारगाः ॥ ५८ ॥ प्रत्यब्दं त्रिदिनं तत्र संपत्सूनुमहोत्सवे ॥ कल्याणसरसि स्नात्वा चोर्ध्वपुंड्रधराः शुभाः ॥५९॥ विष्ण्वालये प्रविश्यांतः बलिपीठांतिकं गताः ॥ विमानं तत्परिक्रम्य प्रणम्याशु जगत्पतेः ॥ ६० ॥ तैलं च तंडुलं तस्मै समर्प्य हरये तदा ॥ कृतार्था निर्ययुस्तस्मात्ते सर्वे हरिमंदिरात् ॥ ६१ ॥ ततः संप्रोक्षणं सम्यक् कृत्वा तस्य यथाविधि ॥ अवशिष्टोत्सवं चक्रुः संपत्पुत्रस्य चार्चकाः ॥ ६२ ॥ यतींद्रशासनात्तत्र मर्यादैषा ह्यखंडिता ॥ नारायणपुरे सेयमद्यापि परिदृश्यते ॥ ६३ ॥ स्वनाम्ना कारयित्वाथ मठं तत्र महत्तरम् ॥ सुखेन लक्ष्मणाचार्य्यस्तस्थौ श्रीमान्महायशाः ॥ ६४ ॥ अस्यैव महतो ह्यद्रेरभून्नामचतुष्टयम् ॥ सनत्कुमारो भगवान्पुरा कृतयुगे महान् ॥ ६५ ॥ दिव्यं विमानमारुह्य ब्रह्मलोकाद्भुवं गतः ॥ नारायणं प्रतिष्ठाप्य यत्तदेवमपूजयत् ॥ ६६ ॥ नारायणाद्रिरित्यासीन्नाम तस्य ततस्तदा ॥ त्रेतायुगे महायोगी दत्तात्रेय इति श्रुतः ॥ ६७ ॥ विधाय वेदपुरुषान् शिष्यान्नारायणाचले ॥ वेदपुष्करिणीतीरे तपः कुर्वन्समास्थितः ॥ ६८ ॥ वेदाद्रिरिति तस्यासीन्नाम तस्य गिरेस्ततः ॥ द्वापरे यदुनाथेन कृष्णेनाराधितस्तदा ॥ ६९ ॥ यादवाद्रिरिति ख्यातं नामधेयांतरं गिरेः ॥ कलौ युगे तु संप्राप्ते यतिराजस्य पूजनात् ॥ ७० ॥ यतिशैलमिति ख्यातं नामाभूत्तत्र तद्गिरेः ॥ ततः कदाचिद्योगींद्रः स्वशिष्यैर्देशिकैर्वृतः ॥ ७१ ॥ त्रैवर्णिकैर्महाभागैरन्यैश्च कुलशेखरैः ॥ विशेषशूद्रै

रपरैः शूद्रैर्विष्णुपरायणैः ॥ ७२ ॥ अन्यैरनंतैस्संरेजे नारायणमु-
निर्यथा ॥ शिष्यान्यतीद्रः प्रोवाच सभायां कृपया ततः ॥ ७३ ॥
नारायणपुरे रम्ये वसतामसतामपि ॥ सदैव तेषां निःश्रेयो भविष्यति
न संशयः ॥ ७४ ॥ भक्त्या कथामिमां नित्यं ये शृण्वंति पठंति
च ॥ सर्वपापविनिर्मुक्तास्ते स्युर्वैकुंठवासिनः ॥ ७५ ॥ निर्जित्य सर्व-
समयान् यतिराजो महायशाः ॥ आरोप्याखिलदेशेषु जयस्तंभान्स-
मंततः ॥ ७६ ॥ रूढमूलं प्रतिष्ठाप्य स्वीयं दर्शनमुत्तमम् ॥ कम-
लापतिपादाब्जषट्पदान्सकलान् जनान् ॥ ७७ ॥ विधाय तैर्जनैः
सम्यक् पूजितो लोकदेशिकः ॥ नित्यं महोत्सवान्कुर्वन्संपत्पुत्रस्य
सादरम् ॥ ७८ ॥ सामानाधिकरण्यार्थान् सर्वाश्चर्यकरान्परान् ॥
अनिशं सन्निधौ श्रीमान् भक्त्या देवस्य तस्य सः ॥ ७९ ॥
भाष्यार्थान् शिष्यसंघेभ्यः कृपयोपदिशन्सदा ॥ सुखमव्याहतोपायः
स तस्थौ यादवाचले ॥ ८० ॥ रंगेशपूर्णकृपया बहिरंगवासाद्रामा-
नुजस्य महतो यदभून्महत्त्वम् ॥ वेदाचलेप्यधिकमेव ततो महत्त्वं
संपूज्यते बुधजनैः सकलासु दिक्षु ॥ ८१ ॥ रंगेशसेवाविरहादवाप्तं
दुःखं च संपत्सुतरत्नलाभात् ॥ विसृज्य संतोषमवाप धीरो नैवापदः
संति सतां हि नित्याः ॥ ८२ ॥ संपत्सुतस्य जनदृष्टिमनोहरस्य
लावण्यसंपदि निमग्नमना यतींद्रः ॥ विस्मृत्य रंगपतिमागमभूधरेंद्रे
तस्थौ सुखं विविधदास्यपरंपराभिः ॥ ८३ ॥ यत्प्रेम रंगाधिपतौ
सुजातं संपत्सुतेभूदधिकं ततोस्य ॥ ताताभिलाषादधिकाभिलाषः
पुत्रे प्रसिद्धस्स हि लोकवृत्तः ॥ ८४ ॥ यतींद्रसेवाविरहाच्च भीताः
सर्वे जना ये क्रिमिकंधरस्य ॥ ते तीक्ष्णदंडात्प्रविहाय रंगं वेदाद्रिमेवा-
भिययुः सदाराः ॥ ८५ ॥ नारायणाचलवनं नगरी बभूव रामानु-
जार्यकृपया जनसंप्रकीर्णा ॥ शार्दूलचोररहिता तदभावदोषाद्रंगे-
शरंगनगरी ह्यटवी बभूव ॥ ८६ ॥ विलोक्य रंगं निजभक्तहीनं

निर्वृत्तसर्वोत्सवमप्रकाशम् ॥ प्रवृद्धसर्वोत्सवमद्वितीयं व्यचिंतयच्चा-
गमशैलमीशः ॥ ८७ ॥ दुर्गं वनं नगरमेव तदागमाद्रिरासीन्ममाद्य
नगरं विपिनं च दुर्गम् ॥ राहित्यदोषवशतो यतिपुंगवस्य व्यत्यस्त-
मद्य तदभून्मम चैव दोषात् ॥ ८८ ॥ निरस्य चोलं क्रिमिकंधराख्यं
मोदं विधातुं यतिपुंगवस्य ॥ इयेष रंगाधिपतिः समीक्ष्य लोकं च
पाषंडमयं हि शून्यम् ॥ ८९ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे
यादवाद्रौ दिल्लीशपुत्र्यर्थं संपत्पुत्रस्य प्रतिष्ठापनं नाम अष्टचत्वारिंशो-
ऽध्यायः ॥ ४८ ॥

---

## एकोनपञ्चाशोऽध्यायः ।

ततः श्रीरंगनगरात्कश्चिद्वैष्णवपुंगवः ॥ नारायणपुरं प्राप रामा-
नुजदिदृक्षया ॥ १ ॥ तं पप्रच्छ यतिश्रेष्ठस्तयोर्वृत्तांतमादरात् ॥
चोलांतिकं प्रापितयोः पूर्णकूरेशयोर्भटैः ॥ २ ॥ इत्युक्तो यतिराजेन
प्रत्युवाच स वैष्णवः ॥ श्रूयतामभिधास्यामि तद्वृत्तांतं यतीश्वर ॥ ३ ॥
श्रीरंगात्तावुभौ दूतैश्चोलराजांतिकं गतौ ॥ दृष्ट्वा तौ पूर्णकूरेशौ
चोलराजोऽब्रवीदिदम् ॥ ४ ॥ शिवात्परतरन्नास्ति लिख्यतामिति
दुर्मतिः ॥ एवमुक्तस्सकूरेशश्चोलेन विदुषां वरः ॥ ५ ॥ सर्वेषां शृण्वतां
भूपमेवमाह यतीश्वर ॥ श्रुतिस्मृतिपुराणेतिहासाद्यैर्बहुधा नृप ॥ ६ ॥
श्रीमन्नारायणो देवः सर्वस्मात्पर उच्यते ॥ जगत्कारणभूतश्च ध्येयो
मोक्षप्रदो हि सः ॥ ७ ॥ तस्य प्रशासने राजंश्चंद्रसूर्यादयो ग्रहाः ॥
इंद्रादयश्च तिष्ठंति दिक्पालाः समहार्णवाः ॥ ८ ॥ ब्रह्मरुद्रादयो
देवाः पुत्रपौत्रादयो हरेः ॥ एकेन चोलभूपाल पादपद्मं प्रसादितम् ॥
॥ ९ ॥ एकेन क्षालितं भक्त्या तत्पादपयसा मुदा ॥ एकेन मूर्ध्ना
तत्तोयं धृतं भक्त्या महामते ॥ १० ॥ तेषां त्रयाणां राजेंद्र को महा-
न्प्रविचार्य्यताम् ॥ तच्छ्रुत्वा चोलभूपालस्तूष्णींभूतोऽभवत्तदा ॥ ११ ॥
कूरेशश्चोलभूपालं भूयो वचनमब्रवीत् ॥ त्रिविक्रमपदोत्सृष्टतोयसंगेन

शंकरः ॥ १२ ॥ कपालित्वशवत्वादिरहितः शिवतां गतः ॥ तच्छ्रुत्वा कुपितः प्राह सुतरां चोलभूपतिः ॥ १३ ॥ विबुधत्वाद्भवानेवं गतोसि बहुभाषिताम् ॥ तत्तिष्ठतु कुरुष्वाद्य मयोक्तं कार्यमाशु वै ॥ १४ ॥ शिवात्परतरं नास्ति चेत्येवं लिख सत्वरम् ॥ निर्बंधयामास तदा सुजनं दुर्जनो नृपः ॥ १५ ॥ कूरनाथो लिलेखेति द्रोणमस्ति ततः परम् ॥ लेखनं पारिहास्यं तद्दृष्ट्वा क्रुद्धः स भूपतिः ॥१६॥ क्रूरबुद्ध्या यतिश्रेष्ठ तयोर्वैष्णवयोस्तदा ॥ दूतानाज्ञापयामास नेत्रोत्पाटनकर्मणि ॥ १७ ॥ तथा चक्रुर्यतिश्रेष्ठ ते दूता राजशासनात् ॥ वृद्धत्वात्‌ स तु पूर्णार्यो नेत्रोत्पाटनवेदनः ॥ १८ ॥ शरीरधारणे शक्तो नाभवद्यति-पुंगव ॥ तस्माच्छीघ्रं प्रतस्थाते श्रीरंगं तौ महामती ॥ मार्गे कस्मिंश्चि-दागस्य कूरेशांके गुरुस्तव ॥ १९ ॥ निधाय च शिरः शेते तद्भार्यांके-घ्रिपंकजम् ॥ सभार्यं कूरनाथस्तं महापूर्णार्यमब्रवीत् ॥ २० ॥ आप-द्दशा च संप्राप्ता रंगं गच्छाम सत्वरम् ॥ एवमुक्तः स तं प्राह महापूर्णो यतीश्वर ॥ २१ ॥ हातुं शरीरमधुना यदि रंगं गतो ह्यहम् ॥ पूर्णस्य देहविगमे रंगक्षेत्रे स्थिता मतिः ॥ २२ ॥ अतोत्र सहसायातो देह-त्यागेच्छयाधुना ॥ शंकितोहं भविष्यामि तैरेवं वैष्णवैर्ध्रुवम् ॥ २३॥ आचार्यपरतंत्राणां वैष्णवानां महात्मनाम् ॥ देशतः कालतश्चापि नियमो नैव चास्ति हि ॥२४॥इत्युदीर्य महापूर्णः कूरनाथं यतीश्वर ॥ यामुनाचार्य्यपादाब्जं ध्यायंस्तूर्णं जहौ तनुम् ॥ २५ ॥ वत्सराणां तदा तस्य पंचोत्तरशतं गतम् ॥ अन्तकाले प्रपन्नस्य न देशनियम-स्ततः ॥ २६ ॥ केचिच्छ्रीवैष्णवास्तस्य पूर्णार्यस्य महात्मनः ॥ विधाय विधिवत्तूर्णं संस्कारं तत्सुतादयः ॥ २७ ॥ कूरनाथं समादाय श्रीरंगं सहसागताः ॥ पूर्णार्यस्यैव रंगेशः प्रददौ परमं पदम् ॥ २८ ॥ तथैवाद्यैव सर्वज्ञो मोक्षं मह्यं न दत्तवान् ॥ इति कूरपतिस्तत्र वर्त्तते दुः-खितोधुना ॥ २९ ॥ यतींद्रः सर्ववृत्तांतं पूर्णकूरेशयोस्तदा ॥ निशम्य दुःखितोत्यंतं बुधैराश्वासितस्तदा॥३०॥ विधाय देशिकस्याथ श्रीचूर्ण-

परिपालनम् ॥ यादवाद्रौ हरेस्तस्य मंदिरे सहसा तदा॥३१॥ चतुष्टयसहस्रस्य प्रबंधस्य महायशाः॥सांगस्य सर्ववेदस्य तथा रामायणस्य च ॥३२॥वैष्णवस्य पुराणस्य श्रीभाष्यस्य तथैव च॥पारायणं कारयित्वा वैष्णवैर्वेदपारगैः ॥ ३३ ॥ अन्यैश्च षड्रसोपेतैर्बहुभक्ष्यसमन्वितैः ॥ प्रपन्नान् भोजयामास वैष्णवान् वेदपारगान् ॥ ३४ ॥ पूजयामास वस्त्राद्यैर्गुरुमुद्दिश्य भक्तितः ॥ ततो यतीश्वरः प्राप्य महद्दुःखं कृपार्णवः ॥ ३५ ॥ कूरेशो नेत्रहीनोऽभूदिति चिंतापरायणः ॥ तमेवांतिकमाहूय वैष्णवं कृपयाब्रवीत् ॥ ३६ ॥ रंगं गत्वाधुना तूर्णं त्वं हि मद्वचनादितः ॥ समाश्वासय कूरेशमिति तं प्राहिणोत्तदा ॥ ३७ ॥ कूरेशदुःखोपशमाय कंचित्संप्रेष्य सौम्याप्ततमं यतींद्रः ॥ तत्रैव वेदाद्रिपतेर्मुरारेः कैंकर्य्यलाभेन सुखेन तस्थौ ॥ ३८ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कूरनाथक्रिमिकंठयोर्विवादकथनं नामैकोनपंचाशोऽध्यायः ॥ ४९ ॥

---

## पञ्चाशोऽध्यायः ।

ततः कूराधिपो धीमाञ्छ्रीरंगमगमत्तदा ॥ ततो निवारयामासुर्द्वारस्थाः केचिदुत्तमम् ॥ १ ॥ केचिदूचुश्च तत्रान्ये कूरेशः साधुरित्ययम् ॥ तन्निशम्य वचस्तेषां कूरेशस्तानथाब्रवीत् ॥ २ ॥ किमर्थं क्रियते ह्यद्य युष्माभिर्मन्निरोधनम् ॥ तत्कारणं च ब्रूध्वं मे तत्त्वतो द्वारपालकाः ॥ ३ ॥ श्रीवत्सचिह्नमिश्रस्य वचः श्रुत्वाथ तेऽब्रुवन् ॥ विरोधं विदधे राज्ञि क्रिमिकंठे यतीश्वरः ॥ ४ ॥ अतः संत्यज्य सहसा श्रीरंगं यतिभूपतिः ॥ अविज्ञातगतिस्त्वद्य कुत्रापि गतवान्किल ॥ ५ ॥ एतत्समंत्रितं कार्यं रंगाध्यक्षैस्तदर्चकैः ॥ अस्माकं चोलराजेन विरोधो नहि दृश्यते ॥ ६ ॥ श्रीरामानुजसंबंधाद्विरोधोद्य समागतः ॥ न रामानुजसंबंधी प्रवेष्टव्यः कथंचन ॥ ७ ॥ सर्वैर्निर्णीतमित्येवं कूरेशाद्यैव चार्चकैः ॥ तथापि सुजनः साधुः स्वामि-

न्नेतादृशो भवान् ॥ ८ ॥ अतो रंगेशसेवार्थं तत्प्रवेष्टुं त्वमर्हसि ॥ स तान्निशम्य कूरेशो दुःखितस्तान्वचोब्रवीत् ॥ ९ ॥ अहं तु लक्ष्मणाचार्यसंबंधी नात्र संशयः ॥ तस्माद्रंगेशसेवा मे मास्तुमास्तु कदाचन ॥ १० ॥ इत्युक्त्वा तत्क्षणाच्छीघ्रं कूरेशो वृषभाचलम् ॥ सपुत्रः सस्नुषः श्रीमान् प्रतस्थे सह भार्यया ॥ ११ ॥ स तत्र सुंदरभुजं नत्वा भक्त्या वनाचले ॥ नित्यवासपरो धीमान् किंचित्कालमवर्तत ॥ १२ ॥ तदा कूरेश्वरो विद्वांश्चक्रे स्तोत्रचतुष्टयम् ॥ श्रीस्तवं सुंदरभुजस्तवं चैवातिमानुषम् ॥ १३ ॥ श्रीवैकुंठस्तवमिति ख्यातमेतच्चतुष्टयम् ॥ तं चैवं प्रार्थयामास श्रीसुंदरभुजस्तवे ॥ आचार्यभक्तः कूरेशः श्रीसुंदरभुजं प्रति ॥ १४ ॥ विज्ञापनां वनगिरीश्वर सत्यरूपामंगीकुरुष्व करुणार्णव मामकीनाम् ॥ श्रीरंगधाम्नि च यथापुरमेव सोहं रामानुजार्यवशगः परिवर्त्तयिष्ये ॥ १५ ॥ इत्येवं प्रार्थयंस्तत्र कूरेशः सुखमास्थितः ॥ तदा गोष्ठीपुरे तस्य गोष्ठीपूर्णस्य तिष्ठतः ॥१६॥ वत्सराणां सुखेनैव पंचोत्तरशतं गतम् ॥ गोष्ठीपूर्णस्य चरमदशायां वैष्णवोत्तमाः ॥१७॥ शिष्याः प्रोचुरिदं वाक्यं गोष्ठीपूर्णं दृढव्रतम्॥ किं मन्यसे गुरुश्रेष्ठ त्वमद्य वद तच्च नः॥१८॥ तेषां तद्वचनं श्रुत्वा गोष्ठीपूर्णोब्रवीत्स तान् ॥ चक्रवर्तितनूजस्य पुरा वै कश्चिदंडजः ॥ १९ ॥ व्रणमुत्पादयामास हृदि भागवतोत्तमाः ॥ प्रपत्तिरपि मास्त्वेवमिति मे वसतोनिशम् ॥ २० ॥ का चिंता वर्तते चात्र निर्भरस्य महात्मकाः ॥ इत्युक्त्वा निर्भरो ध्यायन्यामुनार्यपदांबुजम् ॥ २१ ॥ जगाम स हरेर्लोकं यत्र मोहो न विद्यते ॥ प्रायेण दुःखिताः सर्वे तद्वियोगे गुरुप्रियाः ॥२२॥ अभवन्वैष्णवास्तस्य शिष्याः पुत्रादयस्तदा ॥ नारायणार्यः सहसा गोष्ठीपूर्णस्य पुत्रकः ॥ २३ ॥ ब्रह्ममेधेन संस्कारं स चकार पितुस्तदा ॥ ततः श्रीलक्ष्मणार्येण प्रेषितः स च वैष्णवः ॥ २४ ॥ श्रीरंगनगरं प्राप्य वृत्तं कूरेश्वरस्य तत ॥ सर्वं विदित्वा विशदमभ्यगात्सुंदराचलम् ॥ २५ ॥ तत्र करा-

धिपं दृष्ट्वा प्रणम्य स दयानिधिः ॥ सर्वं यतीशवृत्तांतं कूरेशाय महात्मने ॥ २६ ॥ न्यवेदयत्सांत्वपूर्वं विशदं चाज्ञया गुरोः ॥ ततः पुनरुवाचेदं कूरेशं स च वैष्णवः ॥ २७ ॥ पूर्णाचार्यवियोगेन तव नेत्रवियोगतः ॥ दुःखितो वर्तते चाद्य यादवाद्रौ यतीश्वरः ॥ २८ ॥ तच्छ्रुत्वा तमुवाचेदं कूरेशो वैष्णवं प्रति ॥ जगद्गुरुर्लक्ष्मणार्यः सुखं यदि हि वर्तते ॥ तदेवालं ममेत्युक्त्वा संतुष्टः कूरराडभूत् ॥ २९ ॥ अनूपमं लक्ष्मणदेशिकस्य निशम्य माहात्म्यमतिप्रहृष्टः ॥ अपूजयत्तं यतिराजबुद्ध्या श्रीवैष्णवं कूरपतिर्महात्मा ॥ ३० ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कूरेशस्य सुंदराचलनित्यवासो नाम पंचाशोऽध्यायः ॥ ५० ॥

---

## एकपञ्चाशोऽध्यायः ।

ततश्चोलमहीपालः पापी लोकस्य कंटकः ॥ पारिहासेन लिखितं द्रोणमस्ति ततः परम् ॥ १ ॥ वाक्यं श्रुत्वाऽतिसंक्रुद्धो भूपो भूयोरुणेक्षणः ॥ उत्पाटयित्वा नेत्राणि पूर्णकूरेशयोस्तदा ॥ २ ॥ विष्णुस्थानानि सर्वाणि चोलदेशस्थितानि च ॥ नाशयामास दुष्टात्मा रंगस्थानं विना ततः ॥ ३ ॥ रंगक्षेत्रं तथा कर्तुमुद्युक्तो दुर्मतिस्तदा ॥ प्रतस्थे सैनिकैः सर्वैः सहसा विष्णुकंटकः ॥ ४ ॥ मार्गे तत्र च सायाह्ने कंचिद्ग्रामं समास्थितः ॥ तद्रात्रौ तस्य कंठे तु महद्व्रणमजायत ॥ ५ ॥ क्रिमयो बहवस्तस्मादजायंत व्रणात्तदा ॥ उदर्य्यरोगस्तस्यासीत्ताभ्यां स च मृतिं गतः ॥ ६ ॥ श्रुत्वा तस्य मृतिं सर्वे श्रीरंगे वैष्णवोत्तमाः ॥ ततः श्रीरंगनगराद्यादवाद्रिं समागताः ॥ वरदार्य्यादयः सर्वे शिष्यास्ते देशिकप्रियाः ॥ ७ ॥ प्रियाख्यानं यतींद्राय शंसितुं तेन संगताः ॥ कल्याणसरसस्तीरे वसंतं वैष्णवास्तदा ॥ ८ ॥ ददृशुर्लक्ष्मणाचार्य्यं कृतजप्यं जगद्गुरुम् ॥ प्रणम्य यतिराजाय वचनं चेदमब्रुवन् ॥ ९ ॥ पूर्णकूरेशयोः स्वामिन्नपकर्त्ता स भूपतिः ॥ कंठ-

व्रणादिरोगेण नीतो वैवस्वतक्षयम् ॥ १० ॥ तेषां तद्वचनं श्रुत्वा महत्कर्णामृतं तदा ॥ आनंदार्णवनिर्मग्नश्चतुर्भुज इवापरः ॥ ११ ॥ परिरभ्याशु बाहुभ्यां प्रेम्णा तान् वैष्णवोत्तमान् ॥ आनंदाश्रुपरीतात्मा लक्ष्मणार्यो जगाद सः ॥ १२ ॥ बहुदूरादिहागत्य प्रियवृत्तांतमद्य मे ॥ वक्तृभ्य इदमार्येभ्यः किं करिष्यामि वः प्रियम् ॥ १३ ॥ रजतं वा सुवर्णं वा रत्नानि विविधानि वा ॥ राज्यं वा त्रिषुलोकेषु नैतदर्हंति भाषितुम् ॥ १४ ॥ नहि पश्यामि तत्साम्यं पृथिव्यां वा नरोत्तमाः ॥ सदृशं मत्प्रियाख्याने वः प्रदातुं भवेत्क्षमम् ॥ १५ ॥ तद्रावणवधं श्रुत्वा वैदेही पवनात्मजात् ॥ हर्षेण महता युक्ता सौहार्दादब्रवीद्यथा ॥ १६ ॥ तथैवोक्त्वा पुनस्तेभ्यो मंत्ररत्नं ददौ शुभम् ॥ ततस्तानाह योगींद्रस्तत्रत्यान् वैष्णवांस्तदा ॥ १७ ॥ बभूवान्वर्थनामास्य कल्याणसरसोऽधुना ॥ ते तथेत्यब्रुवन् सर्वे मुदिता वैष्णवास्तदा ॥ १८ ॥ ततो गत्वाथ नृहरेः सन्निधौ यतिनां वरः ॥ बद्धांजलिरुवाचेदं हरये कृतवंदनः ॥ १९ ॥ हिरण्यकशिपुं पूर्वं प्रह्लादद्रोहकारिणम् ॥ तं हत्वा त्वं जगत्सर्वं यथा रक्षितवान्पुरा ॥ २० ॥ तथाधुना च चोलेंद्रं भगवन् विष्णुकंटकम् ॥ क्रिमिकंठं विधायाशु तं हत्वा चोलमंडले ॥ २१ ॥ रंगादिदिव्यदेशेषु धर्मं स्थापितवानसि ॥ एवं विज्ञापितस्तेन नृसिंहो भगवान् हरिः ॥ २२ ॥ शिष्यसंघसमेताय यतींद्राय महात्मने ॥ संतुष्टः प्रददौ तीर्थं शठकोपं च मालिकाम् ॥ २३ ॥ संप्रेषितस्ततस्तेन हरिणा यतिभूपतिः ॥ नारायणं नमस्कृत्य संपत्पुत्रं च सादरम् ॥ २४ ॥ अनुज्ञातस्तदा ताभ्यां श्रीरंगगमनोत्सुकः ॥ तत्रतत्र स्थितान् सर्वान् समानाय्य यतीश्वरः ॥ २५ ॥ ज्ञानभक्तिपराञ् शिष्यान् व्याजहार वचः शुभम् ॥ श्रीरंगनगरादेवं यादवाद्रिगतस्य मे ॥ २६ ॥ अधुना वत्सरादस्माद्गता द्वादशवत्सराः ॥ अधुना वर्तते देशः स चायं निरुपद्रवः ॥ २७ ॥ श्रीरंगं प्रति गच्छामि सेवार्थं रंगिणो

हरेः ॥ ते यूयमवधानेन यादवाद्रिपतेर्हरेः ॥ २८ ॥ नारायणस्य देवस्य संपत्पुत्रस्य वैष्णवाः ॥ नित्योत्सवान्प्रकुर्वंतो माससंवत्सरोत्सवान् ॥ २९ ॥ सुखमत्रैव सततं ध्रुवं मे वसताज्ञया ॥ तन्निशम्य यतींद्रस्य वचनं वैष्णवोत्तमाः ॥ ३० ॥ पतित्वा पादयोः सर्वे तद्वियोगासहिष्णवः ॥ अश्रूणि ते प्रमुंचंतो वचनं चेदमब्रुवन् ॥ ३१ ॥ भवतोद्य वियोगेन मुहूर्तमपि देशिक ॥ न जीवामो वयं स्वामिन् जलान्मत्स्या इवोद्धृताः ॥ ३२ ॥ यत्रयत्र भवाँल्लोकरक्षार्थं गंतुमुद्यतः ॥ तत्रतत्र नयस्वास्मान् दासभूतान् दयानिधे ॥ ३३ ॥ तदा यतीश्वरो धीमान्न मनस्येवमचिंतयत् ॥ अत्रत्यानां हि सर्वेषां मत्सेवाप्रेमशालिनाम् ॥ ३४ ॥ आराधनार्थमधुना स्वावतारार्थसूचकः ॥ विग्रहः कारणीयो हि प्रतिबिंब इवापरः ॥ ३५ ॥ ततो यतीश्वरः श्रीमान् शिल्पिभिर्नैपुणैस्तदा ॥ कारयित्वा स्वावतारसूचकं विग्रहं वरम् ॥३६॥ तस्मिन्स्वशक्तिमावाह्य परिरभ्य च सादरम् ॥ विधिज्ञैर्वैष्णवैः साकं प्रतिष्ठाप्य यथाविधि ॥ ३७ ॥सर्वान् शिष्यान् समाहूय व्याजहार वचः शुभम् ॥ हितार्थं भवतामद्य विग्रहः कारितो मया ॥ ३८ ॥ विग्रहे परिपूर्णेस्मिन्नित्यं कुरुत पूजनम् ॥ या प्रीतिर्मयि वोस्त्वत्र तामर्चायां ममादरात् ॥ ३९ ॥ मुक्ताहंकारिणः सर्वे यूयमन्योन्यसौहृदाः ॥ इत्येवमनुशास्यैतान्वैष्णवेभ्यश्च विग्रहम ॥ ४० ॥ स्वीयं दत्त्वा ततस्तैश्च प्रेषितो यतिपुंगवः ॥ संपत्पुत्रस्य विश्लेषमसहिष्णुः कथंचन ॥ ४१ ॥ अनुज्ञातस्ततस्तेन यादवाद्रेर्यतीश्वरः ॥ आजगामांजसा यत्र भगवान् रंगभूपतिः ॥ ४२ ॥ उषित्वा दंडकारण्ये चतुर्दश हि वत्सरान् ॥ वर्षे पंचदशे राममयोध्यां पुनरागतम् ॥ ४३ ॥ तं दृष्ट्वा संप्रहृष्टास्ते अयोध्यापुरवासिनः ॥ तथा रामानुजं दृष्ट्वा श्रीरंगपुरवासिनः ॥ ४४ ॥ तदा दाशरथिश्छत्रं जग्राह यतिभूपतेः ॥ गोविंदो व्यजने तस्य सानुजः पर्यं

वीजयत् ॥ ४५ ॥ शंखभेरीनिनादैश्च दुंदुभीनां च निःस्वनैः ॥
बंदिनां जयशब्दैश्च वेदपाठैर्द्विजन्मनाम् ॥ ४६ ॥ वाचामगोचरेणैव
वैभवेन यतीश्वरः ॥ रंगक्षेत्रं विवेशाशु संप्रहृष्टः सुहृज्जनैः ॥४७॥ दृष्ट्वा
रंगेश्वरं हृष्टो धनं प्राप्य इवाधनः ॥ महते रंगराजाय प्रणम्य प्रांजलिः
स्थितः ॥ ४८ ॥ स च रंगेश्वरः श्रीमान् प्रणतं यतिभूपतिम् ॥ इ-
त्युवाच प्रवालोष्ठः स्फुरद्दशनसुप्रभः ॥ ४९ ॥ अस्य हेतोर्यतिश्रेष्ठ
क्रिमिकंठस्य दुर्मतेः ॥ मां विहाय त्वया देशाश्चरिताः शैलकाननाः
॥ ५० ॥ क्लेशश्च सुमहान्प्राप्तः शिष्यैः साकं यतीश्वर ॥ इत्युक्तो
रंगराजेन यतिराजोब्रवीदिदम् ॥ ५१ ॥ त्वयि तिष्ठति रंगेश प्रण-
तार्तिहरे हरौ ॥ किं दुःखं वर्ततेस्माकं त्वद्दासानां सुरेश्वर ॥ ५२ ॥
ततः श्रीरंगनाथश्च यतींद्राय महात्मने ॥ तीर्थं प्रसादं प्रददौ कृपया
श्रीपरांकुशम् ॥ ५३ ॥ स्वीकृत्य सर्वं योगींद्रः कृतकृत्यः प्रहृ-
ष्टधीः ॥ अनुज्ञातो रंगभर्त्रा मठं याहीति विष्णुना ॥ ५४ ॥ रंगं सर्वं
समालोक्य कूरेशगृहमाविशत् ॥ ततः कूरपतिः श्रुत्वा यतींद्रागमनं
शुभम् ॥ ५५ ॥ सहसा यतिराजस्य पादयोः प्रणनाम सः ॥ उत्था-
प्य सहसा दोर्भ्यां तं कूरेशं यतीश्वरः ॥ ५६ ॥ परिरभ्याश्रुधाराभिः
प्रेम्णासिंचन्मुहुर्मुहुः ॥ दुःखार्णवनिमग्नः सन्नित्युवाच दयानिधिः
॥ ५७ ॥ कथं दुःखं त्वया प्राप्तं महदेतदयापर ॥ एवमुक्तः स कूरेशो
यतिराजमथाब्रवीत् ॥ ५८ ॥ वैष्णवानामूर्द्ध्वपुंड्रं दृष्ट्वा वक्त्रेषु संस्थि-
तम् ॥ इति किं तु मया पूर्वं हसितुं यतिपुंगव ॥ ५९ ॥ तेनांधत्वम-
नुप्राप्तं दुर्जरं पातकं हि तत् ॥ एवं वदंतं कूरेशं यतींद्रः प्रत्युवाच
तम् ॥ ६० ॥ ममैव दोषस्तेनेदं संप्राप्तं भवताधुना ॥ कूरेश
सर्वसुहृदः किंवास्ति तव दुष्कृतम् ॥ ६१ ॥ एवं सुदुःखितो
धीमान् विद्वानपि दयानिधिः ॥ कूरेशसहितो धीमान् विवेश
मठमंजसा ॥ ६२ ॥ पौरा जानपदाः सर्वे ये च भाग-
वतोत्तमाः ॥ रंगक्षेत्रे भाष्यकारः क्षेमेण पुनरागतः ॥ ६३ ॥ इत्या-

कण्यं प्रहृष्टास्ते लक्ष्मणार्यदिदृक्षया ॥ रंगं प्राप्याथ सहसा यतिराज-
पदाब्जयोः ॥ ६४ ॥ प्रणम्यैवं महाप्रीत्या चक्रुर्विज्ञापनं तदा ॥
महापूर्णो जगामार्यो वैकुंठं यतिपुंगवः ॥ ६५ ॥ कूरेशो नेत्रहीनोभू-
दिति शोकं च मा कृथाः ॥ निरामयो भवानद्य क्षेमेण पुनरागतः
॥ ६६ ॥ दृष्टोस्माभिस्तदेवालमिति सर्वे मुदं ययुः ॥ यथार्हं पूज-
यामास तान् सर्वान् यतिभूपतिः ॥ ६७ ॥ ततः श्रीरंगनगरं वैष्णवाः
केचिदागताः ॥ एवं विज्ञापनं चक्रुर्यतींद्राय महात्मने ॥ ६८ ॥
क्रिमिकंठाख्यचोलेन पाषंडेन सुपापिना ॥ श्रीचित्रकूटमधुना शैवी-
भूतं विनाशितम् ॥ ६९ ॥ औत्सवैर्विग्रहैस्साकमुत्क्षिप्तं लवणांभसि ॥
गोविंदराजमुद्युक्तः स दुरात्मा यतीश्वर ॥ ७० ॥ तदौत्सवीः समा-
दाय प्रतिमास्तूर्णमर्चकाः ॥ केनाप्यज्ञातवृत्तांता निन्युस्ते वेंकटा-
चलम् ॥ ७१ ॥ गोविंदराजमुद्धृत्य निक्षेप्तुं लवणांभसि ॥ उद्यंतं
चोलभूपालं दृष्ट्वा व्याकुलमानसाः ॥ ७२ ॥ तिल्येति काचित्तं शीघ्रं
तत्रस्था सा वरांगना ॥ मायया मोहयित्वाथ गोविंदचरणप्रिया॥७३॥
गोविंदराजं सहसा सा निन्ये वेंकटाचलम् ॥ रंगक्षेत्रं तथा कर्तुमुद्युक्तः-
स च दुर्मतिः ॥ ७४ ॥ प्रतस्थे सैनिकैः सर्वैः श्रीरंगं प्रति सत्वरम् ॥
मार्गे तत्र च सायाह्ने कश्चिद्ग्रामं समाश्रितः ॥ ७५ ॥ तद्रात्रौ तस्य
कंठे तु महद्व्रणमजायत ॥ क्रिमयो बहवस्तस्मादजायंत व्रणात्तदा
॥ ७६ ॥ औदर्य्यरोगस्तस्यासीत्ताभ्यां स च मृतिं गतः ॥ गोविंद-
राजवृत्तांतं श्रुत्वासौ दुःखितोऽभवत् ॥ ७७ ॥ तद्दुःखपरिहाराय
शिष्यैः सहः वृषाचलम् ॥ गत्वा तत्राशु तं देवं प्रतिष्ठाप्य यथा-
विधि ॥ ७८ ॥ तस्य गोविंदराजस्य तिल्यगोविंदनाम च ॥ विधाय
वेंकटगिरावारुह्य सहसा मुदा ॥ ७९ ॥ प्रणम्य भक्त्या तं देवं वेंक-
टेशं यतीश्वरः ॥ तस्मान्निर्गत्य सहसा क्षेत्रं सत्यव्रतं गतः ॥ ८० ॥
भूयः श्रीरंगनगरं संप्राप्य यतिभूपतिः ॥ विशेषार्थान्स्वशिष्येभ्यः

सुखं संबोधयन्तिस्थतः ॥ ८१ ॥ आगत्यागमभूधराद्यतिपती रंगं च रंगेश्वरं नत्वाश्वास्य स कूरनाथमसकृद्दत्वा जनेभ्यो मुदम् ॥ गोविंदं वृषभूधरस्य निकटे स्थाने प्रतिष्ठाप्य तं भूयो रंगमवाप्य शिष्यसहितस्तस्थौ सुखं शाश्वतम् ॥ ८२ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे वेंकटाचलदक्षिणभागस्थे चित्रकूटतिल्यगोविंदराजप्रतिष्ठापनकथनं नामैकपंचाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ।

ततः कूरेश्वरं प्राह समानीय यतीश्वरः ॥ अर्थितार्थप्रदाने तु देवराजः प्रदीक्षितः ॥ १ ॥ स्तोत्रं तद्विषयं विद्वन्कुरु कूरेश सांप्रतम् ॥ अंजसा भवतो नेत्रे भगवान्दास्यति ध्रुवम् ॥ २ ॥ मास्तु नेत्रं ममेत्येवं कूरेशो गुरुमब्रवीत् ॥ निर्बंधयामास तदा कुरुष्वेति पुनः स तम् ॥ ३ ॥ ततः कूरेश्वरः श्रीमान् वरदं स्तोतुमुद्यतः ॥ ४ ॥ स्वस्ति हस्तिगिरिमस्तशेखरः शं तनोतु मयि संततं हरिः ॥ निःसमाभ्यधिकमभ्यधत्त यं देवमौपनिषंदी सरस्वती ॥ ५ ॥ ( इत्येवं स्तुतिमारभ्य सश्लोकान् कतिचिद्व्यधात् ॥ ) नीलमेघनिभमंजनपुंजश्यामकुंतलमनंतशयं त्वाम् ॥ अब्जपाणिपदमंबुजनेत्रं नेत्रसात्कुरु करीश सदा मे ॥६॥ इति श्लोकार्थसदृशदिव्यरूपप्रदर्शने ॥ योग्यमप्राकृतं चक्षुर्देहि मे कमलेक्षण ॥ ७ ॥ इत्येवं वरदं देवं प्रार्थयामास कूरराट् ॥ ततः प्रसन्नो वरदः कूरेशाय महात्मने ॥ ८ ॥ दिव्यं चक्षुर्ददामीति स्वप्ने प्राह हरिस्तदा ॥ तस्यां रात्र्यां व्यतीतायां कृतकर्मा महाकविः ॥९॥ अतिप्रहृष्टो वेगेन देवराजस्तवं हितम् ॥ स तं निर्वर्त्य कूरेशो यतींद्राभ्यासमभ्यगात् ॥ १० ॥ यतींद्रं प्रणिपत्याह संतुष्टः कूरराट् तदा ॥ अधुना लक्ष्मणाचार्य्य भवतः शासनान्मया ॥ ११ ॥ वरदं प्रति योगीश देवराजस्तवः कृतः ॥ इति तं यतिराजाय स्तवं तस्मै न्यवेदयत् ॥ १२ ॥ श्रुत्वा तं लक्ष्मणाचार्यः प्रममोद महायशाः ॥ भूयः प्रोवाच

धर्मात्मा कूरेशो यतिपुंगवम् ॥ १३ ॥ मया वरो यथेदानीं वरदं प्रति याचितः ॥ तत्तेहं संप्रवक्ष्यामि श्रूयतां गुरुपुंगव ॥ १४ ॥ वैकुंठे तु परे लोके भवंतं नित्यसूरयः ॥ सदा पश्यंति देवेश येन दिव्येन चक्षुषा ॥ १५ ॥ दिव्यमप्राकृतं चक्षुस्तन्मे देहि जगत्पते ॥ संतुष्टोभीष्टवरदस्ततो मे कमलेक्षणः ॥ १६ ॥ तस्य वैकुंठनाथस्य सदा दर्शनकारणम् ॥ अप्राकृतं दिव्यचक्षुः प्रददौ मे यतीश्वर ॥ १७ ॥ यतिराजः संप्रहृष्टस्तच्छ्रुत्वा शिष्यवत्सलः ॥ कूरेशाद्यैव गच्छावः कांचीमित्यभिधाय च ॥ १८ ॥ कूरेशसहितः श्रीमांस्तूर्णं कांचीपुरं ययौ ॥ कृतप्रणामस्तत्स्तोत्रं वरदाय कृतांजलिः ॥१९ ॥ विज्ञापयामास तदा कूरेशो देशिकाज्ञया ॥ ततः प्रसन्नो वरदः कूरेशमिदमब्रवीत् ॥ २० ॥ वरं वरय भद्रं ते वरं दास्यामि कांक्षितम् ॥ तदा कूरपतिः श्रुत्वा वरदोक्तं वचः शुभम् ॥२१॥ संप्रार्थ्य वरदं देवं यतिराजमनःप्रियम् ॥ इति वव्रे वरं तूर्णं वरदं भक्तवत्सलम्॥२२॥यो लोकः प्राप्यते स्वामिन्न भवतः कृपया मया ॥ तं लोकं प्राप्नुयात्सम्यक् चतुर्ग्रामाभिधः स च ॥२३॥ वरदो बाढमित्याह तदा कूरपतिं हरिः॥स तदाकर्ण्य वृत्तांतं तूर्णं लक्ष्मणदेशिकः॥२४॥ विषण्णवदनः प्राप्य जगाद वरदं वचः ॥ देवदेवारविंदाक्ष सर्वज्ञ जगदीश्वर ॥ २५ ॥ सर्वज्ञश्च भवान्देव वरमेवंविधं हरे ॥ एतस्मै कूरनाथाय प्रदातुं कथमर्हति॥२६॥ततोब्रवीत्स कूरेशं रुष्टो योगेश्वरस्तदा॥स्वच्छंदतो भवानद्य मम चोल्लंघ्य शासनम् ॥२७॥ ममापि गमनात्पूर्वं सहसैवं कृतो ह्यभूत् ॥ एवं निर्भर्त्स्य कूरेशं विषण्णो यतिभूपतिः ॥ २८ ॥ किं करोमीति संभ्रांतस्तस्थौ नष्टधनो यथा ॥ ततः प्रसन्नो वरदो यतिराजमथाब्रवीत् ॥ २९ ॥ मा शोकं कुरु योगीश तवाभीष्टं ददाम्यहम् ॥ संद्रष्टुं चक्षुषा सर्वमथाभीष्टवरप्रदः ॥ ३० ॥ वरप्रदानं वरदः कूरेशायाकरोत्तथा ॥ लब्धचक्षुः स कूरेशः संसेव्यापादमस्तकम् ॥ ३१ ॥ अभीष्टवरदं देवमानंदाश्रुपरिप्लुतः ॥

मुमोद बहुधा तत्र विलसन्मुखपंकजः ॥ ३२ ॥ धृतोर्ध्वपुंड्रं शशि-शुभ्रवर्णं काषायिणं कंजदलायताक्षम् ॥ त्रिदंडहस्तं धृतयज्ञसूत्रं दृष्ट्वा यतींद्रं मुमुदे महात्मा ॥ ३३ ॥ अनुज्ञातस्तदा तेन साधयित्वा स्ववांछितम् ॥ ततः सत्यव्रतक्षेत्रात्स कूरेशो यतीश्वरः ॥ कृतार्थौ रंगनगरमाससाद महायशाः ॥ ३४ ॥ कूराधिपायाथ स दापयित्वा श्रीलक्ष्मणार्यो वरदेन नेत्रे ॥ अवाप्तकामः पुनरेव रंगं विवेश विख्या-तयशाः कृतार्थः ॥ ३५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कूरेश-स्य नेत्रप्राप्तिर्नाम द्विपंचाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ।

पुरा गोदा स्तव चक्रे हरिमुद्दिश्य भक्तितः ॥ चत्वारिंशत्समधिक-शतगाथाविराजितम् ॥ १ ॥ तत्रैकस्यां तु गाथायां महावनगिरी-श्वरः ॥ भगवान्सुंदरभुजस्तयैवं प्रार्थितो हरिः ॥ २ ॥ कुरुषे यदि मे देव पाणिग्रहणमंगलम् ॥ क्षीराद्यनेकसंयुक्तगुडान्नस्य घटीशतम् ॥ ३ ॥ समर्पये हरे तुभ्यं नवनीतघटीशतम् ॥ इति तत्र स्थितं दृष्ट्वा गोदाभीष्टमभीष्टदः ॥ ४ ॥ तयैवमकृतत्वेन यतींद्रः कर्तुमु-द्यतः ॥ ततो वनाद्रिं संप्राप्य तस्मै सुंदरबाहवे ॥ ५ ॥ अर्पयामास तत्सर्वं नार्पयत् सा यदैव हि ॥ ततो यतीश्वरस्तस्माद्धन्विनाथपुरं ययौ ॥ ६ ॥ वटपत्रशयं नत्वा गोदाभ्याशमुपागतः ॥ गोदां प्रणम्य सहसा विष्णुचित्तसुतां तदा ॥ ७ ॥ सह शिष्यैर्यतिश्रेष्ठो बद्धांजलि-पुटस्तदा ॥ ममाभीष्टमनेनाद्य सम्यङ् निर्वर्तितं त्विति ॥ ८ ॥ तदा देवी प्रहृष्टात्मा सुतरां विष्णुवल्लभा ॥ तस्य गोदाग्रजश्चेति नाम चक्रे कृपावशात् ॥ ९ ॥ तीर्थप्रसादं स्वीकृत्य तया संतोषितो मुदा ॥ निर्ययौ सहसा तस्मात्कुरुकानगरं प्रति ॥ १० ॥ स गत्वा दूरमध्वानं चिंचाकुटिमगात्तदा ॥ वीथ्यां विलोक्य तत्रैकां स कांचि-दशवार्षिकीम् ॥ ११ ॥ अथोचदसितापाङ्गीं वैष्णवीं बालिकां प्रति ॥

कियद्दूरेसितापांगि वर्तते कुरुकापुरी ॥ १२ ॥ मह्यमाख्याहि तत्त्वेन बालेस्य नगरस्य च ॥ तद्यतींद्रवचः श्रुत्वा बालिका वाक्यमब्रवीत् ॥ १३ ॥ सहस्रगीतिर्भवता न च किं पठिता द्विज ॥ स तद्वचः प्रगृह्याशु विस्मितो वाक्यमब्रवीत ॥ १४ ॥ सहस्रगीतिपठनात्कथं ज्ञातुं हि शक्यते ॥ एतावन्मात्रदूरस्था पुरीयं कुरुकाबले ॥ १५ ॥ तद्यतींद्रवचः श्रुत्वा तमवोचच्छुचिस्मिता ॥ चिंचाकुटीरं कुरुकानगर्याः क्रोशमात्रकम् ॥ १६ ॥ दूरमित्यत्र शठजिद्ग्रंथे सुस्पष्टमीरितम् ॥ इत्येवमुक्त्वा तां गाथां हठाद्बाला पपाठ सा ॥ १७ ॥ तच्छ्रुत्वा समवाप्याथ यतींद्रो हर्षविस्मयौ ॥ पुत्रिकामिव संवीक्ष्य तां साक्षात्परदेवताम् ॥ १८ ॥ कृपया चाह धर्मात्मा वैष्णवीं वैष्णवप्रियः ॥ कुत्र युष्मद्गृहं बाले तद्दर्शय ममाधुना ॥१९॥ अथांगीकृत्य योगींद्रवचनं वैष्णवी तदा ॥ दर्शयित्वा स्ववेश्माशु यतींद्राय महात्मने ॥ २० ॥ सम्यक् पितृभ्यां वृत्तांतं तत्सर्वं प्राह सत्वरम् ॥ पाकार्थमाहृतान्येवं नवभांडानि सत्वरम् ॥ २१ ॥ तानि सर्वाणि संत्यज्य यतींद्रोतीवहर्षितः ॥ प्रविश्यावसथं तस्याः कन्यकायाः कृतादरः ॥ २२ ॥ सशिष्यसंघो भक्त्यासीत्तत्पितृभ्यां समर्चितः ॥ तावन्मात्रेण संतुष्टस्तदन्नमतिपावनम् ॥२३॥ पाचितं कन्यकामात्रा वरदाय समर्प्य च ॥ निर्मलेन हृदा सम्यग् बुभुजे तद्गृहे तदा ॥२४॥ कूरेशदाशरथ्यादिशिष्यैर्वेदांतवेदिभिः ॥ अथ तस्यै कन्यकायै तत्पितृभ्यां च सादरम् ॥२५॥ तद्बंधुभ्योखिलेभ्यश्चतत्रान्येभ्यो जगद्गुरुः ॥ उपदिश्य विशेषार्थान् कृपयामरदुर्लभान् ॥२६॥सतैस्संपूजितैः सर्वैः प्रतस्थे कुरुकापुरीम् ॥ कुरुकायां शठारातिमादिनाथं प्रणम्य च ॥ २७ ॥ तीर्थं प्रसादं स्वीकृत्य विश्रम्य यतिपुंगवः ॥ भूयः शठारिं संसेव्य तिंतिणीमूलमाश्रितम् ॥ २८ ॥ तिंतिणीभूरुहं वीक्ष्य दिव्यं च चिरजीविनम् ॥ श्रीमज्जनोत्सवं दृष्ट्वा शठारातेर्महाद्भुतम् ॥ २९ ॥ अद्वितीयं महांतं च प्रभावमतिमानुषम् ॥ अत्याश्च-

र्युतो धीमान् संतुष्टस्तस्य सन्निधौ ॥ ३० ॥ सर्वेषां शृण्वतां तत्र वचनं चेदमब्रवीत् ॥ प्रपन्नजनकूटस्थः शठारातिरयं महान् ॥३१॥ अनादिसिद्धं निस्तुल्यमेतद्वैष्णवदर्शनम् ॥ संलीनमुद्धृतं सम्यगनेनैव प्रकाशितम् ॥ ३२ ॥ अतिगोप्यांश्च वेदाथानुद्धृत्यामरदुर्लभान् ॥ कृत्वा द्राविडरूपेण प्रबंधाँश्चतुरः क्रमात् ॥ ३३ ॥ सर्वाधिकारान् शठजिज्जगत्सर्वमपालयत् ॥ लोकसंरक्षकस्यास्य महतः शठवैरिणः॥ ॥ ३४ ॥ किं वाद्य निष्क्रयं तस्य करिष्यामि कथं ह्यहम ॥ वर्त्तते यदि मे पुत्रो नाममात्रं विधाय च ॥ ३५ ॥ शठारातिऋणं किंचित्तत्प्रमार्ष्टुं हि शक्यते ॥ कथं वा विद्यते पुत्रस्स मे संन्यासिनो भुवि ॥ ३६ ॥ इति व्याकुलचित्तं तं वीक्ष्य लोकैकदेशिकम् ॥ पुत्रः श्रीशैलपूर्णाख्यो भूरिश्रीशैलपूर्णजः ॥ ३७ ॥ महाप्राज्ञो महातेजाः कश्चिदभ्येत्य सादरम् ॥ प्रणम्य लक्ष्मणाचार्य्यं बद्धांजलिपुटोब्रवीत्॥३८॥ मामंगीकृत्य योगींद्र दासभूतं त्वदात्मजम ॥ मनोरथं हि भवतः सफलं कर्तुमर्हसि ॥ ३९ ॥ संतुष्टस्तेन वाक्येन तमंगीकृत्य चात्मजम् ॥ कुरुकेश्वर इत्यस्य नामधेयं चकार सः ॥ ४० ॥ शठारातिस्ततस्तेन यतिराजाय हर्षितः ॥ स्वपादाब्जपदं चक्रे यतीशं लोकविश्रुतम् ॥ ४१ ॥ शठजित्पादनामाभूत्तद्यतींद्रस्य विश्रुतम् । शठारिर्भगवत्पादो यथाभूद्विदितो भुवि ॥ ४२ ॥ तथैव शठजित्पादो लोके रामानुजोऽभवत् ॥ रामानुजांघ्रिस्थानत्वे तथा दाशरथिर्ह्यभूत् ॥४३॥ शठकोप प्रदेहीति भगवत्सन्निधौ वदेत् ॥ रामानुजं प्रदेहीति शठजित्सन्निधौ वदेत् ॥ ४४ ॥ तथा दाशरथिं देहि श्रीरामानुजसन्निधौ ॥ इमं गुह्यतमं ह्यर्थं यो वेत्ति मनुजो महान् ॥ ४५ ॥ स च श्रीवैष्णवः श्रीमान् मुमुक्षुर्नात्र संशयः ॥ ततो यतींद्रस्संतुष्टः कृतार्थो जगतां गुरुः ॥ ४६ ॥ तीर्थं प्रसादं स्वीकृत्य शठजिद्दयया गतम् ॥ ततः श्रीरंगनगरमाजगाम महायशाः ॥ ४७ ॥ ततः स्व-

मठमाविश्य सह शिष्यैर्यतीश्वरः ॥ दर्शनार्थान्स्वशिष्येभ्यः प्रवदन्न्य-
वसत्सुखम् ॥ ४८ ॥ प्रच्छन्नबौद्धान्निर्जित्य ब्रह्मात्मैकत्ववादिनः ॥
देहात्मवादिनो मूढांश्चार्वाकाञ्छास्त्रदूषकान् ॥ ४९ ॥ बौद्धांश्च सहसा
जित्वा जीवानित्यत्ववादिनः ॥ मीमांसकान्विजित्याशु ता ननीश्वर-
वादिनः ॥ ५० ॥ कापिलानाकुलीकृत्य ब्रह्मनैमित्त्यवादिनः ॥ एवं हि
सर्वसमयानुन्मूल्य शतशोऽशुभान् ॥ ५१ ॥ स्ववशीकृत्य तान् सर्वा-
नरक्षद्यतिपुंगवः ॥ पाषंडबौद्धचार्वाकमायावादाद्यवैदिकाः ॥ सर्वे यतीं-
द्रमाश्रित्य बभूवुर्वैदिकोत्तमाः ॥ ५२ ॥ ते सुस्फुटं च भुजयोर्धृतशं-
खचक्राः सम्यग् ललाटफलके लसदूर्ध्वपुंड्राः ॥ कंठे विलग्नतुलसी-
नलिनाक्षमाला भेजुर्मुकुंदपदवीं यतिराजभक्ताः ५३ ॥ एवं महात्मा
यतिचक्रवर्ती रंगे पुरे लक्ष्मणदेशिकेंद्रः ॥ आसेतुसीताचलभूमिभागे
जितारिवर्गस्सुतरां विरेजे ॥ ५४ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे
गोदाभीष्टप्रपूर्णादिकथनं नाम त्रिपंचाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ।

निर्जित्य सर्वसमयान्स्वमतं पृथिव्यामाचन्द्रतारकमिदं प्रथितं
यतींद्रः ॥ संस्थाप्य साधुजनसंमतमेव सिद्धं लोकं ररक्ष कृपयाखिल-
मीशदत्तम् ॥ १ ॥ सर्वे जना निखिलधर्मरता विशुद्धा रामानुजार्य्य-
कृपया धृतशंखचक्राः ॥ वेदांतयुग्मविदिताखिलतत्त्वबोधा मुक्तिं क-
लावपि ययुर्जितविष्णुमायाः ॥२॥ सर्वाञ्जनान्विष्णुपदाब्जभृंगान्कुर्व-
न्स्वसामर्थ्यबलेन धीरः॥गोविंदकूरेशमुखैश्च शिष्यैस्तस्थौ स रंगे यति-
सार्वभौमः॥३॥एवं निवसतस्तस्य श्रीरंगे यतिभूपतेः॥शिष्याश्च बहवः
संति देशेषु निखिलेष्वपि ॥ ४ ॥ न तेषां गणने शक्ताश्चित्रगुप्ताद-
योपि हि ॥ तत्र प्रधानाश्शिष्यास्ते चतुःसप्ततिदेशिकाः ॥ ५ ॥
तेषां प्रियतमाः शिष्या बहवः संति वैष्णवाः ॥ नित्यकैंकर्य्यनिरता
यतींद्रस्य जगद्गुरोः ॥ ६ ॥ धीमान्वरदविष्णवार्यकूरेशौ भट्टवर्गकः ॥

श्रीभाष्यस्य यतींद्रेण व्याख्याने च सहायकाः ॥ ७ ॥ देवराजमु-
निस्तस्थौ विष्णवाराधनकर्मणि ॥ प्रणतार्तिहराचार्य्यः सानुजो यति-
भूपतेः ॥ ८ ॥ पाककर्मणि संयुक्तस्तस्थौ नित्यं गुरुप्रियः ॥ आं-
ध्रपूर्णोभवद्युक्तस्तस्याभ्यंजनकर्मणि ॥ ९ ॥ गोमठान्वयसंभूतो
बालार्यो यतिभूपतेः ॥ कमंडलुं पादुके च वहंस्तस्थौ निरंतरम् ॥ १० ॥
हस्तदाने धनुर्दासः संयुक्तो यतिभूपतेः ॥ अंमंगी तु सदा क्षीरं
पक्का निश्यर्पयन्स्थितः ॥ ११ ॥ उत्कलार्यो भुक्तपात्रग्रहणे निर-
तोभवत् ॥ उत्कलाख्यस्तु वरदो व्यंजनं सम्यगर्पयत् ॥ १२ ॥
शिष्यः कलिंगदेशार्य्यः परवादिजये स्थितः ॥ चंडशुंडाविति ख्यातौ
मल्लावुक्तौ महाबलौ ॥ १३ ॥ राजसेवापरौ द्रव्यं मठस्यान्यूनता
यथा ॥ अर्जयंतौ तथा नित्यमधिकं यतिभूपतेः ॥ १४ ॥ एवं कैंक-
र्य्यनिरतास्तस्य संति सहस्रशः ॥ तेषां यतींद्रशिष्याणामांध्रपूर्णो म-
हामतिः ॥ १५ ॥ उपायं चाप्युपेयं च गुरुपादाब्जमेव मे ॥ इति ध्रुवं
विनिश्चित्य यतिराजपदांबुजम् ॥ १६ ॥ अष्टोत्तरशतैर्दिव्यैर्नामभिर्भ-
क्तितत्परः ॥ नित्यमाराधयंस्तस्थाविष्टदेवमिवादरात् ॥ १७ ॥

## ॥ श्रीरामानुजनामाष्टोत्तरशतम् ॥

रामानुजः पुष्कराक्षो यतींद्रः करुणाकरः ॥ कांतिमत्यात्मजः
श्रीमाँल्लीलामानुषविग्रहः ॥ १८ ॥ सर्वशास्त्रार्थतत्त्वज्ञः सर्वज्ञः स-
ज्जनप्रियः ॥ नारायणकृपापात्रः श्रीभूतपुरनायकः ॥ १९ ॥ अनघो
भक्तमंदारः केशवानंदवर्द्धनः ॥ कांचीपूर्णप्रियसखः प्रणतार्तिविना-
शनः ॥ २० ॥ पुण्यसंकीर्तनः पुण्यो ब्रह्मराक्षसमोचकः ॥ यादवा-
पादितापार्थवृक्षच्छेदकुठारकः ॥ २१ ॥ अमोघो लक्ष्मणमुनिः शार-
दाशोकनाशनः ॥ निरंतरजनाज्ञाननिर्मोचनविचक्षणः ॥ २२ ॥ वेदां-
तद्वयसारज्ञो वरदांबुप्रदायकः ॥ पराभिप्रायतत्त्वज्ञो यामुनांगुलिमो-
चकः ॥ २३ ॥ देवराजकृपालब्धषड्वाक्यार्थमहोदधिः ॥ पूर्णार्यल

ब्धसन्मंत्रः शौरिपादाब्जषट्पदः ॥ २४ ॥ त्रिदण्डधारी ब्रह्मज्ञो ब्रह्म-
ध्यानपरायणः ॥ रंगेशकैंकर्य्यरतो विभूतिद्वयनायकः ॥ २५ ॥ गोष्ठी-
पूर्णकृपालब्धमंत्रराजप्रकाशकः ॥ वररंगानुकंपात्तद्राविडाम्नाय-
पारगः ॥ २६ ॥ मालाधरार्यसुज्ञातद्राविडाम्नायतत्त्वधीः ॥ चतुः-
सप्ततिशिष्याढ्यः पंचाचार्य्यपदाश्रयः ॥ २७ ॥ प्रतीतविषतीर्थांभःप्रकटीकृतवैभवः ॥ प्रणतार्तिहराचार्य्यदत्तभिक्षैकभोजनः
॥ २८ ॥ पवित्रीकृतकूरेशो भागिनेयत्रिदंडकः ॥ कूरेशदाशरथ्यादि-
चरमार्थप्रदायकः ॥ २९ ॥ रंगेशवेंकटेशादिप्रकाशीकृतवैभवः ॥
देवराजार्चनरतो मूकमुक्तिप्रदायकः ॥ ३० ॥ यज्ञमूर्तिप्रतिष्ठाता
मन्नाथो धरणीधरः ॥ वरदाचार्य्यसद्भक्तो यज्ञेशार्तिविनाशकः ॥ ३१ ॥
अनंताभीष्टफलदो विट्ठलेशप्रपूजितः ॥ श्रीशैलपूर्णकरुणालब्धरामा-
यणार्थकः ॥ ३२ ॥ प्रपत्तिधर्मैकरतो गोविंदार्य्यप्रियानुजः ॥ व्यास-
सूत्रार्थतत्त्वज्ञो बोधायनमतानुगः ॥ ३३ ॥ श्रीभाष्यादिमहाग्रंथका-
रकः कलिनाशनः ॥ अद्वैतमतविच्छेत्ता विशिष्टाद्वैतपालकः ॥ ३४ ॥
कुरंगनगरीपूर्णमंत्ररत्नोपदेशकः ॥ विनाशिताखिलमतः शेषीकृतर-
मापतिः ॥ ३५ ॥ पुत्रीकृतशठारातिः शठजिद्दणमोचकः ॥ भाषादत्त-
हयग्रीवो भाष्यकारो महायशाः ॥ ३६ ॥ पवित्रीकृतभूभागः कूर्मना-
थप्रकाशकः ॥ श्रीवेंकटाचलाधीशशंखचक्रप्रदायकः ॥ ३७ ॥
श्रीवेंकटेशश्वशुरः श्रीरमासखदेशिकः ॥ कृपामात्रप्रसन्नार्यो गोपिका-
मोक्षदायकः ॥ ३८ ॥ समीचीनार्यसच्छिष्यः सत्कृतो वैष्णवप्रियः ॥
क्रिमिकंठनृपध्वंसी सर्वमंत्रमहोदधिः ॥ ३९ ॥ अंगीकृतांध्रपूर्णार्यः
शालग्रामप्रतिष्ठितः ॥ श्रीभक्तग्रामपूर्णार्यविष्णुवर्द्धनरक्षकः ॥ ४० ॥
बौद्धध्वांतसहस्रांशुः शेषरूपप्रदर्शकः ॥ नगरीकृतवेदाद्रिर्दिल्लीश्वर-
समर्चितः ॥ ४१ ॥ नारायणप्रतिष्ठाता संपत्पुत्रविमोचकः ॥ संपत्कु-
मारजनकः साधुलोकशिखामणिः ॥ ४२ ॥ सुप्रतिष्ठितगोविंदराजः

पूर्णमनोरथः ॥ गोदाग्रजो दिग्विजेता गोदाभीष्टप्रपूरकः ॥ ४३ ॥
सर्वसंशयविच्छेत्ता विष्णुलोकप्रदायकः ॥ अव्याहतमहद्वर्त्मा यति-
राजो जगद्गुरुः ॥ ४४ ॥ एवं रामानुजार्यस्य नाम्नामष्टोत्तरं शतम् ॥
यः पठेच्छृणुयाद्वापि सर्वान्कामान्समश्नुते ॥ ४५ ॥ यदांध्रपूर्णेन
महात्मनेदं स्तोत्रं कृतं सर्वजनावनाय ॥ तज्जीवभूतं भुवि वैष्णवानां
बभव रामानुजमानसानाम् ॥ ४६ ॥ इति श्रीप्रपन्नामृते रामानुज-
चरित्रे रामानुजाष्टोत्तरशतनाम्नां वर्णनं नाम चतुःपंचाशोऽ-
ध्यायः ॥ ५४ ॥

---

## पञ्चपञ्चाशोऽध्यायः ।

आंध्रपूर्णो ह्यसौ धीमाञ् ज्ञात्वैवं गुरुदैवतम् ॥ तस्थावन्यमजा-
नानस्तत्कैंकर्य्यपरोनिशम् ॥ १ ॥ सर्वमुक्तिप्रदे धीमाञ् श्रीरामानु-
जपादुके ॥ अष्टोत्तरशतैर्दिव्यैर्नामभिर्भक्तितत्परः ॥ २ ॥ नि-
त्यमाराधयंस्तस्थाविष्टदेवमिवादरात् ॥ प्रयाणगत्यां कस्यांचिदांध्रपूर्णो
गुरुप्रियः ॥ ३ ॥ यतींद्राराधनं चैव स्वस्याराधनमादरात् ॥
समाहृत्य द्वयं वेगाद्यतींद्रं पृष्ठतोन्वगात् ॥ ४ ॥ लक्ष्मणार्य्योथ
तं दृष्ट्वा पूर्णं वाक्यमभाषत ॥ किं कार्यमांध्रपूर्णार्य्य त्वयेदं हि
कृतं बत ॥ ५ ॥ आंध्रपूर्णः स तच्छ्रुत्वा यतींद्रं वाक्यमब्रवीत् ॥
युष्मद्देवान्निकृष्टः किमस्मद्देवो यतीश्वर ॥ ६ ॥ तच्छ्रुत्वा लक्ष्मणा-
चार्य्यः संतुष्टिं परमां गतः ॥ आंध्रपूर्णो यतींद्रेण रंगेशं सेवितुं यदि ॥
॥ ७ ॥ यदागतस्तदा तस्थौ संसेव्य गुरुविग्रहम् ॥ ततः कदाचि-
त्प्राहेदमांध्रपूर्णं यतीश्वरः ॥ ८ ॥ रंगेशनेत्रसौंदर्य्यं पश्य त्वमनघा-
धुना ॥ तच्छ्रुत्वा लक्ष्मणार्यस्य वाक्यं पूर्णोभ्यभाषत ॥ ९ ॥ यतीं-
द्रनेत्रसौंदर्य्यं लोचमानं मदीयकम् ॥ लक्ष्मणार्य्यं यतिश्रेष्ठ चक्षुरन्यन्न
पश्यति ॥ १० ॥ अधिकारविशेषं च मत्वेदं यतिभूपतिः ॥ अकरो-
दांध्रपूर्णाय करुणां महतीं तदा ॥ ११ ॥ ततः कदाचिद्योगींद्रो भुक्त्वा

पूर्वं जगद्गुरुः ॥ कृपया लक्ष्मणाचार्यो भुक्तपात्रस्थमादरात् ॥ १२ ॥ शिष्टान्नमांध्रपूर्णायशिष्याय प्रददौ यदा ॥ तदांध्रपूर्णः सहसा स्वीकृत्यान्नं तदर्पितम् ॥ १३ ॥ प्रक्षालनमकृत्वाथ हस्तयोर्भक्तितत्परः ॥ तत्पवित्रतमं मत्वा ममार्जांशु स्वमस्तके ॥ १४ ॥ दृष्ट्वा कदाचित्तं पूर्णं योगींद्रः कुपितस्तदा ॥ हस्तप्रक्षालनं शीघ्रं कुरुष्वेति जगाद ह ॥ ॥ १५ ॥ तथाकरोदांध्रपूर्णो धन्योस्मीति महामतिः ॥ ततः कदाचिद्रंगेशनैवेद्यसमये तदा ॥ १६ ॥ यतींद्रेण यदा प्राप्तस्सपूर्णो गुरुणा सह ॥ स्वदत्तं तत्प्रसादं च स्वीकृत्यार्द्धं यतीश्वरः ॥ १७ ॥ आंध्रपूर्णाय तच्छिष्टमादिशत्कृपया गुरुः ॥ तदांध्रपूर्णः स्वीकृत्य हस्तप्रक्षालनं व्यधात् ॥ १८ ॥ दृष्ट्वा विचेष्टितं तस्य प्रोवाच यतिपुंगवः ॥ विरुद्धमांध्रपूर्णाद्य कृतं कर्म कथं त्वया ॥ १९ ॥ स तदाकर्ण्य तद्वाक्यमांध्रपूर्णस्तमब्रवीत् ॥ भवतोक्तप्रकारेण कृतमद्य न चान्यथा ॥ २० ॥ भवतो युक्तमेवेदमिति प्राह यतीश्वरः ॥ कदाचिदांध्रपूर्णार्यो यतींद्रस्य गुरोस्ततः ॥ २१ ॥ रात्रौ क्षीरं महाभक्त्या पक्तुकामः समास्थितः ॥ यतिराजस्तमाहूय पूर्णं वाक्यमथाब्रवीत् ॥ २२ ॥ अयं महोत्सवः कालो रंगराजस्य वै किल ॥ ततो रंगेश्वरः श्रीमान्न सांप्रतं जगदीश्वरः ॥ २३ ॥ वीथ्यामायाति वेगेन महता वैभवेन च ॥ रंगराजस्य सेवार्थं किन्नायाति भवान्बुध ॥ २४ ॥ तन्निशम्यांध्रपूर्णार्यो यतींद्रमिदमब्रवीत् ॥ युष्मद्देवस्य सेवार्थमागतो यद्ययं गुरो ॥ २५ ॥ अधुना मम देवस्य क्षीरमुज्जृंभितं भवेत् ॥ अतोहं नागमिष्यामि सेवार्थं रंगभूपतेः ॥ २६ ॥ आंध्रपूर्णगृहं प्राप्ताः पूर्वसंबंधिबांधवाः ॥ स्थित्वा दिनैकं तत्राथ गतेष्वेतेषु बंधुषु ॥ २७ ॥ आंध्रपूर्णो गृहं सर्वं शुद्धं कृत्वाथ शीघ्रतः ॥ गृहस्थितानि भांडानित्यक्त्वा दूरमचिंतयत् ॥ २८ ॥ प्रायश्चित्तं ततो मत्वा तस्येदमिति बुद्धिमान्न ॥ तस्य दाशरथेः शीघ्रं

गृहारामे महात्मनः ॥ २९ ॥ विसृष्टभांडान्यादाय स्थापयामास वे श्मनि ॥ गुरुसंबंधरहितास्ततोऽशुद्धाः प्रकीर्तिताः ॥३०॥ गुरुसंबध-संयुक्ताः परं शुद्धा भवंति हि ॥ आंध्रपूर्णो यतींद्रस्य पादतीर्थं विना-क्कचित् ॥ ३१ ॥ अन्योदकं न पिबति गुरुभक्तिमतां वरः ॥ तस्यैव तीर्थनियमो ह्यस्ति नान्यस्य कस्यचित् ॥ ३२ ॥ आंध्रपूर्णो यतींद्र-स्य पादतीर्थं सुपावनम् ॥ कृपया स्थापयामास शालग्रामे निधिं यथा ॥ ३३ ॥ यतींद्रपादुके चात्र सर्वसंपत्प्रदायके ॥ उज्जीवनार्थं लोका-नामाराधनमिवादरात् ॥ ३४ ॥ स्वकीयायां दशायां तु चरमायां दृढ-व्रताः ॥ स्वांतरंगिण आहूय चरमार्थविशारदान् ॥ ३५ ॥ चरणावेव शरणं यतींद्रस्य जगद्गुरोः ॥ इति ध्रुवं विनिश्चित्य वर्तध्वमिति चाब्रवीत् ॥ ३६ ॥ एवं सत्यांध्रपूर्णस्य चरितानि बहूनि हि ॥ चित्रगुप्तादिभि-स्तानि न गण्यंते महात्मभिः ॥ ३७ ॥ आश्चर्य्यभूतं भवि चांध्रपूर्ण-माहात्म्यमाचार्यपरत्वबीजम् ॥ यो वापि कुर्यात्तदिदं हृदिस्थमाचा-र्यभक्तस्स भवेन्मनुष्यः ॥ ३८ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे आंध्रपूर्णमहात्म्यकथनं नाम पंचपंचाशोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशोऽध्यायः ।

रामानुजाज्ञया धीमाननंतार्यो वृषाचले॥वेंकटेशस्य कैंकर्य्यं कुर्वन्नि-त्यं समास्थितः ॥ १ ॥ ततः कदाचिन्मतिमाननंतार्यो गुरुप्रियः ॥ रामानुजाभिधानस्य तटाकस्य सभार्यकः ॥ २ ॥ सेतुनिर्माणकरणे मृदमादाय सत्वरम् ॥ सेतुं विवर्द्धयंस्तस्थौ तटाकं च विवर्द्धयन् ॥ ३ ॥ ततोऽभ्येत्य बटुः कश्चित्तच्छूर्पं समुपाहरत ॥ अनंतार्यस्स तं दृष्ट्वा वाक्यमेतदुवाच ह ॥ ४ ॥ मज्जीवनं किमर्थं त्वं विनाशयसि-बालक ॥ कैंकर्य्ये भवतो बुद्धिर्यद्यस्ति सहसाधुना ॥५ ॥ शूर्पं कांचि-त्समादाय मृदमाहर बालक ॥ अंतर्वत्नी तस्य भार्या शूर्पं च समुपा-हरत् ॥ ६ ॥ नामालोक्य बटुर्भूत्वा वेंकटेशो दयार्णवः ॥ तस्याः

शिरःस्थितं तूर्णं मृदमादाय सत्वरम् ॥ ७ ॥ दूरे चोत्सृज्य तत्पात्रं पुनतस्यै प्रदत्तवान् ॥ एवं पुनःपुनस्तस्याः संमुखं चेत्य बालकः॥८॥ मृदाहरणकार्याणि चकार कृपया हरिः॥ शीघ्रं समागतां भार्यां दृष्ट्वोवाच सविस्मयः॥९॥ आगच्छसि कुतः शीघ्रमबले वद कारणम् ॥ तच्छ्रुत्वा तस्य भार्याशु भर्तारमिदमब्रवीत्॥१०॥ कश्चिद्बटुः समभ्येत्य ममाभिमुखमादरात् ॥ दयावान्मृदमादाय सहसोत्सृज्य दूरतः ॥ ११ ॥ पात्रं स प्रददन्मह्यं भूयोभूयोद्य वर्त्तते ॥ अनंतार्योंथ तच्छ्रुत्वा भार्यावाक्यं महामतिः ॥ १२ ॥ श्रीवेंकटेश्वरं मत्वा तं बटुं वाक्यमब्रवीत् ॥ कैंकर्यविघ्नकारिन्मे कैंकर्य्य हातुमुद्यतः ॥ १३ ॥ स्वामिन्नत्रागतो ह्यद्य तमित्येवावदद्धरिम् ॥ ग्रहीतुकामस्तं बालमभ्यधावद्द्विजोत्तमः ॥ १४ ॥ प्रधावितो वेंकटेशः स्वस्थानमविशज्जवात् ॥ आनंदनिलयं प्राप्तं दृष्ट्वा तं वेंकटेश्वरम् ॥ १५ ॥ निर्गत्यानंदनिलयात्तत्कैंकर्य्ये समास्थितः ॥ ततः कदाचिन्मतिमाननंतार्यो महामनाः ॥ १६ ॥ तस्मिन्पुष्पवने भक्त्या तुलसीं कर्तयन् स्थितः॥ दष्टवान् हि करं तस्य सर्पो वृंदासमीपतः ॥ १७ ॥ अनंतार्योंथ सहसा स्नात्वा सम्यग् दृढव्रतः ॥ कैंकर्याणि यथापूर्वं कुर्वन्निश्चल आस्थितः ॥ १८ ॥ आप्ताः केचित्समागत्य तच्छ्रुत्वा तमथाब्रुवन् ॥ भवंतं दष्टवान्सर्पो विषं देहे स्थितं किल ॥ १९ ॥ विषनिर्हरणे यत्नः किं न कार्यो दृढव्रत ॥ अनंतार्य्यः स तच्छ्रुत्वा तानुवाच महामनाः ॥ २० ॥ अयं संदशतः सर्पाद्बलवान्यदि वैष्णवाः ॥ स्वामिपुष्करणीतीर्थे स्नात्वा श्रीवेंकटेश्वरम् ॥ २१ ॥ संसेवयन्निवत्स्येहं भवद्भिः सह सादरम् ॥ दष्टसर्पस्तु बलवान् यदि स्याद्द्य सादरम् ॥ २२ ॥ कृत्वाहं विरजास्नानं सेवे वैकुंठनायकम् ॥ तेनंतार्यवचः श्रुत्वा विस्मयं परमं गताः ॥ २३ ॥ ततः कौशलदेशस्य प्रयाणे वैष्णवोत्तमाः ॥ दध्योदनं समादाय विष्णुनैवेद्यमुत्तमम ॥ २४ ॥ अनंतार्यो ययौ धीमान् कौशलं प्रति

सत्वरम् ॥ तदन्नं भोक्तुकामः सन् गत्वाध्वानं महत्तरम् ॥ २५ ॥ कृतनित्यक्रियो धीमान् क्षुधितो दुर्गमे पथि ॥ पिपीलिकामयं दृष्ट्वा तदोदनमचिंतयत् ॥ २६ ॥ वेंकटेशस्वर्णशैले यं वा कं वा जनीमहे॥ इति पूर्वैः प्रार्थितत्वादेते वै नित्यसूरयः ॥ २७ ॥ इति मत्वा वेंकटाद्रौ सोदनं त्वानयज्जवात् ॥ स कदाचिदनंतार्यो वृषाद्रौ पुष्पमंडपे ॥ २८ ॥ तस्थौ श्रीवेंकटेशस्य कुर्वन्कुसुममालिकाः ॥ आह्वयामास भगवाननंतार्यं स्वसन्निधिम् ॥ २९ ॥ स तच्छ्रुत्वाप्यसंभाष्य तूष्णीं तस्थौ तदुद्यमः ॥ विधाय मालिकाः सर्वाः पेटिकायां निधाय च ॥ ३० ॥ प्रदातुं वेंकटेशाय तत्सन्निधिमुपाययौ ॥ दृष्ट्वा तमागतं देवो वेंकटेशोऽवदन्मुदा ॥ ३१ ॥ इतः पूर्वं मयाहूतः किमर्थं नागतो भवान् ॥ तमाह वचनं धीमाननंतार्यो रमासखम् ॥ ३२ ॥ अधुना भवता स्वामिन् किं कार्य्यं विद्यते मया ॥ पुष्पदामादिकैंकर्य्यं तत्कार्यं देशिकाज्ञया ॥३३॥ अनंतार्य्यमथोवाच प्रहसन् वेंकटेश्वरः॥ अस्मच्छैलाद्भवानद्य मया निर्वासितो यदि ॥३४॥ ततस्त्वया हि कर्तव्यं किं कार्य्यं वद मेधुना ॥ अनंतार्य्यस्तदाकर्ण्य श्रीनिवासमथाब्रवीत् ॥ ३५ ॥ मायावी परमानंदं त्यक्त्वा वैकुंठमुत्तमम् ॥ स्वामिपुष्करणीतीरे रमया सह मोदते ॥ ३६ ॥ एवमाश्रितवात्सल्याद्वृषाद्रिं त्वं समागतः ॥ भक्त्याहं समनुप्राप्तो भगवन्देशिकाज्ञया ॥ ३७॥ यूयं वयं च शेषाद्रेरस्य तुल्यास्ततो ध्रुवम् ॥ मां निर्वासयितुं देव कथं शक्तो भवान् भवेत् ॥ ३८ ॥ यतींद्रभक्तिनिष्ठां तां विलोक्यात्यंतविस्मयः ॥ श्रीवेंकटेशो भगवान् प्रमुमोद स्वजनैः सह ॥ ३९ ॥ एवं यतींद्राखिलशिष्यसंघाः सर्वासु दिक्षु प्रथितप्रभावाः ॥ आचार्य्यकैंकर्य्यरता बभूवुर्निरंतरं निर्जितविष्णुमायाः ॥ ४० ॥ इति श्रीप्रपन्नाऽमृते रामानुजचरित्रेऽनंतार्य्यप्रभाववर्णनं नाम षट्पंचाशोऽध्यायः ॥ ५६ ॥

# सप्तपञ्चाशोऽध्यायः ।

एतादृशैः शिष्यजनैर्वसत्युर्व्यां यतीश्वरे ॥ महता वैभवेनैव श्रीरंगे जगतां गुरौ ॥ १ ॥एक एव हि कूरेशो यतींद्राय महात्मने ॥ अनुक्त्वा रंगराजस्य सन्निधौ प्राप्य सत्वरम् ॥ २ ॥ नत्वा रंगेश्वरं देवं तस्थौ प्रांजलिरग्रतः ॥ रंगराजोथ तं दृष्ट्वा कूरेशमिदमब्रवीत् ॥३॥ कूरेश त्वं किंचिदर्थं प्रष्टुकामः समागतः॥इति मे प्रतिभात्यद्य तवागमनकारणाम् ॥ ४ ॥ त्वं मह्यं श्रोतुकामाय त्वमर्थं ब्रूहि सत्वरम् ॥ तस्य तद्वचनं श्रुत्वा संतुष्टो रंगभूपतेः ॥ ५ ॥ श्लोकोपन्यासमकरोद्रंगेशं प्रति कूरराट् ॥ तच्छ्रुत्वा रंगराट् प्रीतः कूराधिपमथाब्रवीत् ॥ ६ ॥ वरं वरय भद्रं ते वाञ्छितं प्रददाम्यहम् ॥ तस्य तद्वचनं श्रुत्वा कूरेशः प्राह तं हरिम् ॥७॥ मह्यं दत्तं त्वया स्वामिन्सर्वाभीष्टं पुरा किल ॥ भूयोहमधुना देव किमभीष्टं वृणोम्यहम् ॥ ८ ॥ कूरेशस्य वचः श्रुत्वा रंगराट् तमभाषत ॥ कूरेश न तथा वत्स वरं वरय सांप्रतम् ॥ ९ ॥ शपे रामानुजार्य्येण मामकेन महात्मना ॥ अदेयमपि दास्यामि वरं तव सुनिश्चयम् ॥ १० ॥ ततः प्रहृष्टः कूरेशस्तं नत्वा प्रांजलिस्तदा॥ ययाचेभीष्टवरदमभीष्टं रंगभूपतिम् ॥ ११ ॥ अधुनारंगभूपाल मह्यं देहि परं पदम् ॥ अथ रंगेश्वरः प्राह कूरेशं भक्तवत्सलः ॥ १२ ॥ येस्मत्संबंधसंबंधिचरमावाधि निश्चयम् ॥ तेभ्यः प्रदत्तं निश्रेयस्तुभ्यमत्र न संशयः॥१३॥गृहीततुलसीतीर्थमालिकादिमतंद्रितम् ॥ तथा प्रस्थापयामास कूरेशं रंगभूपतिः ॥ १४ ॥ ततोर्चिरादिमार्गस्य कूरेशो गुरुतत्परः ॥ अलंकारामिव श्रीमान्नेजे प्राप्याधिकं तदा ॥ १५ ॥ श्रुत्वा कूरेश्वरस्याद्य वृत्तांतं सर्वमादरात् ॥ शिष्यैः परिवृतः श्रीमान् संतुष्टो यतिपुंगवः ॥ १६ ॥ आकाशे सहसोत्सृज्य काषायांबरमादरात् ॥ ननर्त्त बहुधा चैव ममाप्यस्ति परं पदम् ॥ १७ ॥ यतींद्रो वैष्णवान्दृष्ट्वा संतुष्टो वाक्यमब्रवीत् ॥ श्रीवत्साचिह्नसंबंधो ममाप्यस्ति

ततः किल ॥ १८ ॥ संबंधाच्छक्यमेवाद्य तस्मात्प्राप्तुं परं पदम् ॥
न विशेषस्ततो ह्यस्ति सतोर्हि गुरुशिष्ययोः ॥ १९ ॥ शोकाविष्टो
यतींद्रोथ शिष्यसंघसमावृतः ॥ आजगामांजसा यत्र स आस्ते कूर-
नायकः ॥ २० ॥ दृष्ट्वा कूरेश्वरं प्राह यतींद्रः प्रेमपूर्वकम् ॥ तवेदमुचितं
कार्यं विधातुं सहसाधुना ॥ २१ ॥ किंचिच्च वचनं नोक्त्वा महाप्राज्ञो
गुरुप्रियः ॥ तदा व्यतिष्ठत्कूरेशो ह्यनेनैव समाधिना ॥ २२ ॥ भूयः
प्रोवाच कृपया तं कूरेशं यतीश्वरः ॥ अभाषणस्य को हेतुर्मां प्रत्यद्य
तदुच्यताम् ॥ २३ ॥ श्रीवत्सचिह्नस्तं प्राह ततो लक्ष्मणदेशिकम् ॥
वरं त्वदीयवृत्तांतं विलोक्य ध्यानमास्थितः ॥ २४ ॥ ततः प्रोवाच
कूरेशं यतींद्रस्तेन भाषितः ॥ पदेपदे वर्त्तमानं यदद्य ब्रूहि कृत्स्नशः ॥
॥ २५ ॥ तच्छ्रुत्वा तमुवाचेदं कूरेशो यतिपुंगवम् ॥ पूर्वं प्राप्ता महा-
त्मानो मुक्ता ये परमं पदम् ॥ २६ ॥ तेद्याभिमुखमायांति तेषां पंथ्य
नुयायिनः ॥ ममाभिमुखमायांति वैकुंठान्नित्यसूरयः ॥ २७ ॥ शास्त्र-
मार्गमतिक्रम्य वर्त्तते वैष्णवे पुरे ॥ तेनाहमधुना स्वामिन्मोहितोऽस्मि
न चान्यथा ॥ २८ ॥ तच्छ्रुत्वा लक्ष्मणाचार्य्यः कूरेशमिदमब्रवीत् ॥
वैकुंठे तत्र कूरेश न शास्त्रं न व्यतिक्रमः ॥ २९ ॥ इह भोगविभूत्यां
तु शास्त्रमार्गप्रवर्त्तनम् ॥ ततो विषण्णः कूरेशः शेषत्वं वीक्ष्य विस्मितः
॥ ३० ॥ द्वयोपदेशमकरोत्तस्य कर्णे यतीश्वरः ॥ अथ तत्र स्थिताः
सर्वे वैष्णवास्तेन शंकिताः ॥ ३१ ॥ तं यतींद्रं महात्मानं वचनं
चेदमब्रुवन् ॥ वैष्णवानां प्रपन्नानां न कर्त्तव्यांतिमस्मृतिः ॥ ३२ ॥
भवद्भिर्बहुशश्चोक्तं शास्त्रैरेवं यतीश्वर ॥ द्वयोपदेशो योगींद्र तेनैव
भवताधुना ॥ ३३ ॥ अंतकाले कृतस्तस्मै कूरेशाय महात्मने ॥
तेषां तद्वचनं श्रुत्वा यतींद्रः प्राह तान्प्रति ॥ ३४ ॥ कर्पूरघुटि-
काभावाद्राजपुत्रस्य वैष्णवाः ॥ संशुष्यति यथा जिह्वा द्वया-
भावात्तथास्य हि ॥ ३५ ॥ अथाहूय यतिश्रेष्ठः कूरेशमिदम-
ब्रवीत् ॥ तस्य व्याकुलचित्तस्य वियोगेन महात्मनः ॥ ३६ ॥

कूरेश भवतः संगं न लप्स्ये किल भूतले ॥ मां विहायाशु गंतासि वैकुंठं किल निर्दय ॥ ३७ ॥ अत्रत्यानां हि सर्वेषां मम चैव महात्मनाम् ॥ दृष्टचित्तापहारस्य रंगेशस्य जगत्पतेः ॥ ३८ ॥ संगं त्यक्त्वाधुना शीघ्रं नित्ये दिव्ये परे पदे ॥ तस्य वैकुंठनाथस्य संगं त्वं प्राप्तवान् किल ॥ ३९ ॥ स च वैकुंठनाथश्च तत्रत्या नित्यसूरयः ॥ मुक्ताश्च सुकृतं किन्तु कृतवंतः किलाधुना ॥ ४० ॥ अत्रत्याश्च जनाः सर्वे रंगेशो जगदीश्वरः ॥ अघं च कृतवंतो हि किन्तु-पापं बताधुना ॥ ४१ ॥ एतावदुक्त्वा वचनं विषण्णो यतिभूपतिः ॥ पुनरेवापरं वाक्यं कूरेशमिदमब्रवीत् ॥ ४२ ॥ मनोव्याकुलवाक्यानि कूरेश भवतोधुना ॥ प्रभाषितेन बहुधा विद्यते किं प्रयोजनम् ॥ ४३ ॥ तव वैकुंठगमने न विघ्नः क्रियते मया ॥ सुखं प्रयाहि वैकुंठं दिव्यं कूराधिपाधुना ॥ ४४ ॥ इत्युक्त्वा कृपया तस्य पृष्ठं परस्पर्श पाणिना ॥ ततो रामानुजः श्रीमान् कूरेशस्य कृतांजलेः ॥ ४५ ॥ गमनाय मतिं चक्रे यतिराजो मठं प्रति ॥ ततः कूराधिपो धीमान्न यतिराजपदाब्जयोः ॥ ४६ ॥ पपात सहसा भूमौ छिन्नमूल इव द्रुमः ॥ दृष्ट्वा निपतितं भक्त्या कूरेशं चरणाब्जयोः ॥ ४७ ॥ उज्जहाराथ बाहुभ्यां कृपया यतिपुंगवः ॥ तेनोद्धृतः स उत्थाय कूरेशो गुरुभक्तिमान्न ॥ ४८ ॥ स्पृष्ट्वोरसा च नेत्राभ्यां यतींद्रपदपंकजम् ॥ स्वशिरोभूषणं कृत्वा पादतीर्थमथाकरोत् ॥ ४९ ॥ श्रीपादतीर्थं कृपया तच्छीघ्रं स्वेन पाणिना ॥ कूराधिपाय प्रददौ तदा लक्ष्मणदेशिकः ॥ ५० ॥ श्रीपादतीर्थं स्वीकृत्य सहसात्यंतभक्तितः ॥ यो नित्यमच्युतामिति श्लोकं विज्ञाप्य सादरम् ॥ ५१ ॥ कृतांजलिपुटो भूत्वा यतींद्रमिदमब्रवीत् ॥ प्रयाहि स्वमठं स्वामिन् सत्वरं यतिपुंगव ॥ ५२ ॥ अत्रागतस्य ते कालः प्रयातः सुमहान्किल ॥ कूराधिपेन बहुधा यतिराजो मठं प्रति ॥ ५३ ॥ तेन संप्रेषितोप्येवं तं हित्वा शिष्यवत्सलः ॥ नैच्छद्गंतुं तदा धीमां-

स्तद्वियोगेन पीडितः ॥ ५४ ॥ कथं चिदश्रुपूर्णाक्षो यतिराजो मठं ययौ ॥ आयांतं पृष्ठतो दृष्ट्वा कूरेशं च कृतांजलिम् ॥ ५५ ॥ तिष्ठ तिष्ठेत्युवाचेदं यतिराजः कृतादरम् ॥ वीथ्यां कूरेश्वरं शिष्यं पार्श्वे पश्यन्न कृपादरात् ॥ ५६ ॥ शनैःशनैः कथंचिच्च यतींद्रो मठमाविशत् ॥ मठप्रवेशपर्यंतं स्थित्वा वीथ्यां कृतांजलिः ॥ ५७ ॥ गुरुं संसेव्य कूरेशस्ततस्तस्मान्न्यवर्तत ॥ हितोपदेशं स विधाय कूरनाथाय भूयः कृपया यतींद्रः ॥ संप्रेषितस्तेन मठं प्रविश्य व्यवर्णयत्तस्य गुणान्न जनेभ्यः ॥ ५८ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कूरेशचरमदशाया वर्णनं नाम सप्तपंचाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशोऽध्यायः ।

अथ कूरेश्वरो धीमान् भार्यामाह दृढव्रताम् ॥ यं मत्वा वर्तसे चित्ते तमर्थं मे वदाधुना ॥ १ ॥ तेनैवमुक्ता तद्भार्या भर्त्तारमिदमब्रवीत् ॥ को वार्थो विद्यते स्वामिन् दास्यास्तव ममाधुना ॥ २ ॥ योर्थो हि भवताश्चित्ते विद्यते स च मेधुना ॥ अर्थः सुनिश्चितो नाथ न चान्योस्ति ममाल्पकः ॥ ३ ॥ स्वामिन्नमोघसंकल्पो भवतः किल सुव्रत ॥ कदाचिदपि विघ्नोस्य संकल्पस्य न विद्यते ॥ ४ ॥ इत्युक्त्वा सा प्रणम्याथ भर्त्तुः श्रीपादपंकजम् ॥ कृतांजलिपुटा तस्थौ निश्चला भर्त्तृसन्निधौ ॥ ५ ॥ अथ कूराधिपः पुत्रं भट्टार्यं रंगपुत्रकम् ॥ द्वयं च सहसाहूय वाक्यमेतदुवाच ह ॥ ६ ॥ रंगेशरंगनायक्योर्विद्यमानतया हि नः ॥ कदाचिन्न्यूनता नास्ति पुत्रकावधुना ध्रुवम् ॥ ७ ॥ जनिता रक्षिता चैव रंगेश इति मे ध्रुवम् ॥ तमेव शरणं प्राप्य वर्त्तेयाथां सुतावुभौ ॥ ८ ॥ शरणं प्राप्य वर्त्तेथां यतींद्रपदपंकजम् ॥ युष्मन्मात्रोक्तमार्गेण वर्त्तेथामानिशं सुतौ ॥ ९ ॥ वैष्णवेभ्यो महद्भ्यश्च कदाचित्करणत्रयैः ॥ नैवापराधो वः कार्यः प्रमादादपि चात्मजौ ॥ १० ॥ श्रीवैष्णवान् महाभागाननुसृत्य दिवानिशम् ॥ वर्त्तेथां किंकरौ तेषां

भक्त्या कैंकर्य्यतत्परौ ॥ ११ ॥ इत्युक्त्वा तौ निपतितौ समुद्धृत्य पदाब्जयोः ॥ गाढमालिंग्य चाश्रूणि ममार्ज पितृवत्सलौ ॥ १२ ॥ पुनरेवापरं वाक्यं दुःखितौ प्राह तौ तदा ॥ विचार्य देहसंबंधं यद्युवां दुःखितौ मम ॥ १३ ॥ यतींद्रपादपद्माभ्यां दूरगौ च भविष्यथः ॥ प्रधानभूतावित्येवमनुशास्य दृढव्रतः ॥ १४ ॥ कृतकृत्यः कूरनाथः शरीरं हातुमुद्यतः ॥ शिष्यस्य पुत्रपुत्रार्य्यनामधेयस्य योगिनः॥१५॥ निधाय च शिरश्चांके भार्योत्संगे पदांबुजम् ॥ शेते कूरेश्वरो धीमान् निश्चलः पुत्रसन्निधौ ॥ १६ ॥ अनायासेन सहसा कूरेशः पूर्णमानसः ॥ जहौ तनुं तदा ध्यायन्यतींद्रपदपंकजम् ॥ १७ ॥ तन्निशम्य यतिश्रेष्ठस्तत्रागत्य जवात्तदा ॥ मा शोकं कुरु भट्टार्य्य मृत इत्यद्य मे पिता ॥ १८ ॥ इति दीनं समाश्वास्य भट्टार्य्यं यतिपुंगवः ॥ कूरेशस्याधुना वत्स पितुस्तव महात्मनः ॥ १९ ॥ कार्य्यं हि चरमं शीघ्रं कुरुष्वेत्याह योगिराट् ॥ भट्टार्य्यः सहसा तस्य शासनाद्यतिभूपतेः ॥ २० ॥ उद्युक्तोभूत्परिकरैः श्रीरंगेशस्य वैष्णवैः ॥ ब्रह्ममेधविधिज्ञैश्च पितुश्चरमकर्मणि ॥ २१ ॥ सर्वकर्माणि सूक्तेन गायत्र्या वैष्णवेन च ॥ नारायणानुवाकेन स्नापयेत्पितरं सुतः ॥ २२ ॥ इत्युक्तेन प्रकारेण स्नापयित्वा सुतस्तदा ॥ धारयित्वाथ स्वपितुरूर्ध्वपुंड्राणि वै क्रमात् ॥ २३ ॥ विधाय सहसा धीमान् श्रीचूर्णपरिपालनम् ॥ केशवार्पिततत्सर्वं शरीरं मंगलावहम् ॥ २४ ॥ न वृथा दाहयेद्विप्रो ब्रह्ममेधविधिं विना ॥ ब्रह्ममेधविधिः प्रोक्तो मुनिभिर्ब्रह्मतत्परैः ॥ २५ ॥ महाभागवतानां हि कर्तव्यमिदमब्रवीत् ॥ हारीतस्य स्मृतौ प्रोक्तमिति तेनैव वर्त्मना ॥ २६ ॥ अकरोत्सर्वकर्माणि स भट्टार्य्यः पितुस्तदा ॥ बंधुभिः सानुजो धीमान् भट्टार्य्यो दशमेहनि ॥ २७ ॥ एकादशेहनि तथा द्वादशेहनि शास्त्रवित् ॥ यानि कृत्यानि कार्य्याणि सर्वाणि विदधे पितुः २८ ॥ एवं हि सानुजो

भट्टः कूरेशस्य पितुस्तदा ॥ ब्रह्ममेधेन विधिना संस्काराणि चकार सः ॥ २९ ॥ यतींद्रेण स भट्टार्यस्समाहूयाथ वैष्णवान् ॥ नातः परतरं तीर्थं वैष्णवांघ्रिजलाच्छुभम् ॥ ३० ॥ तेषां पादरजः पुण्यं गंगामपि पुनाति हि ॥ एवं वैभवसंयुक्तं वैष्णवांघ्रिजलं शुभम् ॥ ३१ ॥ भक्त्या चक्रुः पादतीर्थं वैष्णवानां महात्मनाम् ॥ शुभादौ द्विजवर्य्यैश्च सर्वसंपच्छुभावहम् ॥ ३२ ॥ सहस्रशाखाध्ययनं कारयेद्वै द्विजोत्तमः ॥ अशुभांते विशेषेण द्राविडी ब्रह्मसंहिता ॥ ३३ ॥ अध्येतव्या द्विजवरैराशौचाद्यघनाशिनी ॥ वृद्ध्यादौ च क्षये चांते द्राविडी ब्रह्मसंहिता ॥ ३४ ॥ अध्येतव्या द्विजश्रेष्ठैस्तावद्गीतिसहस्रकम् ॥ ब्रह्मांडाख्यपुराणे च प्रोक्तमार्गेण वैष्णवैः ॥ ३५ ॥ सहस्रशाखाध्ययनं कारयामास शास्त्रतः ॥ पुष्पांजलिं च विदधे भट्टार्य्यः सानुजस्ततः ॥ ३६ ॥ यथा तुष्यति देवेशो महाभागवतार्चनात् ॥ न तुष्यति तथा विष्णुर्विधिवत्स्वार्चनादपि ॥ ३७ ॥ एवमुक्तप्रकारेण वैष्णवान्विष्णुतत्परान् ॥ अन्नभूषणवस्त्राद्यैरर्चयामास भक्तितः ॥ ३८ ॥ कूरेशजन्मनक्षत्रं पौष्ये हस्तमिति श्रुतम ॥ कूराधिपस्य तनयमिदमाहुर्विपश्चितः ॥ ३९ ॥ श्रीवत्सचिह्नमिश्रेभ्यो नम उक्तिमधीमहि ॥ यदुक्तयस्त्रयीकंठे यांति मंगलसूत्रताम् ॥ ४० ॥ ततः परं समादाय भट्टार्य्यं यतिभूपतिः ॥ अवाप रंगराजस्य सन्निधिं जगतां पतेः ॥ ४१ ॥ कृतप्रणामं भट्टार्य्यं रंगेशो भक्तवत्सलः ॥ पुत्रस्वीकारमकरोत्पीतहारिद्रशंबरः ॥ ४२ ॥ तदार्चकमुखेनाह भट्टार्य्यं रंगराट् सुतम् ॥ पिता तव मृतिं यात इति शोकं च मा कृथाः ॥ ४३ ॥ मां विद्धि पितरं वत्स न्यूनता तव नास्ति हि ॥ तन्निशम्याथ रंगेशं संतुष्टः प्राह योगिराट् ॥ ४४ ॥ भटार्य्याय प्रदेह्याशु रंगेशास्मै सुताय ते ॥ सर्वशास्त्रविदां श्रेष्ठं करिष्येहं तवात्मजम ॥ ४५ ॥ अदत्त्वा तस्य वाक्यस्य तदा प्रत्युत्तरं हरिः ॥ दापयित्वा तयोः शीघ्रं शठकोपं च मालिकाम ॥ ४६ ॥ प्रस्थापयामास तदा

भट्टार्य्यं च यतीश्वरम् ॥ ततो भट्टार्य्यमादाय यतिराजो मठं गतः ॥४७॥तमाहूयाथ गोविंदं वचनं चेदमब्रवीत् ॥ अस्मद्दर्शननिर्वाहं कुरु शास्त्रविशारद॥इति गोविंदहस्ताब्जे भट्टार्य्यं सम्यगर्पयत् ॥४८॥ एवं कूरपतेश्चरित्रमखिलं संपत्करं ज्ञानदं सर्वेषामघनाशनं भवहरं मोक्षप्रदं धीमताम् ॥ ये शृण्वंति पठंति सौम्यहृदयाः सम्यङ् महाभक्तितः ते गच्छंति परं पदं प्रविमलं विष्णोर्ध्रुवं शाश्वतम् ॥ ४९ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे कूरेशस्य परपदप्राप्तिवर्णनं नामाष्टपंचाशोऽध्यायः ॥ ५८ ॥

---

## एकोनषष्टितमोऽध्यायः ।

ततोखिलार्थान् शिष्येभ्यो भगवान् यतिपुंगवः ॥ तस्थावुपादिशन् रंगे भगवद्विषये स्थितान् ॥ १ ॥ एवं विधप्रभावस्य यतींद्रस्य जगद्गुरोः ॥ एते प्रकाशयामासुर्वैभवं लोकपावनम् ॥ २ ॥ रंगेशो वेंकटेशश्च वरदः संपदात्मजः ॥ देवः सुंदरबाहुश्च कुरंगनगरीश्वरः ॥ ३ ॥ बकुलाभरणः श्रीमान् धीमान्नाथमुनिर्महान् ॥ यामुनार्यो महापूर्णो गोष्ठीपूर्णो दृढव्रतः ॥ ४ ॥ भूरिश्रीशैलपूर्णोथ मालाधरगुरुर्महान् ॥ श्रीवत्सचिह्नमिश्रश्च रंगदेवाख्यदेशिकः ॥ ५ ॥ वररंगो यतींद्रस्य तस्य शिष्यादयोखिलाः॥ मूकश्च ब्रह्मरक्षश्च ये चान्ये तत्त्वदर्शिनः ॥ ६ ॥ रंगराट् स्वयमाहूय भगवान् जगदीश्वरः ॥ जगद्गुरुं लक्ष्मणार्य्यं श्रीभूलीलादिसन्निधौ ॥ ७ ॥ इत्युवाच प्रवालोष्ठः स्फुरद्दशनसुप्रभः ॥ युष्मत्संबंधसंबंधिचरमावधयश्च ये ॥ ८ ॥ तेभ्यश्च भवते दत्तं यद्विभूतिद्वयं मम ॥ वृषशैलेश्वरः श्रीमान् वेंकटेशो दयानिधिः ॥ ९ ॥ विलोक्य विस्मयं गत्वा यतिराजं जगद्गुरुम् ॥ इत्युवाच प्रवालोष्ठः स्फुरद्दशनसुप्रभः ॥ १० ॥ भवते भवदीयेभ्यो विभूतिद्वयमेव मे ॥ मया दत्तं यतिश्रेष्ठ त्रिवारं नात्र संशयः ॥ ११ ॥ ततस्तोंडूरुकोंडचाख्या काचिद्गोपांगना तदा ॥ वृषाद्रिनिकटे तत्र

स्थितस्य यतिभूपतेः ॥ १२ ॥ मूल्यार्थं सन्निधौ तस्थौ विधाय दधि-
विक्रयम् ॥ सेवया वैष्णवानां च यतींद्रस्य जगद्गुरोः ॥ १३ ॥प्रण-
तार्तिहराचार्य्यदत्ततीर्थप्रसादतः ॥ संजातज्ञानवैराग्या स्वीकारेणैव
गोपिका ॥ १४ ॥ एवं विज्ञापनं चक्रे प्रणिपत्य यतीश्वरम् ॥ मास्तु
मे दधिमूल्यं तु देहि मोक्षं यतीश्वर ॥ १५ ॥ तच्छुत्वा विस्मितः
प्राह यतींद्रो गोपबालिकाम् ॥ स एव वेंकटेशस्ते मोक्षं दास्यति तं
व्रज ॥ १६ ॥ तन्निशम्य यतींद्रस्य वचनं गोपबालिका ॥ प्रणिपत्य
पुनः प्राह प्रांजलिर्यतिपुंगवम् ॥१७॥ वेंकटेशं समुद्दिश्य पत्रिकां देहि
मेधुना ॥अतश्चेन्मोक्षदानाय शीघ्रं मम यतीश्वर ॥ १८ ॥ अंगीकृत्य
वचस्तस्याः सत्वरं करुणार्णवः ॥ विलिख्य स्वयमेवाशु तदर्थं पत्रि-
कां तदा ॥ १९ ॥ गोपीहस्ते ददौ धीमान् सर्वेषां चैव पश्यताम् ॥
श्रीवैष्णवेभ्यः सर्वेभ्यो यतींद्राय च गोपिका॥ २० ॥ प्रणिपत्य मुदा
युक्ता पत्रिकां शिरसाग्रहीत् ॥ सा जवाद्वेंकटेशस्य सान्निधिं प्राप्य
संभ्रमात् ॥ २१ ॥ स्वामिपुष्करिणीतीर्थे स्नात्वा सम्यक् सुनिश्चला ॥
धृत्वा चैवोर्ध्वपुंड्रं सा चानंदनिलयं महत् ॥ २२ ॥ प्रदक्षिणं विधा-
याशु गरुडस्तंभसन्निधौ ॥ तां पत्रिकां विनिक्षिप्य वृषाचलपतिं प्रति
॥२३॥ मोक्षं देहीति तं चोक्त्वा सा शेते निश्चला सती ॥ ततो भक्त-
पराधीनो भगवान्वेंकटेश्वरः ॥ २४ ॥ तूर्णं परं पदं नित्यं तस्यै गोप्यै
मुदा ददौ ॥ आश्चर्यमतुलं दृष्ट्वा तत्रत्या निखिला जनाः ॥ २५ ॥
रामानुजार्यसंबंधाद्बभूवुर्हृष्टमानसाः॥ अष्टादशादिनं वादं यतींद्रो यज्ञ-
मूर्तिना ॥ २६ ॥ चकार लोकविख्यातं जिनविद्रावणेन च ॥ असक्त-
श्चोत्तरं वक्तुं यज्ञमूर्त्तेर्यतीश्वरः ॥ २७ ॥ तदा विज्ञापनं चक्रे देवराजाय
विष्णवे ॥ यज्ञमूर्तिजयोपायं यतींद्राय महात्मने ॥ २८ ॥ अवोच-
त्तद्धितं तस्मै प्रसन्नो देवराट् स्वयम् ॥ पुरा कांच्यां लक्ष्मणार्ये स्थिते
योगीश्वरेश्वरे ॥ २९ ॥ प्रोवाच यादवं स्वप्ने भगवान् देवराट् स्वयम्॥

अस्मद्रामानुजाचार्य्यसंबंधेन विना तव ॥ ३० ॥ नास्ति निःश्रेयसं वत्स सत्यंसत्यं मयोदितम् ॥ प्रदक्षिणां विधायैकां लक्ष्मणार्याय निश्चलः ॥ ३१ ॥ कुरु त्रिदंडसंन्यासं तेन मुक्तो भविष्यसि ॥ भक्तग्रामे यतींद्राय स्वप्नं दत्त्वा जगत्पतिः ॥ ३२ ॥ यादवाद्रौ तमानीय यादवाचलनायकः ॥ प्रत्यक्षमगमत्तस्य तेनाभूत्प्रथितो भुवि ॥ ॥ ३३ ॥ संपत्पुत्रो यतींद्रस्य पुत्रत्वमगमद्धरिः ॥ कदाचिदुत्सवे काले वैष्णवान्वीक्ष्य हर्षितः ॥ ३४ ॥ देवः सुंदरबाहुश्च प्रोवाचेदं वचः शुभम् ॥ अस्मद्रामानुजाचार्यसंबंधा ये महाधियः ॥ ३५ ॥ आगच्छंतु जनाः सर्वे मम सन्निधिमादरात् ॥ तच्छ्रुत्वा वैष्णवाः सर्वे सहसा जग्मुरंतिकम् ॥ ३६ ॥ महापूर्णार्यसंबधात् केचिन्नैवागतास्तदा ॥ ततः सुंदरबाहुस्तान्विलोक्याशु वचोऽब्रवीत् ॥ ३७ ॥ आहूतास्ते मया सर्वे ह्यागताः किल सांप्रतम् ॥ किमर्थं नागताः पूर्वं ब्रूत तत्कारणं मम ॥ ३८ ॥ प्रतिगृह्य वचस्तस्य चक्रुर्विज्ञापनं तदा ॥ रामानुजार्य्यशिष्याणामाह्वानं भवता कृतम् ॥ ३९ ॥ रामानुजार्यगुरवो यतस्ते नागता वयम् ॥ तच्छ्रुत्वा भगवान्प्राह प्रहस्येदं वचस्स तान् ॥ ॥ ४० ॥ शिष्यभावं प्रकुर्वंति लक्ष्मणार्ये महात्मनि ॥ पुत्रभावं मयि पुरा यथा दशरथादयः ॥ ४१ ॥ ततः कदाचिदात्रेयवंशचूडामणिर्महान् ॥ प्रणतार्तिहराचार्यः प्रपेदे वृषभाचलम् ॥ ४२ ॥ स्तोत्ररत्नास्थितं श्लोकं पठन् भक्त्या महौजसे ॥ साष्टांगवंदनं चक्रे तस्मै सुंदरबाहवे ॥ ४३ ॥ अपराधसहस्रभाजनं पतितं भीमभवार्णवोदरे ॥ अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ ४४ ॥ श्लोकार्थं स निशम्याशु भगवान् प्राह तं तदा ॥ सर्वेषां लक्ष्मणाचार्ये विद्यमाने तु रक्षके ॥ ४५ ॥ तस्मादगतिमित्येवं ब्रवीषि त्वं कथं बत ॥ अस्मद्रामानुजाचार्यो राजते सर्वरक्षकः ॥ ४६ ॥ तत्संबंधबलेनैव पापिष्ठो ह्यपि मुक्तिभाक् ॥ पुरा दिग्विजयार्थाय ययौ लक्ष्मणदेशिकः ॥ ४७ ॥ कुरंग-

नगरं प्राप्य बहुशिष्यसमावृतः ॥ कुरंगनगरीपूर्णं तं महोत्तुंगविग्रहम्॥ प्रणम्य बहुधा भक्त्या मुमोद यतिशेखरः ॥ ४८ ॥ एकांतिभिर्द्वादशभिः सहस्रैः पीठैश्चतुःसप्ततिभिः समेतः ॥ अन्यैरनंतैरपि विष्णुभक्तैः ॥ श्रीरंग आस्ते यतिसार्वभौमः ॥ ४९ ॥ इत्युक्तेन प्रकारेण शिष्यसंघसमावृतम् ॥ विलोक्य विस्मयं गत्वा यतिराजं महौजसम् ॥ ५० ॥ कुरंगनगरीपूर्णो व्याजहार वचः शुभम् ॥ श्रीसहायेन योगीश जनरक्षणकाम्यया ॥ ५१ ॥ अवताराः कृताः पूर्वं रामकृष्णादयो मया ॥ अवतारेषु मां सर्वे मन्यंते प्राकृता जनाः ॥ ५२ ॥ राजानं चापि गोपालं प्राकृतं पुरुषं यथा ॥ अस्माकं रक्षणार्थाय वैकुंठादागतो हरिः ॥ ५३ ॥ एवं न मेनिरे दृष्ट्वा मां जगत्कारणं परम् ॥ आसुरप्रकृतित्वेन तेषां कोपि न मां गतः ॥ ५४ ॥ केनोपायेन ते सर्वे त्वया ते स्ववशीकृताः ॥ मन्नाथ मह्यं सहसा तमुपायं वदाधुना ॥ ५५ ॥ कुरंगनगरीशस्य तद्वचः प्रतिगृह्य सः ॥ तं दृष्ट्वा लक्ष्मणाचार्य्यश्चक्रे विज्ञापनं तदा ॥ ५६ ॥ तद्वक्ष्याम्यधुनैवाशु क्रमेण यदि पृच्छसि ॥ निशम्य तद्वचस्तस्य सत्यं मत्वा जगत्पतिः ॥ ५७ ॥ कुरंगनगरीपूर्णो यतींद्राय महात्मने ॥ दत्त्वा सिंहासनं दिव्यं कुथास्तरणशोभितम् ॥ ५८ ॥ तुंगात्सिंहासनाद्दिव्यादवतीर्णोथ भूतले ॥ जगत्पतिर्हरिः श्रीमांस्तस्थौ भक्तिसमन्वितः ॥ ५९ ॥ तत्र स्वाचार्य्यमासीनं मत्वा पूर्णार्यमादरात् ॥ स तस्य दक्षिणे कर्णे भूमिस्थस्य यतीश्वरः ॥ ६० ॥ सर्वेषामेव मंत्राणां मंत्ररत्नं शुभाह्वयम् ॥ सकृत्स्मरणमात्रेण ददाति परमं पदम् ॥ ६१ ॥ मंत्ररत्नं द्वयं न्यासः प्रपत्तिः शरणागतिः ॥ लक्ष्मिनारायणं चेति हितं सर्वफलप्रदम् ॥ ६२ ॥ नामानि मंत्ररत्नस्य पर्यायेण निबोध मे ॥ प्रशस्यैवं मंत्ररत्नमुपदेशं विधाय च ॥ ६३ ॥ ततो वैष्णवपूर्णाख्यं दास्यनाम चकार सः ॥ कुरंगनगरीपूर्णस्तदोवाच जगत्पतिः ॥६४ ॥

रामानुजार्य्यशिष्योहमिति सर्वं च शृण्वथ ॥ तदा प्रभृति लोकेस्मिन्सर्वत्र विदितं महत् ॥ तद्रामानुजपूर्णाख्यमभूत्तस्य जगत्पतेः ॥ ६५ ॥ एवं हि भूम्यामखिलेषु दिव्यस्थानेषु चार्चात्मतयावतीर्णाः ॥ सर्वे यतींद्रं पितृदेशिकादिरूपेण चक्रुर्हरयो महांतम् ॥ ६६ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे रंगादिप्रकाशितरामानुजवैभववर्णनं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः ।

पुरा वैकुंठनगरे सेनेशो भगवान्किल ॥ लोकसंरक्षणाशक्तं भगवंतं रमापतिम् ॥ १ ॥ चिंतयानं तु तं वीक्ष्य प्रहसन्वाक्यमब्रवीत् ॥ भूम्यां कृतावतारोहं सर्वानिताञ्जनान्दृढम् ॥ २ ॥ प्रापयिष्यामि वैकुंठं नात्र कार्या विचारणा ॥ एवं कृतप्रतिज्ञोथ कुरुकानगरे भुवि ॥ ३ ॥ शठकोप इति ख्यातो जज्ञे कारिसुतो महान् ॥ जातमात्रस्तु संवीक्ष्य लोकं कल्यात्मकं दृढम् ॥ ४ ॥ महाभीतो निमील्याशु नेत्रे दृढतरं तदा ॥ आषोडशाब्दं संलीनस्तिंतिणीकोटरेचलः ॥ ५ ॥ केनाप्यज्ञातवृत्तांतः स तस्थौ लज्जया भृशम् ॥ तदोवाच शठारातिर्लज्जयावाङ्मुखो भृशम् ॥ ६ ॥ईश्वरेणाप्यसाध्यं यत्कार्यं कर्तुमहं कथम्॥ समर्थोस्मि वृथा पूर्वं प्रतिज्ञा तत्कृता मया ॥ ७ ॥ चतुष्टयसहस्रांते वत्सराणां कलौ युगे ॥ शेषो रामानुजो भूत्वा भूम्यामवतरिष्यति ॥ ८ ॥ तत्संबंधेन मनुजा निरस्ताखिलकल्मषाः ॥ गमिष्यंति हरेर्लोकं पुनरावृत्तिवर्जितम् ॥ ९ ॥ ततः संचिंत्य भगवांस्त्रिकालज्ञो महामुनिः ॥ सम्यक्प्रतिमुखेनैतान्रहस्यान् व्याजहार तान् ॥ १० ॥ पापानि विनशिष्यंति नरकाण्यखिलानि च ॥ निर्व्यापारो यमश्चैव कलिर्नष्टो भविष्यति ॥ ११ ॥ समुद्रावरणायां तु भूम्यामवतरिष्यति ॥ एतदाश्चर्यमतुलं जनाः पश्यतपश्यत ॥ १२ ॥ लक्ष्मणार्यावतारस्य सूचकार्थान् भुवः स्थले ॥ दर्शयित्वा तु विशदं तस्मिन्काले

परं पदम् ॥ १३ ॥ स जगाम शठारातिस्तिंतिणीकोटरे महान् ॥ वीर-
नारायणपुरे पुरा नाथमुनिर्महान् ॥ १४ ॥ तटाकतीरे स्थित्वेत्थं व्या-
जहार वचः शुभम् ॥ अस्मात्तटाकादंभांसि निर्गत्य भ्रममार्गतः
॥१५॥संप्लावयंति सस्यानि यथा सर्वाणि भूतले ॥ श्रियः पत्यब्धिनि-
ष्यंदवेदार्थाभसि वै ध्रुवम् ॥ १६ ॥ प्रवेशं संगमिष्यंतो मन्नाथसुमहा-
ह्रदे ॥ निर्गत्य तस्मादाचार्यभ्रममार्गेण भूरिशः ॥ १७ ॥ तथैव प्रा-
णिसस्यानि प्लावयिष्यंति निश्चितम् ॥ एतद्रामानुजाचार्य्यं सुस्पष्टं
द्योतते ततः ॥ १८ ॥ अवतारं समुद्दिश्य लक्ष्मणार्यस्य निश्चितम्॥
तेनेदं भाषितं सर्वं त्रिकालज्ञेन योगिना ॥ १९ ॥ अपि रामानुजा-
चार्यो नाथयोगिह्रदि स्थितः ॥ तमर्थं विशदं चक्रे ततः कालांतरे
महान् ॥ २० ॥ श्रियः पतिमहांभोधौ शठजित्कालतोयदः ॥ संप्रा-
प्ताखिलवेदार्थतोयानि सुबहून्यलम् ॥ २१ ॥ अवर्षन्नाथशैलेंद्रे यामु-
नार्यापगामुखात् ॥ महद्रामानुजाचार्यतटाकं प्राप्य सुस्थिरम्
॥२२॥चतुःसप्ततिशिष्यार्यभ्रममार्गेण भूरिणा॥निर्गत्य प्राणिसस्यानि
प्लावयंत्यधुनाप्यहो॥२३॥ तानि वेदार्थतोयानि ह्याचंद्रार्कं महीतले ॥
वैभवं लक्ष्मणार्यस्य श्रुत्वा यामुनदेशिकः ॥ वारणाद्रिं समासाद्य तं
दृष्ट्वोवाच तत्त्ववित् ॥ २४ ॥ अयं महात्मा यदि सुंदरार्यो रामानुजो
विष्णुमते प्रविष्टः॥एते महाभागवता जनौघा उर्व्यां भविष्यंति न संश-
योत्र ॥ २५ ॥ कदाचिल्लक्ष्मणाचार्य्यः शिष्यसंघसमावृतः ॥ पूर्णा-
चार्य्यगृहं प्राप पूर्णाचार्य्यदिदृक्षया ॥ २६ ॥ तं दृष्ट्वा सहसोत्थाय
पूर्णार्यो भक्तिसंयुतः ॥ चकार लक्ष्मणार्याय सम्यक् साष्टांगवंदनम्
॥ २७ ॥ महापूर्णात्मजा साध्वी तं दृष्ट्वा जातविस्मया ॥ पितरं
प्राह निपुणा सर्वेषां शृण्वतां तदा ॥ २८ ॥ शिष्याय लक्ष्मणार्याय
गुरुणा यत्त्वया कृतम् ॥ साष्टांगवंदनं तात वदैतत्कारणं मम ॥
॥ २९ ॥ इतिवचनं तस्य श्रुत्वोवाचाखिलार्थवित् ॥ तुल्यो वा

ह्यधिको वापि यतिराजान्महात्मनः ॥ ३० ॥ न क्वचिद्दृश्यते कश्चि-
देतस्मै वंदनं कृतम् ॥ ततः कदाचिदायांतं वीथ्यां लक्ष्मणदेशिकम् ॥
॥ ३१ ॥ शिष्यसंघसमायुक्तं तं वीक्ष्य कृतमज्जनम् ॥ जवादुत्थाय
पूर्णार्यश्चक्रे साष्टांगवंदनम् ॥ ३२ ॥ यतिराजोंजलिं चक्रे स तस्मै
गुरवे तदा ॥ तं दृष्ट्वा वैष्णवाः सर्वे यतिराजमथाब्रुवन् ॥३३॥ साष्टांग-
वंदनं तुभ्यं गुरुणा यत्कृतं पथि ॥ तदप्यंगीकृतं सम्यक् तत्रको हेतुरु-
च्यताम् ॥३४॥ तेषां तद्वचनं श्रुत्वा प्रोवाचैतान्यतीश्वरः ॥ गुरुणोक्त-
प्रकारेण वर्तनं शिष्यलक्षणम् ॥ ३५ ॥ अतस्तेनोक्तमार्गेण वर्तेहं वै
न चान्यथा ॥ तमूचुस्ते महापूर्णं देशिकं तेन शंकिताः ॥ ३६ ॥ शि-
ष्याय यतिराजाय तस्मै साष्टांगवंदनम् ॥ त्वया कृतं देशिकेन ब्रूहि
तत्कारणं च नः ॥ ३७ ॥ तेषां तद्वाक्यमाकर्ण्य महापूर्णोभ्यभाषत ॥
यामुनार्य इवाभाति तदा तेन यतीश्वरः ॥ ३८ ॥ प्रणामं कृतवांतस्मै
यतींद्राय महात्मने ॥ अस्मद्गुरोर्यामुनार्यात्पश्चादाचार्यसंपदः ॥३९॥
अस्मिन्नेव च दृश्यंते सर्वशास्त्रार्थसंपदः ॥अतो विशेषराहित्यात्सतोश्च
गुरुशिष्ययोः ॥ ४० ॥ प्रणामं कृतवानस्मि शिष्यायास्मै महात्मने ॥
मंत्रप्रदानसमये गोष्ठीपूर्णो दृढव्रतः ॥ ४१ ॥ वक्तव्योयं त्वया मंत्रो
न च कस्मै कदाचन ॥ इत्येवं शपथांस्तेन कारयित्वा बहूंस्तदा
॥ ४२ ॥ ततो मंत्रं यतींद्राय शिष्याय प्रददौ रहः ॥ ततो यतींद्रस्तं
मंत्रं भूरिदानं हठाद्व्यधात् ॥ ४३ ॥ तत्रागतेभ्यः सर्वेभ्यो वैष्णवेभ्यश्च
सादरम् ॥ गोष्ठीपूर्णोथ तच्छ्रुत्वा वृत्तांतं यतिभूपतेः ॥ ४४ ॥ कुपितो
लक्ष्मणाचार्य्यमिदं वचनमब्रवीत् ॥ किं फलं भवतो ब्रह्मन् गुरुद्रोहकृतस्यते
॥४५॥ तदंगीकृत्य योगींद्रो गोष्ठीपूर्णमुवाच सः ॥ गुरुद्रोहकृतस्यास्य
फलं नरकमेव मे ॥४६॥ तन्निशम्य पुनः प्राह गोष्ठीपूर्णो यतीश्वरम् ॥ एवं
ज्ञात्वापि योगींद्र कृतवान् कार्य्यमीदृशम् ॥४७॥ स तद्वचनमाकर्ण्य
यतींद्रः प्राह तं प्रति ॥ पतिष्याम्येक एवाहं नरके भृशदारुणे ॥४८॥ ग-

च्छंतु कृपया तेद्य जनाः सर्वे परं पदम् ॥ निशम्य यतिराजस्य वाक्य-
मद्भुतवत्तरम् ॥ ४९ ॥ स एवं चिंतयामास ममायं नोत्थितो गुणः ॥
अमानवं तदा मत्वा लक्ष्मणार्यं जगद्गुरुम् ॥ ५० ॥ इहावतीर्णं वै-
कुंठाज्जगद्रक्षणहेतुना ॥ स्वानिष्टं परवृद्धिं च को वा लोके करिष्यति
॥५१॥ स रंगनायकोस्माकं त्वमेवाद्य यतीश्वर ॥ इत्युक्त्वा लक्ष्मणा-
चार्यं गोष्ठीपूर्णः प्रहृष्टधीः ॥ ५२ ॥ मन्नाथ इति हर्षेण तं तदा परि-
षस्वजे ॥ तत्र स्थितान्स पूर्णार्यो वैष्णवानिदमब्रवीत् ॥ ५३ ॥
अयं वैष्णवसिद्धांतो युष्माभिस्त्वद्य वैष्णवाः ॥ रामानुजार्य-
सिद्धांत इति सर्वत्र कीर्त्यताम् ॥ ५४ ॥ ततः स्वपुत्रं पूर्णार्यः
सौम्यनारायणाभिधम् ॥ शिष्यं कृत्वा यतींद्राय कृतकृत्यो मुदं ययौ
॥ ५५ ॥ सहस्रगीतेर्व्याख्यानं मालाधरगुरूत्तमात् ॥ शृण्वन् यतींद्रः
श्रीरंगे तस्थौ तत्र महायशाः ॥ ५६ ॥ गाथायास्तत्र कस्याश्चिदर्थं
श्रुत्वा गुरूत्तमात्॥ तस्या एव च गाथायाः प्रोवाचार्थं तदा परम्॥५७॥
उपकारस्मृतियुतं विशेषार्थं यतीश्वरः॥ तच्छ्रुत्वा कुपितः प्राह मालाध-
रगुरुस्तु तम् ॥ ५८ ॥ विश्वामित्रस्य सृष्टेस्तु उपायः क्रियते त्वया ॥
मत्सन्निधौ पुनस्त्वद्य तस्माद्गच्छ मठं प्रति ॥ ५९ ॥ इत्युक्त्वा पुस्त-
कं बद्ध्वा तदा पाठं निवार्य च ॥ सुखं मालाधरो धीमानतिष्ठत्स्वानि-
केतने ॥ ६० ॥ गोष्ठीपूर्णोथ तच्छ्रुत्वा श्रीरंगं प्राप्य सत्वरम् ॥ मा-
लाधरं महात्मानमिदं वचनमब्रवीत् ॥ ६१ ॥ चतुःषष्टिकलापूर्णः
कृष्णः सांदीपनेर्यथा ॥ जग्राह लक्ष्मणाचार्यस्त्वत्तो विद्यां तथाधुना
॥ ६२ ॥ गाथायाश्च ततस्तस्यास्ताभ्यामर्थं समीरितम् ॥ श्रुत्वा
मालाधरं प्राह गोष्ठीपूर्णो महामतिः ॥ ६३ ॥ रामानुजोक्तमार्गेण
ह्यर्थं यामुनदेशिकः ॥ प्रोक्तवांस्तत्र समये तस्यास्त्वं तु बहिर्गतः
॥ ६४ ॥ ततो मालाधरः प्रीतो यतींद्राय महात्मने ॥ सहस्रगीतेर्व्या-
ख्यानं वदंस्तस्थौ यथा पुरा ॥ ६५ ॥ कस्मिंश्चिदर्थप्रस्तावे लक्ष्मार्यो-
ऽब्रवीद्गुरुम्॥ अत्रैवं यामुनार्यस्तु न वाक्यार्थं गुरोः स्थले ॥ ६६ ॥

ततो मालाधरः प्राह यतिराजं सविस्मयः ॥ कदाचिद्यामुनाचार्य्यैं चक्षुर्भ्यां च न पश्यता ॥ ६७ ॥ भवतैवंविधं वक्तुं को हेतुस्त्वं वदाधुना ॥ यतींद्रस्तद्वचः श्रुत्वा मालाधरमथाब्रवीत् ॥ ६८ ॥ यामुनार्यस्य मां शिष्यमेकलव्यं विभावय ॥ ततो मालाधरगुरुर्यतिराजं सविस्मयः ॥ ६९ ॥ अवतारविशेषं हि मत्वा विष्णोर्जगत्पतेः ॥ पुत्रं सुंदरबाह्वाख्यं तस्य शिष्यमथाकरोत् ॥ ७० ॥ चरमोपायतत्त्वार्थं ज्ञातुकामो यतीश्वरः ॥ वररंगाय शुश्रूषां षण्मासानकरोत्तदा ॥ ७१ ॥ सन्निधौ रंगराजस्य कृतनाट्याय धीमते ॥हरिद्राचूर्णतोयाद्यैश्शरीरोद्वर्त्तनादिकम् ॥ ७२ ॥ वररंगोथ तं दृष्ट्वा संतुष्टो यतिभूमिपम् ॥ अवोचत्प्रहसन्वाक्यं यामुनाचार्यनंदनः ॥ ७३ ॥ गृहीतुं मम सर्वस्वं त्वमित्थं कृतवानसि ॥ तुभ्यं हि चरमोपायं शृणु वक्ष्यामि सांप्रतम् ॥ ७४ ॥ इत्युक्त्वा चरमोपायं यतींद्राय तदाब्रवीत् ॥ वररंगोनपत्यत्वाद्यवीयांसं महौजसम् ॥ सोद्रिपूर्णं यतींद्रस्य शिष्यं कृत्वा मुदं ययौ ॥ ७५ ॥ इत्येवमाद्यगुरवो विदिताखिलार्थाः सर्वे यतींद्रमनघं भगवंतमाद्यम् ॥ ज्ञात्वा गुरुं भुवनरक्षणबद्धदीक्षं तद्वैभवं स्फुटतरं विदधुः प्रकाशम् ॥ ७६ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे पूर्णाचार्यप्रकाशितरामानुजवैभवप्रकाशवर्णनं नाम षष्टितमोऽध्यायः ॥ ६० ॥

---

## एकषष्टितमोऽध्यायः ।

कांच्यां श्रीवैष्णवकुले कश्चिन्मूको व्यजायत ॥ स बालः सुप्रसिद्धश्च कंचित्कालमवर्द्धत ॥ १ ॥ बभूव मूकः सर्वेषामदृश्यो वत्सरद्वयम् ॥ ततो भूयः स सर्वेषां दृश्यः कांचीनिवासिनाम् ॥ २ ॥ प्रभाषमाणं तं दृष्ट्वा मूकं कांचीनिवासिनः ॥ विस्मितास्ते समागम्य वाक्यमेवमथाब्रुवन् ॥ ३ ॥ त्वमेतत्कालपर्यंतं मूक कुत्र गतो ह्यभूः ॥ तेषां तद्वचनं श्रुत्वा स मूकः प्रत्यभा-

षत ॥ ४ ॥ क्षीराब्धिं प्रति गत्वाहं शेषतल्पे जगत्पतिम् ॥ श्रीहरिं तत्र संसेव्य भूयः कांचीं समागतः ॥ ५ ॥ तस्य मूकस्य वचनं श्रुत्वा विस्मयकारणम् ॥ तमूचुर्विस्मिताः सर्वे परिवार्य समंततः ॥ ॥ ६ ॥ ब्रूहि नस्तत्र वृत्तांतं वर्त्तमानं तदाधुना ॥ तेषां तद्वचनं श्रुत्वा मूकः प्रोवाच तत्त्वतः ॥ ७ ॥ जगत्संरक्षणार्थाय विष्वक्सेनो जगत्पतिः ॥ जातो रामानुजो भूम्यां भूतपुर्यां बभूव सः ॥ ८ ॥ अधुना प्रवदंत्येनं क्षीरसागरवासिनः ॥ इत्युक्त्वा स तदा मूकस्तत्रै-वांतर्दधे ततः ॥ ९ ॥ सेनापतिर्यतिर्ह्येवं बहुवारं वचोब्रवीत् ॥ ततः स मूकः केनापि दृश्यते न क्वचिद्भुवि ॥ १० ॥ ब्रह्मरक्षः पुरा कांच्यां स्वस्य मोक्षदशागमे ॥ दर्शयित्वा लक्ष्मणार्यं यादवाय दृढा-त्मने ॥ ११ ॥ शृण्वतां सर्वलोकानां तं यादवमभाषत ॥ एष रामा-नुजः श्रीमाँल्लीलामानुषविग्रहः ॥ १२ ॥ प्रधानो नित्यसूरीणा-मवतीर्णोधुना भुवि ॥ लोकसंरक्षणार्थाय हरिणाज्ञापितोभवत् ॥१३॥ तं रामानुजमाश्रित्य गच्छ विष्णोः परं पदम् ॥ आंध्रपूर्णो महाप्राज्ञः प्रोवाचाखिलवैष्णवान् ॥ १४ ॥ यदाचार्यपदं नाम जगत्यस्मिन्म-हत्पदम् ॥ तस्मिन्नेव यतिश्रेष्ठे तत्पदं सुप्रतिष्ठितम् ॥ १५ ॥ विना यतींद्रपादाब्जान्नान्योपायो हि विद्यते ॥ तस्माद्यतींद्रपादाब्जं रक्षकं निखिलात्मनाम् ॥ १६ ॥ इति ध्रुवं विनिश्चित्य वर्त्तध्वम-निशं बुधाः ॥ कृष्णग्रामाधिपो धीमान् बालस्वामीति विश्रुतः ॥१७॥ वैष्णवः सर्वशास्त्रज्ञः सचैलस्नानपूर्वकम् ॥ दृढं विधाय दिव्यांगं दृष्ट्वा श्रीवैष्णवोत्तमान् ॥ १८ ॥ वैष्णवानां सभामध्ये वचनं सत्य-मब्रवीत् ॥ निःश्रेयसफलावाप्त्यै सर्वेषां विदुषामपि॥१९॥विना यतीं-द्रपादाब्जादन्योपायो न विद्यते ॥ देवराजो मुनिः पूर्वं शासनाद्यति-भूपतेः ॥ २० ॥ अनंतार्यादिशिष्याणां संस्कारान्पंच सादरम् ॥ वि-धाय तत्त्ववित्प्राज्ञस्तानेकं वाक्यमब्रवीत् ॥ २१ ॥ इदं कार्य्यं मये-

दानीं लक्ष्मणार्य्येण कारितम्॥ग्रामटिट्टिभकंठाग्रे बद्धं तालफलं यथा
॥ २२ ॥ जानीध्वं लक्ष्मणार्यस्य पदमेव हि रक्षकम् ॥ शिष्योभू-
त्कूरनाथस्य पुत्रपुत्रार्यनामकः ॥ २३ ॥ अपवादपरो नित्यं वैष्णवे-
ष्वधिकेषु च ॥ कूरेशशिष्यं तं दृष्ट्वा जनाः श्रीरंगवासिनः ॥ २४ ॥
कूरेशस्यैव दोषोयमित्यूचुस्ते परस्परम् ॥ तं निशम्य विषण्णस्सन्
कूरेशः शिष्यवत्सलः ॥ २५ ॥ तस्माच्छिष्यात्पुण्यकाले दानरूपेण
वैष्णवात् ॥ सतिलोदकपूर्वेण जग्राह करणत्रयम् ॥ २६ ॥ दत्त्वाथ
गुरवे भक्त्या स शिष्यः करणत्रयम् ॥ निश्चेष्टः स्वगृहे तस्थौ ध्या-
यन् गुरुपदांबुजम् ॥ २७ ॥ ततः कदाचिच्छनकैर्निर्गत्य स्वगृहा-
द्बहिः ॥ स तदा पुत्रपुत्रार्यो वीथ्यां वै समतिष्ठत ॥ २८ ॥ वीथ्यां स-
मागतं दृष्ट्वा वैष्णवं कंचिदातुरम् ॥मनसा तर्कयामास तस्मिन्दोषान्स
वैष्णवे ॥ २९ ॥ ततः स शिष्यो मतिमान् मनस्येवमचिंतयत् ॥
पुरैव दत्तं हि मया गुरवे करणत्रयम् ॥ ३० ॥ मम नास्त्यधुना तेन
स्वातंत्र्यं करणत्रये ॥ गुरुद्रव्यापहारेण निरयो निश्चितो मम॥३१॥
देहत्यागो मया तेन कर्तव्यः पापिनाधुना ॥ इति ध्रुवं विनिश्चित्य
प्राणानायम्य वाग्यतः ॥ ३२ ॥ देहत्यागेच्छया शीघ्रं दर्भानास्तीर्य
भूतले ॥ प्रायोपवेशमकरोच्छिष्यः कूराधिपस्य सः ॥ ३३ ॥ तद्वृ-
त्तांतं समाकर्ण्य विषण्णः कूरनायकः ॥ तस्य शिष्यस्य सदनं संप्रा-
प्याथ भुवः स्थले ॥ ३४ ॥ प्रायोपविष्टं दर्भेषु दृष्ट्वा शिष्यं दृढव्रतम् ॥
सांत्वयन् मधुरैर्वाक्यैरिदं वचनमब्रवीत् ॥ ३५ ॥ किमर्थमधुना वत्स
देहत्यागं करिष्यसि ॥ स्वाधीनमानसं दत्तं तुभ्यं भूयो मयाधुना
॥ ३६ ॥ प्रतिगृह्णीष्व भद्रं ते शीघ्रमुत्तिष्ठ पुत्रक ॥ परापवादंब्रुवतीं
जहि वाचं दृढं जवात् ॥ ३७ ॥ परापवादो भवता मनसा चिं-
तितो यदि ॥ भक्त्या संस्मर पादाब्जं यतींद्रस्य जगद्गुरोः ॥ ३८ ॥
वाक्कायकाभ्यां पापानि कृतानि यदि सत्तम ॥ शिक्षयत्याशु तं
राजा कर्त्तारं नात्र संशयः ॥ ३९ ॥ ग्रामादिकाद्यदि प्राप्तं यत्पापं

मनसाद्य तत् ॥ विनश्यत्याशु योगीन्द्रपादाब्जस्मरणाद्ध्रुवम्
॥ ४०॥ कृतानां सर्वपापानामनिशं करणत्रयैः ॥ प्रायश्चित्तं यतींद्रस्य
पादाब्जस्मरणं ध्रुवम् ॥ ४१ ॥ ततः कदाचिच्छ्रीरंगे कावेरीमध्य-
सैकते ॥ पुण्यकाले महानासीद्विबुधानां समागमः ॥ ४२ ॥ मोक्षो-
पायस्य मीमांसा काले तत्त्वार्थसंकटे ॥ कूरेशः सहसोत्थाय वेदव्यास
इवापरः ॥ ४३ ॥ स्नातः सचैलः कावेर्यां भुजमुद्धृत्य सत्वरम् ॥
वैष्णवानां सभामध्ये व्याजहार वचः शुभम् ॥ ४४ ॥ सत्यंसत्यं
पुनः सत्यं यतिराजो जगद्गुरुः ॥ स एव सर्वलोकानां समुद्धर्ता न
संशयः ॥ ४५ ॥ विद्वान् श्रीवैष्णवः कश्चिन्मरीचार्य्य इति श्रुतः ॥
वादार्थमगमद्धीमांस्तदा दाशरथिं प्रति ॥ ४६ ॥ ततस्तयोर्विबुध-
योर्जयापजययोस्तदा ॥ अभून्निर्णय इत्येवं जेतारं निर्जितो वहेत् ॥
॥ ४७ ॥ ततः पराजितस्तेन शास्त्रवादे महात्मना ॥ स्कंधाभ्यां स
मरीचार्यो वहन्दाशरथिं तदा ॥ ४८ ॥ रंगस्थले राजमार्गे विधायाथ
प्रदक्षिणम् ॥ नत्वा दाशरथिं तं च कृतांजलिरभाषत ॥ ४९ ॥ हितो-
पदेशं कृत्वाशु मामंगीकुरु सांप्रतम् ॥ तस्य तद्वचनं श्रुत्वा तदा
दाशरथिर्महान् ॥ ५० ॥ तं नीत्वा यतिराजस्य सांनिधिं वैष्णवं
तदा ॥ कारयित्वा तदा तेन वंदनं यतिभूपतेः ॥ ५१ ॥ हितोपदेशं
विदधे सर्वेषां शृण्वतां तदा ॥ यद्रामानुजपादाब्जं तदेव शरणं व्रज ॥
॥ ५२ ॥ महान् श्रीवैष्णवः कश्चिल्लोकार्य इति विश्रुतः ॥ गोविंदाख्यं
महात्मानं दृष्ट्वेदं वाक्यमब्रवीत् ॥ ५३ ॥ भगवद्विषयस्यार्थः सम्यङ् मे
विदितोधुना ॥ प्रवक्ता सर्वशास्त्राणां सम्यक् शिष्यजनाय च ॥ ५४ ॥
इत्येवं गर्वसंयुक्तो गोविंदार्य न वर्तय ॥ तदेव शरणं गच्छ यद्योगींद्रप-
दाबुजम् ॥ ५५ ॥ श्रीपराशरभट्टार्य्यं गोविंदः शास्त्रवित्तमः ॥ प्रोवाच
सर्वशास्त्राणि हितमेवमभाषत ॥ ५६ ॥ हितं वक्ष्यामि भट्टार्य्य शृणु
मोक्षैकसाधनम् ॥ पुनरर्थींकारमकारोदंगेशो मामिति स्वयम् ॥ ५७ ॥

अहं कूरेश्वरसुतः सर्वशास्त्राण्यधीतवान् ॥ विद्यावान् कुलवान्
श्रीमानित्येवं गर्वमाश्रितः ॥ ५८ ॥ तानेव रक्षकान् मत्वा न वर्तय
कदाचन ॥ तदेव शरणं मत्वा यतींद्रपदपंकजम् ॥५९॥ वर्तस्व सततं
वत्स नान्योपायो हि विद्यते ॥ श्रीपराशरभट्टार्य्यः कूरनाथसुतस्तदा
॥६०॥एवं प्रोवाच भगवान् शिष्यं वेदांतिनं प्रति॥ वेदांतिन् शृणु मद्वा-
क्यं हितं वक्ष्यामि सांप्रतम्॥६१॥आश्रितोस्मीति भट्टार्यमद्य मारंगिणः
सुतम्॥मया दत्तं बहु द्रव्यं गुरवे गुरुदक्षिणाम्॥६२॥ मत्वा त्वमेवं वर्तस्व
कृतकृत्यो न चाधुना॥मन्नाथदिव्यपादाब्जं मत्वा रक्षकमात्मनः॥६३॥
वर्तस्व सततं विद्वन् निश्चयं नात्र संशयः ॥ श्रीरामक्रतुनाथार्यः
कुरुकानाथसन्निधौ ॥६४॥ अधीतवांस्त्रिवारं च भक्त्या श्रीभाष्यमा-
दरात् ॥ ततः स्वग्रामगमने भक्त्या नत्वा च तं गुरुम् ॥ ६५ ॥ श्री-
रामक्रतुनाथार्य्यः प्राञ्जलिर्वाक्यमब्रवीत् ॥ येनोपायेन सुगमो मम
मोक्षो गुरूत्तम ॥ ६६ ॥ ज्ञानभक्त्यादिसुगमं तमुपायं वदाधुना ॥ त-
स्य तद्वचनं श्रुत्वा संतुष्टः कुरुकेश्वरः ॥ ६७ ॥ श्रीरामक्रतुनाथार्य्य-
मिदं वचनमब्रवीत् ॥ प्राभाकरादिशास्त्राणि सर्वाण्याशु मयाधुना
॥ ६८ ॥ अधीतानि ततोहं वै विद्यावानिति गर्वितः ॥ अहंकारं मा
कुरुष्व यतींद्रपदपंकजम् ॥ ६९ ॥ तदेव रक्षकं मत्वा वर्त्तस्व सततं
हृदि ॥ ततो नारायणपुरे व्यासभट्ट इति श्रुतः ॥ ७० ॥ श्रीवैष्णवो
महानासीत्सर्वशास्त्रविदां वरः ॥ स तत्र योगिराजस्य सन्निधौ वैष्णवो-
त्तमः ॥७१॥ श्रीभाष्यं शिष्यसंघेभ्यो ह्यवदल्लोकविश्रुतः ॥ निशम्य
तदुपन्यासं विस्मितास्ते च वैष्णवाः ॥ ७२ ॥ एवं विज्ञापनं चक्रुर्भ-
ट्टार्यं देशिकोत्तमम् ॥ इदं गंगाप्रवाहस्य सदृशं विद्यतेधुना ॥ ७३ ॥
श्रीभाष्यस्याधुनास्माभिः शक्यं नार्थावगाहनम् ॥ ब्रूहि नः सुलभो-
पायं येनात्मा सुप्रसीदति ॥ ७४ ॥ ततस्तेषां वचः श्रुत्वा भट्टार्य्यः
स महामतिः ॥ हितोपदेशमकरोत्तेषां मोक्षोपलब्धये ॥ श्रीरामा-

नुजपादाब्जमेतदेव हि रक्षकम् ॥७५॥ ततो वरदविष्णवर्यसन्निधौ भक्तितत्पराः ॥ श्रीभाष्यश्रवणं चक्रुः केचिच्छ्रीवैष्णवोत्तमाः ॥ तेभ्यो वरदविष्णवार्यो वैष्णवेभ्यः स सादरम् ॥ ७६ ॥ प्रोवाच सम्यक् श्रीभाष्यं तदोपन्यासपूर्वकम् ॥ श्रीभाष्यार्थं ततः श्रुत्वा सम्यग्गुरुमुखात्तदा ॥ ७७ ॥ एवं विज्ञापनं चक्रुस्ते सर्वे वैष्णवा गुरुम् ॥ गुरूपायस्त्वया प्रोक्तो भक्तिमार्गोऽत्र सांप्रतम् ॥ ७८ ॥ स्वामिन्वरद विष्णवार्य वयं नात्राधिकारिणः ॥ ब्रूहि नः सुलभोपायं येन गम्यं परं पदम् ॥ ७९ ॥ प्रपत्तिमार्गं प्रोवाच ततस्तेभ्यस्स देशिकः॥ नात्रापि च वयं शक्तास्ते तमेवमथाब्रुवन् ॥ ८० ॥ एवमुक्तस्ततः शिष्यैर्वैष्णवैरखिलार्थवित् ॥ संसारतरणोपायमेवमाहाथ तान्प्रति ॥ ८१ ॥ रामानुजार्यपादाब्जं ध्यायंतो हृदि भक्तितः ॥ सदा रामानुजार्य्याय तस्मै कैंकर्य्यतत्पराः ॥ ८२ ॥ शृण्वंतश्च पठंतश्च यतिराजकथाः शुभाः ॥ वर्त्तध्वमनिशं नित्यं निर्भरा मोक्षसिद्धये ॥ ८३ ॥ एवमेव स्वशिष्येभ्यो ह्युपदेशं प्रचक्रिरे ॥ चतुःसप्ततिशिष्याश्च यतींद्रस्याखिला भुवि ॥ ८४॥ एवं प्रकाशयामासुर्यतिराजस्य वैभवम् ॥ श्रीवैष्णवा महाभागास्ते सर्वे च जगद्गुरोः ॥ ८५ ॥ एवं तैर्देशिकैः सर्वैः प्रकाशीकृतवैभवः ॥ यतींद्रो राजते रंगे जगद्रक्षणदीक्षितः॥८६॥ एवं महार्थं निखिलागमांतसारं विपश्चिद्गुणजीवभूतम् ॥ ज्ञात्वा महाभक्तिपरो यतीन्द्रे स विष्णुलोकं समुपैति सत्यम्॥८७॥ इति श्रीप्रपन्नामृते रामानुजकूरेशदाशरथ्यादिसंप्रकाशितरामानुजवैभववर्णनं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

---

## द्विषष्टितमोऽध्यायः ।

श्रीरंगेशादिभिः सर्वैः संप्रकाशितवैभवः ॥ नाथमुन्यादिपूर्वेभ्यो देशिकेभ्यो यतीश्वरः ॥ १ ॥ प्रवक्तुं श्रेष्ठ इत्यत्र न्यूनता नास्ति निश्चितम् ॥ अयमर्थोऽखिले शास्त्रे वेदे दृष्टतरः स्फुटम् ॥ २ ॥ अनंते-

ष्ववतारेषु विष्णोः सत्सु जगत्पतेः ॥ यथा दशावताराणां प्राधान्यम-
भवद्भुवि ॥ ३ ॥ नृसिंहरामकृष्णाश्च तेषां मुख्या यथाभवन् ॥ मुनी-
श्वराणां सर्वेषां तपःस्वाध्यायशालिनाम् ॥ ४ ॥ पाराशर्यादिमुनयः
प्रधानाश्चाभवन्यथा ॥ अष्टोत्तरशतेष्वेते दिव्यदेशेषु वै हरेः ॥ ५ ॥
मुख्या बभूवुश्चत्वारो दिव्यदेशा यथा भुवि ॥ श्रीरंगो वेंकटाद्रिश्च
हस्त्यद्रिर्यादवाचलः ॥ ६ ॥ विद्यमानेषु दशसु सरोयोग्यादियोगिषु ॥
शठकोपो महायोगी यथा मुख्यो बभूव ह ॥७॥ पूर्वाचार्य्येषु सर्वेषु ना-
थादिषु महत्सु च ॥ मुख्यो बभूव योगींद्रस्तथा लक्ष्मणदेशिकः ॥८॥
स्तंभाद्विनिर्गतेनैव वात्सल्यात्तत्क्षणं जगत् ॥ प्रह्लादवरदानेन हिरण्य-
कशिपोर्वधात् ॥ ९ ॥ इत्येवमादिकार्येण नृसिंहेन कृतेन च ॥ नृसिं-
हस्यावतारस्य प्राधान्यमभवत्ततः ॥ १० ॥ दत्ताभयप्रदानेन राक्ष-
सेंद्रकपींद्रयोः ॥ कृतसख्येन राज्ञा च निषादानां गुहेन च ॥ ११ ॥
ब्रह्ममेधेन संस्कारकरणेन जटायुषः ॥ शबर्याः पाणिना सम्यग् भोज-
नस्य कृतेन च ॥ १२ ॥ प्रीत्या हनुमता सार्द्धं कृतेन भोजनेन च॥
इत्येवमादिकार्येण राघवेण कृतेन च॥१३॥अतो रामावतारस्य मुख्यत्वं
समजायत ॥ गीतोपनिषदं लोके प्रकाश्य विशदं यदा ॥ १४ ॥ चर-
मार्थोपदेशाच्च गीतायां तत्र सादरम् ॥ भीष्मद्रोणकृपादीनां हित्वा
सद्मानि सत्वरम् ॥१५॥ आदराज्ज्ञानपूतस्य विदुरान्नस्य भोजनात् ॥
द्विषदन्नादिवाक्येन तदा दुर्योधनादिके ॥ १६ ॥ शत्रुगोष्ठ्यन्वयात्स-
र्वेनिश्चयेन कृतेन च ॥ इत्येवमादिकार्येण श्रीकृष्णेन कृतेन च
॥ १७ ॥ अतः कृष्णावतारस्य प्राधान्यं समजायत ॥ त्रयाणामवता-
राणां षड्गुणैश्वर्यशालिनाम् ॥ १८ ॥ रक्षिताखिलजंतूनां तेषां मुख्य-
त्वमीरितम् ॥ अयं जग्राह कृपया रंगेशो मुनिवाहनम् ॥ १९ ॥ रंग-
स्थलस्य मुख्यत्वं तेनाभूत्तस्य भूतले ॥ साकं कुरंगपूर्णेन तोण्डमान्
चक्रवर्त्तिना ॥ २० ॥ संभाषणं च सततं चक्रे श्रीवेंकटेश्वरः ॥प्राधा-

न्यं वेंकटगिरेः सांप्रतं तेन हेतुना ॥ २१ ॥ कांचीपूर्णेन सतत स्मितपूर्वाभिभाषणम् ॥ चकार वरदः श्रीमान् यतो हस्तिगिरीश्वरः ॥ २२ ॥ मुख्यत्वं तेन संजातं तदा कांचीस्थलस्य च ॥ दयां विधाय महतीं तस्मिन्सुचरितात्मजे ॥ २३ ॥ सम्यग्भुक्त्वा महाप्रीत्या तेन दत्तान्नमादरात् ॥ कारयित्वा ततस्तेन राज्यं निहतकंटकम् ॥२४॥ वर्द्धयामास तत्पुत्रं बहुकालं भुवः स्थले ॥ यतिराजस्य पुत्रत्वं सौशील्यातिशयेन च ॥ २५ ॥ प्रपेदे भगवान्न विष्णुस्तेन मुख्यत्वमागतम् ॥ विष्णुस्थलेभ्यः सर्वेभ्यो नारायणगिरेरतः ॥२६॥ वेदव्यासस्तु भगवाँल्लोकसंरक्षणे स्थितः ॥ वेदान्विधाय चतुरो लोके विस्तार्य्य तान् स्फुटम् ॥ २७ ॥ कर्मकांडब्रह्मकांडविभागेन द्विधाकरोत् ॥ कर्मकांडं विसृज्याशु ब्रह्मकांडे सुयोज्य तान्न ॥ २८ ॥ छांदोग्यं पौरुषं सूक्तं तथा वाजसनेयकम् ॥ श्वेताश्वेतं तैत्तिरियं महोपनिषदादिकान्न ॥ २९ ॥ इतिहासपुराणानि चक्रे तस्योपबृंहणम्न ॥ सत्यंसत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ ३० ॥ वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः ॥ एवं निःसंशय लोके स चक्रे तत्त्वनिर्णयम् ॥ ३१ ॥ व्यासस्य तेन मुख्यत्वं सर्वर्षीणामभूद्ध्रुवम् ॥ एवं प्रसिद्धमभवत्पुराणेषु च वैष्णवम् ॥ ३२ ॥ तत्त्वार्थसारनिचयं भगवान् वेदतत्त्वतः ॥ पुराणरत्नं संचक्रे मुनिवर्य्यः पराशरः ॥ ३३ ॥ चकार विशदं तत्र सम्यक् चिदचिदीश्वरान् ॥ तत्रोदार इति प्राह यामुनार्य्यः प्रणम्य तम्न ॥ ३४ ॥ पराशरस्य प्राधान्यं तेनाभून्मुनिषु स्फुटम् ॥ ब्रह्मर्षिर्भगवांश्चक्रे शुको भागवते स्फुटम् ॥ ३५ ॥ यत्तत्त्वनिर्णयं सम्यग् गंगातीरे परीक्षितम् ॥ शुको मुक्तो जगत्येवं प्रसिद्धः समजायत ॥ ३६ ॥ इत्यादिकेन प्राधान्यं शुकस्यासीन्महात्मनः ॥ भगवान्न् शौनकश्चक्रे विष्णुधर्मोत्तरे महान् ॥ ३७ ॥ स्थलेष्वेवं च बहुषु सुमहत्तत्त्वनिर्णयम् ॥ श्रीहरिर्भगवानेव जगज्ज-

न्मादिकारणम् ॥ ३८ ॥ ब्रह्मरुद्रादिदेवानां नियंता पुरुषोत्तमः ॥
मोक्षप्रदः स चैवेदं विदधे तत्त्वनिर्णयम् ॥ ३९ ॥ महर्षेः शौनकस्येदं
मुख्यत्वं तेन भाषितम् ॥ ४० ॥ भुजयुगमपि चिह्नैरंकितं यस्य
विष्णोः परमपुरुषनाम्नां कीर्त्तनं यस्य वाचि ॥ सुरुचिरमपि पुंड्रं
मस्तके यस्य कंठे सरसिजमणिमाला यस्य तस्यास्मि दासः ॥
॥ ४१ ॥ श्रीवैष्णवानां दासोहं स्फुटं देवर्षिराट् स्वयम् ॥ इत्येवं
नारदः प्राह भगवाँल्लोकपावनः ॥ ४२ ॥ संप्राप्तं तेन मुख्यत्वं
देवर्षेर्नारदस्य च ॥ सहस्रशाखासंयुक्तदुर्गृहीतार्थसंपदाम् ॥४३॥ चतु-
ष्टयानां वेदानामर्थानाहृत्य सत्वरम् ॥ शठकोपो महायोगी प्रबंधांश्च-
तुरः क्रमात् ॥ ४४ ॥ सर्वाधिकारान् सहसा चक्रे द्राविडभाषया ॥
प्रसन्नो नाथमुनये तान् सर्वानुपदिश्य सः ॥ ४५ ॥ सर्वदर्शनतात्पर्यं
वर्द्धयामास दर्शनम् ॥ अनेन शठकोपस्य मुख्यत्वं समजायत ॥४६॥
रंगराजादयः प्रोक्ताः प्रधानास्तत्रतत्र ये ॥ तेष्वेवायं लक्ष्मणार्यः प्रधा-
नोभूज्जगद्गुरुः ॥४७॥ तेभ्यः सर्वजनत्राता सर्वश्रेष्ठतमो ध्रुवम् ॥ दाना-
भयप्रदानार्थं विशदीकृत्य भूतले ॥ ४८ ॥ गीताचार्योक्ततत्त्वार्थचर-
मार्थप्रकाशनम् ॥ ऋषिप्रोक्तप्रमाणानां कृत्वा व्याख्यानमुत्तमम्
॥ ४९ ॥ दिव्यप्रबन्धाँल्लोकेभ्यः शठकोपादिभिः कृतान् ॥ अर्थो-
पदेशपर्यंतं वर्द्धयित्वा च सर्वतः ॥ ५० ॥ नाथार्यादिगुरूणां च
शठकोपादियोगिनाम् ॥ आहृत्य व्याससूत्राणामर्थाँल्लोकहिताय च
॥ ५१ ॥ श्रीभाष्यादिमहाग्रन्थान्विधाय करुणार्णवः ॥ निर्जित्य
सर्वसमयान् वादेन शतशोशुभान् ॥ ५२ ॥ स्वमतस्थापनं कृत्वा
स्वनाम्ना विष्णुदर्शनम् ॥ रामानुजार्यसिद्धांतमिति चक्रे यतीश्वरः
॥ ५३ ॥ इत्यादिभिर्यतिश्रेष्ठः कार्यैं लोकहिते रतः ॥ नाथादिदेशि-
केंद्रेभ्यः प्रधानो भवति ध्रुवम् ॥ ५४ ॥ अतश्च दाशरथ्यादिशि-
ष्येभ्यो यतिपुंगवः ॥ श्रेष्ठ इत्यत्र गदितुं का शंका वर्ततेधुना ॥५५॥

तस्मादयं लक्ष्मणदेशिकेंद्रः साक्षाद्धरिर्लोकगुरुर्महात्मा ॥ तस्यैव सम्बन्धबलेन तेन मोक्षो हि सिद्धो निखिलात्मकानाम् ॥ ६६ ॥
इति श्रीप्रपन्नामृते रामानुजचरित्रे रामानुजस्य सर्वमुख्यत्ववर्णनं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ।

हरिणाज्ञापितोनन्तो लोकसंरक्षणाय सः ॥ अवतीर्णोभवद्भूम्यां सर्वलोकैकदेशिकः ॥ १ ॥ रामानुजाभिधः श्रीमान् भगवान् करुणाकरः ॥ तत्सम्बन्धबलेनैव निरस्ताखिलकल्मषाः ॥ २ ॥ कलावपि ध्रुवं मुक्तिं गमिष्यंत्यखिला जनाः ॥ पापिष्ठः क्षत्रबन्धुश्च पुंडरीकश्च पुण्यकृत् ॥ ३ ॥ आचार्यकृपया मुक्तस्तस्मादाचार्य्यवान् भवेत् ॥ आचार्यः स हरिः साक्षाच्चररूपी न संशयः ॥ ४ ॥ मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥ आचिनोति च शास्त्रार्थानाचारे स्थापयत्यपि ॥ ५ ॥ स्वयमाचरते यस्तु ह्याचार्य्यस्सोभिधीयते ॥ गुशब्दस्त्वंधकारः स्याद्रुशब्दस्तन्निरोधकः ॥ ६ ॥ अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ॥ ७ ॥ गुरुरेव परा विद्या गुरुरेव परं धनम् ॥ यस्मात्तदुपदेष्टासौ तस्माद्गुरुतरो गुरुः॥८ ॥ एतैः प्रमाणैरित्युक्तो भगवान् हरिरीश्वरः॥स्वयमेव गुरुर्भूत्वा शिष्यान् संरक्षति ध्रुवम् ॥ ९॥ तस्मात्सर्वविधो बंधुर्गुरुरेव न संशयः ॥ माता पिता सखा भ्राता धनं वै सर्व एव सः ॥१०॥ अष्टोत्तरशतं दिव्यं देशाश्चान्यस्थलानि च॥अत्रामुत्र च शिष्यस्य रक्षको गुरुरेव हि॥११॥ आचार्य्यपूर्तिर्योगीन्द्रे तस्मिन्नेव प्रतिष्ठिता ॥ तत्पादपद्मकैंकर्य्यं परमप्राप्यमेव हि ॥१२॥ अतो गोविंदकूरेशदाशरथ्यादिदेशिकाः ॥ श्रीपराशरभट्टादिशिष्येभ्यः सादरं हितम् ॥ १३ ॥ एवमाहुर्यतींद्रस्य पादमेव हि रक्षकम् ॥ मध्ये स्थिता महात्मानः शठजिद्यतिराजयोः ॥१४॥ आसन् कारणभूतास्ते नाथाद्या ये शठद्विषः ॥ शठकोपस्ततः

साक्षाद्गुरुर्यतिपतेरभूत् ॥ १५ ॥ अतः शठारिः कालज्ञः कलिनष्टा-
दिकं वचः ॥ रामानुजावतारस्य सूचकं व्याजहार ह ॥ १६ ॥ अतः
शठजितः शिष्यः साक्षाद्रामानुजोभवत् ॥ प्रवर्तितं शठजिता येनेदं
विष्णुदर्शनम् ॥ १७ ॥ रूढमूलं च संस्थाप्य तज्जगत्यां यतीश्वरः ॥
प्रकाशयामास तदा वकुलाभरणं यतः ॥ १८ ॥ महापूर्णादयः सर्वे
यतींद्रस्य जगद्गुरोः ॥ एते च देशिका भूत्वा संप्राप्ताः परमं पदम् ॥
॥ १९ ॥ तस्य रामानुजार्य्यस्य शिष्या भूत्वा महात्मकाः ॥ दाशर-
थ्यादयः सर्वे संप्राप्ताः परमं पदम् ॥ २० ॥ तस्मादाचार्य्यपूर्तित्वं
यतींद्रे सुप्रतिष्ठितम् ॥ यमर्थं यामुनाचार्य्यः स्तोत्रराजे ह्यकाशयत्
॥ २१ ॥ श्रीरामपद्मनेत्राभ्यामुपरि स्थितमादरात् ॥ तन्नाथमुनिमुद्दि-
श्य तदिदं वाक्यमब्रवीत् ॥ २२ ॥ पितामहं नाथमुनिं विलोक्य प्रसीद
मद्वृत्तमचिंतयित्वा॥ (अपि च) नाथाय नाथमुनयेत्र परत्र चापि नित्यं
यदीयचरणौ शरणं मदीयम्॥२३॥ इहामुत्र च शिष्यस्य रक्षको गुरुरेव
हि ॥ तस्मादाचार्य्यविषये कर्तव्या यावदायुषम् ॥ २४ ॥ नित्यं कृ-
तज्ञता तेन शिष्येणात्महितैषिणा ॥ स्वरूपोज्जीवनार्थाय गुरुरेव हि
कारणम् ॥२५॥ ऋते गुरोस्ततस्तस्य नान्योपायो हि विद्यते ॥ अ-
र्थो मधुरकव्यादिसज्जनेषु स्थितो ह्ययम् ॥ २६ ॥ क्रिमिकंठस्य चो-
लस्य व्याजेन यतिपुंगवः॥ पश्चिमं देशमासाद्य तत्र वासमथाकरोत्
॥ २७ ॥ तत्रत्यास्ते महात्मानः शास्त्रोपन्यासमादरात् ॥ श्रुत्वा
रामानुजार्य्यस्य विस्मयं परमं गताः ॥ २८ ॥ ततस्तान्वैष्णवान्दृष्ट्वा
यतींद्रो वाक्यमब्रवीत् ॥ एतावन्मात्रमधुना मया लोकहितं कृतम्
॥ २९ ॥ दृष्ट्वास्मत्परमाचार्य्यग्रंथानादाय वैष्णवाः ॥ महात्मनो या-
मुनस्य सहवासं तु सन्निधौ ॥ ३० ॥ एकस्मिन्दिवसे वापि संप्राप्तो
यद्यहं तदा ॥ वैकुंठलोकसौधानां भूलोकस्यास्य संप्रति॥३१॥ दृढं
विधाय सहसा सोपानानि निरंतरम् ॥ तन्मार्गेण जनान्सर्वान् प्रा-

पयिष्यामि तं हरिम्॥३२॥तस्माद्यतींद्रसामर्थ्यमीश्वरस्यापि नास्तिहि॥ ततो यतींद्रसंबंधात्पापात्मा ह्यपि मुक्तिभाक् ॥ ३३ ॥ यः पंचमोपायमिमं महार्थं ज्ञात्वा यतींद्रे दृढभक्तियुक्तः ॥ स एव मुक्तोखिलतत्त्ववेत्ता वंद्यः कृतार्थोंखिलमानवानाम् ॥ ३४ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे आचार्यवैभववर्णनं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

## चतुःषष्टितमोऽध्यायः ।

श्रीमद्रामायणे युद्धकाण्डे श्रीराघवं प्रति ॥ विभीषणेन या पूर्वं कृता हि शरणागतिः ॥ १ ॥ कदाचिद्रंगनगरे स्वमठे तां यतीश्वरे ॥ ब्रुवत्यस्मिन्महाभागे वैष्णवेभ्यश्च सादरम् ॥२॥ सभामध्यात्समुत्थाय धनुर्दासस्तु सत्वरम् ॥ तस्थौ विरक्तस्तद्ग्रंथे गमनायोपचक्रमे ॥३॥ तं दृष्ट्वा लक्ष्मणाचार्यो धनुर्दासं महामतिम् ॥ शृण्वतां सर्वविदुषां व्याजहार वचः शुभम् ॥४॥ किमर्थमुत्थितोसि त्वं धनुर्दासाद्य सत्वरम् ॥ ब्रूहि तत्कारणं मह्यं वैराग्याद्वैष्णवोत्तम ॥५॥ निशम्य लक्ष्मणार्यस्य वचनं यतिभूपतेः ॥ कृतांजलिरुवाचेदं धनुर्दासो यतीश्वरम् ॥ ६ ॥ परित्यक्ता मया लंका मित्राणि च धनानि च ॥ भवद्गतं च मे राज्यं जीवितं च सुखानि च ॥ ७ ॥ इत्येवमुक्त्वा सहसा राक्षसेंद्रो विभीषणः ॥ त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ ८ ॥ यत्समाश्रयणे नित्यं विष्णोर्भगवतो हरेः ॥ दारापत्यादिरूपं च तत्सर्वं प्रतिबंधकम् ॥९॥ त्यक्त्वा विभीषणो धीमाननन्यगतिकस्तदा ॥ इक्ष्वाकुवंशसंभूतरामपादाब्जमेव मे ॥ १० ॥ दृढं च रक्षकं मत्वा न निधाय पदं भुवि ॥ गगनस्थो निरालंबस्तस्थौ किल कृतांजलिः ॥ ११ ॥ वध्यतांवध्यतामेव पापोयं रावणानुजः ॥ इति शैलांश्च वृक्षांश्च समुत्पाट्यांजसा तदा ॥ १२ ॥ वृक्षपर्वतहस्ताश्च तस्थुर्वानरपुंगवाः ॥ नखदंष्ट्रायुधैरेतैर्वानरैर्युद्धदुर्मदैः ॥ सुसंयुक्ता रामगोष्ठी ममालं यतिपुंगव ॥ १३ ॥ पुत्रमित्रकलत्रादिसहितस्य दिवानिशम् ॥ धनुर्दासस्य

वचनं तदाकर्ण्य यतीश्वरः॥ १४ ॥शृण्वतां विबुधेंद्राणां प्रोवाचेदं वचः शुभम् ॥ शृणु वत्स प्रवक्ष्यामि हितं तव महामते ॥ १५ ॥ यद्यहं प्राप्नुयां मुक्तिं त्वं चापि प्राप्स्यसि ध्रुवम् ॥ यदि प्राप्तो महापूर्णः प्राप्स्येहं परमं पदम् ॥ १६ ॥ मुक्तश्चेद्यामुनाचार्यः पूर्णार्यो मुक्तिभाग्भवेत् ॥ इत्येवं पूर्वगुरवः प्राप्ता यदि परं पदम् ॥ १७ ॥ तेषां शिष्या गमिष्यंति कृपयात्र न संशयः ॥ अस्मच्छठारिः स्वगिरा प्राप्तवानस्म्यहं दृढम् ॥ १८ ॥ परं पदं स्वप्रबंधे प्रोवाचेदं किल स्वयम् ॥ अतोस्मच्छठकोपस्य सिद्धत्वात्परमं पदम् ॥ १९ ॥ सिद्धमेव तथास्माकमिति निश्चित्य वर्त्तय ॥ लक्ष्मीपुरुषकारेण मोक्षः सिद्धोखिलात्मनाम् ॥ २० ॥ नित्ययोगमतः प्राप्ता हरिणा जगदीश्वरी ॥ एकस्मिन् शृंखले लग्नाः नित्यसंसारिणो वयम् ॥ २१ ॥ लक्ष्म्या सह जगन्मात्रा भगवांश्च जगत्पतिः ॥ एतच्छृंखललग्नानां मध्ये तेषां महात्मनाम् ॥ २२ ॥ यो वा को वा भवेन्मुक्तिं संप्राप्तो यदि सुव्रत ॥ प्राप्स्यमो हि वयं सर्वे मोक्षमत्र न संशयः॥२३॥ चत्वारो राक्षसास्तत्र ते विभीषणमंत्रिणः ॥ न चक्रुः किल तं रामं पृथग्वा शरणागतिम् ॥ २४ ॥ रामचंद्रोपि भगवांस्तदा तान् राक्षसोत्तमान् ॥ संरक्षणे तथैकैकमाहूय न च रक्षति ॥ २५ ॥ अतोहं समनुप्राप्तो यदि विष्णोः परं पदम् ॥ गमिष्यसि तदैव त्वं यत्पदं प्राप्यते मया ॥ २६ ॥ अथैस्मिन्निश्चलमतिः सुखमत्र वसाधुना ॥ आश्रयामास भरतं शत्रुघ्नः स तमेव हि ॥ २७ ॥ अनुसृत्य शठारातिं तस्थौ स मधुरः कविः ॥ गोदा तु विष्णुचित्तार्य्यं तमाश्रित्यैव संस्थिता ॥ २८ ॥ एवं मन्ये महात्मानो गुरुमेव समाश्रिताः ॥ कारणं भगवत्प्राप्तेस्ततः सद्गुरुवर्त्तनम् ॥२९॥ आचार्य्यपरमाचार्यावनुसृत्यैव वर्त्तयेत् ॥ वर्तंते ज्ञानसंपन्नो यत्रयत्र हि देशिकः॥ ३० ॥ दिव्यदेशादयः सर्वे वर्तंते तत्रतत्र हि ॥ पुराविदो वदंत्येवं वासस्थानं श्रियः पतेः ॥ ३१ ॥ धनुर्दासश्च ते सर्वे तत्रत्या विबुधोत्तमाः ॥ श्रुत्वा यतींद्रव-

चनं सर्ववेदांतसंमतम् ॥ ३२ ॥ संतोषं परमं जग्मुः प्राप्ततत्त्वार्थ-संपदः ॥ अतो यतींद्रसंबंधं परमं मोक्षसाधनम् ॥ ३३ ॥ तत्पादपद्मकैंकर्य्यं परमं प्राप्यमेव तत् ॥ श्रीवैकुंठो वेंकटाद्रिर्वारणाद्रिश्च यः स्मृतः ॥ ३४ ॥ मुख्यस्थानं भगवतो विष्णोः सर्वात्मकस्य च ॥ तेषु स्थलेषु सर्वेषु ह्यष्टोत्तरशतेषु च ॥ ३५ ॥ वासुदेवादयो देवाः स्वामिनो ये समास्थिताः ॥ ते सर्वे वसतस्तस्य भूतपुर्यां जगद्गुरोः॥३६॥ भाष्यकारस्य हृदये वासस्थानं प्रपेदिरे ॥ अतः श्रीभाष्यकारस्य भूतपुर्य्यां जगद्गुरोः ॥ ३७ ॥ कैंकर्यात्समवाप्नोति तत्फलं नात्र संशयः ॥ दिव्यानां पुण्यदेशानामष्टोत्तरशतात्मनाम्॥३८॥येषां तेषु च देशेषुलोकरक्षणकाम्यया॥वासुदेवादिदेवेभ्यो निवसद्भ्यश्च भक्तितः॥३९॥कृतैः पूजादिकैंकर्य्यैर्यत्फलं ह्युपजायते॥ तत्फलं समवाप्नोति भाष्यकारस्य पूजनात्॥४०॥ कर्मज्ञानादयः सर्वे न च मोक्षस्य साधकाः ॥ एक एव यतिश्रेष्ठो भगवान्मोक्षसाधकः ॥ ४१ ॥ उपायोपेयभूतश्च लक्ष्मणार्यो जगद्गुरुः॥तन्नामोच्चारणादेव सर्वं नश्यति पातकम्॥४२॥रामानुजेति या मन्त्रे चतुरा चतुरक्षरी ॥ तां विना न भवेदन्यो भवबंधविमोचनः ॥ ४३ ॥ तदेव पुरुषार्थं हि यद्रामानुजपूजनम् ॥ अयमेव हि सिद्धांत इति प्राह दिवानिशम् ॥ ४४ ॥ समाजे सर्वविदुषां गुरूणां रंगपट्टणे॥ गुरुर्वरदविष्णवार्यः सर्वशास्त्रविदां वरः ॥ कूरेशोपि सदा चैवं महात्मा व्याजहार सः ॥ ४५ ॥ न चेद्रामानुजेत्येषा चतुरा चतुरक्षरी ॥ कामवस्थां प्रपद्यंते जन्तवो हंत मादृशाः ॥४६॥ एवं प्रपन्नगायत्र्यां श्रीरंगाख्यश्च वैष्णवः ॥ सुस्पष्टं यतिराजस्य वैभवं व्याजहार सः ॥ ४७ ॥ हस्तामलकवद्देवं दर्शयित्वापि मेधुना॥ विग्रहानुभवं स्वामिन्परमप्राप्यमेव ते ॥४८॥ एवं संति महात्मानो यत्र योगींद्रसंश्रयाः॥ तदेव मम दासस्य प्राप्यस्थानं न संशयः॥ ४९ ॥ त्वद्भक्तेषु यतिश्रेष्ठ भक्तियुक्तं कुरुष्व माम् ॥ दासभूतं च मां तेषां भक्तानां तव सांप्र-

तम् ॥ ५० ॥ सन्निधौ यतिराजस्य मुखं दृष्ट्वातिसुन्दरम् ॥ एवं विज्ञापनं चक्रे स रंगार्यो महामतिः ॥ ५१ ॥ यतींद्रः संप्रहृष्टोथ श्रुत्वा तेन कृतां शुभाम् ॥ तदा प्रपन्नगायत्रीमंगीचक्रे महायशाः ॥ ५२ ॥ तस्यामेवांत्यगाथायां चरमार्थ उदाहृतः ॥ एवं लोकहितार्थाय रंगार्येण महात्मना ॥ ५३ ॥ कृत्वा पुरुषकारेण महालक्ष्मीं श्रियः पतिम् ॥ श्रीभाष्यकारपादाब्जं तदेव शरणं व्रजेत् ॥ ५४ ॥ निश्चयार्थमिमं लोके यो वेत्त्यर्थं महामातिः ॥ सर्वबंधविनिर्मुक्तो याति विष्णोः परं पदम् ॥५५॥ यथा रामस्य चरितं शतकोटिप्रविस्तरम् ॥ तथा रामानुजस्यैवमवाङ्मनसगोचरम् ॥ ५६ ॥ अलं तर्तुं प्रयत्नेन बाहुभ्यां वापि सागरम् ॥ यतिरास्य चरितं सान्तं वक्तुं न शक्यते ॥५७॥ रामानुजार्य्यचरितं यथामति यथाश्रुतम् ॥ मयाकृतमिदं भक्त्या यतिराजप्रसादतः ॥५८॥ कवीश्वरा महात्मानो मतिमंतो बहुश्रुताः ॥ कुर्वंतु चरितं दिव्यं विस्तारं यतिभूपतेः ॥५९॥ श्रीरामचन्द्रो भगवानयोध्यायां महाबलः ॥ भ्रातृभिः सहितो वीरो यथा राज्यमकारयत् ॥ ६० ॥ तथा रामानुजः श्रीमान् भगवाँल्लोकपावनः ॥ श्रीरंगे शिष्यसंयुक्तः सर्वं जगदपालयत् ॥ ६१ ॥ रामराज्ये प्रजाः सर्वा नीरोगा निरुपद्रवाः ॥ सर्वधर्मरताः शांता यथा दीर्घायुषोभवन् ॥ ६२ ॥ तथैव मनुजाः सर्वे लक्ष्मणार्येण रक्षिताः ॥ दीर्घायुषो महात्मानो विष्णुधर्मपरायणाः ॥ ६३ ॥ संपूर्णधर्मो भगवान् रराज सकलावनौ ॥ चतुष्पादः कलियुगे यथा कृतयुगे पुरा ॥ ६४ ॥ काले वर्षति पर्जन्यः पृथिवीसस्यशालिनी ॥ राजानो ह्यभवन्सर्वे सर्वधर्मपरायणाः॥६५॥ अमत्सरमनालस्यमक्रोधं भयवर्जितम् ॥ सर्वधर्मरतं शांतं भूलोकमभवत्तदा ॥ ६६ ॥ भूमिस्थे लक्ष्मणार्ये तु तारतम्यं न विद्यते ॥ भूलोकस्यास्य महतो वैकुंठस्य तदा क्वचित् ॥ ६७ ॥ चित्रगुप्तो यमश्चैव निर्व्यापारोभवत्तदा ॥ रुक्मांगदादिकाले तु यथा भूमिस्तथा-

भवत् ॥ ६८ ॥ लीलामानुषरूपिणो यतिपतेर्दिव्यं चरित्रं शुभं श्रोतॄणामघनाशनं भवहरं चित्रं विचित्रार्थदम् ॥ ये शृण्वंति पठंति सौम्यहृदया भक्त्यानिशं धीयुतास्ते गच्छंति भवाद्यगम्यमतुलं विष्णोः पदं शाश्वतम् ॥ ६९ ॥ रामानुजाय महते निगमांतशास्त्रपारंगताय परमार्थविशारदाय ॥ विख्यातलोकगुरवे यतिपुंगवाय भूयो नमो भुवनमंगलविग्रहाय ॥७०॥ इति प्र०रा०श्रीरामानुजमंत्रप्रभाववर्णनं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

---

## पञ्चषष्टितमोऽध्यायः ।

श्रीरंगे वसतो महाविभवतो लोकोत्तरात्संततं श्रीमल्लक्ष्मणयोगिनो यतिपतेः श्रीशेषमूर्त्यात्मनः ॥ तस्यासीच्छरदां शतं च विदितं सम्यग्गता विंशतिः सर्वं विष्णुमयं प्रदर्शितवतः सत्यं वचो नैगमम् ॥ १ ॥ श्रीरंगवासेन यतीश्वरस्य षष्टिः समानामगमत्सुखेन ॥ षष्टिस्तथान्या निगमाद्रिकांचीश्रीभूतपूर्यादिषु वासतः कौ ॥ २ ॥ आसेतुसीताचलमध्यभूमावापश्चिमप्राग्जलराशिमध्ये ॥ अशिष्यभूतो यतिपुंगवस्य कश्चिज्जनः क्वापि न लक्ष्यते हि ॥ ३ ॥ सम्यङ्निवृत्ताखिलविष्णुमायातमोयतींद्राश्रयणाब्जबंधुः ॥ संप्राप्ततत्त्वार्थनिधिर्हि मोक्षं सुखं प्रपेदेखिलजंतुसंघः ॥ ४ ॥ नष्टपूर्वविचारस्य फणींद्रादर्शनेन च ॥ भूयो वैकुंठनाथस्य विचारः सुमहानभूत् ॥५॥ ततः कदाचिद्योगींद्रो मनस्येवमचिंतयत् ॥ वैकुंठनाथसेवार्थं तद्विष्णोः परमं पदम् ॥ ६ ॥ लीलाविभूतिं संत्यज्य गंतव्यमधुना मया ॥ ततस्तदर्थं योगींद्रो लक्ष्मणार्यो महामतिः ॥७॥ तथा प्रपत्तिमकरोद्रंगनाथपदाब्जयोः ॥ रंगेशो लक्ष्मणाचार्यमेवमाह हरिस्तदा ॥ ८ ॥ इदानीं भवता वत्स किमिदं चिंतितं वद ॥ तच्छ्रुत्वा लक्ष्मणाचार्यो रंगेशमवदत्तदा ॥ ९ ॥ शतायुः पुरुषश्चेति निर्णीतं भवता पुरा ॥ कालातिक्रमणं जातं भगवन्नद्य मेधुना ॥१०॥

तदाकर्ण्य स रंगेशो यतीश्वरमभाषत ॥ अहमेव हि कालस्य तस्य कर्ता यतीश्वर ॥११॥ कांचित्कालं पुनर्भूम्यां सांप्रतं मम शासनात् ॥ पालयन्मनुजान्सर्वान्मन्मायापरिमोहितान् ॥ १२ ॥ कुर्वन् मम च कैंकर्य्यं वसात्रैव सुखं सुत ॥ रंगराजेन हरिणा तेनैवं प्रार्थितोपि सः ॥ १३ ॥ पुनःपुनर्मोक्षमेव तं ययाचे यतीश्वरः ॥ ओमित्युक्त्वाथ रंगेशो भूयो वचनमब्रवीत् ॥ १४ ॥ दास्यामि कांक्षितं वत्स वरं वरय सुव्रत ॥ एवं ब्रुवति रंगेशे संतुष्टो यतिराट् ततः ॥ १५ ॥ रंगेशं प्रणिपत्याह लक्ष्मणार्यो जगत्पतिम् ॥ लोको यः प्राप्यते स्वामिन् भवतः कृपया मया ॥ १६ ॥ अस्मत्संबंधसंबंधिचरमावधयश्च ये ॥ सम्यग्गच्छंतु तं लोकं जनास्ते तव शासनात् ॥ १७ ॥ रंगेशः प्रतिगृह्याशु तद्वचो यतिभूपतेः ॥ बाढमित्यभिधायाशु यतींद्राय महात्मने ॥ १८ ॥ तीर्थं प्रसादं मालां च परिपट्टं शठद्विषम् ॥ दापयित्वा बहुविधं सम्मानमकरोद्धरिः ॥ १९ ॥ ततो यतीश्वरस्तेन रंगिणाज्ञापितस्तदा ॥ प्रविवेश मठं श्रीमान् श्रीवैष्णवसमावृतम् ॥२०॥ श्रीवैष्णवान् समाहूय यत्र तत्र स्थितान् बहून् ॥ कृपामात्रप्रसन्नार्यो यतिराजो जगद्गुरुः ॥ २१ ॥ सर्वशास्त्रार्थसाराणि सुवाक्यानि द्विसप्ततिः ॥ समाहृत्य विधायाशु भूरिदानं महायशाः ॥ २२ ॥

## यतीन्द्रोपदिष्टचतुस्सप्ततिवाक्यानि ।

श्रीवैष्णवेभ्यः प्रोवाच शिष्येभ्यः करुणार्णवः॥स्वदेशिकस्य कैंकर्ये कैंकर्ये वैष्णवस्य च ॥ २३ ॥ प्रतिपत्तिं समां कृत्वा कैंकर्यं कारयेत्सदा ॥ पूर्वाचार्योक्तवाक्येषु विश्वासेनैव वर्त्तयेत् ॥ २४ ॥ न वर्तयेदिंद्रियाणां किंकरश्च दिवानिशम् ॥ सामान्यशास्त्रनिरतो नैव तिष्ठेत्कदाचन ॥ २५ ॥ भगवद्विषये शास्त्रे निरतः सर्वदा वसेत् ॥ आचार्य्यकृपया पूर्वं संजातज्ञानसागरः ॥ २६ ॥ भूयः शब्दादिविषयकिंकरो नैव वर्तयेत् ॥ सर्वान् शब्दादिविषयान्समानेव विलो-

कयेत् ॥ २७ ॥ पुष्पचंदनतांबूलद्रव्यादिषु सुगंधिषु ॥ वासनारुचि-
कार्याणि कदाचिन्नैव कारयेत् ॥ २८ ॥ या प्रीतिरासीत्सततं भगवन्-
न्नामकीर्तने ॥ सा स्यात्प्रीतिर्हि तद्भक्तनामसंकीर्तने च वः ॥ २९ ॥
कारणं भगवत्प्राप्तेर्महाभागवताश्रयः ॥ इति मत्वा दृढं तेषामाज्ञया
वर्त्तयेत्सदा ॥ ३० ॥ विहाय विष्णुकैंकर्य्यं कैंकर्य्यं वैष्णवस्य च ॥
विनश्येत्स नरोप्राज्ञो रागादिप्रेरितो यदि ॥ ३१ ॥ वैष्णवानामनु-
ष्ठाने नोपायमतिमुन्नयेत् ॥ उपेयमेव सततमुन्नयेत्सुमहामनाः ॥३२॥
नाहूयेदेकवचनान्महाभागवताञ्जनान्॥पूर्वांजलिं वैष्णवानां दृष्टमात्रे च
कारयेत् ॥ ३३ ॥ हरेर्भगवतो विष्णोर्वैष्णवानां च सन्निधौ ॥ पादौ
प्रसार्य्य न वसेत्कदाचिदमलात्मनाम् ॥ ३४ ॥ विष्णोर्गुरोर्वैष्णवस्य
गृहाणां च दिशं प्रति ॥ पादौ प्रसार्य्य निद्रां च कदाचिन्नैव कार-
येत् ॥ ३५ ॥ कृतनिद्रः समुत्थाय वदेद्गुरुपरंपराम् ॥ महाभागवता-
न्दृष्ट्वा निषण्णान्विष्णुसन्निधौ ॥ ३६ ॥ मंत्रराजमनुध्यायन्प्रणमेद्दंड-
वद्भुवि ॥ संकीर्तनं भगवतस्तथा भागवतस्य वा ॥ ३७ ॥ श्रीवै-
ष्णवेषु कुर्वत्सु ताञ्छक्त्या नाभिपूज्य च ॥ मध्ये चोत्थाय गमनम-
पचारतमो भवेत् ॥ ३८ ॥ वैष्णवागमनं श्रुत्वा गच्छेदभिमुखं तदा ॥
साकं गच्छेत्कियद्दूरं भक्त्या तेषां विनिर्गमे ॥ ३९ ॥ द्वयोरकरण-
त्वेन महान् दोषः प्रजायते ॥ आत्मयात्रार्थमनिशं शेषत्वेन च वैष्ण-
वान् ॥ ४० ॥ विनयादिगुणैर्भक्त्या नानुसृत्य महात्मकान् ॥ देह-
यात्रार्थमनिशं प्राकृतानां गृहेगृहे ॥ ४१ ॥ गत्वागत्वाथ नामानि
तेषां तेषां च सादरम्॥ स्वनाम्नः पुरतः कृत्वा नियमादीन् विहाय च
॥ ४२ ॥ वर्तनं वैष्णवस्यास्य स्वरूपस्यैव हानिदम् ॥ विष्णोर्दिव्य-
विमानानि गोपुराणि जगत्पतेः ॥ ४३ ॥ दृष्टमात्रेण सहसा कारये-
दंजलिं तदा ॥ दृष्ट्वेतरविमानानि विस्मयं नैव कारयेत् ॥ ४४ ॥
श्रुत्वा न विस्मयं गच्छेद्देवतांतरकीर्तनम् ॥ विष्णोर्वा वैष्णवानां च

नामसंकीर्तनानि च॥४५॥ कुर्वतः पुण्यपुरुषान्दृष्ट्वा नावाप्य वै मुदम्॥ आक्षेपो ह्यपचारस्स्यान्मध्ये तेषां सुनिश्चयम् ॥ ४६ ॥ श्रीवैष्णवानां सर्वेषां देहच्छायां न लंघयेत् ॥ स्वदेहच्छायासंस्पर्शं वैष्णवेषु न कारयेत् ॥४७॥ स्पृष्ट्वासंस्कारिणः पूर्वं वैष्णवाननुसंस्पृशेत् ॥ वैष्णवाय दरिद्राय पूर्वं वंदनकारिणे ॥ ४८ ॥ अनादराणि कार्याणि भवेयुः पातकानि वै ॥ यदि प्रणमते पूर्वं दासोहमिति वैष्णवः ॥ ४९ ॥ अनादरे कृते तस्मिन्नपचारो महान्भवेत् ॥ वैष्णवानां च जन्मानि निद्रालस्यानि यानि च ॥ ५० ॥ दृष्ट्वा तानि प्रकास्याशु जनेभ्यो न वदेत्क्वचित् ॥ तेषां दोषान्विहायाशु गुणांश्चैव प्रकीर्तयेत् ॥ ५१ ॥ विष्णुपादोदकं चैव भक्तपादोदकं तु वा ॥ प्राकृतेषु च पश्यत्सु न पिबेत्तोयमुत्तमम् ॥ ५२ ॥ तत्त्वत्रयस्य ज्ञानेन श्रीरहस्यत्रयस्य च ॥ रहितस्यांघ्रिजं तोयं ग्राहयेन्न कदाचन ॥ ५३ ॥ ज्ञानानुष्ठानयुक्तस्य सदाचाररतस्य च ॥ पादोदकं वैष्णवस्य पिबेन्नित्यं प्रयत्नतः ॥ ५४ ॥ मां च भागवतैः सार्द्धं साम्यबुद्धिं न कारयेत् ॥ प्राकृतानां च संस्पर्शं प्राप्तः ग्रामादिकाद्यदि ॥ ५५ ॥ स्नातः सचैलः सहसा वैष्णवांघ्रिजलं पिबेत् ॥ वैराग्यज्ञानभक्त्यादिगुणयुक्तान्महात्मनः ॥ ५६ ॥ वैष्णवांस्तान् महाभागान् मत्वा चरमविग्रहान् ॥ कारयेत्तेषु विश्वासं विशेषेण महात्मसु ॥ ५७ ॥ वैराग्यज्ञानभक्त्यादिगुणवंतो महात्मकाः ॥ येये भागवतास्तांस्तानुद्दिश्य प्रीतिमभ्यसेत् ॥५८ ॥ न ग्राहयेद्विष्णुतीर्थं प्राकृतानां गृहेषु च ॥ प्राकृतानां निवासस्थान् न सेवेद्विष्णुविग्रहान् ॥ ५९ ॥ श्रीहरेर्दिव्यदेशेषु पश्यत्सु प्राकृतेष्वपि ॥ तीर्थप्रसादग्रहणं कारयेन्न तु संशयः ॥ ६० ॥ सदा श्रीवैष्णवैर्दत्तं प्रसादं विष्णुसान्निधौ ॥ उपवासादिनियमयुक्तोहमिति न त्यजेत् ॥ ॥ ६१ ॥ प्रसादे पावने विष्णोः सर्वपापहरे हरेः ॥ कदाचिदपि चोच्छिष्टप्रतिपत्तिं न कारयेत् ॥ ६२ ॥ सन्निधौ वैष्णवानां च स्वगुणान्नैव कीर्तयेत् ॥ श्रीवैष्णवानां सान्निध्ये नान्यं परिभवेज्जनम्॥६३॥

गुणानुभवकैंकर्य्यं तदीयानां महात्मनाम् ॥ अविधाय क्षणमपि कार्यं किंचिन्न कारयेत् ॥ ६४ ॥ दिनैकघटिकायां च वर्णयेद्गुरुसद्गुणान् ॥ दिनैकघटिकामध्ये ह्यपि विश्वासपूर्वकम् ॥६५॥ शठार्यादिप्रबंधान्वा प्रबंधान् कीर्त्तयेद्गुरोः ॥ देहाभिमानिना सार्द्धं सहवासं न कारयेत् ॥६६॥ श्रीवैष्णवानां चिह्नानि धृत्वापि विषयातुरैः ॥ तैः सार्द्धं वंचकजनैः सहवासं न कारयेत् ॥६७॥ न भाषयेच्च सततं परदूषणतत्परैः ॥ देवतांतरभक्तानां संगदोषनिवृत्तये ॥ ६८ ॥ श्रीवैष्णवैर्महाभागैः सल्लापं कारयेत्सदा ॥ तदीयदूषकजनान्न पश्येत्पुरुषाधमान् ॥ ६९ ॥ नैवावलोकयेत्क्रूरान्नापचारपरान् गुरौ ॥ द्वयैकनिष्ठपुरुषैः संगतिं कारयेत्सदा ॥ ७० ॥ उपायांतरनिष्ठांश्च पुरुषान्परिवर्जयेत् ॥ प्रपत्तिधर्मनिरतैर्जनैः सह वसेत्सदा ॥ ७१ ॥ रहस्यत्रयसारज्ञैस्तत्त्वत्रयविशारदैः ॥ महाभागवतैः सार्द्धं सहवासं च कारयेत् ॥ ७२ ॥ नार्थकामपरैः सार्द्धं कदाचिन्निवसेत्सदा ॥ भगवद्भक्तिनिष्ठैश्च संलापं कारयेत्सदा ॥ ७३ ॥ वैष्णवेन तिरस्कारः कृतो हि भवतां यदि ॥ अपकारस्मृतिं तस्मादमत्वा मौनतो वसेत् ॥ ७४ ॥ संजाता वैष्णवस्यासीद्बुद्धिर्हि परमे पदे ॥ श्रीवैष्णवेभ्यः सर्वेभ्यः कारयेत्ससतं हितम् ॥ ७५ ॥ धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् ॥ न तत्सेवेत मेधावी नहि तद्धितमुच्यते ॥ ७६ ॥ नानर्पितान्नं हरये कदाचिदपि भक्षयेत् ॥ पुष्पचंदनतांबूलवस्त्रोदकफलादिकम् ॥ ७७ ॥ नानर्पितं तु हरये कदाचिदपि धारयेत् ॥ साधनांतरसंप्राप्तमर्थकामादिहेतुना ॥ ७८ ॥ अयाचितमपि प्राप्तं न गृह्णीयात्कदाचन ॥ जात्याद्यदुष्टमन्नाद्यं भुंजीयात्तच्च सादरम् ॥ ७९ ॥ स्वदेहप्रियभोग्यानि नार्पयेत्परमात्मने ॥ शास्त्रीयसर्वभोगाँस्तु विष्णवे तानि चार्पयेत् ॥ ८० ॥ विष्ण्वर्पितान्नपानीयभक्ष्यादिषु सुगंधिषु ॥ प्रसादबुद्धिः कर्तव्या भोगबुद्धिर्हि न क्वचित् ॥ ८१ ॥ कैंकर्य्यबुद्ध्या

कर्माणि शास्त्रीयाण्येव कारयेत् ॥ मंत्रत्रयार्थनिष्ठस्य महाभागवतस्य हि ॥ ८२ ॥ अपचारं विना नान्यदात्मनो नाशकारणम् ॥ आत्मनो मोक्षहेतुत्वात्तन्मुखोल्लासनं विना ॥ ८३ ॥ पूजनाद्विष्णुभक्तानां पुरुषार्थोऽस्ति नेतरः ॥ तेषु तद्द्वेषतः किंचिन्नास्ति नाशनमात्मनः॥८४॥ अर्चाविष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेंबुबुद्धिः ॥ सिद्धे तन्नाममंत्रे कलिकलुषहरे शब्दसामान्यबुद्धिः श्रीशे सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी सः ॥८५॥ श्रीमद्भागवतार्चनं भगवतः पूजाविधेरुत्तमं श्रीविष्णोरवमाननाद्गुरुतरं श्रीवैष्णवोल्लंघनम् ॥ तीर्थादच्युतपादजाद्गुरुतरं तीर्थं तदीयांघ्रिजं तस्मान्नित्यमतन्द्रितो भव सतां तेषां समाराधने॥८६॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे चरमदशायां शिष्यजनाय चतुःसप्ततिवाक्योपदेशो नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ।

एवमाद्यादितत्त्वार्थान्यतींद्रः करुणार्णवः ॥ दिनत्रयमहोरात्रं मुक्तिहेतून्निरंतरम् ॥ १ ॥ तेभ्यो महाविशेषार्थाञ्छिष्येभ्यो व्याजहार सः ॥ निशम्यार्थं यतींद्रोक्तं गूढार्थमतिविस्मयाः ॥ २ ॥ सर्वे यतींद्रशिष्यास्ते यतींद्रमिदमब्रुवन् ॥ कदाचिदप्यनुक्तार्थान्वदता भवताधुना ॥ ३ ॥ अस्माकं महती शंका काचिद्भवति भो गुरो ॥ को हेतुरस्य भगवन् ब्रूहि नः करुणार्णव ॥ ४ ॥ शंकां विधाय पृच्छत्सु शिष्येषु यतिपुंगवः ॥ न्यवेदयदमेयात्मा तेभ्यस्तत्कारणं महत् ॥ ५ ॥ रंगेशो भगवानद्य दत्तवान्मे परं पदम् ॥ दिने गच्छामि वैकुण्ठं दिनस्यास्य चतुष्टये ॥ ६ ॥ तच्छ्रुत्वा घोरसंकाशं ते वाक्यं रोमहर्षणम् ॥ भूम्यां निपतिताः सर्वे च्छिन्नमूला इव द्रुमाः ॥ ७ ॥ देहत्यागे मतिं चक्रुस्तद्वियोगासहिष्णवः ॥ तानाश्वास्य यतिश्रेष्ठः शिष्यानेवं वचोब्रवीत् ॥ ८ ॥ भोभोः श्रीवैष्णवाः सर्वे मद्वियोगासहिष्णुभिः ॥ भवद्भिर्मद्वि-

योगे तु देहत्यागः कृतो यदि ॥ ९ ॥ शठारिणा महापूर्णयामुनाभ्यां च वः शपे ॥ अन्ते समागमो मास्तु भवतां नित्यसूरिभिः ॥ १० ॥ त्यक्तदेहेच्छवो ये तु मद्वियोगासहिष्णवः ॥ ते चाधः पतिताः सर्वे भवेयुर्नात्र संशयः ॥ ११ ॥ श्रुत्वोद्वेगकरं वाक्यं तत्तस्य यतिभूपतेः॥ ऊचुः प्रांजलयः सर्वे भयोद्विग्ना यतीश्वरम् ॥ १२ ॥ युष्मत्सेवां विना सर्वे मुहूर्तमपि जीवितुम् ॥ न समर्था वयं स्वामिस्तस्योपायं वदाशु नः ॥ १३ ॥ तदंगीकृत्य वचनं भगवाँल्लोकपावनः ॥ चकार लोकरक्षार्थं मतिं कांचिन्महामतिः ॥ १४ ॥ सुमुहूर्त्ते महायोगी सर्वलक्षणशोभिते ॥ शिल्पिभिः कारयामास स्वार्चामखिललक्षणाम् ॥ १५॥ तमर्चाविग्रहं सम्यग्गाढमालिंग्य योगिराट्॥ब्रह्मरंध्रं समाघ्राय स्वशक्तिं तत्र दत्तवान्॥ १६॥दीपादुत्पन्नदीपाभं प्रतिबिंबमिवापरम्॥तमर्चाविग्रहं दृष्ट्वा सर्वे मुमुदिरे जनाः ॥१७॥ तमर्चाविग्रहं सम्यक्प्रतिष्ठाप्य यथाविधि ॥ तान् सर्वाँल्लक्ष्मणाचार्य्यः सम्यग्दृष्ट्वेदमब्रवीत् ॥ १८ ॥ सम्यक् पश्यत भो वत्सा मदर्चाविग्रहं परम् ॥ तमिमं सुन्दरवरं सर्वेषां परदैवतम् ॥ १९ ॥ भवतां वर्तते नित्या या प्रीतिरधिका मयि ॥ तामत्राविरतां सम्यगर्चायां कुरुतादरात् ॥ २० ॥ एतेन मम संतोषो भवतां मंगलं भवेत् ॥ प्रतिगृह्य यतींद्रस्य वचनं वैष्णवोत्तमाः ॥२१॥ तथैव चक्रुस्ते सर्वे तां भक्तिं तत्र विग्रहे ॥ संपूज्यमानः सततं यतींद्रोर्चाप्रतिष्ठितः ॥ २२ ॥ अवर्धतानुदिवसं बालसूर्य्य इवोदितः॥ सर्वस्थलेषु सर्वत्र श्रीरंगादिषु भूतले ॥ २३ ॥ अर्चावतारा बहवो यतींद्रस्याभवंस्ततः ॥ तेषां मुख्यतमा भूम्यां ते यतींद्रकृतास्त्रयः॥२४॥ श्रीभूतनगरे चैव श्रीरंगे यादवाचले ॥ तेषां मुख्यतमस्सोयं श्रीभूतनगरे स्थितः ॥ २५ ॥ स्वावतारस्थलत्वेन भूतपुर्यां विशेषतः ॥ यतिराजस्य महती कृपा तत्रैव वर्तते ॥ २६ ॥ पुरा यतींद्रं श्रीरंगे दाशरथ्यात्मजो महान् ॥ श्रीरामानुजदासाख्यो वाधूलकुलभूषणः ॥२७॥

प्रणिपत्य महात्मानं प्रांजलिर्वाक्यमब्रवीत् ॥ स्वावतारस्थले स्वामिं-
स्तस्मिञ्छ्रीभूतपट्टने ॥ २८ ॥ अस्मत्सुरक्षणार्थाय युष्मदर्चां
प्रदापय॥ तदंगीकृत्य योगींद्रो मुहूर्त्ते सर्वमंगले ॥ २९ ॥ शिल्पिभिः
कारयामास स्वार्चामखिललक्षणाम् ॥ तमर्चाविग्रहं सम्यग्गाढमालिं-
ग्य हर्षितः ॥ ३० ॥ उच्छ्वासवायुरूपेण स्वतेजस्तत्र चासृजत् ॥
दीपादुत्पन्नदीपाभं प्रतिबिंबमिवापरम् ॥ ३१ ॥ तमर्चाविग्रहं दृष्ट्वा
सर्वे मुमुदिरे जनाः ॥ स्वयमेव यतिश्रेष्ठः प्रतिष्ठाकालनिर्णयम्॥३२॥
विधाय सहसा तस्मै तं तदा प्रददौ मुदा॥ दाशरथ्यात्मजो भक्त्या ता-
मर्चां प्रतिगृह्य सः ॥ ३३ ॥ प्रतस्थे भूतनगरीं ब्राह्मणैः सर्वमंगलैः॥
रामानुजेन निर्णीतदिवसे भूतपट्टने ॥ ३४ ॥ अर्चायाः सम्यगेवा-
स्याः केशवस्वामिसन्निधौ ॥ दाशरथ्यात्मजो धीमान्विद्वद्भिर्वैष्णवैः
सह ॥ ३५ ॥ यथाविधि यथाशास्त्रं प्रतिष्ठामकरोन्महान् ॥ जलवासा-
भिषेकादिकालेषु यतिभूपतेः ॥ ३६ ॥ आयासः सुमहानासीच्छ्रीरंगे
वसतस्तदा ॥ नेत्रोन्मीलनकाले तु रक्तं सुस्राव नेत्रयोः ॥ ३७॥
अकस्मान्मम देहस्य चायासः सुमहानभूत् ॥ इत्येवं लक्ष्मणाचा-
र्यस्तदा संजातविस्मयः ॥ ३८ ॥ अकस्माल्लक्ष्मणार्यस्य
रक्तं नेत्रे हि निःसृतम् ॥ विलोक्य विस्मयं जग्मुः सर्वे श्रीवै-
ष्णवोत्तमाः ॥ ३९ ॥ तस्याः प्रतिष्ठानिर्णीतवासरः स च
वासरः ॥ एकत्वेनैव ते सर्वे विस्मयं च मुदं ययुः॥ ४० ॥ श्रीरामा-
नुजदासश्च तमर्चाविग्रहं ततः ॥ प्रतिष्ठाप्य यथाशास्त्रं भूतपुर्यां यथा-
विधि ॥ ४१ ॥ तद्वृत्तांतं यतींद्राय प्राहिणोदंजसा तदा ॥ तत्प्रति-
ष्ठादिनं चैव तन्निर्णीतदिनं तथा ॥ ४२ ॥ देहायासदिनं चैव त्रयं
तुल्यं बभूव यत् ॥ तस्माद्यतींद्रः संपूर्णः कलाभिर्भूतपट्टणे ॥ ४३ ॥
लोकसंरक्षकः श्रीमानद्यापि परिदृश्यते ॥ तस्माच्छ्रीभूतनगरं मुक्ति-
स्थानं न संशयः ॥ ४४ ॥ सर्वे दिव्यस्थलाधीशा यतींद्रे सुप्रति-

ष्ठिताः ॥ संपूर्णो दिव्यकलया यतींद्रेण प्रतिष्ठिताः ॥ ४५ ॥ तस्माद्भूतपुरी पुण्या सर्वदिव्यस्थलाधिका ॥ अनायासेन निखिलदिव्यदेशादिवासतः ॥ ४६ ॥ यत्फलं समवाप्नोति तत्तत्रैव न संशयः ॥ तस्मात्सर्वप्रयत्नेन वस्तव्यं भूतपट्टणे ॥ ४७ ॥ कुटीरमपि कृत्वापि वैष्णवेन मुमुक्षुणा ॥ महापातकयुक्तो वा युक्तो वा सर्वपातकैः ॥ ॥ ४८ ॥ तत्र नत्वा यतिश्रेष्ठं मुच्यते नात्र संशयः ॥ चैत्रार्द्रायां यतींद्रस्य योभिषेकं करोति हि ॥ ४९ ॥ सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ रामानुजार्यपादाब्जभक्तिमान्यो नरो भुवि ॥ ॥ ५० ॥ कृतकृत्यो हि सर्वेषां स च पूज्यतमः स्मृतः ॥ तस्माद्यतींद्रकैंकर्यं परमप्राप्यमेव तत् ॥ ५१ ॥ तस्माल्लक्ष्मणयोगींद्रप्रभावो ह्यतिमानुषः ॥ केन वर्णयितुं शक्यो न शक्यश्चेश्वरेण हि ॥ ५२ ॥ अर्चावतीर्णस्य यतीश्वरस्य श्रीभूतपुर्यां जगतां हितार्थम् ॥ यमद्भुतं तं महिमानमाद्यं जानाति सम्यक् स पुमान् कृतार्थः ॥ ५३ ॥ सकलनिगमसारं साधुलोकैकसारं निरुपममनवद्यं भोगमोक्षैकहेतुम् ॥ हरिमतमिव चाद्यं योनुसेवेत धीरः सकलनिगमवेदी ब्रह्मवेत्ता स एव ॥ ५४ ॥ इति श्रीप्रपन्नामृते रामानुजचारित्रे श्रीभूतनगरीरामानुजार्यावतारमाहात्म्यवर्णनं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥

---

## सप्तषष्टितमोऽध्यायः ।

ततः श्रीवैष्णवाः सर्वे श्रीरंगपुरवासिनः ॥ एवं विज्ञापनं चक्रुर्यतिराजं जगद्गुरुम् ॥ १ ॥ अस्माकं वर्त्तितव्यांशं ब्रूहि सम्यग्यतीश्वर ॥ तच्छ्रुत्वा तानुवाचेदं मन्नाथो वैष्णवान्वचः ॥ २ ॥ यः कश्चन प्रपन्नश्चेत्स एवं वर्तयेद्बुधः ॥ यत्प्रपन्नस्य चादृष्टमीश्वराधीनतस्ततः ॥ ३ ॥ न विचारोत्र कर्त्तव्यः संदेहं कुरुते यदि ॥ मिथ्या भवति तत्तस्य ध्रुवमात्मसमर्पणम् ॥ ४ ॥ कर्माधीनतया तस्य दृष्टं तत्र न शोचयेत् ॥ अतस्तयोः प्रपन्नस्य दृष्टादृष्टात्मकार्थयोः ॥ ५ ॥ निर्भ-

रत्वानुसंधानं जानीध्वमिति वैष्णवाः ॥ इत्युक्तास्ते यतींद्रेण वैष्णवाः पुनरब्रुवन् ॥ वयं तु केन मार्गेण कालमादेहपातनम् ॥ ६ ॥ वर्तिष्यामः क्षिपंतस्तं शाधि नो गुरुपुंगव॥ इत्युक्तस्तैर्यतिश्रेष्ठः कृपया तानुवाच सः ॥ ७ ॥ उपायबुद्ध्या कर्माणि मा कुरुध्वं महात्मकाः ॥ कर्मणामेव कैंकर्य्यं प्राप्ये भगवतो मतिः ॥ ८ ॥ तदीयं नाम कैंकर्यं श्रुत्वा श्रीभाष्यमादरात् ॥ प्रवर्त्तयध्वं तल्लोके तत्र शक्तिर्न चेद्यदि ॥ ९ ॥ परांकुशादिमुनिभिः दशभिर्देशिकोत्तमैः ॥ कृतं प्रबंधमभ्यस्य शिष्येभ्यो वदतानिशम् ॥ १० ॥ तत्रापि भवतां शक्तिर्न स्याद्यदि हि वैष्णवाः ॥ दिव्यदेशेषु कैंकर्य्यं विष्णवे कुरुतानिशम् ॥ ११ ॥ तत्रापि भवतां बुद्धिर्यदि सम्यङ् न जायते॥ कुटीरमपि कृत्वापि मठे मे यादवाचले ॥ १२ ॥ मुक्ताहंकारिणः सर्वे वासं कुरुत वैष्णवाः ॥ नाप्येतद्भवतां वत्स रोचते यदि सुंदरम् ॥ १३ ॥ द्वयार्थस्यानुसंधानं यावज्जीवमतंद्रिताः ॥ कुर्वंतः सम्यगेवार्या निर्भरा वसतादरात् ॥ १४ ॥ यदि नोत्पद्यते बुद्धिर्भवतां तत्र सत्तमाः ॥ श्रूयतामवधानेन प्रवक्ष्ये चरमं हितम् ॥ १५ ॥ ज्ञानभक्त्यादियुक्तस्य वैष्णवस्य महात्मनः ॥ मुक्ताहंकारिणस्तस्य निदेशे वसतानिशम् ॥ १६ ॥ अयं हि चरमोपायो नान्योपायस्ततः परम् ॥ अस्मिन्नर्थे महाञ् श्लोकः श्रूयते लोकविश्रुतः ॥ १७ ॥ श्रीभाष्यं द्रविडागमप्रवचनं श्रीशस्थलेष्वन्वहं कैंकर्य्यं यदुशैलनित्यवसतिः सार्थद्वयोच्चारणम् ॥ यद्वा भागवताभिमानवसतिः श्रेयः सतामित्यलं शिष्यान् प्राह यतीश्वरः परमगाद्विष्णोः पदं शाश्वतम् ॥ १८ ॥ इत्येवं वसतां लोके महतामधिकारिणाम् ॥ त्रिविधा विषयाः संति वर्त्तितव्या यथार्हतः ॥ १९ ॥ विरोधिनोनुकूलाश्च स्मृताश्चानुभया इति ॥ विष्णुविद्वेषिणो लोके विरोधिन इति स्मृताः ॥ २० ॥ वैष्णवे ह्यनुकूलाश्च बद्धाश्चानुभयाः स्मृताः ॥ यथाप्रसादं कुर्वंति प्रियवस्तुसमागमे ॥ २१ ॥ वैष्णवालोक-

नेनैव तथा कुर्वंतु धीवराः ॥ वह्निसर्पादिवद्दूरं परित्याज्या विरोधिनः ॥ ॥ २२ ॥ संसारिणस्तृणीकृत्य काष्ठलोष्ठतृणादिवत् ॥ वर्तितव्याः प्रपन्नानां ध्रुवं तेषां महात्मनाम् ॥ २३ ॥ वैष्णवानां हि संगत्या सम्यग् ज्ञानं प्रजायते ॥ तेन निःश्रेयसप्राप्तिर्भविष्यति सुनिश्चयम् ॥ २४ ॥ अतः सर्वात्मना कार्या वैष्णवानां हि संगतिः ॥ प्रतिकूलादिसंसर्गमानसंभाषणादयः ॥ २५ ॥ सुदूरतः परित्याज्याः प्रपन्नानां महात्मनाम् ॥ अनुकूलाननादृत्य प्रतिकूलान् धनेच्छया ॥ २६ ॥ कृता स्याद्यदि या पूजा सा हरेः शोकदा भवेत् ॥ सार्वभौमस्य नृपतेस्तत्पुत्रं राजसंनिधौ ॥ २७ ॥ यथाकृतेवमाने च व्याकुलं नृपमानसम् ॥ तथा देवस्य विष्णोश्च व्याकुलं हृदयं भवेत् ॥ २८ ॥ अर्थकामेच्छया वापि पूजयेन्न विरोधिनः ॥ विरोधिनां हि तद्द्रव्यं विरोधायैव केवलम् ॥ २९ ॥ सर्वाभीष्टप्रदे देवे हरौ तिष्ठति सर्वदा ॥ तस्मिन्विष्णौ ऋते याच्ञा कृता यदि विरोधिषु ॥ ३० ॥ सार्वभौमस्य नृपतेर्महिष्या क्षत्रबंधुषु ॥ यदि याच्ञा कृता तेन नृपस्यावद्यता यथा ॥ ३१ ॥ तथा भगवतः सा स्यादवद्या महती ध्रुवम् ॥ न मानयेत्तु भयानर्थकामेच्छयापि च ॥ ३२ ॥ तेभ्यः कृतावमानेन पूर्वोपात्ता दृढा मतिः ॥ न च कार्य्यकरी तस्य नष्टा भवति सा ध्रुवम् ॥ ३३ ॥ सुवर्णलोहयोर्लोके यथा रत्नवराकयोः ॥ अनुकूलानुभययोस्तथैव महदंतरम् ॥ ३४ ॥ अतोनिशं देववरैर्महात्मभिः श्रीवैष्णवैर्मुक्तमदैर्विचक्षणैः ॥ निवृत्ततर्षैर्निवसध्वमादरात्तेभ्यश्च वः सर्वफलानि संति ॥ ३५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे श्रीवैष्णवलक्षणानुवर्णनं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

## अष्टषष्टितमोऽध्यायः ।

यतींद्रः पूर्णकृपया शास्त्रसारतमांस्तदा ॥ शिष्येभ्यश्चोपदिश्यार्थान् सर्वेभ्यो मुदमाप सः ॥ १ ॥ एवं बहुविधैर्वाक्यैः शास्त्रसारतमैः

शुभैः ॥ अनुशास्य तदा शिष्यान् सर्वाँल्लक्ष्मणदेशिकः ॥ २ ॥
तेषां हितेच्छया भट्टं राजानं कर्तुमुद्यतः ॥ आनीय रंगरा-
जस्य सन्निधिं तं महौजसम् ॥ ३ ॥ कृतसम्यक्प्रणामाय
रंगपुत्राय धीमते ॥ शठकोपं च तीर्थं च दापयित्वार्चकैः
पुरा ॥ ४ ॥ स्वीकृत्य तत्स्वयं पश्चाद्वैष्णवानिदमब्रवीत् ॥
अयं रंगसुतः श्रीमान् विष्णुदर्शनवर्द्धकः ॥ ५ ॥ भवतां चैव सर्वेषां
रक्षिता नात्र संशयः ॥ अस्य प्रशासने यूयं वर्त्तध्वं भक्तितत्पराः
॥ ६ ॥ इत्येवमुक्त्वा रंगेशसान्निधौ यतिपुंगवः ॥ रंगेशदास्यसाम्राज्ये
राजानमभ्यषेचयत् ॥ ७ ॥ तं पराशरभट्टार्य्यं लोकानुग्रहतत्परः ॥
रंगेशः संप्रहृष्टोभूत्सुतं दृष्ट्वा तमीश्वरः ॥ रामानुजकृपापात्रं सर्वे
मुमुदिरे जनाः ॥ ८ ॥ ततो महात्मा यतिसार्वभौमः संप्रेषितो रंग-
धुरंधरेण ॥ आलंब्य हस्तं रघुनाथसूनोस्तं वाचमूचे महतां समाजे
॥ ९ ॥ दिशि प्रतीच्यां विबुधोस्ति कश्चिद्वेदांतिनामा रघुनाथसूनुः ॥
जित्वा तमाशु स्वमतप्रविष्टं विधेहि वेदांतिनमार्यवर्यम् ॥ १० ॥ ततो
यतींद्रस्तेनाशु सह सर्वैर्मठं गतः ॥ सर्वाञ्छिष्यान् समाहूय वाक्यं
चेदमुवाच तान् ॥ ११ ॥ अविवेकेन यूयं मे वियोगे भृशदुःखिताः॥
देहत्यागं मा कुरुध्वं मयाचार्येण वः शपे ॥ १२ ॥ तत्प्रत्ययार्थं तैः
सर्वैः स्पृष्टपादः पुनःपुनः ॥ वैकुंठयात्रादिवसे प्रातस्तान्कृतभोजनान्
॥१३॥ विधाय सहसा शिष्यान्कृतशिष्यो महायशाः ॥ तदा सर्वा-
न् समानीय रंगेशपरिचारकान् ॥१४॥ मया कृतापराधान्हि क्षमध्व-
मिति चाब्रवीत् ॥ बद्धांजलिपुटाः सर्वे तमूचुस्ते यतीश्वरम् ॥ १५ ॥
किं विद्यतेपराधो वा लोकसंरक्षकस्य ते ॥ भवता सर्वसुहृदा पुत्रव-
त्परिपालिताः ॥ १६ ॥ इतः परं यतिश्रेष्ठ वर्तिष्यामः कथं वयम् ॥
इति ते साश्रुनयनाः सर्वे संदुःखितास्तदा ॥ १७ ॥ तानाश्वास्य
यतिश्रेष्ठो व्याजहार वचः शुभम् ॥ कुर्वतो रंगराजस्य सदा कैंकर्य्य-

मादरात् ॥ १८ ॥ वैष्णवेषु कृतस्नेहा वसतात्र यथासुखम् ॥ एवं
यथोचितं तेषां तत्रत्यानां हितं तदा ॥ १९ ॥ सर्वेषां कृपया चोक्त्वा
कृतकृत्यो यतीश्वरः ॥ गोविंदांके विधायाथ शिरः शेते महामनाः ॥
॥ २० ॥ आंध्रपूर्णस्य चोत्संगे संप्रसार्यांघ्रिपंकजे ॥ शिष्येषु तेषु
सर्वेषु यतींद्रस्य जगद्गुरोः ॥ २१ ॥ भृगुवल्लीं ब्रह्मवल्लीं पठत्स्वपि
महात्मसु ॥ परांकुशप्रबन्धादीन्प्रबन्धमखिलं च तम् ॥
॥ २२ ॥ वादकैर्वाद्यमानेषु वाद्येषु निखिलेषु च ॥ संस्था-
प्य पुरतः पश्यन्महापूर्णस्य पादुके ॥ २३ ॥ ध्यायन्
हृदि सदा धीमान् यामुनार्यांघ्रिपंकजम् ॥ शिरःकपालं निर्भिद्य
ब्रह्मरंध्रेण योगिराट् ॥ २४ ॥ रामानुजो जगामाशु तद्विष्णोः परमं
पदम् ॥ माघशुद्धदशम्यां तु मध्याह्ने मंदवासरे ॥ २५ ॥ भोगिराजस्य
योगीशो भावं दिव्यमवाप सः ॥ धर्मो नष्टस्तदा वाक्यमाकाशे सम-
जायत ॥ २६ ॥ तदचिंत्यं महद्दुःखं ते संप्राप्याखिला जनाः ॥ मुहूर्त-
मभवन्सर्वे निश्चेष्टाश्चित्रिता यथा ॥ २७ ॥ धर्मो नष्टोभवद्भूम्यामिति
सर्वे प्रचुक्रुशुः ॥ दाशरथ्यांध्रपूर्णार्यौ गोविंदकुरुकेश्वरौ ॥ २८ ॥ एते
प्रधानास्तत्रासंश्चत्वारः सर्वकर्मणि ॥ तस्य पुत्राभिमानत्वात्कुरुकेशो
जगद्गुरोः ॥ २९ ॥ यानि कृत्यानि कार्याणि संचकार यथाविधि ॥
सम्यक् चरमकैंकर्य्यं यतींद्रस्य जगद्गुरोः ॥ ३० ॥ यथैव यामुनार्यस्य
तथैवाभूत्सुविस्तरम् ॥ गोविंदार्यो यतिश्रेष्ठो लक्ष्मणार्यपदाश्रयः
॥ ३१ ॥ यतीन्द्रानंतरं धीमान् रंगिपुत्रेण धीमता ॥ श्रीपराशरभट्टेन
कंचित्कालं महात्मना ॥ ३२ ॥ रामानुजार्यसिद्धांतं वर्त्तयामास
भूतले ॥ ततोसहिष्णुर्विश्लेषं यतींद्रस्य जगद्गुरोः ॥ ३३ ॥ गोविंदार्यो
जगामाशु तद्विष्णोः परमं पदम् ॥ तदा चरमकैंकर्य्यं स्वगुरोर्भट्टदे-
शिकः ॥ ३४ ॥ यथाविधि यथाशास्त्रं चकार स महायशाः ॥ ततो
रंगिसुतः श्रीमान् भट्टार्य्यः शास्त्रवित्तमः ॥ ३५ ॥ रामानुजार्यसि-

द्धांतं वर्द्धयन्सकलावनौ ॥ अवसद्रंगनगरे विद्वद्भिर्वैष्णवोत्तमैः ॥३६॥ श्रीरंगेश्वरसन्निधौ यतिपतेः सिद्धांतमव्याहतं शिष्येभ्यो ह्यतुलं महार्थनिचयं तेभ्योनिशं बोधयन् ॥ विख्यातामलकीर्त्तिराशिरतुलो रंगाधिपांगोद्भवः संरेजे यतिराजवद्दृढतरं चासेतुशीताचलम् ॥ ३७ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे रामानुजांतर्द्धानं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

## एकोनसप्ततितमोऽध्यायः ।

सेवि

आश्रिताखिलमंदारो भाष्यकारो महायशाः ॥ अस्यां भूम्यां शेषितव्यानर्थान्साधनरूपकान् ॥ १ ॥ तेषां विरोधिभागांश्च लोकोज्जीवनहेतुना ॥ सम्यङ्‌ निरूप्य सुस्पष्टं तदर्थंप्रतिपादकान् ॥ २ ॥ अधिकारानुगुण्येन त्रीन्ग्रंथान्व्याजहार सः ॥ वेदांतसारवेदांतदीपवेदार्थसंग्रहान् ॥ ३ ॥ तेषां विवरणं चक्रे श्रीभाष्यं यतिपुंगवः ॥ श्रीशांघ्रिभक्तिस्तत्रोक्ता तद्दुर्ल्लभतरं त्विति ॥ ४ ॥ ततो गद्यत्रयं चक्रे प्रपत्तिप्रतिपादकम् ॥ तेषामनधिकाराणां प्रपत्त्या स्वांघ्रिपंकजम् ॥ ५ ॥ हितं सम्यक्प्रदर्श्याथ कृतकृत्यो यतीश्वरः ॥ लीलाविभूतिं संत्यज्य नित्यां संप्राप्य सत्वरम् ॥ ६ ॥ अथ कूरेशजः श्रीमान् श्रीरंगेशपुरोहितः ॥ रंगेशकृपया तस्य गोविंदार्य्यस्य धीमतः ॥ ७ ॥ वेदांतद्वयमभ्यस्य सन्निधौ निखिलं जवात् ॥ दर्शनस्थितिनिर्वाहं स धीरो विदधे तथा ॥ ८ ॥ दिव्यदेशचरः कश्चिद्ब्राह्मणो विबुधप्रियः ॥ दिव्यदेशांश्चरित्वाथ यादवाचलमाविशत् ॥ ९ ॥ तत्र संपत्सुतं नत्वा तस्माच्छ्रीरंगमभ्यगात् ॥ श्रीरंगे प्राप्य रंगेशं भक्त्या नत्वा श्रियः पतिम् ॥ १० ॥ स तत्र भोजनं चक्रे कूरेशात्मजसद्मनि ॥ तं भुक्तवंतं विश्रांतं दृष्ट्वा ब्राह्मणपुंगवम् ॥ ११ ॥ श्रीपराशरभट्टार्यः प्रोवाचेदं वचस्तदा ॥ द्विजाद्य किं निमित्तं त्वं कस्माद्देशात्समागतः ॥ १२ ॥ केके देशास्त्वया दृष्टाः तेषुतेषु विपश्चितः ॥

येये निखिलतत्त्वार्थपारगा विश्रुता भुवि ॥ १३ ॥ तांस्तान्मे ब्रूहि याथार्थ्यं मह्यं शुश्रूषवे द्विज ॥ एवमुक्तः स गुरुणा ब्राह्मणः शास्त्रवेदिना ॥ १४ ॥ प्रोवाच वचनं धीमान्भट्टार्य्यं भगवत्प्रियम् ॥ देशाः सर्वे मया दृष्टा विद्वांसस्तत्रतत्र च ॥ १५ ॥ विद्वान्पश्चिमदिग्भागे कश्चिच्छ्रीरंगपट्टणे ॥ वेदांतिनामा विख्यातः सर्वज्ञो वर्त्तते महान् ॥ ॥ १६ ॥ निर्जित्य षण्मताञ्छास्त्रवादेन विबुधाग्रणीः ॥ जयत्यव्याहतैश्वर्यो लोकेप्रतिमवैभवः ॥ १७ ॥ तं दृष्ट्वा तेन संभाष्य मायावादिविपश्चिता ॥ भवंतं द्रष्टुकामोहं तस्माद्देशात्समागतः ॥ १८ ॥ पुनस्तत्रैव गच्छामि संपत्पुत्रदिदृक्षया ॥ इत्युक्त्वा विबुधश्रेष्ठं भट्टार्य्यं स द्विजोत्तमः ॥ १९ ॥ पुनः पश्चिमदिग्भागे गत्वा श्रीरंगपट्टणम् ॥ वेदांतिनं समाभाष्य भट्टार्य्यस्य विपश्चितः ॥ २० ॥ वृत्तांतं सन्निवेद्याशु श्रीरंगे पुनरागतः॥श्रीवत्सचिह्नतनयं नत्वेदं वाक्यमब्रवीत् ॥२१॥ श्रीपराशरभट्टार्य श्रीरंगात्पश्चिमां दिशम् ॥ संप्रेषितस्त्वया पूर्वं गतवाञ्रंगपट्टणम् ॥ २२ ॥ वेदांतिनमिदं वाक्यं मयोक्तं गतसाध्वसम् ॥ वेदांतिन् रंगनगरे भट्टार्य्यं इति विश्रुतः ॥ २३ ॥ श्रीवत्साचिह्नतनयः श्रीरंगेशपुरोहितः ॥ सर्वशास्त्रार्थतत्त्वज्ञो वर्तते वैष्णवाग्रणीः॥२४॥ कश्चिद्विपश्चितां श्रेष्ठो वादिमत्तेभकेशरी ॥ तत्प्रतीकाशविबुधो न कश्चिद्भुवि वर्तते ॥२५॥ तस्य भीतिं समुत्पाद्य वाक्येनान्येन मायिनः॥ तद्वक्तुं भवतोद्याशु त्वत्समीपं गतोस्म्यहम् ॥ २६ ॥ प्रतिगृह्याशु तद्वाक्यं द्विजस्य विबुधाग्रणीः ॥ इयेष जेतुं भट्टार्य्यस्तदा वेदांतिनं जवात् ॥ २७ ॥ हरिप्रभावानुभवरूपो दिव्यप्रबंधकः ॥ परकालेन यो नीतो दिव्यद्राविडभाषया ॥ २८ ॥ वेदांती स मया विद्वाञ् जेतव्यस्तेन सांप्रतम् ॥ इत्यालोच्य स भट्टार्य्यो रंगनायकसन्निधौ॥२९॥ संप्राप्य तस्मै तत्सर्वं चक्रे विज्ञापनं तदा ॥ विद्वन्पश्चिमदिग्भागे कश्चिदस्त्यधुना हरे ॥३०॥ जित्वा तं स्ववशीकृत्य भूयोहं समुपागतः ॥

अंगीकृत्य ततस्तस्य तद्विज्ञापनमादरात् ॥ ३१ ॥ रंगराजः प्रहृष्टात्मा भट्टार्याय विपश्चिते ॥ रम्यामांदोलिकां छत्रं पताकाध्वजचामरान् ॥ ३२ ॥ शंखं भेर्यादिवाद्यानि वेत्रहस्तधरान्भटान् ॥ दत्त्वा प्रस्थापयामास कृपया जगदीश्वरः ॥ ३३ ॥ संप्रेषितस्तदा तेन भट्टार्यो रंगिणो जवात् ॥ महता वैभवेनैव प्रतस्थे पश्चिमां दिशम् ॥ ३४ ॥ तं जेतुकामोऽखिलभक्तसंघैर्वेदांतिनं मायिमताग्रगण्यम् ॥ भट्टारको लक्ष्मणदेशिकेंद्राद्दिव्याज्ञया धीरतया प्रतस्थे ॥ ३५ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यविजये वेदांतिवृत्तिकथनं नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

## सप्ततितमोऽध्यायः ।

श्रीरंगाच्छिष्यसंघेन भट्टार्य्यो रंगिशासनात् ॥ वेदांतिग्रहणार्थाय प्रतस्थे यादवाचलम् ॥ १ ॥ वेदांतिनगरोपांते यदा संप्राप सत्वरम् ॥ तदा जवाद्द्विजः कश्चिन्निर्गत्य नगराद्बहिः ॥ २ ॥ ज्ञात्वा भट्टार्य्यवृत्तांतं भट्टार्य्यमिदमब्रवीत् ॥ न स दृश्यस्त्वयानेन वैभवेन महोच्छ्रय ॥ ३ ॥ सत्राशिभिर्द्विजैः सार्द्धं गतश्चेत्तद्गृहं प्रति ॥ सह संभाषितं तेन समयो नान्यथा तव ॥ ४ ॥ तथेति प्रतिगृह्याशु भट्टार्य्यस्तद्वचः शुभम् ॥ गतः सत्राशिवेषेण तैर्द्विजैस्तद्गृहं प्रति ॥ ५ ॥ वेदांतिनं समालोक्य वादभिक्षामयाचत ॥ वेदांतिन् भवता सार्द्धं वादभिक्षार्थमागतः ॥ ६ ॥ श्रीमत्त्वाद्भवता तस्य वेषेणानेन सांप्रतम् ॥ निशम्य तद्वचस्तस्य धीमान्मायिमताग्रणीः ॥ ७ ॥ भट्टार्योयमिति ज्ञात्वा नान्यो भवितुमर्हति ॥ तं प्राह वचनं धीमान्भट्टार्यं भगवत्प्रियम् ॥ ८ ॥ भट्टार्यो वा भवानार्य नान्यः स्थातुं मदंतिके ॥ शक्तः कुत्रापि लोकेस्मिन्विबुधस्त्वदृते ततः ॥ ९ ॥ भट्टार्यस्य प्रभावस्तु विदितो ब्राह्मणेन मे ॥ तस्य तद्वाक्यमाकर्ण्य भट्टार्य्य-

स्तमथाब्रवीत् ॥ १० ॥ अहमेव हि भट्टार्य्यः कूरनाथतनूद्भवः ॥
तेन वाक्येन संतुष्टः स विद्वान्भट्टदेशिकम् ॥ ११ ॥ व्याजहार शुभं
वाक्यं श्रीरंगेशपुरोहितम् ॥ तव संदर्शनात्स्वामिन्वैष्णवो विदितो मया
॥ १२ ॥ व्याचष्टे रूपमेवास्य महिमानं न संशयः ॥ इत्युक्त्वा सहसो-
त्थाय तं प्रणम्य कृतांजलिः ॥ १३ ॥ पूजार्हं पूजयित्वाशु कूरेशात्म-
जमब्रवीत् ॥ भवान् घनतरप्राज्ञः तत्त्वज्ञस्तत्त्वतो भुवि॥१४॥ तत्त्वां-
शं सम्यगार्याद्य ब्रूहि नः करुणाकर ॥ इत्युक्तस्तेन भट्टार्यः संतुष्टः
कृपया हरेः ॥ १५ ॥ श्रीभाष्यार्थमुपन्यस्य सम्यग्वेदांतिने मुदा ॥
तत्त्वार्थं सम्यगेवात्र प्रोवाच कृपया गुरुः ॥१६॥ भट्टाचार्योक्तवाक्येन
तेन विच्छिन्नसंशयः ॥ अगमत्तस्य वेदांती शिष्यत्वं बुधसन्निधौ
॥ १७ ॥ विलोक्य विस्मयं गत्वा भट्टार्य्यस्तमथाब्रवीत् ॥ वेदांति-
न् रंगराजस्य करुणा विद्यते त्वयि ॥ १८ ॥ कदाचिदपि ते नास्ति
न्यूनतेह परत्र च ॥ रंगराजदयापात्रं भवान्भवति सांप्रतम् ॥ १९ ॥
श्रीवैष्णवोत्तमो भूत्वा लोके ख्यातिं गमिष्यति ॥ निवत्स्यति चिरं व-
त्स विशिष्टाद्वैतपालकः ॥ २० ॥ ततो वेदांतिनः सम्यक् कृत्वा संस्का-
रपंचकम् ॥ चिदचिद्विग्रहं ब्रह्म जगतः कारणं परम् ॥ २१ ॥ सर्ववेदां-
तशास्त्रेषु तदेव प्रतिपादितम् ॥ स एव भगवान्विष्णुर्हरिर्नारायणोऽव्ययः
॥ २२ ॥ लक्ष्मीशः पुंडरीकाक्षो ब्रह्मरुद्रादिदैवतः ॥ अनीश्वरो जगत्क-
र्त्ता चतुर्वर्गफलप्रदः ॥ २३ ॥ यत्तद्भगवतो दास्यमात्मोज्जीवनका
रणम् ॥ इत्येवमुपदिश्याथ तस्मै वेदांतिने तदा ॥ २४ ॥ तस्य
माधवदासेति नाम चक्रे दयानिधिः ॥ भट्टार्य्यस्तेन शिष्येण गुरुः
सम्यक्कृतार्हणः ॥ २५ ॥ संतुष्टः प्रेषितो रंगं पुनरायान्महायशाः ॥
स रंगं प्राप्य रंगेशचरणांबुरुहद्वयम् ॥ २६ ॥ सम्यक् प्रणम्य
भट्टार्य्यं यत्तच्छ्रीरंगशायिने ॥ हरये सर्ववृत्तांतं तस्मै विज्ञाप्य सादरम्
॥ २७ ॥ संप्रहृष्टः परिजनैः प्रविवेश स्वमालयम् ॥ २८ ॥ निर्जित्य

रंगेशकृपाबलेन वेदांतिनं मायिमताग्रगण्यम् ॥ स्वशिष्यभूतं सहसा विधाय भूयोभ्यगाद्रंगमथाध्युवास ॥ २९ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यविजयो नाम सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ।

तथा माधवदासाख्यो हरिभक्तिपरायणः॥संजातज्ञानवैराग्यो मनस्येवमचिंतयत् ॥ १ ॥ सोहं मायिमते चास्मिंस्तादृग्भूतजनैर्वृतः ॥ कथं वत्स्यामि भट्टार्य्यचरणांबुरुहाश्रयः ॥ २ ॥ इति मत्वा धनं सव त्रिभागं संविभज्य तत् ॥ द्वौ भागौ स्वजने दत्त्वा त्यक्तसंसारबन्धनः ॥ ३ ॥ भागावशेषमादाय वेदांती सुमहद्धनम् ॥ सहसा रंगमासाद्य निवेद्य गुरवे धनम् ॥ ४ ॥ तुर्याश्रमं समासाद्य गुरुणानुमतस्तदा ॥ प्रणम्य बहुधा भक्त्या पार्श्वे तस्थौ कृतांजलिः ॥ ५ ॥ तमंतेवासिनं दृष्ट्वा भट्टार्य्यश्छिन्नसंशयः ॥ करुणापूर्णहृदयः श्रीरंगेश्वरशासनात् ॥ ६ ॥ अस्मद्यतिरिति प्रोच्य तं तदा परिषस्वजे ॥ तत्तस्माद्यतिनामाभूत्तेन वेदांतिनो महत् ॥७॥ विद्वान्माधवदासाख्यो भट्टार्य्यं गुरुपुंगवम् ॥ भूयः प्रणम्य बहुधा चक्रे विज्ञापनं तदा ॥ ८ ॥ शरीरमर्थं प्राणं च सद्गुरुभ्यो निवेदयेत् ॥ इत्युक्तेन प्रकारेण भट्टार्य्य गुरुसत्तम ॥ ९ ॥ मम सर्वमिदं स्वामिंस्त्वदधीनं कृतं मया ॥ रक्ष मां कृपया दीनं त्वत्पादांबुजषट्पदम् ॥ १० ॥ तेन वाक्येन संतुष्टः स भट्टः शिष्यवत्सलः ॥ तां मह्यं यतये सर्वां द्राविडाम्नायसंपदम् ॥११ ॥ रहस्यसंप्रदायार्थाञ्छास्त्रमार्गाविरोधतः ॥ चरमार्थं चोपदिश्य चक्रे श्रीवैष्णवोत्तमम्॥१२॥ लब्धसर्वार्थतत्त्वज्ञःश्रीमन्माधवदासकः॥ श्रीवैष्णववरो रेजे शरच्चंद्र इवामलः॥१३॥स भक्तदेशिको धीमान्सर्वशास्त्रविशारदः॥संसारे त्यक्तसाराणां मुमुक्षूणां महात्मनाम्॥१४॥कालक्षेपार्थसिध्यर्थं चकार ग्रंथपंचकम्॥सहस्रनामभाष्यं च विष्णुपूजाक्रमं महान् ॥ १५ ॥ अष्टश्लोकीं तथा श्रीशस्तवं चानुत्तमं महान् ॥ महांतं

रत्नकोशाख्यं स्तवं श्रीगुणपूर्वकम् ॥ १६ ॥ ततो भट्टारको धीमा-न्कृतकृत्यो महायशाः ॥ वेदांतिनं समालोक्य गुरुभक्तिपरा-यणम् ॥ १७ ॥ यातुकामोथ वैकुंठं रहस्येवमभाषत ॥ वेदांतिन् शृणु मद्वाक्यं समाहितमनाः परम् ॥ १८ ॥ सर्वशास्त्राण्यधीतानि वेदांतान्यखिलानि च ॥ मया दत्ता बहुद्रव्यं गुरवे गुरुदक्षिणा॥१९॥ श्रीवत्सचिह्नतनयं श्रीरंगेशपुरोहितम् ॥ सर्वशास्त्रार्थतत्त्वज्ञं भट्टार्य्यं मां समाश्रितः ॥ २० ॥ इति मत्वार्यं गर्वेण मा वर्तस्व कदाचन ॥ तदेव रक्षकं मत्वा मन्नाथपदपंकजम् ॥ २१ ॥ वर्तस्व सततं विद्वन्स-त्यंसत्यं मयोदितम् ॥ प्रीत्यर्थं लोकरक्षार्थं शठजिद्यतिराजयोः ॥ २२ ॥ सहस्रगीतेर्व्याख्यानं कुरु द्राविडभाषया ॥ यतींद्रशासन-त्पूर्वं कुरुकेशो महायशाः ॥ २३ ॥ सहस्रगीतेर्व्याख्यानं लोकरक्षा-र्थमादरात् ॥ षड्भिः सहस्रैर्वेदांतिन् ग्रंथैराद्यमनुत्तमम् ॥ २४ ॥ विधायास्मत्कुलगुरुं भाष्यकारमतोषयत् ॥ त्वमद्य नवसाहस्रग्रंथसं-ख्यविराजितम् ॥ २५ ॥ सहस्रगीतेर्व्याख्यानं विधेहि मम शास-नात् ॥ तद्राविडप्रवचनं कुरु लोकेषु संततम् ॥ २६ ॥ अस्मद्रामा-नुजाचार्य्यमतसिद्धांतवर्द्धकः ॥ निवत्स्यति भवान् रंगे बहुकालं न संशयः ॥ २७ ॥ निशम्य तद्वाक्यमतिप्रहृष्टः सत्यं प्रियं मोक्षपदैक-हेतुम् ॥ ओमित्यलं माधवदासनामा ननाम भट्टारकमार्य्यवर्यम् ॥ ॥ २८ ॥ भट्टारको विष्णुमताधिराज्ये वेदांतिनं तं प्रणिधाय धीरम् ॥ आचार्य्यसेवैकरतो महात्मा चकार वैकुंठगतां स्वबुद्धिम् ॥ २९ ॥ इति प्रपन्नामृते वेदांतिने निखिलार्थोपदेशो नामैकसप्ततितमोऽ-ध्यायः ॥ ७१ ॥

---

## द्विसप्ततितमोऽध्यायः ।

श्रीपराशरभट्टार्य्याद्वेदांती गुरुपुंगवात् ॥ विदित्वाखिलतत्त्वार्थं प्रणिपत्येदमब्रवीत् ॥ १ ॥ भवतः कृपया स्वामिन् मया तत्त्वार्थसं-

पदः ॥ संप्राप्तास्तेन चाद्याहं कृतार्थोऽस्मि न संशयः ॥ २ ॥ इदानीं श्रोतुमिच्छामि प्रभावं दिव्यसूरिणाम् ॥ एषां प्रभावश्रवणान्मानसं निश्चलं भवेत् ॥ ३ ॥ देशान्समस्तान्संत्यज्य शठकोपादयश्च ते ॥ किमर्थं द्राविडे देशे ह्यवतीर्णा महात्मकाः ॥ ४ ॥ देवभाषां परित्यज्य कथं द्राविडभाषया ॥ चक्रुः प्रबंधान्सकलान्किमर्थं दिव्यसूरयः ॥ ५ ॥ संस्कृतादपि लोकेस्मिन्द्राविडस्य गुरूत्तम ॥ उद्देश्यता कथमभूत्कारणं ब्रूहि मे गुरो ॥ ६ ॥ अधिकारोस्ति मे स्वामिन्नेतेषां श्रवणे यदि ॥ शिष्याय ब्रूहि विशदं कृपा मयि तवास्ति चेत् ॥ ७ ॥ अंगीकृत्य वचस्तस्य कृपया भट्टदेशिकः ॥ यद्दिव्यसूरिचरितं प्रवक्तुमुपचक्रमे॥८॥ वेदांतिन् शृणु वक्ष्यामि चरितं दिव्ययोगिनाम् ॥ एषां श्रवणमात्रेण महापातकनाशनम् ॥ ९ ॥ पुरा कैलासशिखरे पार्वत्याः शंकरस्य च ॥ सर्वलोकोत्सवः श्रीमान्विवाहः सुमहानभूत् ॥ १० ॥ त्रिलोकवासिनः सर्वे ब्रह्माद्याश्चाखिलाः सुराः ॥ तद्विवाहोत्सवं द्रष्टुं कैलासं युगपद्गताः ॥११॥ त्रिलोकवासिभिः सर्वैर्मुनिभिर्देवतागणैः ॥ कैलासपर्वतश्चान्यैर्निबिडं समपूर्यत ॥ १२ ॥ नौरिवावास्थिता भूमिर्याधस्तात्सुमहाजले ॥ सा भूमिरुत्पपातोर्ध्वं भाराभावाच्च दक्षिणे ॥ ॥ १३ ॥ उत्तरे सुमहाभारात्साधस्तात्पतनोद्यता ॥ तां दृष्ट्वा निखिला देवा भयार्ता मुनयस्तदा ॥ १४ ॥ संभ्रांतहृदयास्तत्र सर्वे मूढा इव स्थिताः ॥ विश्वकर्माब्रवीद्वाक्यं देवानिंद्रपुरोगमान् ॥ १५ ॥ भयं त्यजत भद्रं वो भो देवा मुनयः सुराः ॥ उपायं संप्रवक्ष्यामि सांप्रतं शृणुतादरात् ॥ १६ ॥ अगस्त्यो भगवानत्र वर्तते किल योगिराट् ॥ त्रयो लोकाश्चैकभाग एकभागे स एव हि ॥१७॥ अद्य दक्षिणदिग्भागे सोगस्त्यो वर्तते यदि॥ पूर्ववत्पृथिवी तत्र समानस्था न संशयः॥१८॥ विश्वकर्मवचः श्रुत्वा संतुष्टाः सर्वदेवताः॥ अगस्त्यं प्रार्थयामासुर्लोकरक्षार्थमादरात् ॥ १९ ॥ अगस्त्यः कुपितो वीक्ष्य विश्वकर्माणम-

ब्रवीत् ॥ चिरात्संद्रष्टुकामोहमुमाकल्याणमुत्तमम् ॥ २० ॥ तस्य विघ्नस्त्वया मूढ पापिनावसरे कृतः ॥ निकृष्टस्तेन दोषेण भविष्यति भवान् ध्रुवम् ॥ २१ ॥ युष्मदीयाश्च ये लोके युष्मत्कर्मरता नराः ॥ ते निकृष्टा भविष्यंति मच्छापान्नात्र संशयः ॥ २२ ॥ ते चैवाधर्मकर्माणो भविष्यंत्यल्पचेतनाः ॥ रोषाभिवेशताम्राक्षः प्रलयाग्निरिव ज्वलन् ॥ २३ ॥ शशाप तं बहुविधं त्वष्टारं कुंभसंभवः ॥ तच्छुत्वा वचनं तस्य रुष्टस्त्वष्टा शशाप तम् ॥ २४ ॥ पश्यतां सर्वदेवानामगस्त्यममितौजसम् ॥ अद्यप्रभृति लोकेषु द्राविडी या त्वया कृता ॥ २५ ॥ पैशाचतुल्या सा भाषा भविष्याति न संशयः ॥ युष्मत्कृतं व्याकरणं भविष्यत्यतिगर्हितम् ॥ २६ ॥ ब्रह्मक्षत्रविशां लोके म्लेच्छभाषादिवद्ध्रुवम् ॥ शूद्रजातिव्याकरणं भविष्यत्यतिगर्हितम् ॥ २७ ॥ सत्यं द्राविडदेशस्तु चोरदेशो भविष्यति ॥ अतः स देशो मच्छापादब्रह्मण्यकृतालयः ॥ २८ ॥ युष्मदीयाखिले लोके द्राविडा मंदबुद्धयः ॥ मायाविनश्च पिशुनाः भविष्यंति कलिप्रियाः ॥ २९ ॥ एवं बहुविधं त्वष्टा तमगस्त्यं शशाप ह ॥ तेनासीत्कलहस्तत्र तयोः शैले महत्तरः ॥ ३० ॥ तं निवार्याखिला देवास्तयोः कलहमाशु ते ॥ अगस्त्यं प्रार्थयामासुः याम्याशागमनं प्रति ॥ ३१ ॥ अलंघनीयं देवानामंगीकृत्य वचः शुभम् ॥ अगस्त्यो न्यवसत्तत्र दिशि व्याकुलमानसः ॥ ३२ ॥ भूमिः स्थिता यथापूर्वं तत्कल्याणमवर्तत ॥ स खिन्नहृदयस्तत्र तेन शापेन दुष्करम् ॥ ३३ ॥ अगस्त्यो विष्णुमुद्दिश्य तताप परमं तपः ॥ वर्षाणां दशसाहस्रं निराहारो महामनाः ॥ ३४ ॥ संतुष्टस्तेन तपसा भगवान्विष्णुरव्ययः ॥ प्रसन्नस्तमृषिं प्राह वरदो भक्तवत्सलः ॥ ३५ ॥ वरदोस्मि वरं दातुं तवाहमधुनागतः ॥ यथेष्टं वृणु निःशंकं कलशोद्भव सांप्रतम् ॥ ३६ ॥ श्रीहरेर्वाक्यमाकर्ण्य कुंभयोनिः प्रणम्य तम् ॥ बद्धांजलिपुटो भूत्वा स्तोत्रयामास केशवम् ॥ ३७ ॥ नमोनमः कारणकारणाय निष्कारणा-

याद्भुतकारणाय ॥ नमोनमस्तेखिलसत्त्वधामन् नमोनमस्ते जलजातनेत्र ॥ ३८ ॥ वेदांतवेद्याय महाविपश्चिते जगज्जनित्रे निखिलांतरात्मने ॥ अणोरणीयश्श्रुतिवेदितात्मने गुहाशयायाखिललोकसाक्षिणे ॥ ३९ ॥ विज्ञानतत्त्वविदुषे विविधागमांतवेद्याय वेदपुरुषाय विधीशपाय ॥ विद्याधरप्रियधराय विहंगराजारूढाय गूढचरणाय नमः परस्मै ॥ ४० ॥ नंदात्मजाद्यपुरुषाखिललोकनाथ नालीकसद्म जनकार्यमनोब्जभृङ्ग ॥ नव्यांबुजाक्ष नवनीतहराप्रमेय नारायणाखिलगुरो भगवन्नमस्ते ॥ ४१ ॥ श्रीकेशवाद्य पुरुषोत्तम पूर्णकाम मत्स्यावतार निगमोद्धर भो मुरारे ॥ लोकेशसन्नुत हयास्य जगन्निवास नारायणाखिलगुरो भगवन्नमस्ते४२नारायणाच्युत मुकुंद सुरेश विष्णो श्रीमंदराद्रिवहनाद्भुतकूर्मरूप ॥ श्रीसिंधुजारमण देव जगद्धितार्थे नारा० ॥ ॥ ४३ ॥ श्रीमाधवेशनुत मन्मथतात विष्णो वाराहरूप वसुधोद्धरणाप्रमेय ॥ हैरण्यनेत्रदमनोज्ज्वल यज्ञमूर्त्ते नारा० ॥ ४४ ॥ गोविंद चिन्मय मनोमय गोपरूप प्रह्लादरक्षक महाद्भुतनारसिंह ॥ सम्यङ्नखप्रदलितासुरराजवक्षो नारा० ॥ ४५ ॥ विष्णोप्रमेय महिमार्णव देवदेव विख्यातसुंदरवयो बलिबंधदक्ष ॥ इंद्रानुजार्यजनवंदित विश्वरूप नारा० ॥ ४६ ॥ श्रीमन्मुकुंद मधुसूदन मानवेंद्रवंशाटविदहन भार्गव राम विष्णो ॥ शक्रोग्रगर्वहरणाद्भुतवीर्यशौर्य नारा० ॥ ॥ ४७ ॥ स्वामिंस्त्रिविक्रम रघूत्तम सेतुनाथ भो रावणांतक हरेऽप्रतिमप्रभाव ॥ सीतापते निखिललोकविमोहितांग नारा० ॥ ४८ ॥ श्रीवामनाद्भुतचरित्र फणीश विष्णो श्रीरेवतीरमण भो बलभद्र राम ॥ श्रीरोहिणीतनय पालितसर्वलोक नारा० ॥४९॥ हे श्रीधराद्भुतचरित्र यदूत्तमोग्र कंसांतकार्यजनतामरकल्पभूज ॥ श्रीगोपिकारमण फाल्गुनसूत कृष्ण नाराय०॥५०॥श्रीपद्मनाभ परमात्मक पालितार्य कल्किन्प्रभो कलिविभंजन वाजिवक्र ॥ म्लेच्छांतकादियुगधर्मरतैकतान

नारा० ॥ ५१ ॥ इत्येवं बहुशः स्तुत्वा कुंभयोनिः श्रियः पतिम् ॥ प्रणम्योत्थाय संतुष्टः कृतांजलिरुपस्थितः ॥ ५२ ॥ अगस्त्येन कृतं स्तोत्रं पठत्यनुदिनं नरः ॥ स सर्वपापनिर्मुक्तः ब्रह्मलोके महीयते ॥ ॥ ५३ ॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे अगस्त्यविश्वकर्मणोरन्योन्यशापावाप्तिर्नाम द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ।

संतुष्टस्तेन तपसा भगवान्विष्णुरव्ययः ॥ मंदास्मितमुखः श्रीमानिदं वचनमब्रवीत् ॥ १ ॥ तपसा तव तुष्टोस्मि स्तोत्रेणानेन सत्तम ॥ नाशयाम्याशु ते दुःखं त्वष्टुः शापसमुद्भवम् ॥ २ ॥ अहं द्राविडदेशेस्मिन्नवतारं करोमि तम् ॥ येनावतारेण मया लोके शिष्टपरिग्रहाः ॥ ३ ॥ सर्वत्र द्राविडी भाषा भविष्यति न संशयः ॥ शंखचक्राद्यायुधानि विष्वक्सेनादिकान्सुरान् ॥ ४ ॥ लोकेवतारयिष्यामि द्राविडे कलशोद्भव ॥ ताम्रपर्णीनदीतीरे कुरुकानगरे वरे ॥ ॥ ५ ॥ सद्भक्तोहं भविष्यामि नेतुं द्राविडतां श्रुतिम् ॥ मया मदंशजैः सर्वैर्दशभिर्द्राविडोत्तमैः ॥ ६ ॥ चतुष्टयसहस्राणि प्रबंधास्तैर्महात्मकैः ॥ क्रियंतेखिलवेदार्था दिव्यद्राविडभाषया ॥ ७ ॥ तेषु दिव्यप्रबंधेषु द्राविडेषु घटोद्भव ॥ यस्य कस्य भवेद्भक्तिः स मुक्तो नात्र संशयः ॥ ८ ॥ सहस्रगीतिस्तत्रापि शठकोपेन या कृता ॥ तस्याः श्रवणमात्रेण ब्रह्मलोके महीयते ॥ ९ ॥ सहस्रगीतिर्या दिव्या द्राविडी ब्रह्मसंहिता ॥ यस्य कस्य मुनेः सम्यक् शरीरे धार्यतेनघ ॥ १० ॥ तस्य तद्दर्शनादेव पापात्मा स्याच्च मुक्तिभाक् ॥ सहस्रगीतिपठनात्संतुष्टोस्मि न संशयः ॥ ११ ॥ अतः कलियुगे ब्रह्मन् सा गीतिः प्रचरिष्यति ॥ तेन सर्वे च मनुजाः प्रबंधाध्ययनेन ते ॥ १२ ॥ अगस्त्याशु गमिष्यंति मल्लोकं नात्र संशयः॥ चराचराभ्यां रूपाभ्यां मुक्त्यर्थं सर्वदेहिनाम् ॥ १३ ॥ प्रसन्नो द्राविडे

देशे सर्वत्र निवसाम्यहम् ॥ सर्वभाषाधिका भाषा द्राविडी सा भविष्यति ॥ १४ ॥ प्रचरिष्यंति लोकेषु वेदार्थाः सर्व एव हि ॥ गूढार्थाश्च कलौ सम्यक्तया द्राविडभाषया ॥ १५॥ चतुर्वेदधरो विप्रः सर्वशास्त्रविशारदः ॥ द्वयार्थैकरतो वापि मंत्रराजार्थकोविदः ॥ १६ ॥ अमानित्वादिगुणकः चरमोपायवेद्यपि ॥ दिव्यप्रबंधहीनश्चेन्मद्भक्तो न भविष्यति ॥ १७ ॥ वेदवेदांतशास्त्रार्थसारज्ञस्यापि तस्य हि ॥ दिव्यप्रबंधहीनस्य वैष्णवत्वं न लभ्यते ॥ १८ ॥ जातकर्मादिसंस्कारैर्ब्राह्मण्यं चाग्रजन्मनः ॥ यथा भवति लोकेस्मिन्यद्वेदाध्ययनेन च ॥ १९ ॥ द्राविडाम्नायपठनैः संस्कारैः पञ्चभिर्मुने ॥ आचार्य्यसेवया तस्य वैष्णवत्वं भविष्यति ॥ २० ॥ अतो द्राविडवेदांतरहितस्य कदाचन ॥ नास्ति निःश्रेयसं वत्स सत्यंसत्यं मयोदितम् ॥ २१ ॥ इत्येवं कारयित्वाशु स्वमतस्थापनं भुवि॥ अहं व्यपनयिष्यामि त्वद्दुःखं नात्र संशयः ॥२२॥ययातिशापदग्धस्य पालितं यद्यदोःकुलम्॥गंगाधिका च कावेरी यथाभून्मत्प्रसादतः॥२३॥ तथैव द्राविडी भाषा लोके ख्यातिं गमिष्यति॥वैकुंठवासिनः सर्वे सूरयस्ते मदाज्ञया॥२४॥द्राविडेषु समुत्पन्नाः सर्वशास्त्रविशारदाः॥ द्राविडाम्नायनिरतास्तया द्राविडभाषया ॥२५॥ प्रपत्तिमार्गं सर्वेभ्यश्चोपदिश्य दयालवः ॥ परोपकारनिरताः भविष्यंति कलौ युगे ॥ २६॥ दृष्टपूर्वोयमर्थो हि पुराणेष्वखिलेषु च ॥ तस्मादगस्त्य मा शोकं कुरु ब्रह्मविदां वर ॥ २७ ॥ ब्रह्मांडनामके तस्मिन्पुराणे मुनिसत्तम ॥ ब्राह्मे पुराणे कुरुकामाहात्म्ये कलशोद्भव ॥ २८ ॥ श्रीमद्भागवते चैव वृद्धपाद्मे तथैव च ॥ अन्येष्वपि पुराणेषु भविष्यद्भार्गवादिषु ॥ २९ ॥ ततोस्मिन् भारते वर्षे घटोद्भव कलौ युगे ॥ कृतादिमनुजाः सर्वे भविष्यंति च भूरिशः ॥ ३० ॥ मच्छास्त्रनिरताः सर्वे ते मदेकपरायणाः ॥ प्रपत्तिधर्मनिरताः मामुपैष्यंति निश्चयम् ॥ ३१ ॥ एवमुक्त्वा तदागस्त्यं लक्ष्मीशः करुणानिधिः ॥

अगस्त्याय वरं दत्त्वा दुर्घटं जगदीश्वरः ॥३२॥ तोषयित्वा मुनिश्रेष्ठं तत्रैवांतर्दधे हरिः ॥ अगस्त्यः स्वाश्रमं प्राप्य संतुष्टः कृपया हरेः ॥ ३३ ॥ कृतकृत्यो महातेजास्तस्थौ हरिपरायणः ॥ ततोव्याहतसंकल्पो भगवाञ्जगदीश्वरः ॥ ३४ ॥ लक्ष्मीशः पुंडरीकाक्षो भक्ताधीनो दयार्णवः ॥ लोकेवतारयामास दिव्यसूरीन्महौजसः ॥३५॥ विष्वक्सेनादिकान्सर्वाञ्जगत्संरक्षणाय च ॥ आज्ञापितास्ततस्तेन हरिणा नित्यसूरयः ॥ ३६ ॥ वैकुंठाद्भुवमासाद्य नानावर्णेषु वैष्णवाः ॥ सुपुण्ये द्राविडे देशे ह्यवतीर्य महौजसः ॥३७॥ सर्वं वेदांतसारार्थान्गूढान् द्राविडभाषया ॥ चतुःसहस्रगाथाभिर्वितत्य पृथिवीतले ॥ ३८ ॥ सर्वाधिकारं कृत्वाशु कृतकृत्या हरिं गताः॥तन्मध्ये सुमहातेजाः शठकोपो महामुनिः॥३९॥ प्रपन्नजनकूटस्थस्तेनेदं रक्षितं मतम् ॥ नाथादिदेशिकाः केचिदवतीर्णास्ततो भुवि॥४०॥तैरयं विष्णुसिद्धान्तो वेदांतिन् परिपालितः ॥ ततः शेषावतारेण यतीन्द्रेण महात्मना ॥ ४१ ॥ रामानुजार्यवर्येण जगतां गुरुणानघ ॥ एतद्वैष्णवसिद्धांतं दिव्यमव्याहतं महत् ॥४२॥ सेतुसीताद्रिपर्यंतं भूम्यां सम्यक्प्रकाशितम् ॥ युष्मत्प्रभृतिविद्वद्भिर्विबुधैर्वैष्णवोत्तमैः ॥ ४३ ॥ रामानुजार्यसिद्धांतो लोके ख्यातिं गमिष्यति ॥ अतोनुशासनाद्विष्णोः शठकोपादियोगिनाम् ॥ ४४ ॥द्राविडाम्नायपठनं कर्त्तव्यं वैष्णवेन हि॥ चतुष्टयसहस्रस्य प्रबंधस्य बुधोत्तम॥४५॥पारायणं मुख्यतमं वैष्णवेनार्यसंमतम् ॥ अशक्तस्य शृणुष्वात्र सुकरोपाय उच्यते ॥४६॥ सहस्रगीतेः पठनं कर्तव्यं यावदायुषम् ॥ मोक्षेच्छुना वैष्णवेन वेदांतिन्नात्र संशयः ॥ ४७ ॥ ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रास्तथेतरे ॥ सर्वेधिकारिणस्तत्र विष्णुभक्तास्तु ते यदि ॥ ४८ ॥ व्यवहारः संस्कृतेन यथा वैदिककर्मसु ॥ स्मृत्यादिषु विनिर्णीतो ब्राह्मणस्य ध्रुवं यते ॥ ४९ ॥ विष्णवर्चनादिकार्येषु वैष्णवस्य विशेषतः ॥ व्यवहारस्तु कर्त्तव्यो दिव्यद्राविडभाषया ॥ ५० ॥ विष्णुधर्मोत्तरे तत्र वेदमंत्रैः समानतः ॥ दिव्य-

द्राविडगाथाश्च पठितव्या हि वैष्णवैः ॥ ५१ ॥ आदिमध्यावसानेषु विष्णुपूजामहोत्सवे ॥ गाथास्तत्रानुसंधेयास्तत्तत्कालोचिताः पराः ॥ ॥ ५२ ॥ अस्मिन् श्रीवैष्णवमते यो विशेत्प्रयतो यदि ॥ स दिव्यां द्राविडीं भाषामभ्यसेत्प्रथमं ध्रुवम् ॥ ५३ ॥ ततस्तापादिसंस्कारैः संस्कृतो गुरुणा यते ॥ प्रबंधमभ्यसेद्धीमान्दिव्यद्राविडरूपकम् ॥ ॥ ५४ ॥ पूर्वं नित्यानुसंधानं षष्टिगाथासमन्वितम् ॥ प्राबोधकीस्तवं पश्चाद्दशगाथाविराजितम् ॥ ५५ ॥ गोदास्तुतिं ततो विद्वाँस्त्रिंश-द्गाथाविराजितम् ॥ ततः प्रपन्नगायत्रीं यतींद्रविषयां शुभाम् ॥ ॥ ५६ ॥ सहस्रगीतिं प्रयतो ह्यभ्यसेद्गुरुसान्निधौ ॥ सहस्रगीतिसारं वा यत्नेन महताभ्यसेत् ॥ ५७ ॥ तेषामभ्यसनाद्विप्र वैष्णवः संभ-विष्यति ॥ ततः परं तेन साकं भोजनं प्रतिभोजनम् ॥ ५८ ॥ युज्यते वैष्णवस्यार्य्य कर्त्तुं नास्त्यत्र संशयः ॥ बहुनोक्तेन किं विद्वन् संक्षेपादिदमुच्यते ॥ ५९ ॥ दिव्यद्राविडवेदांतश्रवणेन विना यते ॥ कलौ युगे मनुष्याणां सम्यग्ज्ञानं न जायते ॥ ६० ॥ अतो द्राविड-वेदांतश्रवणं मोक्षकामिनाम् ॥ सर्वथावश्यकतमं सत्यंसत्यं मयो-दितम् ॥ ६१ ॥ वेदांतिन्नयमेवार्थः पूर्वाचार्य्यैः प्रकाशितः ॥ परांकुशा-दिमुनिभिर्मन्नाथेन च विष्णुना ॥ ६२ ॥ त्वया चैव भविष्यद्भिर्गुरुभिः प्रचरिष्यति ॥ एतेनैवाखिला लोके मनुजा वीतकल्मषाः ॥ ६३ ॥ गमिष्यंत्याशु वेदांतिस्तद्विष्णोः परमं पदम् ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ ६४ ॥ मत्तो माधवदासाद्य किमन्यच्छ्रो-तुमिच्छसि ॥ ६५ ॥ आख्यानमेतच्छुभदं शुभार्थं भट्टार्य्यवर्येण पुराणसिद्धम् ॥ श्रुत्वाखिलं माधवदासनामा प्रकृष्टतोषं स जगाम धीरः ॥ ६६ ॥ निवृत्तसंदिग्धपरः स तस्मान्मत्वा वचस्तत्परमं हि सत्यम् ॥ भट्टारकं तं प्रणिपत्य मूर्ध्ना श्रोतुं मनः सञ्चरितं तु चक्रे ॥ ६७ ॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे द्राविडाम्नायवैभव-कथनं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ।

ततो महान्वैष्णवधर्म्मनिष्ठो भट्टार्य्यमार्यं प्रणिपत्य भूयः ॥ अ-
स्मद्यतिर्दिव्यकथां सुपुण्यां पप्रच्छ मोक्षैकफलप्रसूतिम् ॥ १ ॥
भट्टार्य्य देशिकवरोसि समस्तशास्त्रवक्तासि वारिजविलोचनसंभवोसि॥
तस्मात्त्वैव विदिताः सकलप्रबंधाः शिष्याय मे वद परं सकलं चरि-
त्रम् ॥ २ ॥ कस्मिन्कालेवतीर्णास्ते वैकुंठान्नित्यसूरयः ॥ श्रीहरेराज्ञया
स्वामिन् कीदृशाः पृथिवीतले ॥३॥ तेषां के गुरवः स्वामिन् शिष्याः
के दिव्ययोगिनाम् ॥ स्थितास्ते कति वर्षाणि भूतले दिव्यसूरयः॥४॥
केके प्रबंधास्तैः प्रोक्ताः किं स्वामिविषया गुरो ॥ के दिव्याः सूरयः
स्वामिंस्तेषां संख्या कियत्यभूत् ॥ ५ ॥ पूर्वाचार्यास्तु के लोके तेषां
नामानि कानि च ॥ कृतानि तानि सर्वाणि चरित्राण्यद्भुतानि च
॥ ६ ॥ विशदं ब्रूहि मे विद्वन् भक्ताय करुणानिधे ॥ इति पृष्टस्तदा
तेन शिष्येण गुरुपुंगवः ॥ ७ ॥ तद्दिव्यसूरिचरितं वक्तुकामः समा-
हितः ॥ तान् दिव्यसूरीन् ध्यात्वार्यांश्चकार गुरुवंदनम् ॥ ८ ॥
कासारभूतमहदाह्वयभक्तिसारान् सेवे शठारिकुलशेखरविष्णुचित्तान्॥
भक्तांघ्रिरेणुमुनिवाहचतुःकवींद्रान् माधुर्य्यगानतुलसीवनजायतींद्रान्
॥ ९ ॥ इतीव वंदन कृत्वा भट्टाचार्यस्तदाब्रवीत् ॥ अहं ते कथयि-
ष्यामि प्रभावं दिव्ययोगिनाम् ॥ १० ॥ एषां प्रभावश्रवणात्कृतकृत्यो
भविष्यसि ॥ दशावतारश्रवणे यथा तुष्यति केशवः ॥ ततोधिकतरां
प्रीतिं भगवानेष्यति ध्रुवम् ॥ ११ ॥ यथा दशावतारास्ते प्रसिद्धा
हि जगत्त्रये ॥ धर्मसंस्थापनार्थाय तथा ते दिव्ययोगिनाम् ॥ १२ ॥
नाथार्य्यः पंकजाक्षश्च राममिश्रश्च यामुनः॥गोष्ठीपूर्णो महापूर्णो माला-
धरगुरुस्तथा ॥ १३ ॥ भूरिश्रीशैलपूर्णश्च वररंगस्तथैव च ॥
कांचीपूर्णादयश्चैते पूर्वाचार्याः प्रकीर्त्तिताः ॥ रामानुजादयः पूर्वं ते
पूर्वगुरवः स्फुटम् ॥ १४ ॥ कासारभूतमहदाह्वयभक्तिसाराः श्रीम-

च्छठारिकुलशेखरविष्णुचित्ताः ॥ भक्तांघ्रिरेणुमुनिवाहचतुष्कवींद्रास्ते दिव्यसूरय इति प्रथिता दशोर्व्याम् ॥ १५ ॥ गोदायतींद्रमिश्राभ्यां द्वादशैतान्विदुर्बुधाः ॥ विसृज्य गोदां मधुरकविना सह सत्तम ॥ ॥ १६ ॥ केचिद्द्वादशसंख्यातान् वदंति विबुधोत्तमाः ॥ आराध्यभूता चैतेषां गोदा देवी हरिप्रिया ॥ १७ ॥ लक्ष्मीपुरुषकारेण जगत्संरक्षको हरिः ॥ जगत्कारणकर्तृत्वं श्रिय एव हरेर्नहि ॥ १८ ॥ लक्ष्म्यधीनो जगत्सृष्टिं करोत्यस्मद्यते ततः ॥ तां विना भगवान् सृष्टिं न स्वतंत्रः करोति हि॥१९॥अतो हि जगतः कर्ता लक्ष्मीर्विष्णवनपायिनी॥ अस्येशाना हि जगतो विष्णुपत्नी सनातनी ॥ २० ॥ जगत्कारणकर्तृत्वं श्रुतिसिद्धं श्रियस्ततः ॥ भट्टार्यस्य वचः श्रुत्वा वेदांती तमथाब्रवीत् ॥ २१ ॥ जगत्कारणकर्तृत्वं श्रियश्चोक्तं श्रुतेर्बलात् ॥ कासारयोगिप्रमुखसूरिभ्यो यतिपुंगवात् ॥ २२ ॥ श्रीविष्णुचित्तदुहितुर्गोदाया देशिकोत्तम॥आधिक्यं सुमहत्प्राप्तं योषितः केन हेतुना ॥२३॥ अस्मिन्नर्थे बुधश्रेष्ठ संशयो वर्त्तते महान् ॥ संशयच्छेदकरणे त्वदृते विबुधः परः ॥ २४ ॥ न दृश्यते ततो मह्यं ब्रूहि निःसंशयं हि तत् ॥ अंगीकृत्य वचस्तस्य कृपया भट्टदेशिकः ॥ २५ ॥ व्याजहार शुभं वाक्यं शिष्यं वेदांतिनं प्रति ॥ साक्षाल्लक्ष्मीः समुत्पन्ना गोदारूपेण भूतले ॥ २६ ॥ नित्यसूरीन्समादाय जगत्संरक्षणाय तान् ॥ गोदाशठारियोगींद्राः श्रीसैन्यकफणीश्वराः ॥ २७ ॥ लोकानुग्रहकर्त्तारस्ततस्ते प्रथितास्त्रयः ॥ तयोश्च तेषां सर्वेषां गोदादेवी जगत्प्रसूः ॥ साक्षाल्लक्ष्मीस्वरूपेयमधिका नात्र संशयः ॥ २८ ॥ भट्टार्य्यवाक्यं परमार्थतत्त्वं निशम्य चास्मद्यतिरादरेण ॥ भूयोऽन्यदर्थश्रवणे चकार मनः परं तत्त्वविदाग्रगण्यः ॥ २९ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे श्रीगोदादिव्यसूरिपूर्वाचार्य्यवर्णनं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ।

अस्मद्यतिरथालोक्य भट्टार्य्यं कृतवंदनः ॥ भूयः पप्रच्छ तं कंचि दर्थं लोकहितेच्छया ॥ १ ॥ नित्यानपायिनी लक्ष्मीः कथं त्यक्त्वा- त्मवल्लभम् ॥ अप्राकृतं च वैकुंठं यद्ब्रह्मानुभवं परम् ॥ २ ॥ अवतीर्णा कथं भूम्यां यतः सा हेयसंपदि ॥ तत्सर्वं विशदं ब्रूहि कृपा यद्यस्ति ते मयि ॥ ३ ॥ अथांगीकृत्य भट्टार्य्यस्तद्वचः परमादरात् ॥ हेतुं गोदावतारस्य तत्रान्येषां ततोब्रवीत् ॥ ४ ॥ सर्वेषामवतारस्य लोक- रक्षा प्रयोजनम् ॥ गोदाया यतिराजस्य शठकोपादियोगिनाम् ॥ ५ ॥ अत्रैवोदाहरंतीममितिहासं पुरातनम् ॥ शृणु वक्ष्यामि तत्सर्वं वृद्धपाद्मे च भार्गवे ॥ ६ ॥ आदौ वैकुंठलोकस्य महिमा प्रतिपाद्यते ॥ श्रुति- स्मृतिपुराणादिप्रसिद्धो भवते मया ॥ ७ ॥ श्रुत्यां स्मृतौ पुराणे च पूर्वाचार्योक्तसत्कृतौ ॥ तेषु द्राविडवेदेषु योर्थः सम्यक् समाहितः ॥ ॥ ८ ॥ तस्यैककंठचमेवेति दृढं हृदि विभावय ॥ पादोस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ॥ ९ ॥ तद्विष्णोः परमं पदं सदा पश्यं- ति सूरयः ॥ अक्षरं परमं व्योम तस्याध्यक्षः परः पुमान् ॥ १० ॥ वैकुंठे तु परे लोके श्रिया सार्द्धं जगत्पतिः ॥ आस्ते विष्णुरचिंत्या- त्मा भक्तैर्भागवतैः सह ॥ ११ ॥ वैकुंठे तु परे लोके श्रीसहायो जनार्दनः ॥ उभाभ्यां भूमिलीलाभ्यां सेवितः परमेश्वरः ॥ १२ ॥ अत्यर्कानलदीप्तं तत् स्थानं विष्णोर्महात्मनः ॥ स्वयैव प्रभया राजन् दुष्प्रेक्षो देवदानवैः ॥ १३ ॥ आक्रीडा विविधा राजन् पद्मिन्यश्चामलोदकाः ॥ एते वै निलयास्तात स्थानस्य परमात्मनः ॥ १४ ॥ कालो न वर्तते तत्र न काल- स्तत्र वै प्रभुः ॥ अत्रैव कालो लीलायाः परिणामादिहेतुकः ॥ ॥ १५ ॥ कलामुहूर्त्तादिमयश्च कालो न यद्विभूत्यां परिणामहेतुः ॥ अत्रैव कालः परिणामहेतुः कालः स नित्यः परमे पदे हि ॥ १६ ॥

अंडकोशात्सावरणादमुष्मात्परतः प्रभुः ॥ स्थितेसौ परमे व्योम्नि ह्यप्राकृतशरीरवान् ॥१७॥ यत्तत्पुराणमाकाशं सर्वस्मात्परमं ध्रुवम् ॥ यत्पदं प्राप्य तत्त्वज्ञाः मुच्यंते सर्वकिल्बिषैः ॥ १८ ॥ अंडेभ्यः परतो नित्यं त्रिपादे यद्विराजते ॥ इतरेण तु पादेन प्राकृतं राजते यते ॥ १९ ॥ यदंडमंडांतरगो इत्यादिर्नित्यसूरिणाम् ॥ कालातीतगतिस्तस्य विष्णोर्भगवतः परा ॥ महाविभूतिर्ब्रह्मादिदेवाना-मप्यगोचरा ॥ २० ॥ अपरिच्छेद्यरूपेयं तेषां परमयोगिनाम् ॥ वेदान्तवेद्यं यद्गूढं सत्यं वाचामगोचरम् ॥ २१ ॥ यद्दूरे वचसो यदेव तमसः पारे यदत्यद्भुतं यत्कालादपचेलिमं सुरपुरी यद्गच्छतो दुर्गतिः॥ सायुज्यस्य यदेव सूतिरथ वा यद्दुर्ग्रहं मद्गिरां तद्विष्णोः परमं पदं तव कृते मातः समाम्नासिषुः ॥२२॥ एवं वेदान्तवाक्यैश्च तथा श्रीभारतेन च ॥ विष्णोः पुराणेन तथा पंचरात्रागमेषु च ॥२३॥ अन्यैः पुराणैः स्मृतिभिः पूर्वाचार्य्यस्तवैर्यते ॥ द्राविडाम्नायवचनैरैककंठचेन बोधितम् ॥ २४ ॥ यत्तद्वैकुंठनगरं सर्वमण्डनमाण्डितम् ॥ प्राकारैश्च विमानैश्च सौधै रत्नमयैर्वृतम् ॥२५॥ मणितोरणचित्राढ्या विचित्रध्व-जमालिनी ॥ कोटिवैश्वानरप्रख्यैर्गृहपंक्तिभिरावृता ॥ २६ ॥ सहस्र-स्थूणविमले दृढोदग्रे महौजसि ॥ देवानामधिपो यत्र समास्ते पुरुषो-त्तमः ॥२७॥ मध्ये तु मण्डपं दिव्यं राजस्थानं महोच्छ्रयम् ॥ माणि-क्यस्तंभसाहस्रजुष्टं रत्नमयं शुभम् ॥ २८ ॥ नित्यमुक्तैः समाकीर्णं सामगानोपशोभितम् ॥ आनन्दैकार्णवीभूते तत्र श्रीमणिमण्डपे ॥ ॥ २९ ॥ अनंतभोगिपर्य्यंके रराज भगवान्हरिः॥ हिरण्मये परे लोके विरजं ब्रह्म निष्कलम्॥तच्छुभ्रं ज्योतिषां ज्योतिस्तदध्यात्मविदो विदुः ॥ ३० ॥ न तत्र सूर्यो न च भाति चन्द्रमा न विद्युतो भांति कुतोय-मग्निः ॥ तमेव भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ ॥ ३१ ॥ दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥ यदि भाः सदृशी

सा स्याद्दासस्तस्य महात्मनः ॥ ३२ ॥ स्रग्वस्त्राभरणैर्युक्तं स्वानुरू-
पैरनूपमैः ॥ चिन्मयैः स्वप्रकाशैश्च ह्यन्योन्यरुचिरंजितैः ॥ ३३ ॥
अनेकरूपास्ते नित्याः पञ्चोपनिषदात्मकाः ॥ उत्कृष्टतेजसः सर्वे नि-
त्यमुक्ता महौजसः ॥३४॥ दिव्यवस्त्रा दिव्यगंधा नूपुरांतादिभूषणाः ॥
तथाभरणकोटीनां कोटीनामयुतस्य च ॥ तया दीप्त्या दीप्यमानमनिशं
राजते पदम् ॥३५॥ बृहच्छरीरोप्यतिमानदेहो युवा कुमारत्वमुपेयिवान्
हरिः॥रेमे श्रियासौ जगतां जनन्या स्वज्योत्स्नया चंद्र इवामृतांशुः॥३६॥
नित्या ह्यस्पृष्टसंसारगंधा ईश्वरतत्पदे ॥ निरंजना विराजंते शेषशे-
षाशनादयः ॥ ३७ ॥ अंतरंगा हरेर्मुक्ताः शेषशेषाशनादिवत् ॥
नित्यैकैंकर्य्यनिरता मोदंते वैष्णवे पुरे ॥ ३८ ॥ कोटिसूर्यप्रतीकाशाः
पूर्णेंदुसदृशप्रभाः ॥ यस्मिन्पदे विराजंते मुक्ताः संसारवर्जिताः॥३९॥
राजाधिराजः सर्वेषां विष्णुर्ब्रह्ममयो महान् ॥ ईश्वरं तं विजानीमः
स शंभुः स प्रजापतिः ॥ ४० ॥ नित्यैर्मुक्तैः परं साम्यं स्वेन सार्द्धं
समागतैः ॥ विभूतिद्वयनिर्वाहः श्रिया रेमे जगत्पतिः ॥ ४१ ॥
वेदांतैश्च पुराणैश्च स्मृतिभिः श्रुतिभिः स्फुटम् ॥ एवं वैकुंठमहिमा
वेदांतिन् प्रतिपादितः॥लक्ष्मीवैकुंठसंवादं वक्ष्यामि श्रूयतां मुने॥४२॥
अस्मद्यतिः सर्वपुराणवाक्यैः वैकुंठमाम्नायवचोभिरीड्यम् ॥ तमी-
दृशं भट्टगुरोर्विदित्वा दृढांतरंगो हरिमेव दध्यौ ॥ ४३ ॥ इति श्रीप्रप-
न्नामृते भट्टार्य्यवेदांतिसंवादे वैकुंठपुरवर्णनं नाम पंचसप्ततितमोऽ-
ध्यायः ॥ ७५ ॥

---

## षट्सप्ततितमोऽध्यायः ।

वेदांती स तदा ध्यात्वा मनसा परमं पदम् ॥ माणिक्यमंडपं चैव
श्रीलक्ष्म्या सहितं हरिम् ॥१॥अनंतविहगेशादिनित्यसूरींश्च भक्तितः॥
भट्टार्य्यं तं प्रणम्यार्य्यं तत्कथायां कृतादरः ॥२॥समाहितमनास्तस्थौ
पश्यन्गुरुमुखांबुजम् ॥ स भट्टदेशिको धीमान् वेदांतिनमथाब्र-

वीत् ॥३॥ एवं वैकुंठनगरे वेदांतिन् परमः पुमान् ॥ आस्ते लक्ष्म्या च भूम्या च भक्तैर्भागवतैः सह ॥ ४ ॥ अस्येशाना हि जगतो विष्णुपत्नी सनातनी ॥ सा कदाचिज्जगन्माता वेदांतिन् विष्णुवल्लभा ॥ ॥ ५ ॥ निर्हेतुकदयावेशादपश्यदखिलं जगत् ॥ तदेकानुभवानंदनिरंतरसुखोचितान् ॥ ६ ॥ तत्र भोगविभूत्यां तु नित्यमुक्तान्समास्थितान् ॥ तान्विलोक्य जगन्माता मुमोद सुतरां मुने ॥ ७ ॥ अपारभववाराशिनिमग्नान्भृशदुःखितान् ॥ बद्धान्भगवदश्लिष्टाँल्लीलायामास्थितानिमान् ॥ ८ ॥ विलोक्य दुःखितात्यंतं भर्तारमिदमब्रवीत् ॥ अपारकरुणासिंधो देवदेव जगत्पते ॥ ९ ॥ बद्धजीवानिमान्पश्य लीलायां समदर्शन ॥ समः सर्वेषु भूतेषु कल्याणगुणसागरः ॥ १० ॥ निर्व्याजबंधुर्भगवाञ्जगन्माता जगत्पिता ॥ इत्येवं बहुधा शास्त्रे स भवान्प्रतिपाद्यते ॥ ११ ॥ यतो वैषम्यनैर्घृण्ये संप्राप्ते तव सांप्रतम् ॥ केचिच्च दुःखिता जीवाः केचिच्च सुखिनः कृताः ॥ १२ ॥ एतेन किं फलं स्वामिन्संप्राप्तं तद्वदाशु मे ॥ त्वदधीना ह्यविद्या वा तदधीनो भवान्हि किम् ॥ १३ ॥ युष्मत्कटाक्षविषया यदि बद्धजीवा मुक्तादिभिः सह परे परमे पदेस्मिन् ॥ नित्यानवद्यरसभोगसुखैकनिष्ठा का हानिरत्र भगवन् करुणामृताब्धे ॥ १४ ॥ इत्युदीरितमाकर्ण्य जगन्मात्रा जगत्पतिः ॥ मंदस्मितमुखः श्रीमान्वेदांतिन्सोब्रवीच्छ्रियम् ॥१५॥निश्चेष्टाः पूर्वमेवासान्विहीनाः करणादिभिः ॥ आत्मानः सर्व एवैते लूनपक्षा इवांडजाः ॥ १६ ॥ तेभ्योखिलेभ्यो जीवेभ्यः करणं च कलेवरम् ॥ निर्हेतुककृपावेशादेवि दत्तं मया किल ॥ १७ ॥ पूर्वमेव मया ब्रह्मन् हस्तपादादिसंयुता ॥ विचित्रा देहसंपत्तिरीश्वराय निवेदितुम् ॥ १८ ॥ शास्त्रप्रसिद्धिरेवैषा विद्यते किल वल्लभे ॥ मत्पादपद्मकैंकर्य्यहेतुभूतं कलेवरम् ॥ १९ ॥ तदन्यविषयं चक्रुर्मत्पूजाविमुखा नराः ॥ समिदाहरणार्थाय प्रदत्तेना-

सिना रमे ॥ २० ॥ गोवालच्छेदनं देवि तज्जगत्यां यथाभवत् ॥ नदी-
संतरणार्थाय प्रदत्तो दयया प्लवः ॥ २१ ॥ तमादाय महागर्त्ते यथा
निक्षेपणं ह्यभूत् ॥ तथा शब्दादिविषयप्रवणास्तेखिला जनाः ॥२२॥
कर्मप्रवाहपतिता निमग्ना भवसागरे ॥ अपथा गच्छतां तेषां विषया-
र्णवपातिनाम् ॥ २३ ॥ मत्प्राप्तिहेतुभूतं तु संसारार्णवतारकम् ॥
करावलंबनं शास्त्रं मया दत्तं हितेच्छया ॥ २४ ॥ शास्त्राण्यापाततो
दृष्ट्वा तन्मार्गेण विधाय ते॥ईश्वरोहमहं भोगी सिद्धोहं बलवान् सुखी॥
॥ २५ ॥ आढ्योभिजनवानस्मि कोन्योस्ति सदृशो मया ॥ इत्येवं
गर्वसंयुक्ता नेक्षंते केपि मां किल ॥ २६ ॥ योन्यथा संतमात्मान-
मन्यथा प्रतिपद्यते ॥ किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥
॥ २७ ॥ समस्तपापबीजेन स्वातंत्र्येणैव तेन ते ॥ आत्मापहारनि-
रताः कर्मदूषितमानसाः ॥ २८ ॥ संसारवर्द्धकाः सर्वे ते ह्यासन्छुभ-
दर्शने ॥ उल्लंघिताज्ञाः स्थानेषु यथा राजा स्वयं गतः ॥ २९ ॥
तथैव रामकृष्णादिरूपेणाहं गतोभवम् ॥ मच्छासने स्थिरधियः कर्तु-
कामः स ताञ्जनान् ॥ ३० ॥ आसुरीं योनिमापन्ना मूढा जन्मनि
जन्मनि ॥ मामप्राप्यैव कौंतेय ततो यांत्यधमां गतिम् ॥ ३१ ॥
अवजानंति मां मूढा मानुषीं तनुमाश्रितम् ॥ परं भावमजानंतो ममा-
व्ययमहेश्वरम् ॥ ३२ ॥ त्रिभिः प्रकारैरेतैर्मां न गच्छंति किलेश्वरम् ॥
अनाद्यविद्यासंबंधदूषितास्तेखिला जनाः ॥ ३३ ॥ देहादिदानं प्रथमं
च तेभ्यः शास्त्राणि दत्तानि ततोखिलानि ॥ दशवताराश्च कृता
मयाद्य करिष्यमाणं वद वारिजाक्षि ॥ ३४ ॥ लक्ष्मीर्निशम्य वचनं
भगवत्प्रणीतं सौहार्दकारणवशाज्जगदेकमाता ॥ त्यक्तात्मनां तनु-
भवां यदसह्यदुःखं संवीक्ष्य शोकनिभृता क्षणमास तूष्णीम् ॥ ३५ ॥
तच्छ्रुत्वा भगवच्चित्तं दृष्ट्वा बद्धात्मनां व्यथाम् ॥ अमृष्यमाणा भर्तारं
भगवंतं वचोब्रवीत् ॥३६॥ यदि दत्ता त्वयानुज्ञा लोकसंरक्षणे मम ॥

लीलायामवतीर्याहं नित्यैरेतैस्सहेश्वर ॥ ३७ ॥ त्वदंघ्रिपद्माभिमुखान् करिष्ये त्वत्कटाक्षतः ॥ बद्धजीवानिमान्सर्वांस्त्वदाज्ञापरिपालिनी ॥ ३८ ॥ वाक्यं निशम्य निपुणं हरिरिंदिरायाः सांचित्य तत्र समये घटसंभवाय ॥ दत्तं वरं हृदि निधाय जगज्जनन्यै लोकावनाय महतीं प्रददावनुज्ञाम् ॥ ३९ ॥ वनमालां वैजयंतीं तथा पंचायुधानि च ॥ श्रीवत्सं कौस्तुभं चैव सेनेशविहगेश्वरौ ॥ ४० ॥ अनंतप्रमुखान् सर्वान् समादायाज्ञया हरेः ॥ लोकसंरक्षणर्थाय लक्ष्मीर्भूम्यां मनो दधौ ॥ ४१ ॥ कृतादिषु प्रजा राजन् कलाविच्छंति संभवम् ॥ कलौ खलु भविष्यंति नारायणपरायणाः ॥ ४२ ॥ क्वचिन्क्वचिन्महाराज द्राविडेषु च भूरिशः ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी ॥ ४३ ॥ कावेरी च महापुण्या प्रतीची च महानदी ॥ एवं भागवताख्येन पुरोणोक्तेन वर्त्मना ॥ ४४ ॥ चक्रुस्ते ह्यवतारान्हि द्राविडे नित्यसूरयः ॥ एतत्ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ किमन्यच्छ्रोतुकामस्त्वं तद्वदाशु ब्रवीमि ते ॥ ४५ ॥ इति श्रीप्रपन्नामृते रामानुजचरित्रे भट्टार्य्यवेदांतिसंवादे श्रीवैकुंठनाथलक्ष्मसिंवादकथनं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

---

## सप्तसप्ततितमोऽध्यायः ।

अस्मद्यतिः प्रणम्याथ भट्टार्य्यं भगवत्प्रियम् ॥ कृतांजलिपुटो भूत्वा वचनं चेदमब्रवीत् ॥ १ ॥ अवतारस्थलादीनि यानि कासारयोगिनः ॥ ब्रूहि चैतानि सर्वाणि यद्भूतमहदाख्ययोः ॥ २ ॥ तस्य तद्वचनं श्रुत्वा कूरेशतनुजो महान् ॥ तद्दिव्यसूरिचारितं प्रवक्तुमुपचक्रमे ॥ ३ ॥ अयोध्या मथुरा माया काशी कांची ह्यवंतिका ॥ पुरी द्वारवती चैव स तैता मुक्तिदयिकाः ॥ ४ ॥ तन्मध्ये सुमहापुण्या कांची लोकेषु विश्रुता ॥ ब्रह्माश्वमेधयागेन स यत्राराधितो हरिः ॥ ५ ॥ क इति ब्रह्मणो नाम तेन यत्रार्चितो हरिः ॥ तस्मात्कांचीति विख्याता पुरी पुण्यविवर्द्धिनी ॥ ६ ॥

अष्टादशस्थलैः कांची जगत्यां समुदंचति ॥ कांच्यामष्टभुजं नाम स्थलं यद्यस्ति विश्रुतम् ॥ ७ ॥ यथोक्तकारी भगवांस्तस्योदीच्यां विराजते ॥ यथोक्तकारिणस्तस्य कौबेर्यां दिशि सत्तम ॥ ८ ॥ सरः प्रकाशतेत्यंतं दिव्यं हेमांबुजावृतम् ॥ द्वापरे चाष्टलक्षेषु सहस्रेषु च षष्टिषु ॥ ९ ॥ संवत्सरेष्वतीतेषु तथा नवशतेषु च ॥ धर्मसंस्थापनार्थायं ततः सिद्धार्थिवत्सरे ॥ १० ॥ तुलामासे शुक्लपक्षे ह्यष्टम्यां कुजवासरे ॥ कासारयोगी संजज्ञे शंखांशेन महाद्युतिः ॥ ११ ॥ नक्षत्रे श्रवणे तस्मिंस्तटाके स्वर्णपंकजे ॥ अस्यावतारश्लोकाश्च गीयंते प्रथिता भुवि ॥ १२ ॥ कांच्यां सरसि हेमाब्जे जातं कासारयोगिनम् ॥ कलये यः श्रियः पत्युररविंदमकल्पयत् ॥ ॥ १३ ॥ मुकुंदेंदुमुखोल्लासमूलवाग्जालमूर्च्छितम् ॥ मुनिमुख्यं सरोजातं मुक्तिमूलमुपास्महे ॥१४॥ हेमाब्जिनीहेमसरोजगर्भाच्छ्रीपांचजन्योजनि तत्र योगी ॥ तारे हरेराश्वयुजाख्यमासे समस्तजीवावनकर्महेतुः ॥ १५ ॥ संजीवनत्वाद्बहुसत्त्वयोगात्संसारदावाग्निविनाशकत्वात् ॥ शैत्योदयात्सूक्त्यमृतप्रवाहात्सरोभिधानं यमुदाहरंति ॥१६॥ ततो भूताह्वयो धीमान्वेदांतिस्तत्परेहनि ॥ समुद्रतीरे विख्याते मल्लीपुरवरे शुभे ॥ १७ ॥ दिव्यगंधयुते तस्मिन्माधवीकुसुमोत्तमे ॥ संजज्ञे लोकरक्षार्थं गदांशेन महाद्युतिः ॥ १८ ॥ अस्यावतारश्लोकाश्च गीयंते प्रथिता भुवि ॥ मल्लीपुरवराधीशं माधवीकुसुमोद्भवम् ॥ १९ ॥ भूतं नमामि यो विष्णोर्ज्ञानदीपमकल्पयत् ॥ वंदे भूताख्ययोगींद्रं वरेण्यं गुणसंपदम् ॥ लक्ष्मीसहायकरुणापात्रमप्रतिवैभवम् ॥ २० ॥ मासेथ तस्मिन्वसुभेजनिष्ट पारे समुद्रं पुरिमल्लनाम्न्याम् ॥ लतागृहाद्वैष्णवभूतनामा कौमोदकीशक्तिमयो मुनींद्रः ॥ २१ ॥ तत्रोदीच्यां पुरस्तस्याः काष्ठायां तत्परेहनि ॥ महोदधितटे तस्मिन्मयूरनगरीवरे ॥ ॥ २२ ॥ मैलादिकेशवस्याग्रे कूपे चलतिकाह्वये ॥ रक्तोत्पले

नंदकांशात्संजज्ञे महदाह्वयः ॥ २३ ॥ अस्यावतारश्लोकाश्च गीयंते
प्रथिता भुवि ॥ दृष्टवानिति होवाच रमया मयिलाधिपम् ॥२४॥
कूपे रक्तोत्पले जातं महदाह्वयमाश्रये ॥ पद्मारमणपादाब्जप्रेमभ्रांत्या
मनोज्ञया ॥ भ्रांतयोगीति विख्यातं मुनिं वंदे गुणांबुधिम् ॥ २५ ॥
तन्मास एवाविरभूद्विपश्चित्प्राचेतसक्षेत्रमयूरपुर्य्याम् ॥ महाभिधानो
मणिकैरवांताच्छ्रीनंदकात्माश्रितभक्तिरूपः ॥ २६ ॥ विष्वक्सेनस्तु
भगवान्वैकुंठाद्भुवमागतः ॥ तेषां त्रयाणां महतां निर्हेतुककृपाव-
शात् ॥ २७॥ विधाय पंचसंस्कारान्यावत्तत्त्वार्थसंपदः ॥ सर्वार्थांश्चो-
पदिश्याशु स्वधाम प्रत्यपद्यत ॥ २८ ॥ नियतपुलकितांगी निर्भरा-
नंदबाष्पा गलितनिखिलसंगा गद्गदस्तोत्रगीतिः ॥ अमृतलहरिवर्णा
हर्षवृत्तोपपन्ना विगतनरकभीतिर्विष्णुभक्तिर्विभाति ॥ २९ ॥ एवंरूपो-
क्तभगवद्भक्तिमान्महदाह्वयः ॥ हृद्याविष्टहरिः श्रीमदनुभावेन
संततम् ॥ ३० ॥ भ्रांतवद्वर्तते यस्माद्भ्रांतयोगीति कथ्यते ॥ तेषां
त्रयाणां भगवद्भक्तिस्तस्य विशेषतः ॥ ३१ ॥ भ्रांतनाम्नः
सुमहती संजाता योगिनो यतः ॥ महार्य्य इति नामास्य बभूव
प्रथितं भुवि ॥ ३२ ॥ नारायणपदांभोजे भ्रमद्भ्रमरवत्सदा ॥
स भ्रान्तयोगी तत्रैको वेदांतिन् गीयते महान् ॥ ३३ ॥
अयोनिसंभवाश्चैते महांतः पुष्पसम्भवाः ॥ निरस्ततामसरजोगुणा
हरिकटाक्षतः ॥३४॥ सत्त्वनिष्ठाः प्राथमिका वेदांतिस्ते त्रयोभवन् ॥
प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥ ३५ ॥ बंधं मोक्षं च
या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥ एवमुक्तप्रकारेण शुद्धसत्त्वगुणा
हि ते ॥ ३६ ॥ दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः॥नान्यथा
लक्षणं तेषां बंधे मोक्षे तथैव च ॥ ३७ ॥ स्वत्वमात्मनि संजातं
स्वामित्वं ब्रह्मणि स्थितम् ॥ आत्मदास्यं हरेः स्वाम्यं स्वभावं च
सदा स्मर ॥ ३८ ॥ ज्ञानानंदमयो ह्यात्मा शेषो हि परमात्मनः ॥
तत्स्वतः सिद्धभगवदास्यैकरसभोगिनः ॥ ३९ ॥ तद्वैराग्यज्ञानभक्ति-

सहिताः सर्वदाभवन् ॥ बाल्यात्प्रभृति ते स्निग्धा ह्यन्नपानादिवर्जिताः ॥ ४० ॥ गुणानुभवकैंकर्य्यरसभोगैकतत्पराः ॥ हरेरज्ञातशब्दादिविषयास्ते त्रयोभवन् ॥ ४१ ॥ अतः संसारिभिः सार्द्धं शब्दादिविषयातुरैः ॥ मत्वेति दुःसहोस्माकं सहवासश्च ते त्रयः ॥ ४२ ॥ अज्ञातगतयोन्योन्यं पृथगेवं व्यवस्थिताः ॥ ग्रामैकरात्रं ते भूम्यां संचरन्तो व्यवस्थिताः ॥ ४३ ॥ लक्ष्मीपतेः पूर्णकटाक्षलब्धज्ञानातिरेकार्जितसद्गुणौघाः ॥ अयोनिजाताः प्रथमास्त्रयस्ते विचेरुरुर्व्यां विदिताखिलार्थाः ॥ ४४ ॥ स तदा भगवान्विष्णुर्महाकारुणिको हरिः ॥ एभिस्त्रिभिः स्वात्मभूतैर्भगवद्भक्तिपारगैः ॥ ४५ ॥ अनाद्यविद्यासम्बन्धवासनाक्रांतचेतसाम् ॥ संसारिणां निराकृत्य यदज्ञानं महत्तमम् ॥ ४६ ॥ स्वभक्तिज्ञानवैराग्यगुणान्दापयितुं तदा ॥ संकल्प्य पृथगेवोर्व्यां चरतां महतां महान् ॥ ४७ ॥ देहलीनगरे तेषां त्रयाणां संगतिं व्यधात् ॥ ४८ ॥ श्रीवामनक्षेत्रपुरे कदाचित्संयोज्य शौरिर्भगवानकस्मात् ॥ अदभ्रवृष्टिं निशि कल्पयित्वा प्रावेशयत्संकटदेहलीं तान् ॥ ४९ ॥ ततः कदाचित्कासारयोगींद्रः स्वेच्छयानघ ॥ देहलीनगरं प्राप वर्षेण रजनीमुखे ॥ ५० ॥ स तदा विप्रदेहल्यां स्थलं संप्राप्य सत्वरम् ॥ एकस्यैवात्र शयितुं पर्याप्तमशयिष्ट सः ॥ ५१ ॥ भूताख्योपि तदा तत्र गत्वा स्थलमयाचत ॥ स तस्यार्द्धं स्थलं तस्मै महाकारुणिको ददौ ॥ ५२ ॥ निषण्णौ तावुभौ तत्र ततो दृष्ट्वा बुधोत्तमौ ॥ भ्रान्तयोगी ततोप्येवं स्थलं तावदयाचत ॥ ५३ ॥ सम्यग्दत्त्वा स्थलं तस्मै सुदमापतुरुत्तमम् ॥ शयनायोपवेशाय स्थलराहित्यकारणात् ॥ ५४ ॥ उत्थितास्ते त्रयोतिष्ठन् वैष्णवागमहर्षिताः ॥ वैष्णवो वैष्णवं दृष्ट्वा दण्डवत्प्रणमेद्भुवि ॥ ५५ ॥ तयोर्मध्यगतो विष्णुः शंखचक्रगदाधरः ॥ तुलसीकाननं यत्र यत्र पद्मवनानि च ॥ वसन्ति वैष्णवा यत्र तत्र सन्निहितो हरिः ॥ ५६ ॥ इत्युक्तरीत्या भगवान्स चैवं दिव्ययो-

गिनाम् ॥ तेषामनुग्रहार्थाय शंखचक्रगदाधरः ॥ आबिर्वभूव तन्मध्ये बृहद्रूपधरो हरिः ॥ ५७ ॥ तत्र संकुचितस्थाने निर्बंधोभूद्यतो महान् ॥ आसारवर्षसंयुक्ते निशीथसमये तदा ॥ ५८ ॥ अलक्षितान्योन्यतनुः कोयमित्येव तेब्रुवन् ॥ दृढं बद्धकपाटायां देहल्यामत्र ते वयम् ॥ ५९ ॥ त्रय एव स्थिताः कोयं कथं तुर्य्यः समागतः ॥ तदा संद्रष्टुकामास्ते भगवंतमधोक्षजम् ॥ ६० ॥ निरस्तमायातमसः संपूर्णज्ञानदृष्टयः ॥ कृत्वा पात्रमिमां भूमिं विधायाज्यं महोदधीन् ॥ ६१ ॥ ज्वालां कृत्वा तथादित्यं योगिनो गत कल्मषाः ॥ प्रज्वाल्य तु ज्ञानदीपं ददृशुस्तं महौजसम् ॥ ६२ ॥ तार्क्ष्याधिरूढं तडिदंबुदाभं लक्ष्मीधरं वक्षसि पंकजाक्षम् ॥ हस्तद्वये शोभितशंखचक्रं विष्णुं दयाब्धिं ददृशुस्तमाद्यम् ॥६३॥ आजानुबाहुं कमनीयगात्रं पार्श्वद्वये शोभितभूमिनीलम् ॥ पीताबरं भूषणभूषितांगं चतुर्भुजं चंदनरूषितांगम् ॥ ६४ ॥ बिंबाधरं कुंदसमानदंतं शरन्निशानाथसमानवक्रम् ॥ नीलालकं दिव्यकिरीटजुष्टं कर्णद्वये शोभितकुंडलाढ्यम् ॥ ६५ ॥ रत्नांगदं मौक्तिकदिव्यहारं कटीतटे लंबितहेमसूत्रम् ॥ रत्नांगुलीयं मणिकंकणाढ्यं माणिक्यमंजीरसुमृष्टपादम् ॥ ६६ ॥ मंदारमालांचितकेशबंधं श्रीकौस्तुभोद्भासितकंठदेशम् ॥ श्रीवत्सवक्षः कमनीयवेषं वेदांतवेद्यं मनसोप्यगम्यम् ॥ ॥ ६७ ॥ अप्राकृतं दिव्यमनंतरूपं यद्योगिगम्यं गुणसंवियोगम् ॥ अत्यद्भुतं कोटिरविप्रकाशमनूपमं यत्सनकाद्यगम्यम् ॥ ६८ ॥ ज्ञानदृष्ट्या विलोक्यैवमनुभूयासकृद्धरिम् ॥ निमग्नास्ते त्रयः सम्यग्ब्रह्मानंदमहाह्रदे ॥ ६९ ॥ तज्जातातिशयानंदाः न ममुस्तत्तनूषु ते ॥ ततो जगद्धितार्थाय कासारप्रमुखास्त्रयः ॥ ७० ॥ तमेवार्थं समुद्धृत्य यद्ब्रह्मानुभवोद्भवम् ॥ प्रबंधान् द्राविडान् दिव्यांश्चक्रुरंतादिनामकान् ॥ ७१ ॥ मोक्षैकहेतूंस्त्रीन् सम्यक् शतगाथाविराजितान्॥

अष्टोत्तरशतं विष्णोः मुख्यस्थानानि भूतले ॥ ७२ ॥ स्थलानि तत्र चत्वारि तेन कासारयोगिना ॥ अभिष्टुतानि वेदांतिन् प्रथमं प्रेमपूर्वकम् ॥ ७३ ॥ श्रीरंगो वेंकटाद्रिश्च श्रीकांची देहली पुरी ॥ स्थलानि तत्र चत्वारि भूताख्येन स्तुतानि च ॥ ७४ ॥ श्रीरंगो वेंकटाद्रिश्च देहलीनगरं तथा ॥ स्वावतारस्थलं चैव यन्मल्लीनगरं वरम् ॥ ॥ ७५ ॥ महदाख्येन चत्वारि संस्तुतानि स्थलानि च ॥ श्रीरंगो वेंकटाद्रिश्च देहलीपुरमुत्तमम् ॥ ७६ ॥ मयूरनगरोदीच्यां श्रीमत्कैरविणीतटम् ॥ संसारिणः पठंत्येतान्प्रबंधान्भगवत्परान् ॥ ॥ ७७ ॥ अविद्याकर्मसंजातमपोह्याज्ञानमंजसा ॥ गच्छंति वैष्णवा भूत्वा तद्विष्णोः परमं पदम् ॥ ७८ ॥ एवं माधवदासार्यसरोयोग्यादयस्त्रयः ॥ गाथाशतत्रयं कृत्वा सर्वं जगदपालयन् ॥ ७९ ॥ यः पठेत्प्रयतो भक्त्या प्रबंधं योगिभिः कृतम् ॥ सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥ ८० ॥ तैरेवं भगवान्यत्तत्साधयित्वा स्ववांञ्छितम् ॥ अभिष्टुतोमरैः सार्द्धं स्वधाम प्रत्यपद्यत ॥ ८१ ॥ कासारभूतभ्रांतार्यास्ततस्ते मिलितास्त्रयः ॥ लोकानुग्रहकर्तारो ह्यटन्तः पूर्ववत्स्थिताः ॥८२॥ य इदं शृणुयान्नित्यं भक्त्याख्यानमतंद्रितः ॥ स सर्वपापनिर्मुक्तः सत्यं विष्णुपदं व्रजेत् ॥ ॥८३॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे कासारभूतभ्रान्तार्याणां देहलीनगरे भगवद्दर्शनप्राप्तिकथनं नाम सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

---

## अष्टसप्ततितमोऽध्यायः ।

तच्चरित्रं महापुण्यं श्रुत्वास्मद्यतिरादरात् ॥ भट्टार्य्यं प्रणिपत्योर्व्यां प्रहृष्टः प्रत्यभाषत ॥१॥ सरोयोग्यादिचरितं भवतः कृपया श्रुतम् ॥ इदानीं श्रोतुमिच्छामि भक्तिसारस्य वैभवम् ॥२॥ सच्चरित्रामृतं पुण्यं त्वन्मुखांभोजनिःसृतम् ॥ पिबतः श्रोत्रचुलकैस्तृप्तिर्नाभवद्गुरो मम ॥३॥

भट्टार्यस्तद्वचः श्रुत्वा संतुष्टस्तं प्रशस्य च ॥ प्रभावं भक्तिसारस्य प्रवक्तुमुपचक्रमे ॥ ४ ॥ शक्तिपंचमयविग्रहात्मने शुक्तिकारजितचित्तहारिणे ॥ मुक्तिदायकमुरारिपादयोर्भक्तिसारमुनये नमोनमः ॥ ५ ॥ इत्येवं वंदनं कृत्वा भट्टार्य्यस्तमथाब्रवीत् ॥ लोकसंरक्षणार्थाय जातः कृष्णो यथा भुवि ॥ ६ ॥ एकत्र जातो ह्येकत्र विष्णुः संवर्द्धितो महान् ॥ तथैवायं भक्तिसारो जातः सम्यगवर्द्धत ॥ ७ ॥ ततोखिलजगत्पद्मबोधायाच्युतभानुना ॥ देवकीपूर्वसंध्यायामाविर्भूतं महात्मना ॥ एवं यदुकुले कृष्णः संजज्ञे किल सुव्रत ॥ ८ ॥ अनार्द्रमार्द्रं विरसं रसाढ्यमपल्लवं पल्लवितं तदासीत् ॥ गावो बहुक्षीरदुघा बभूवुर्नारायणे नंदकुलं प्रविष्टे ॥ ९ ॥ एवं नंदकुले कृष्णो वेदांतिन्न समवर्द्धत ॥ कनकांग्यां भार्गवस्य सोयं जज्ञे तथा महान् ॥ १० ॥ अवर्द्धत ततो योगी वेत्रसंपुटकुट्टहे ॥ भक्तिसारस्तथा पूर्वं जनित्वैकत्र योगिराट् ॥ ११ ॥ अन्यत्रावर्द्धतावन्यां कृष्णवल्लोकरक्षकः ॥ पूर्वमत्रिर्वशिष्ठश्च भृगुर्भार्गव एव च ॥ १२ ॥ पुलस्त्यश्चांगिराश्चान्ये सर्वे ब्रह्मर्षयस्तथा ॥ ब्रह्मलोकं समासाद्य ब्रह्माणममितौजसम् ॥ ॥ १३ ॥ प्रणम्यांजलिहस्तास्ते वचनं चेदमब्रुवन् ॥ वयं तु भूम्यामुत्कृष्टक्षेत्रे कर्तुं महत्तपः ॥ १४ ॥ यत्नेन महता ब्रह्मन् सांप्रतं समवस्थिताः ॥ विचार्यालोच्य निश्चित्य ब्रह्मन् यत्नेन भूयसा ॥ १५ ॥ क्षेत्राणामुत्तमं क्षेत्रं ब्रूहि नः करुणाकर ॥ प्रतिगृह्य वचस्तेषां ब्रह्मा त्रिभुवनेश्वरः ॥ १६ ॥ विश्वकर्माणमाहूय व्याजहार वचः शुभम् ॥ पंचाशत्कोटिविस्तीर्णां सशैलार्णवकाननाम् ॥ १७ ॥ महीमिमां महीसारक्षेत्रं च तुलयाधुना ॥ प्रदर्शय त्वमेतेषां विशेषं ज्ञातुमिच्छताम् ॥ १८ ॥ एतयोरधुना त्वष्टः ब्रह्मर्षीणां महात्मनाम् ॥ तत्तथैव कृतं तेन शासनाद्ब्रह्मणस्तदा ॥ १९ ॥ त्वष्टा जगद्धितार्थाय ब्रह्मर्षीणां च सन्निधौ ॥ पृथिव्याधिष्ठिततुला तथोर्ध्वं चोत्पपात सा ॥ २० ॥ महीसारक्षेत्रतुला भारावस्था बभूव सा ॥

क्षेत्रस्यास्य तदा धाता नामधेयं ददौ स्वयम् ॥ २१ ॥ महीसारक्षेत्रमिति तेनान्वर्थं चतुर्मुखः ॥ अनुज्ञातास्ततः सर्वे ब्रह्मणा ऋषयस्तदा ॥ २२ ॥ क्षेत्रे तपो महीसारे कुर्वंतः सुखमास्थिताः ॥ पश्चिमे योजनार्द्धे तु विदेहाधिष्ठिते वने ॥ २३ ॥ भार्गवो दीर्घसत्रेण वासुदेवं सनातनम् ॥ अभिपूज्य यथान्यायमिति नित्यमकल्पयत् ॥ २४ ॥ अर्थोयमत्र ब्रह्मांडपुराणेषु प्रतिष्ठितः ॥ एवं महीसारपुरे भार्गवो मुनिसत्तमः ॥ २५ ॥ भगवंतं समुद्दिश्य चचार सुमहत्तपः ॥ भीताश्चोग्रेण तपसा भार्गवस्याखिलाः सुराः ॥ २६ ॥ तत्तपोहरणार्थाय प्रेषयामासुरंजसा ॥ सुरांगना महाप्रौढा रूपलावण्यपेशलाः ॥ २७ ॥ वसंते मन्मथोपेताः महीं तां समुपागताः ॥ महीसारक्षेत्रवने तपंतं तप उत्तमम् ॥ २८ ॥ तं भार्गवमुनिं वीक्ष्य बिभ्युः सर्वाः सुरांगनाः ॥ तन्मध्ये चातिनिपुणा कनकांगीति विश्रुता॥२९॥ सुरांगनारत्नभूता सा साक्षाद्विश्वमोहिनी ॥ मन्मथस्य वसंतस्य सहायेन सुरांगना ॥ ३० ॥ नृत्यगीतादिनैपुण्यैर्मोहयामास भार्गवम् ॥ विचित्रं विष्णुमायाया यत्तच्छृणु समाहितः ॥ ३१ ॥ अजेया वैष्णवी माया योषिद्रूपा न संशयः ॥ वेदांतिन्न भार्गवस्याग्रे स्थाणुभूतस्य योगिनः ॥ ३२ ॥ अगायत महद्गीतं श्रवणानंददायकम् ॥ कनकांगी महाच्चित्रं कृष्णगीतमिमं परम् ॥ ३३ ॥ विस्मितस्तेन गीतेन सम्यगुन्मील्य लोचने ॥ आलोक्यास्यरसं किंचिन्मोहमाप मुनीश्वरः ॥ ३४ ॥ तदा ननर्त्त बहुधा कनकांगी सविभ्रमम् ॥ साभिप्रायं स्तनप्रांतं प्रदर्शितवती मुनेः ॥ ३५ ॥ गीतेन नृत्यमानायाः कनकांग्याः सुवर्चसः॥ लावण्यविभ्रमं चास्या विलोक्यातिमनोहरम् ॥ ३६ ॥ भार्गवोपि महायोगी स मन्मथवशं गतः ॥ मुदा रेमेथ तन्वंगी मुनिना भार्गवेण सा ॥ ३७ ॥ सम्यग्विचित्रसुरतैर्वसंते चित्र कानने ॥ कनकांग्या तया सार्धं संचरन्वनराजिषु ॥ ३८ ॥ भृष्ययोगस्तदा रेमे कांचित्कालं

महातपाः ॥ स चाप्सरोललामैषा रंजयंती मुनेर्मनः ॥ ३९ ॥ यत्त-
त्स्वर्गसुखं तस्य प्रददौ यज्ञसाधितम् ॥ भार्गवस्य मुनेः पत्नी गर्भमा-
धत्त सुंदरी॥४०॥तं भक्तिसारं योगीशं कनकांगी सुवर्चसम्॥विभवाब्दे
पुष्यमासे दशम्यां कृष्णपक्षके ॥ ४१ ॥ तुलालग्ने भक्तिसारो मघायां गु-
रुवासरे ॥ कनकांग्यां भार्गवस्य जज्ञे चक्रांशतो महान् ॥ श्रीदिव्य-
सूरिचरिते ह्यवतारोऽस्य गीयते ॥ ४२ ॥ सा गर्भमाधत्तमुनेश्च पत्नी
सुदर्शनांशेन तदानुविष्टम् ॥ पपात गर्भो भुवि पौषमासे मघाभि-
धाने महनीयसारे ॥ ४३ ॥ रहितावयवां दृष्ट्वा तत्पिंडाकृतिमद्भुतम् ॥
कनकांगी वने तत्र वेत्रवेण्वादिसंकुले ॥ ४४ ॥ निकुंजे सहसोत्सृज्य
ययौ स्वर्गं सुरांगना ॥ ततः स लज्जितः खिन्नस्तपःसंक्षयकारणात् ॥
भार्गवोपि मुनिश्रेष्ठस्तत्रान्यद्वनमाविशत् ॥ ४५ ॥ गर्भः स कालेन
विभिद्य पेशीं गतं गरुत्मांनिव डिंभरूपः ॥ स्तन्याभिलाषेण ततः क्षु-
धार्तः स्वैरं व्यरोदीद्विजनप्रदेशे ॥ ४६ ॥ लक्ष्मीकटाक्षवशतो भूदेवी
तमवर्द्धयत् ॥ तस्यावयवसंपत्तिः पिंडस्यासीत्ततः शनैः ॥ ४७ ॥
जीवप्रवेशोपि तदा रुरोद च शिशुर्महान् ॥ रुदंतं स्तन्यपानार्थं निकुंजे
वनगह्वरे ॥ ४८ ॥ भक्तिसारं विलोक्यैवं निर्हेतुककटाक्षतः ॥ महीसा-
रपुराधीशो भगवान् भक्तवत्सलः॥ ४९ ॥ वेदांतिज् श्रीजगन्नाथो मं-
गवल्लीमनोहरः ॥ तत्रागत्यार्द्रकृपया क्षुत्पिपासे निवार्य च ॥ ५० ॥
अपर्याप्तामृतं तस्य भक्तिसारस्य दुर्लभम् ॥ अत्यंतसुकुमारांगं दर्शयि-
त्वा स्वविग्रहम् ॥ ॥ ५१ ॥ आश्वास्य तं भक्तिसारं स्वधाम प्रत्यप-
द्यत ॥ एवं संवर्द्धितस्तेन भार्गवीयो ह्यवर्धत ॥ ५२ ॥ यदसह्यः सदा
विष्णोर्विश्लेषो ज्ञानिनां परम् ॥ तद्विश्लेषासहिष्णुः संस्तस्थौ तत्र
रुदन् भृशम् ॥ ५३ ॥ श्रीखड्गनामकः कश्चिद्वेत्रसंपुटकारकः ॥ उ-
पानद्गूढपादश्च लवित्रलगुडंधरः ॥ ५४ ॥ वेत्रादिहरणार्थाय तद्वनं
समुपाविशत् ॥ वेत्रवेण्वादिसंकीर्णे वने तत्र चचार सः ॥ ५५ ॥ त-

द्बालरोदनं श्रुत्वा तत्र गत्वांजसा तदा ॥ उद्यद्भानुनिभं दृष्ट्वा तं बालं संप्रहर्षितः ॥ ५६ ॥ अतिहर्षात्समादाय भक्तिसारं महौजसम् ॥ पत्न्याः पंकजवल्याश्च वेत्रसंपुटकारकः ॥ ५७ ॥ अनपत्यतयां तस्या ददौ हस्ते समाहितः ॥ श्रीदिव्यसूरिचरिते श्लोकोयं गीयते महान् ॥ ५८ ॥ नीत्वा गृहं भार्गवमाशु तावत्प्रादात्स पत्न्यै परिपोषणाय ॥ आवर्त्तयन्नानकदुंदुभिस्तं गोपीपुरे नंदकुले यथैव॥ ५९ ॥ सानपत्या-ह्यपत्यस्य लाभादत्यंतसंभ्रमा ॥ पुपोष पुत्रवात्सल्यं तस्मिन्विन्यस्य तं तदा ॥ ६० ॥ सा चाब्जवल्ली वेदांतिन् स्नेहस्नुतपयोधरा ॥ प्रददौ भक्तिसाराय स्तन्यं तत्पुत्रवत्सला ॥ ६१ ॥ यथा यशोदा कृष्णाय वेदांतिन् नंदगोकुले ॥ अविज्ञातस्तन्यपानरुचिश्चानुभवाद्धरेः॥६२॥न भार्गवो मनश्चक्रे स्तन्यपाने कदाचन॥ ब्रह्मानुभवसंजातरसानंदादितृप्तिमान् ॥६३॥ उदितादित्यवत्सम्यगवर्द्धत दिनेदिने ॥ सदा भगवत-स्तस्य गुणानुभवधारकः ॥ ६४ ॥ मलमूत्रादिरहितस्तस्थौ संत्यक्त-रोदनः॥त्यक्तवाग्व्यवहारश्च निवृत्ताध्यात्मिकादिकः ॥ ६५ ॥ प्रवर्द्ध-मानसर्वांगः परिपूर्णोऽभवन्मुनिः ॥ ६६ ॥ इति श्रीप्रपन्नामृते भट्टार्य-वेदान्तिसंवादे भक्तिसारावतारकथनं नामाष्टसप्ततितमोऽध्यायः॥७८॥

---

## एकोनाशीतितमोऽध्यायः ।

ततो महीसारपुराधिवासी प्राज्ञो महान्कश्चन शूद्रवृद्धः ॥ श्रुत्वाद्भुतं तस्य शिशोः प्रभावं द्रष्टुं समायात्तनयेन रिक्तः ॥१॥ प्राप्यालयं शूर्पकृतस्स वृद्धः सुक्काथितक्षीरमयोपहारः ॥ दृष्ट्वा शिशुं तत्र चतुर्थवंश्यो विसिस्मिये दिव्यमहो निदानम् ॥ २ ॥ श्रीदिव्यसूरिचरिते श्लोकद्वय-मुदाहृतम् ॥ चतुर्थवर्णस्तत्रस्थः कश्चित्प्राज्ञाभिधानकः ॥ ३ ॥ श्रुत्वातिमानुषं तस्य भार्गवीयस्य वैभवम् ॥ अत्यंतविस्मयो वृद्धः भार्यया सहितस्तदा ॥ ४ ॥ क्वथितं सत्पयः सम्यक् तत्समादाय भक्तितः ॥ तत्र गत्वांजसा बालमपश्यदमितौजसम् ॥५॥ पंचशतया-

त्मनस्तस्य शिशोरप्राकृतं महत् ॥ विलोक्य विस्मितोत्यंतं तत्क्षीरं च समर्प्य सः ॥ ६ ॥ बहुशः प्रार्थयामास पयःपानाय तं शिशुम् ॥ एवं संप्रार्थितस्तेन भक्तिसारः कृपावशात् ॥ ७ ॥ अपिबत्तत्पयः सम्यग्भक्तिसारो हि माधव ॥ एवं संप्रार्थितस्तेन कंचित्कालं दिने-दिने ॥ ८ ॥ तत्क्षीरमपिबद्भक्त्या तस्यानुग्रहकारकः ॥ स तयोर्वृद्ध-दंपत्योस्तन्मनोभावमंजसा ॥ ९ ॥ ज्ञात्वा तथा समाहूय व्याज-हार वचः शुभम् ॥ मत्पीतशेषं यत्क्षीरं तदिदं पिबतं युवाम् ॥ १० ॥ अपत्यलाभो भवतोर्भविष्यति न संशयः ॥ इत्युक्त्वा वृद्धदंपत्योः प्रददौ तत्पयस्तदा ॥ ११ ॥ तत्क्षीरपानमात्रेण तौ तदा वृद्धदंपती ॥ संप्राप्तयौवनौ स्निग्धौ बभूवतुरिवामरौ ॥ १२ ॥ ततो गर्भवती साध्वी दशमे मासि सुंदरी ॥ सा तेन सुषुवे पुत्रं भगवद्भक्तिपारगम् ॥ १३ ॥ भक्तिसारकटाक्षेण धीमंतं विदुरोपमम् ॥ विलोक्य पुत्रं संतुष्टः स तं प्राज्ञो महौजसम् ॥ १४ ॥ कणिकृष्ण इति ख्यातं नाम चक्रेऽस्य मंग-लम् ॥ कणिकृष्णः स बालोथ भक्तिसारार्द्रवीक्षणात् ॥ जग्राह सकला विद्यास्ततोभूद्भगवत्कविः ॥ १५ ॥ चकार नाम्ना कणिकृष्णमेनम-शिक्षयत्सर्वकलाश्च तात ॥ सोप्याचरन् भार्गवपादसेवां मुकुन्दभक्ति-श्रवणो बभूव ॥ १६ ॥ स भार्गवीयो भगवत्कटाक्षदयासुधास्वादनतृ-प्तचेताः ॥ समुत्थिताहारपयोभिलाषः कुले मुदावर्द्धत वेत्रिकाणाम् ॥ १७ ॥ विचक्षणो विश्वविमोहहेतोः कुलोचिताचारकलानुषक्तः ॥ पुण्ये महीसारपुरे विधाय विक्रीय शूर्पं विजहार योगी ॥ १८ ॥ आसप्त-वर्षं स्थित्वात्र वेत्रसंपुटकृद्गृहे ॥ ऋषिपुत्रो भक्तिसारो बाल्येन चतुर-स्तदा ॥ १९ ॥ अवर्त्ततान्नपानादिवर्जितः कृपया हरेः ॥ ततः स्वतो-न्नपानादिजाताभिलषितो महान् ॥ २० ॥ तस्माद्गृहाद्विनिर्गत्य संचरंस्तत्रतत्र च ॥ तीर्थयात्रापरो नित्यं कंचित्कालमवर्तत ॥ २१ ॥ अष्टांगयोगं संजज्ञे मनस्तस्य महात्मनः ॥ यज्जगत्कारणं वस्तु तद्ध्यानविषयं विदुः ॥ २२ ॥ तद्वस्तु कीदृशमिति तस्य चिंताभवत्तदा ॥

बहवः समयाः सन्ति लोके दृढतराः शुभाः ॥ २३ ॥ सम्यक्
प्रविश्य तेष्वाशु यज्जगत्कारणं परम् ॥ अन्वेष्टव्यं प्रयत्नेन सांप्रतं
सुदृढं मया ॥ २४ ॥ भक्तिसारो विनिश्चित्य स एवं मनसा तदा ॥
मतेषु तेषु सर्वेषु प्रविवेश महामतिः ॥ २५ ॥ शाक्योलूक्याक्षपा-
दाश्च कापिलश्च पतंजलिः ॥ एते बाह्यमताः प्रोक्तास्तान्सर्वान्स
व्यशोधयत् ॥ २६ ॥ मायावादं च शैवं च न्यायवैशेषिकौ तथा ॥
एते कुदृष्टिसमयाः भट्टप्राभाकरादयः ॥ २७ ॥ मतेष्वेतादृशेष्वेवं
सर्वेष्वन्येषु भक्तितः॥आलोड्यालोड्य बहुशस्तज्ज्ञात्वा तुच्छमित्यतः
॥ २८ ॥ परिबभ्राम वेदांतिन् सहस्राब्दांतमंजसा ॥ असारभूतांस्ता-
ञ्ज्ञात्वा समयानखिलांस्तदा ॥२९॥ ततः शैवमते धीमान् भक्तिसारो
विवेश सः ॥ शिववाक्याभिधानः संस्तन्मते बहुभक्तिमान् ॥ ३० ॥
ग्रंथान् शिवपरांश्चक्रे बहून् द्राविडभाषया॥शिव एव परं तत्त्वमिति मत्वा
मनः स्थिरम्॥३१॥निधाय तत्र वेदांतिंश्चचार विगतज्वरः॥शिववाक्यो-
न्यसमयांस्तृणीकृत्य महामनाः ॥३२॥ तेषां संभाषणस्पर्शदर्शनादिवि-
वर्जितः॥मौनव्रतपरो भूत्वा तद्भक्ताग्रेसरो महान् ॥ ३३ ॥ भक्तिसारस्य
वृत्तांतं निशम्य महदाह्वयः॥ तं शिक्षितुमियेषार्यो भगवत्कृपया तदा ॥
॥ ३४ ॥ शिववाक्यो महान्यत्र वर्त्तते शिवभक्तिमान् ॥ आजगामां-
जसा तत्र भगवान्महदाह्वयः ॥ ३५ ॥ धृतोर्ध्वपुंड्रः स महाल्लॅलाटे
भुजद्वये लक्षितशंखचक्रः ॥ पद्माक्षमालादिविशोभिकंठो ह्यलक्ष्यता-
दित्यसमानकांतिः ॥ ३६ ॥ स तं विलोक्यैव महाभिधानमग्रेसरं
ब्रह्मविदां महांतम् ॥ अपक्वचित्तो विमुखस्तदानीं शिवैकनिष्ठो भगव-
त्परस्य ॥ ३७ ॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे कणिकृष्णा-
वतारकथनं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥

## अशीतितमोऽध्यायः ।

ततः संचिन्त्य भगवान्महदाख्यो महामतिः ॥ तेन संभाषणं कर्तुं
कंचिद्धर्मं चकार सः ॥ १ ॥ तस्याश्रमस्य निकटे कंचिदाराममं-

जसा ॥ विधाय वृक्षानारोप्य तानधःशिरसस्तथा ॥ २ ॥ तेनच्छि-
द्रघटेनांभः समुद्धृत्यांभसां निधौ॥सिंचन्कृतालवालेषु दृढमौनो व्यति-
ष्ठत ॥ ३ ॥ शिववाक्यः स तं दृष्ट्वा प्रहसंस्तस्य चांतिकम् ॥ आ-
गत्य मतिमाञ्छीघ्रं तमवोचद्वचः शुभम् ॥ ४ ॥ किं त्वं भ्रांतो विष्णु-
दास किं कार्य्यं कृतवानसि ॥ तदंतरं समालभ्य महदाख्यस्तम-
ब्रवीत् ॥ ५ ॥ न भ्रांतोहं भवान् भ्रांतः सम्यग्घृदि विचारय ॥
शिववाक्यो महाख्यस्य प्रतिगृह्य वचस्तथा ॥ ६ ॥ शिवभक्तो विष्णु-
भक्तं भूयो वचनमब्रवीत् ॥ अनेन भ्रांतकार्येण भ्रांतः प्रत्यक्षतो
भवान् ॥ ७ ॥ अहं भ्रांतः कथमिति मृषा वाक्यं प्रभाषसे ॥ निश-
म्य तद्वचः सम्यक्तमभाषत सत्तमः ॥ ८ ॥ यज्जगत्कारणं वस्तु
तदज्ञानाद्विमोहितः ॥ अजानानो भ्रांतवत्त्वं परिभ्रमसि वै किल ॥९॥
अतो ह्यज्ञाततत्त्वार्थो भवान्नास्त्यत्र संशयः ॥ अहं तु ज्ञाततत्त्वार्थः
स्थिरधीरेकधर्मवान् ॥ १० ॥ त्वं वा भ्रांतो ह्यहं भ्रांतः सम्यगत्र
विचार्य्यताम् ॥ आकर्ण्य तद्वचस्तस्य शिववाक्यो महामतिः
॥ ११ ॥ तत्त्वप्रियो महाविद्वान्महदाख्यमभाषत ॥ कथं त्वं ज्ञातत-
त्त्वार्थो नाहमज्ञाततत्त्वकः ॥ १२ ॥ अहमेव हि तत्त्वार्थज्ञानवान्नात्र
संशयः ॥ तदेव ते प्रवक्ष्यामि सांप्रतं शृणु तत्त्वतः ॥ १३ ॥
यज्जगत्कारणं वस्तु वेदान्तप्रतिपादितम् ॥ व्यासादिमुनिनिर्णी-
तं हरब्रह्मादिवंदितम् ॥ १४ ॥ परात्परतरं वस्तु स एव परमः शिवः ॥
शिवादन्यत्परं नास्तीत्येवं हृदि निबोध हि ॥ १५ ॥ प्रतिगृह्य वच-
स्तस्य प्रहृष्टो महदाह्वयः ॥ भक्तिसारं विलोक्यैवं जगाद वचनं
हितम् ॥१६॥ यत्त्वयोक्तमिदं वाक्यं तत्सत्यं साधुसंमतम् ॥ न विद्य-
तेत्र विशयो भक्तिसार महामते ॥ १७ ॥ यत्तत्परात्परं वस्तु
सूक्ष्मबुद्ध्या विचार्य्यताम् ॥ अरक्ष्यं यदनुत्पन्नमन्येषामपि रक्षकम्
॥ १८ ॥ तज्जगत्कारणं वस्तु तच्च वेदांतसंमतम् ॥ परात्परतरं

वस्तु तदेवेत्यवधारय ॥ १९ ॥ उत्पत्तिः श्रूयते तस्य शिवस्य विदुषां वर ॥ सर्वे देवाः सपितरो ब्रह्माद्याश्चांडमध्यगाः ॥ २० ॥ विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः ॥ पुराणे भारते वेदे वेदांते च स्मृतावपि ॥ २१ ॥ स च संरक्षितस्तेन विष्णुना बहुधा किल ॥ त्रिप्रकारवचांस्यार्ये त्रीण्येव भवतो हितम् ॥ २२ ॥ शिववाक्यं प्रवक्ष्यामि सांप्रतं शृणु तत्त्वतः ॥ प्रसिद्धास्त्रय एवैते विष्णुब्रह्मशिवाः किल ॥ २३ ॥ ते त्रयस्त्रिविधा देवाः सत्त्वराजसतामसाः ॥ शुद्धसत्त्वमयो विष्णुर्ब्रह्मा राजससंभवः ॥ २४ ॥ तमोगुणमयो रुद्र इत्येषा शास्त्रपद्धतिः ॥ को वा मोक्षप्रदस्तेषां त्वयैवात्र विचार्य्यताम् ॥ २५ ॥ एकेन पादकमलं शिववाक्यप्रसारितम् ॥ एकेन क्षालितं भक्त्या तत्पादकमलं किल ॥ २६ ॥ तत्पादतोयमेकेन मूर्ध्नि सद्भक्तितो धृतम् ॥ तेषां त्रयाणां को विद्वन् महानिति विचार्य्यताम् ॥ २७ ॥ यन्मयोक्तमिदं सम्यक् सूक्ष्मबुद्ध्या विचार्यताम् ॥ तस्यतस्याकृतिः सम्यक् परतत्त्वं प्रवक्ष्यते ॥ भवितायं न भविता यत्तत्तत्त्वमिति स्फुटम् ॥ २८ ॥ शिवाकृतिर्भस्मसुदिग्धगात्रा चर्मांबरा ब्रह्मकपालमाला ॥ धृताक्षमाला पितृकाननस्था जटाधरा दिग्वसना किलेयम् ॥ २९ ॥ ब्रह्माकृतिः स्रुक्स्रुवदर्भहस्ता सुतीर्थसंपूर्णकमंडलुश्च ॥ धृताक्षमाला कृतवेदपाठा सदा समाराधितरंगधामा ॥ ३० ॥ अस्तीति किंचिन्महनीयतत्त्वं तद्ध्यायती वेषमितो विभाति ॥ अप्राप्तकामार्थपरादिकेच्छा यस्याकृतिं तां विधिरुद्रयोश्च ॥ ३१ ॥ विष्ण्वाकृतिश्चंदनभूषितांगा पार्श्वद्वये शोभितदिव्यनारी ॥ भुजांतरस्था महनीयलक्ष्मीः किरीटमंजरिमुखादिभूषा ॥ ३२ ॥ मंदारमालांचितकेशबंधा पीतांबरालंकृतनीलगात्रा ॥ अवाप्तकामैव विभाति सैषा विष्ण्वाकृतिस्तां विबुधार्य्य पश्य ॥ ३३ ॥ विरंचिरुद्रयोः स्वामी भगवान्विष्णुरव्ययः ॥ यदायदा च संप्राप्तमनिष्टमसुरैस्तयोः ॥ ३४ ॥ अंजसापोह्य तत्सर्वमिष्टप्राप्तिं ददौ

किल ॥ सर्वलोकप्रसिद्धं हि यदेतच्छास्त्रसंमतम् ॥ ३५ ॥ आलोड्य सर्वशास्त्राणि विचार्य्य च पुनःपुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ ३६ ॥ एवं शतसहस्राणि प्रमाणानि यथाविधि ॥ सत्तर्कसहितान्येत्र सर्वज्ञत्वान्महामतिः ॥ ३७ ॥ तानि वादमुखेनैव प्रतिपाद्यार्य्यसंमतम् ॥ पराशरादिवत्सम्यगकरोत्तत्त्वनिर्णयम् ॥३८॥ संतुष्टस्तेन वाक्येन स सम्यक्छिन्नसंशयः ॥ भक्तिसारो महाख्यस्य शिष्यत्वमकरोत्तदा ॥ ३९ ॥ स तस्मै भक्तिसाराय विष्वक्सेनकृपावशात् ॥ तापादिपंचसंस्कारांश्चकार महदाह्वयः ॥ ४० ॥ सम्यगष्टांगयोगं च तद्ध्यानविषयं महत् ॥ यज्जगत्कारणं वस्तु तत्सर्वमुपदिश्य सः ॥ ४१ ॥ कृतकृत्यो महायोगी मुदं चक्रे महात्मने ॥ यद्दिव्यात्मस्वरूपं च ज्ञानशक्त्यादिका गुणाः ॥ ४२ ॥ तयोः प्रकाशकं यत्तद्दिव्यमंगलविग्रहम् ॥ किरीटनूपुरांतादिदिव्यभूषणकानि च॥४३॥ शंखचक्राद्यायुधानि लक्ष्मीभूम्यादिकाः स्त्रियः ॥ एतैर्विराजमानं च भगवंतं तमच्युतम् ॥४४॥ नित्यकैंकर्य्यनिरतैर्नित्यमुक्तैश्च सेवितम् ॥ तस्य भोगविभूत्याख्यं यन्महत्परमं पदम् ॥ ४५ ॥ संप्रकाश्य तु शास्त्रेण भक्तिसाराय भक्तितः ॥ स तेनाष्टांगयोगेन साक्षात्कारमकल्पयत् ॥ ४६ ॥ जीवप्रधानकालात्मलीलासृष्ट्यादिकांश्च तान् ॥ सद्वारकाद्वारकाभ्यां सर्वं सम्यगबोधयत् ॥ ४७ ॥ तयोर्विभूत्योर्यः कर्त्ता स एव भगवान्हरिः ॥ विभूतिद्वयनाथस्य तस्य विष्णोर्जगत्पतेः ॥ ॥४८॥विधाता विश्वसृड् ब्रह्मा नाभिपद्मादजायत ॥ ज्येष्ठपुत्रो महाज्ञ ज्ञे विधातुस्तस्य शंकरः ॥ ४९ ॥ इत्येवं लोकशिक्षार्थं भक्तिसारो महायशाः ॥ नारायणपरान् ग्रथांश्चक्रे द्राविडभाषया ॥ ५० ॥ भक्तिसारेण सुमहान् महदाख्यः सुपूजितः ॥ तीर्थयात्रापरो धीमान् प्रतस्थे दिशमुत्तराम् ॥५१॥ भक्तिसारोपि वेदांतिन्नेवं यत्नेन भूयसा ॥ विपर्ययात्मकं ज्ञानं यच्च तत्संशयात्मकम् ॥ ५२ ॥ उत्सृज्य दूरतः

सम्यगुभयं तत्त्वदर्शनात् ॥ तस्मादितरसिद्धांतनिराकरणपूर्वकम्
॥ ५३ ॥ स्वमतस्थापनं चक्रे महदाख्योपदेशतः ॥ आलोडच सर्व-
शास्त्राणि विचार्य्य च पुनःपुनः ॥ ५४ ॥ इदमेकं सुनिष्पन्नं ध्येयो
नारायणः सदा ॥ योगीश्वरं जगन्नाथं जिष्णुं विष्णुं श्रियः पतिम्॥५५॥
पद्मनाभं विशालाक्षं चिंतयामि जगत्पतिम् ॥ इत्येवं पुंडरीकाक्षं जग-
तः कारणं परम् ॥ ५६ ॥ श्रियः पतिं जगन्नाथं सर्वांतर्बहिरास्थितम्॥
हृत्पुंडरीके योगेन तेनाष्टांगेन संततम् ॥ ५७ ॥ ध्यायन् कृतार्थो
वेदांतिन् पुण्ये कैरविणीतटे ॥ उवास तत्र योगींद्रः यः सप्तशतवत्सरान्
॥ ५८ ॥ एवं महान् सर्वमतान्विशोध्य ज्ञात्वार्थतत्त्वार्थमचंचलात्मा॥
महाख्यपदांबुजभृंगराजः परं विरेजे भगवत्पराश्रयः ॥ ५९ ॥ तत्त्वार्थ-
सारं निगमांतशास्त्रनिर्णीतमर्थं तमिमं महान्तम्॥ श्रुत्वानिशं यो हृदयं
दधाति नोपैति मृत्युं स भवेन्मुमुक्षुः ॥ ६० ॥ इति प्रपन्नामृते भट्टार्य-
वेदान्तिसंवादे महदाख्यतत्त्वोपदेशकथनं नामाशीतितमोऽ-
ध्यायः ॥ ८० ॥

---

## एकाशीतितमोऽध्यायः ।

अस्मद्यतिः प्रणम्याथ भट्टार्यं भगवत्प्रियम् ॥ भूयः पप्रच्छ वै धी-
मान् भक्तिसारस्य वैभवम् ॥ १ ॥ कति वर्षाणि भूलोके स्थितवान्
योगिराडयम् ॥ यद्यच्चरित्रं सुमहद्विचित्रं ब्रूहि मे गुरो ॥ २ ॥ तस्य
तद्वचनं श्रुत्वा श्रीरंगेशपुरोहितः ॥ प्रणम्य भक्तिसाराय वेदांतिनमथा-
ब्रवीत् ॥ ३ ॥ श्रूयतामभिधास्यामि भक्तिसारस्य वैभवम् ॥ अत्यद्भु-
तमिदं पुण्यं श्रोतॄणामघनाशनम् ॥ ३ ॥ पुण्ये महाकैरविणीतटेस्मिन्
सद्भक्तितोसौ भगवद्गुणानाम् ॥ कुर्वंस्तदैवानुभवं महात्मा न्यषीदता-
दित्यसमानकांतिः ॥ ५ ॥ ततस्तदा शैलसुतासमेतस्त्रिशूलपाणिर्वृ-
षभाधिरूढः ॥ अलक्ष्यत व्योमतले स्वदीप्त्या प्रकाशयन् सर्वदिशो
महात्मा ॥ ६ ॥ व्योमचारिणमायांतं तं दृष्ट्वा शंकरंतदा ॥ अस्पृश्यामेव

तच्छायां ज्ञात्वा परमवैदिकः ॥ ७ ॥ भक्तिसारस्तदान्यत्र विवेशावरणस्थले ॥ तौ तदा दंपती दृष्ट्वा भक्तिसारविचेष्टितम् ॥ ८ ॥ निवार्य्य गमनं तत्र विस्मितौ तस्थतुः क्षणम् ॥ विलोक्य पार्वती नाथं शंकरं प्रत्यभाषत ॥ ९ ॥ कोयं कंथाधरो रुद्र प्रभावस्तस्य कीदृशः ॥ ज्ञातुमिच्छामि भवते रोचते यदि गम्यताम् ॥ १० ॥ निशम्य वाक्यं पार्वत्याः शंकरस्तामभाषत ॥ काश्चिन्महानुभावोयं भगवद्भक्तिपारगः ॥ ११ ॥ न च मां गणयत्यद्धा मत्तः कार्य्यं न तस्य हि ॥ सा तद्वचनमाकर्ण्य प्रेम्णा भर्तारमब्रवीत् ॥ १२ ॥ तथाविधमपि द्रष्टुं तमिच्छामि हरिंप्रियम् ॥ अंगीकृत्य वचस्तस्याः पार्वत्याः शंकरः स्वयम् ॥ १३ ॥ आकाशाद्भूतलं प्राप्य पार्वत्या सहितोंजसा ॥ भक्तिसारस्य निकटे तस्थौ सूर्याग्निवर्चसः ॥ १४ ॥ उवाच स शिवस्तं वै भक्तिसारं हारिंप्रियम् ॥ आगतं म विजानीहि तवाभीष्टवरप्रदम् ॥ १५ ॥ भक्तिसारस्तु भगवांस्तूष्णीं स्थित्वा किल स्वयम् ॥ पुरःस्थितमदृष्ट्वैव नेत्राभ्यामपि शंकरम् ॥ १६ ॥ सूत्राणि सूच्या कंथायां सम्यक्संधारयान्स्थितः ॥ क्षणमात्रं स्थितस्तत्र पार्वत्या सह शंकरः ॥ १७ ॥ उदासीनं स्थितं वीक्ष्य भक्तिसारं वचोब्रवीत् ॥ पुरः स्थितमदृष्ट्वैव मामलक्ष्यं विधाय च ॥ १८ ॥ अपूजयित्वा पूजार्हं देवानामधिपं शिवम् ॥ यद्युदासीनवद्योगिन् वर्तसे तदिहोच्यताम् ॥ १९ ॥ भक्तिसारो महेशस्य वचः श्रुत्वा तमब्रवीत् ॥ त्वत्तः प्रयोजनं नास्ति किंचिदप्यगजाधिप ॥ २० ॥ अतो युवां समालोक्य तूष्णीं भूतोस्मि निश्चलः ॥ तदुपश्रुत्य वचनं निजगाद स शंकरः ॥ २१ ॥ वरं प्रदातुं योगीश तवाहं समुपागतः ॥ दास्यामि दुर्लभमपि यदीष्टं वृणु सत्वरम् ॥ २२ ॥ सर्वार्थनिस्पृहो योगी श्रुत्वा शंकरभाषितम् ॥ सर्वार्थदानयोग्यत्वात्सचैवं प्रत्यभाषत ॥ २३ ॥ नास्ति मे वाञ्छितं रुद्र मास्तु युष्मद्वरं ततः ॥ स तदाकर्ण्य रुद्रोपि

व्याजहार पुनर्वचः ॥ २४ ॥ मद्दर्शनं नृणां लोके न कदाचिद्वृथा-
भवत् ॥ तस्मान्मत्तो वरः सम्यक् संप्रार्थ्यस्ते शुभो यतः ॥ २५ ॥
एवं संप्रार्थितस्तेन भक्तिसारो महात्मना ॥ ययाचेभीष्टदातारमभी-
ष्टं हास्यकारणम् ॥ २६ ॥ यथा गच्छंत्यरुद्धेन सूचीमार्गेण तंतवः ॥
तथैव मे वरं देहि सर्वाभीष्टप्रदायक ॥ २७ ॥ एवं हास्यकरं
वाक्यं निशम्य कुपितस्तदा ॥ अनंगमिव तं कर्तुमि-
इयेषाथ त्रिलोचनः ॥२८॥ कुपितस्यास्य संजज्ञे निर्दहन्सर्वतो दिशः॥
ललाटलोचनादग्निर्युगांताग्निरिवोल्बणः ॥ २९ ॥ भूम्यंतरिक्षे चाकाशे
दिशः सर्वास्तथावृणोत् ॥ ज्वालामालासहस्रेण स महोग्रेण तं दहन्
॥ ३०॥ कल्पाग्निनिभमत्युग्रं रौद्रमग्निं विलोक्य सः॥ पादांगुष्ठस्थितं
चैकं नेत्रमुन्मीलितं व्यधात् ॥ ३१ ॥ दक्षिणांगुष्ठनेत्राग्निकोटिसंवर्त्त-
काग्निवत् ॥ उदभूदुज्ज्वलं तस्य स शंभुं प्रत्यपद्यत ॥ ३२ ॥
अत्यर्कानलदीप्तं तत्कोटिवैश्वानरप्रभम् ॥ अत्यद्भुतं समालोक्य शंभु-
र्विस्मयमागतः ॥ ३३ ॥ वेदांतिन् भगवद्भक्तेः प्रभावः केन वर्ण्यते ॥
खद्योतप्रायमभवत्तेजस्तच्छांभवं महत् ॥ ३४ ॥ भक्तिसारपदांगुष्ठने-
त्राग्नेर्महतस्तदा ॥ उत्कृष्टतेजसा तेन दह्यमानस्त्रिलोचनः ॥ ३५ ॥
पार्वत्या सहितो रुद्रस्तत्तेजः सोढुमक्षमः ॥ पुष्कलावर्तकान्मेघान्प्र-
लयाग्निनिवारकान् ॥ ३६ ॥ आनयामास सहसा तदग्निशमनाय च ॥
आकाशं निबिडं सम्यङ् मेघसंघः समावृणोत् ॥३७॥ महद्विद्युद्गणो-
पेतो सानिलोत्यंतगर्जितः ॥ महाकरिकरोदग्रवर्षधाराभिरंजसा॥३८॥
तमग्निं शमयामासुर्महांतं प्रलयांबुदाः ॥ स ताभिर्वर्षधाराभिर्हन्यमानो
न विव्यथे ॥ ३९ ॥ महाभागवतस्तत्र वेदांतिन्नचलो यथा ॥
भगवद्ध्यानसंजातसुखविस्मृतबाह्यजम् ॥४०॥ तं दृष्ट्वा विस्मितोत्यं-
तमचलं पर्वतोपमम् ॥ स तस्य प्रददौ नाम भक्तिसार इति श्रुतम्
॥ ४१ ॥ बहुशः श्लाघयित्वाथ तदप्राकृतवैभवम् ॥ विधाय सशिरः-

कंपं पार्वत्या सह शंकरः ॥४२॥ दृष्टप्रभावो भगवान्सतीं वाचमुवाच ह ॥ अम्बरीषेण दुर्वासा यथा प्रागवमानितः ॥ ४३ ॥ तथाधुनाहं गिरिजे भक्तिसारेण निर्जितः ॥ अतो भागवता देवि त्रैलोक्येपि सुदुर्जयाः ॥ ४४ ॥ इत्येवं वैभवं तस्य वेदातिन् श्लाघयन् मुहुः ॥ कैलासं पर्वतश्रेष्ठं जगाम प्रमथाधिपः ॥ ४५ ॥ भक्तिसारोपि तत्रैव योगेन भगवत्परः ॥ उवास भगवान्कालं कंचिदाश्चर्यवैभवः ॥ ४६ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे भक्तिसारेण रुद्रपराजयो नामैकाशीतितमोऽध्यायः ॥ ८१ ॥

---

## द्व्यशीतितमोऽध्यायः ।

व्याघ्रारूढस्ततः कश्चिच्छुक्तिहाराभिधानकः ॥ आसीद्व्योमचरः सिद्धनायको लोकविश्रुतः ॥ १ ॥ स कदाचित्समारुह्य व्याघ्रमंबरवर्त्मनि ॥ चचाराव्याहतगतिः पूजितो निखिलैः सुरैः ॥ २ ॥ तस्य योगप्रभावेण व्याघ्रो रुद्धगतिर्दिवि ॥ न समर्थोभवद्गंतुं तमुल्लंघ्यातितेजसम् ॥ ३ ॥ तं निश्चलगतिं दृष्ट्वा व्याघ्रं सिद्धेश्वरो महान् ॥ तिर्यगूर्द्ध्वं दिशः सर्वास्ततोधो ददृशे महः ॥ ४ ॥ योगारूढं महात्मानं तं भूम्यां समवस्थितम् ॥ विलोक्य विस्मितोत्यंतं व्याघ्रादुत्तीर्य भूतले ॥ ५ ॥ तदंतिकं समागत्य व्याजहार वचः शुभम् ॥ कंथां त्यजस्व भद्रं ते किमियं योगिपुंगव ॥ ६ ॥ कवचं धारयाद्येदं यद्दिव्यपटनिर्मितम् ॥ दास्याम्याशु गृहाणार्य्य प्रीतस्तेहं प्रभावतः ॥७॥ इत्युक्त्वा भक्तिसाराय सिद्धोदात्कवचं तदा ॥ निषिध्य वै तत्कवचं भक्तिसारस्तदर्पितम् ॥ ८ ॥ माणिक्यरंजितं दिव्यं कवचं द्युमणिप्रभम् ॥ विधाय सत्वरं सम्यक् स्वसंकल्पेन तत्क्षणम् ॥ ९ ॥ शुक्तिहाराय सिद्धाय दर्शयामास योगिराट् ॥ तद्दिव्यकवचं दृष्ट्वा लज्जितः शुक्तिहारकः ॥ १० ॥ स्वकंठमणिमालां तां समादायाशु भक्तितः ॥ अक्षमालां कुरुष्वेति भक्तिसाराय वै ददौ ॥ ११ ॥ भक्तिसारः स्वकंठस्थतुलसीपद्ममालि-

काः ॥ आदाय सत्वरं तस्मै पश्यपश्येत्यदर्शयत् ॥ १२ ॥ स विलोक्याथ ताः सर्वा ह्यनर्घ्यमणिमालिकाः ॥ सविस्मयः शुक्तिहारो व्याजहार वचः शुभम् ॥ ॥ १३ ॥ महानुभावः परिपूर्णकामः सिद्धेश्वरो निर्जितसर्वविघ्नः ॥ तस्मादहं जेतुमिमं समर्थो नैवास्मि लोके कतमः समर्थः ॥ १४ ॥ श्लाघयित्वा ततः सम्यग्भक्तिसारं महौजसम् ॥ यथागतं ययौ सिद्धो व्याघ्रारूढो महायशाः ॥ १५ ॥ ततः कौंकणसिद्धाख्यो रसवादकुतूहली ॥ सम्यक्तद्वैभवं श्रुत्वा कश्चिदभ्येत्य संभ्रमात् ॥ १६ ॥ प्रददौ भक्तिसाराय गुटिकां रसनिर्मिताम् ॥ विलोक्य तां भक्तिसारस्तं कौंकणमथाब्रवीत् ॥ १७ ॥ तया गुटिकया सिद्ध किं कार्यं संभविष्यति ॥ तन्निशम्याथ सिद्धेशो भक्तिसारमभाषत ॥१८॥ अस्याः संस्पर्शनादेव लोहं भवति कांचनम् ॥ न च कस्यापि देयेयं प्राणवद्रक्षिता मया ॥ १९ ॥ भवते महते दत्ता रक्षणीया त्वया तथा ॥ तत्सिद्धवचनं श्रुत्वा तां निराकृत्य योगिराट् ॥ २० ॥ मर्दयित्वा स्वहस्तेन स्वदेहमृदमुत्थिताम् ॥ गुटिकां तां विधायाशु कोंकणाय प्रदाय च ॥ २१ ॥ अस्याः संस्पर्शनादेव शिला भवति कांचनम् ॥ इत्येतत्सिद्धवर्याय महिमानं तदूचिवान् ॥ २२ ॥ वेदांतिस्तत्परीक्षार्थं कोंकणः सहसा तदा ॥ कस्मिंश्चित्पर्वते तत्र तां चिक्षेप तदर्पिताम् ॥ २३ ॥ गुटिकायास्तदा तस्याः स्पर्शमात्रेण पर्वतः ॥ बभूव कांचनः श्रीमान् महामेरुरिवोज्ज्वलः ॥ २४ ॥ स कांचनगिरिं दृष्ट्वा कोंकणोत्यंतविस्मयः ॥ भक्तिसारं प्रणम्याथ कृतार्थः प्रययौ तदा ॥ २५ ॥ ततो गुहांतराविष्टो भक्तिसारो महायशाः ॥ अष्टांगेनैव योगेन कंचित्कालमतिष्ठत ॥ २६ ॥ सरोभिधानो भूताख्यो महदाख्यश्च ते त्रयः ॥ चरित्वा निखिलान्देशांस्तद्देशं स्वेच्छयागताः ॥ २७ ॥ अव्याकृतं दिव्यतेजस्तदपश्यन् महत्तरम् ॥ ज्ञानदृष्ट्या ततस्तच्च विचार्यं मतिवां-

न्छया ॥ २८ ॥ गुहायामगमंस्तत्र भक्तिसारदिदृक्षया ॥ भक्तिसारः स तान्दृष्ट्वा योगिनो भगवत्परान् ॥ २९ ॥ यथार्हं पूजयामास प्रत्युत्थानाभिवादनैः ॥ संपूजितास्ततस्तेन कृतासनपरिग्रहाः ॥३०॥ सुखोपविष्टं तं कृत्वा भक्तिसारं वचोब्रुवन् ॥ सुखेन वर्तते ब्रह्मन् भार्गवात्मज किं भवान् ॥ ३१ ॥ कश्चिदष्टांगयोगोयमविच्छिन्नगतिः किल ॥ तेषां तद्वचनं श्रुत्वा भक्तिसारोऽभ्यभाषत ॥३२॥ महात्मनां हि भवतां कृपया देशिकोत्तमाः ॥ कदाचिन्न्यूनता नास्ति दासभूतस्य सर्वथा ॥ ३३ ॥ एवं कुशलसंप्रश्ना ह्यन्योन्यं भगवत्पराः ॥ कृतान्योन्यपरिष्वंगाः पुलकांकितविग्रहाः ॥ ३४ ॥ आनंदबाष्पनयनाः कृतान्योन्याभिवादनाः ॥ क्षीरवत्क्षीरसंमिश्रं मधुवन्मधुमिश्रितम् ॥ ३५ ॥ चत्वारः सहिताश्चैते भगवद्ध्यानतत्पराः ॥ अष्टांगेनैव योगेन किंचित्कालं महौजसः ॥३६॥ गुहायां न्यवसंस्तत्र वेदांतिस्ते यथासुखम् ॥ निवृत्तयोगास्ते सर्वे चत्वारो योगिपुंगवाः ॥ ३७ ॥ गुणानुभवकैंकर्य्यनिरता ह्यभवंस्ततः ॥ अनुज्ञातास्ततस्तेन सरोयोग्यादयस्त्रयः ॥ ३८ ॥ पृथ्वीसंचरणार्थाय निर्ययुर्भगवत्पराः ॥ ग्रामैकरात्रयो धीरा मौनव्रतपरायणाः॥३९॥सहस्रत्रितयें चैव त्रिशतं पंचविंशतिम्॥वत्सराणां विधायाशु भूसंचारं गतक्लमाः ॥ अवापुर्विष्णुसालोक्यं देहलीनगरे त्रयः ॥४०॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे भक्तिसारप्रभावकथने सरोयोग्यादीनां वैकुंठावाप्तिर्नाम द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

---

## त्र्यशीतितमोऽध्यायः ।

स भार्गवात्मजो धीमान् भक्तिसारोथ योगिराट् ॥ स्वावतारस्थलं प्राप महीसारपुरं महत् ॥ १ ॥ तत्र श्वेतमृदं सम्यग् धारणार्थं विचार्य सः ॥ तस्याश्चालाभतो योगी चिंतामाप दुरत्ययाम् ॥ २ ॥ ततो भक्तपराधीनो वेंकटेशो दयानिधिः ॥

तत्रागत्यांजसाप्येवमवोचद्भार्गवात्मजम् ॥ ३ ॥ यथोक्तकारिणः कांच्यां सरोयोगिसुजन्मभूः ॥ मृदा तत्रत्यया कार्यमूर्ध्वपुंड्रस्य धारणम् ॥ ४ ॥ तदंगीकृत्य वचनं भक्तिसारः श्रियः पतेः ॥ तत्र गत्वा मृदं सम्यगादाय स तया तदा ॥ ५ ॥ धृतोर्ध्वपुंड्रो भूसारक्षेत्रमागत्य योगिराट् ॥ जगन्नाथं तत्र नत्वा मंगवल्लीं मनोहराम् ॥ ६ ॥ कंचित्कालमुवासात्र तस्मादष्टांगयोगतः ॥ ततः सत्यव्रतक्षेत्रे नित्यवासपरोभवत् ॥ ७ ॥ यच्च सत्यव्रतन्नाम क्षेत्रं पापविनाशनम् ॥ पुण्यक्षेत्रेषु सर्वेषु तस्यैव श्रैष्ठ्यमीरितम् ॥ ८ ॥ शयानः शेषपर्यंके कुंदेंदुधवलप्रभे॥फणारत्नसहस्रांशुसहस्रफणविस्तृते ॥९॥ नीलजीमूतसंकाशः पद्मपत्रनिभेक्षणः ॥ सेव्यमानो विशालाक्ष्या श्रिया कमलहस्तया ॥ ॥ १० ॥ धरण्या च सुतन्वंग्या धाता विश्वस्य विश्वभुक् ॥ यथोक्तकारी यत्रास्ते भगवान् विष्णुरव्ययः ॥ ११ ॥ स तं प्रणम्य सद्भक्त्या भगवंतं श्रियः पतिम् ॥ सरोयोगिसरस्तीरे ध्यायन्हरिपदांबुजम् ॥ ॥ १२ ॥ एतेनाष्टांगयोगेन यः सप्तशतवत्सरान् ॥ उवास भगवद्भक्तो योगिराड् भार्गवात्मजः ॥१३॥ काणिकृष्णस्तदा धीमान् भक्तिसारमशिश्रियत् ॥ भगवत्प्रवणस्तेन कणिकृष्णो महानभूत् ॥ १४ ॥ तत्रत्या स्थविरा काचिद्योगयुक्तस्य योगिनः ॥ शुश्रूषामकरोद्भक्त्या भक्तिसारस्य नित्यशः ॥ १५ ॥ सम्यक् सामार्जयित्वा च गोमयेनोपलिप्य च ॥ रंगवल्ल्यादिकं चक्रे योगस्थानं दिनेदिने ॥ १६ ॥ तस्याः स तेन संतुष्टो भगवान् भार्गवात्मजः ॥ वृद्धायास्तन्मनोभीष्टं दातुकामोभ्यभाषत ॥ १७ ॥ कैंकर्येणाधुना तेन संतुष्टो जरठे तव ॥ वरदोहं प्रदास्यामि वरं वरय संमतम् ॥ १८ ॥ तस्य तद्वचनं श्रुत्वा भक्तिसारस्य मंगलम् ॥ संतुष्टा जरठा सैवं ययाचेभीष्टमादरात् ॥ १९ ॥ जरया पीडिता स्वामिन्नशक्ता गमनागमे ॥ यौवनं देहि मे नित्यं यथा चारुसरसा भवेत् ॥ २० ॥ अंगीकृत्य

वचस्तस्या भगवान् भार्गवात्मजः ॥ प्रेमार्द्रदृष्ट्या जरठां तामपश्यत्तथैव च ॥ २१॥ भक्तिसारकटाक्षेण सर्वाभीष्टप्रदायिना ॥ देवांगनेव सा वृद्धा बभौ संजातयौवना ॥ २२ ॥ तदा वल्लभराजाख्यः कांचीदेशाधिपो महान् ॥ जिताप्सरोवयोरूपां स तां भूलोकसुन्दरीम्॥२३॥ विलोक्य मन्मथाविष्टो बभूव चलितेंद्रियः ॥ स तां संप्रार्थयामास सुन्दरीं मदनातुरः ॥२४॥ प्रियाभरणवस्त्रादीन् दापयित्वा प्रयत्नतः ॥ बहुशः प्रार्थिता तेन सा राज्ञा लोकसुन्दरी ॥ २५ ॥ तस्याग्रमहिषी राज्ञो बभूवान्यान्विहाय सा ॥ तान् भोगान् मानुषान् दिव्यांस्तया सार्द्धं महीपतिः ॥ २६ ॥ बुभुजे दिव्यसुन्दर्या वल्लभो देवसंपदाम् ॥ विलोक्य यौवनं स्वीयं क्षीयमाणं दिनेदिने ॥२७॥ जरां संवर्द्धमानां तां स्वदेहे भृशदुःखितः॥ तां नित्ययौवनां दृष्ट्वा वल्लभो लोकसुन्दरीम ॥ २८ ॥ स राजा विस्मितः प्राह महिषीमजितस्मरः ॥ केन संपादितं सुभ्रूस्तवेदं नित्ययौवनम् ॥ २९ ॥ भूम्यामनित्यं सर्वेषां यौवनं किल सुन्दरि ॥ तत्रापि तद्विशेषेण योषितां क्षणभंगुरम् ॥ ३० ॥ शुक्लपक्षे चन्द्रमसः कला इव दिनेदिने॥नित्यमप्रतिमं दिव्यं वर्धते तव यौवनम ॥ ३१ ॥ कृष्णपक्षे चन्द्रमसः कला इव दिनेदिने ॥ मदीयं यौवनं बाले विनश्यति किलाधुना ॥ ३२ ॥ तवेव यौवनप्राप्तिर्मम कस्माद्भविष्यति ॥ त्वत्प्रियस्याब्जनयने ब्रूहि तत्कारणं प्रिये॥३३॥तदाकर्ण्य वचो राज्ञः सुंदरी तमभाषत ॥ यथोक्तकारिणस्तस्य कांच्यामत्रैव भूमिप ॥ ३४ ॥ विष्णोर्भगवतस्तस्य संन्निधौ योगिपुंगवः ॥ भक्तिसाराभिधो धीरो दयालुर्भार्गवात्मजः ॥ ३५ ॥ बहुकालं मया भक्त्या संम्यक् शुश्रूषितो महान् ॥ संतुष्टेनैव मे दत्तं जरठायै सुयौवनम् ॥ ३६ ॥ यद्यौवनं समालोक्य सुतरां मोहितो भवान् ॥ भवते यौवनप्राप्तौ तमुपायं ब्रवीम्यहम् ॥ ३७ ॥ भक्तिसारः पूर्णकामः स तु सर्वार्थनिस्पृहः ॥ भक्त्या शुश्रूषया लभ्यो न लभ्यो धनरा-

शिभिः॥३८॥ राजसत्त्वाद्भवान्नूनं न कैंकर्य्यपरः किल ॥ कणिकृ-
ष्णाभिधस्तस्य शिष्यः कश्चिदभून्मुनेः ॥ ३९ ॥ स एवागच्छति
किल मम गेहे दिनेदिने ॥ अक्षय्यं पात्रमादाय स तैः संशोभितो
महान् ॥ ४० ॥ ऊर्ध्वपुंड्रैर्द्वादशभिरुचितस्थानलक्षितैः ॥ कंठसंशो-
भितोदग्रतुलसीवनमालिकः ॥ ४१ ॥ पवित्रद्वयसंशोभी महाव्यज-
नहस्तकः ॥ तमेव हि महात्मानं कणिकृष्णं नृपोत्तम ॥ ४२ ॥
सोयं पुरुषकारेण कणिकृष्णस्य योगिराट् ॥ भविष्यति प्रसन्नस्ते
नान्यथा नृप निश्चयः ॥ ४३ ॥ निशम्य तद्वचो राजा संतुष्टः क-
णिकृष्णकम् ॥ समाहूयाथ सहसा तमवोचन्नृपस्तदा ॥ ४४ ॥
संसेवितुं महात्मानमिच्छामि भवतो गुरुम् ॥ इहानयस्व तं शीघ्रं तव
श्रेयो भविष्यति ॥ ४५ ॥ तस्य राज्ञो वचः श्रुत्वा कणिकृष्णोभ्य-
भाषत ॥ कुत्रापि राजन् योगींद्रो नैवागच्छति मे गुरुः ॥ ४६ ॥
कदाचिदपि दृष्ट्या वा त्वादृशं तु न पश्यति ॥ अवाप्तकामः सर्वा-
र्थेनिस्पृहो जितशंकरः ॥ ४७ ॥ भक्तिसारो दुराराध्यस्त्वादृशस्य
महीपतेः ॥ श्रुत्वा स वल्लभस्तस्य कणिकृष्णस्य तद्वचः ॥ ४८ ॥
विषण्णहृदयश्चिंतामवाप महतीं तदा ॥ कणिकृष्णप्रभावज्ञा राज्ञः प्रि-
यचिकीर्षवः ॥ ४९ ॥ विषण्णहृदयं भूपमवोचन्केचिदागताः॥ कणि-
कृष्णकवित्वेन शुष्का अपि च पादपाः ॥ ५० ॥ पल्लवादियुताः
शीघ्रं भवंति च न संशयः ॥ भगवद्विषया एव गाथास्तेन कृता नृप
॥ ५१ ॥ यद्यनेन कृता राजन् भवदीयाधुना कृतिः ॥ नित्ययौव-
नसंप्राप्तिर्भविष्यत्यधुनैव ते ॥ ५२ ॥ तेषां तद्वचनं श्रुत्वा संतुष्टो
वल्लभस्तदा ॥ कणिकृष्णं तमानीय सम्यक् संपूज्य सादरम् ॥५३॥
स निवृत्तमतिस्तत्र भूयो वचनमब्रवीत्॥त्वं मया कणिकृष्णाद्य महाक-
विरिति श्रुतः ॥ ५४ ॥ गाथा मद्विषयाः सम्यग्वद सांप्रतमादरात् ॥
तस्य तद्वचनं श्रुत्वा कणिकृष्णस्तमब्रवीत् ॥ ५५ ॥ भगवद्विषया

एव मया गाथा हि गीयते ॥ कदाचिदपि मानुष्यगाथा न क्रियते मया ॥ ५६ ॥ भगवद्विषया वापि तदीयविषया तु वा ॥ इत्येतच्छास्त्रनिर्णीता कर्त्तव्या कविना कृतिः ॥ ५७ ॥ कथं नरस्तुतिं राजन्न करिष्ये भगवत्परः ॥ तेन निर्बंधितोप्येवं स्वकीयकृतिकारणे ॥ ५८ ॥ कणिकृष्णः स भूपेन नांगीकारमवाप सः ॥ विलोक्य कणिकृष्णार्यं तमुल्लंघितशासनम् ॥ ५९ ॥ मद्देशे न वसेत्येवं कुपितः प्राह भूपतिः॥ प्रतिगृह्य वचो राज्ञः कुपितस्य दृढव्रतः ॥ ६० ॥ तदान्यदेशगमने चकार मतिमान् मतिम् ॥ भक्तिसारांतिकं गत्वा प्रणम्य प्रेमपूर्वकम् ॥ ॥ ६१ ॥ नृपोक्तमखिलं तस्मै कणिकृष्णो न्यवेदयत् ॥ तच्छ्रुत्वा वचनं तस्य भक्तिसारस्तमब्रवीत् ॥ ६२ ॥ आगच्छामि त्वया सार्द्धं स भवान् यत्र गच्छति ॥ शेषतल्पे शयानं तं भगवंतमिहाच्युतम् ॥ ॥ ६३ ॥ शिष्यप्रियो भक्तिसारः प्रणम्येदमभाषत ॥ देवदेव जगन्नाथ भक्ताभीष्टप्रदायक॥६४॥शृणु विज्ञापनं विष्णो दासभूतस्य मेऽधुना ॥ कणिकृष्णोस्मदीयोयं किलैवं भगवत्कविः ॥ ६५ ॥ राजा स्वविषयां गाथां कुरुष्वेत्याह तं प्रति ॥ कणिकृष्णं समाहूय निर्बंध्य बहुशोऽधुना ॥ ६६ ॥ तेन निर्बंधितोप्यत्र नानुमेने दृढव्रतः ॥ स तेन नृपतिः क्रुद्धस्तमेवमवदद्धरे ॥ ६७ ॥ तवोल्लंघितकार्यस्य स्वराष्ट्रे न कृतालयः ॥ अतो मद्विषयं त्यक्त्वा गच्छान्यविषयं जवात् ॥ ६८ ॥ स तस्मादस्मदीयोयं भगवन्यत्र गच्छति ॥ तं देशमनुगच्छामि ह्यनुज्ञां देहि मे जवात् ॥ ६९ ॥ स च भक्तपराधीनो भक्तिसारस्य तद्वचः ॥ शेषशायी निशम्यैवं जगाद जगदाश्रयः ॥ ७० ॥ अहं त्वयैव गच्छामि स भवान्यत्र यास्यसि ॥ न त्वां विनात्र वत्साद्य क्षणं वा स्थातुमुत्सहे ॥ ७१ ॥ तेनैवमुक्तस्तं प्राह भक्तिसारो जगत्पतिम् ॥ यद्येवं भवतश्चित्ते वर्त्ततेऽब्जाक्ष सांप्रतम् ॥ ७२ ॥ शेषशय्यां समाहृत्य कक्षे निक्षिप्य सत्वरम् ॥ उत्तिष्ठागच्छ देवेश मया सार्द्धं जगत्पते ॥ ७३॥

भक्ताधीनस्य भक्तस्य तन्निशम्योद्धतं वचः ॥ शेषतल्पं समादाय भक्तोक्तवचनं यथा ॥ ७४ ॥ पृष्ठतो भक्तिसारस्य भगवान् सहसा ययौ ॥ प्रययौ कणिकृष्णोपि सकुटुंबो महायशाः ॥ ॥ ७५ ॥ कंथां कक्षे स निक्षिप्य भक्तिसारस्ततः परम् ॥ पश्चा- मा द्ययौ शेषतल्पमादाय भगवान्हरिः ॥ ७६ ॥ पश्यतां सर्वलोकानां तं तदानुययौ किल ॥ ब्रह्मादयोखिला देवास्तमुद्वीक्ष्यातिविस्मिताः ॥ ७७ ॥ कांचीपुरीं विहायाशु तं तमेवान्वयुस्तदा ॥ देवराजादयः सर्वे हरयोष्टादशानघ ॥ ७८ ॥ एकांबरेशदयः सर्वे देवाः शैव- स्थलाधिपाः ॥ यथोक्तकारिणं देवं ते सर्वेऽनुययुस्तदा ॥ ७९ ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेतरजातयः ॥ विसृज्य कांचीं स- हसा ते सर्वेनुययुस्तदा ॥ ८० ॥ अयोध्येवाभवत्कांची वेदांतिन् निष्प्रभा तदा ॥ रामस्यारण्यगमने सर्वजंतुविवर्जिता ॥ ८१ ॥ अपि वृक्षाः परिम्लानाः सपुष्पांकुरकोरकाः ॥ उपतप्तोदका नद्यः पल्वलानि सरांसि च ॥ ८२ ॥ कांच्यां पश्चिमदिग्भागे कणि- कृष्णादयोखिलाः ॥ क्रोशमात्रं ततो गत्वा क्वचिद्देशे प्रपेदिरे ॥८३॥ तत्रैकरात्रमवसन् सर्वे कांचीजनाश्च ते ॥ एकस्थिताख्यं तस्यासी- द्वेदांतिस्तेन विश्रुतम् ॥ ८४ ॥ उदयास्तमयौ कांच्यां न लक्ष्येते तदा पुनः ॥ अंधकारावृतां कांचीं निशामिव गतप्रभाम् ॥ ८५ ॥ मंत्रिभिः सहसा राजा विलोक्यात्यंतदुःखितः ॥ एकस्थिताख्यं तं देशं समासाद्य महीपतिः ॥ ८६ ॥ पौरैर्वृत्तांतमाकर्ण्य तत्सर्वं वल्लभस्तदा ॥ बहुशः प्रार्थयामास देवराजं जगत्पतिम् ॥ ८७ ॥ प्रत्याख्यातोथ हरिणा देवराजेन वल्लभः ॥ यथोक्तकारिणं देवं प्रार्थ- यामास मंत्रिभिः ॥ ८८ ॥ तेन संप्रार्थितो राजा भगवान् भक्त- वत्सलः ॥ भक्तिसारं महात्मानं प्रार्थयेत्याह भूपतिम् ॥ ८९ ॥ कणिकृष्णं प्रार्थयेति भक्तिसारेण चोदितः ॥ कणिकृष्णस्य पादाब्जे

प्रणम्य शिरसा तदा ॥९०॥ अकरोत्सहसा धीमानपराधक्षमापणम् ॥ प्रणिपातप्रसन्ना हि मैथिली जनकात्मजा ॥ ९१ ॥ सैव लक्ष्मीर्महाभागा जगन्माता न संशयः ॥ लक्ष्मीपुरुषकारेण वैष्णवास्ते भवज्ञनाः ॥ ९२ ॥ ततः प्रणाममात्रेण प्रसन्नस्तत्क्षणादभूत् ॥ महात्मा नृपतेस्तस्य कणिकृष्णः कृतागसः ॥ ९३ ॥ कणिकृष्णेन भक्तेन ततः संप्रार्थिताः सुराः ॥ भक्ताधीनास्ततः सर्वे भगवंतः कृतादराः॥९४॥भक्तिसारश्च भगवान्स्वंस्वं स्थानं प्रपेदिरे॥विलोक्य वल्लभः प्रीतस्तां पुरीं पूर्ववत्स्थिताम् ॥ ९५ ॥ ज्ञातप्रभावस्तत्पादे भक्तिमानभवत्तदा॥शयानं शेषपर्यंके भक्तिसारः प्रणम्य तम् ॥९६॥ एवं विज्ञापनं चक्रे लोकानुग्रहतत्परः ॥ यथोक्तकारिनामा त्वं मत्कृतेस्मिन्महीतले ॥९७॥ प्रत्यक्षभूतः सर्वेषामत्रत्यानां निरंतरम् ॥ सर्वाभीष्टप्रदो देव वसात्रैव जगत्पते॥९८॥तद्वचः प्रतिगृह्याशु भक्तस्य भगवान्हरिः॥ सर्वाभीष्टप्रदोद्यापि वेदांतिन् परिदृश्यते ॥ ९९ ॥ यथोक्तकारिनामास्य तदाप्रभृति सत्तम ॥ त्रैलोक्यविदितं विष्णोर्बभूव परमात्मनः ॥ १०० ॥ विष्णुः सर्वत्र वेदांतिञ् शेते दक्षिणपार्श्वतः॥ श्रीकांच्यां वामभागेन भक्तिसारकृते हरिः ॥ १०१ ॥ पूर्वोत्तरशिराः शेते वेगवत्याः कृतेनघ॥यथोक्तकारी वेदांतिंस्तदा प्रत्यङ्मुखः किल ॥१०२॥ ततो याम्यशिराः प्रत्यङ्मुखः शेते हरिस्तदा ॥ सूचयन्निव लोकेभ्यो भक्तवात्सल्यमद्भुतम् ॥ १०३ ॥ भक्तिसारकृते तत्र ह्यद्यापि परिदृश्यते ॥ भक्तिसारोपि तत्रैव कंचित्कालमुवास सः ॥१०४॥ स तेनाष्टांगयोगेन ध्यायन्हरिपदांबुजम् ॥ तत्रैव कणिकृष्णोपि भक्तिसारस्य संततम् ॥ तस्थौ स कुर्वन्कैंकर्य्यं जगद्विदितवैभवः ॥ १०५ ॥ एतादृशं सत्यमनंतरूपं श्रीभक्तिसारस्य महात्मनोग्र्यम् ॥ प्रभावमार्याः सततं पठंति तेषां यशः श्रीरतुलास्तु नित्या ॥ १०६ ॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे भक्तिसारवैभवातिशयकथनं नाम त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

# चतुरशीतितमोऽध्यायः ।

ततो ययौ कुंभकोणं यात्रापरवशो महान् ॥ भक्तिसारो महीसार-
क्षेत्रंजो दक्षिणां दिशम् ॥ १ ॥ यो नरः कुंभकोणेस्मिन् क्षणार्द्धमधि-
तिष्ठति ॥ करस्थं तस्य कैवल्यं किमुतान्या विभूतयः ॥ २ ॥ एतादृ-
शप्रभावेस्मिन् कुंभकोणे महास्थले ॥ तत्रैव नित्यवासाय भक्तिसारो-
प्यमन्यत ॥३॥ शार्ङ्गपाणेर्महाभक्त्या सेवार्थं महतो जवात् ॥ गच्छन्न
मार्गे पुरं प्राप महाव्याघ्रपुराभिधम् ॥ ४ ॥ गृहेथ कस्यचित्तत्र भक्ति-
सारो निषेदिवान् ॥ बहिर्वितर्द्यां तत्रैव चक्रुरध्ययनं द्विजाः ॥५॥ तं विलो-
क्याद्विजं मत्वा निवृत्ताध्यापनाः स्थिताः ॥ तत्प्रभावमजानंतो गूढं यद्ब्र-
ह्मवर्चसम् ॥ ६ ॥ तदुद्वीक्ष्याथ सहसा तत्रान्यस्थलमाप सः ॥ तेषां
तद्विस्मृतं वाक्यं तदनंतरसंस्थितम् ॥ ७ ॥ तद्व्याकुलांतःकरणाः
किमिदंकिमिदं बत ॥ अपस्मृतस्य को हेतुरिति चिंतां तदागमन् ॥८॥
भक्तिसारः स तान् दृष्ट्वा वेदांतिन् करुणार्णवः ॥ कृतागःस्वपि संजातक्ष-
मावान् भगवत्परः ॥९॥ नीलव्रीहीन् नखैः सम्यक् कृत्वा निर्भिन्नमं-
जसा ॥ संज्ञया कृपया तेषां तद्वाक्यस्मरणं व्यधात् ॥ तत्प्रभावपरः
श्लोको बहुधा श्रूयते भुवि ॥ १० ॥ विमानिनो योगिवरस्य ते श्रुते-
र्विमुग्धशेषप्रतिभाविवर्जिताः ॥ तमन्वबुस्तत्प्रतिभाविवर्द्धये स कृष्ण-
शालीन्नखदारितान्व्यधात् ॥ ११ ॥ कृतार्थास्तेन ते सर्वे ब्राह्मणा
वेदपारगाः ॥ भगवंतं महात्मानं भक्तिसारमपूजयन् ॥ १२ ॥ न
शूद्रा भगवद्भक्ता विप्रा भागवताः स्मृताः ॥ सर्ववर्णेषु ते शूद्रा ये ह्यभक्ता
जनार्दने ॥ १३ ॥ इत्युक्त्वा तं परिक्रम्य भक्तिसारं प्रणम्य च ॥
कृतार्थाः पूर्ववद्वेदं पठंतः सुखमास्थिताः ॥ १४ ॥ उञ्छवृत्तिपरो धी-
मान् भक्तिसारो महायशाः ॥ उञ्छं कर्तुं ततो ग्रामे यांयां वीथीं स
आगमत् ॥ १५ ॥ तस्यास्तस्याः प्रतोल्याश्च तदा ह्यभिमुखं ययौ ॥
तत्र ग्रामेर्चितो भूतो भगवान्विष्णुरव्ययः ॥ १६ ॥ तस्यार्चकाः

सद्युद्वीक्ष्य तच्चित्रं परमाद्भुतम् ॥ विस्मिता ब्राह्मणेभ्यश्च कतिभ्यः समदर्शयन् ॥ १७ ॥ ते तत्र यज्ञशालायां समागत्याशु संभ्रमम् ॥ द्विजास्तमृत्विजः सर्वान् दीक्षितं चाब्रुवंस्तदा ॥ १८ ॥ दृष्टं महच्चित्रमिदं नेत्रसाफल्यवत्स्फुटम् ॥ अत्यद्भुतं भक्तिसारप्रभावमतिमानुषम् ॥ १९ ॥ तच्छ्रुत्वा दीक्षितोत्यंतं शालायां बहिरंजसा ॥ निर्गत्य तद्विचित्रं तु वीक्ष्य देवालये तदा॥२०॥ भक्तिसारं विलोक्याथ प्रणिपत्येदमब्रवीत् ॥ भक्तिसार जगद्वंद्य कृतार्थोस्मि तवागमात् ॥ अद्यैव सफलो यागः संतुष्टाः सर्वदेवताः ॥ २१ ॥ अक्ष्णोः फलं त्वादृशदर्शनं हि जिह्वाफलं त्वादृशनामकीर्तनम् ॥ शिरःफलं त्वादृशवंदनं हि पाण्योः फलं त्वादृशपूजनं हि ॥ २२ ॥ इत्युक्ता दीक्षितः सम्यग्घरिपादो महौजसम् ॥ आदाय यज्ञशालायां प्रार्थनापूर्वकं तदा ॥ २३ ॥ अग्र्यासने समारोप्य ब्रह्ममंडलमध्यगे ॥ अकरोदग्रपूजां तां स तस्मै विधिपूर्वकम् ॥२४॥ सर्वेषां पश्यतां तत्र ऋत्विजां ब्रह्मवादिनाम् ॥ राजसूयाध्वरे कृष्णं गोविंदं पशुपांगजम् ॥ ॥ २५ ॥ अपूजयन्महाभक्त्या धर्मराजः पुरा यथा ॥ अध्वर्युप्रमुखास्तत्र तेग्रपूजां विलोक्य ताम् ॥ २६ ॥ गर्हयंतः शपंतश्च भक्तिसारं च दीक्षितम् ॥ शिशुपालादिवत्पूर्वं श्रीकृष्णं च युधिष्ठिरम् ॥ २७ ॥ तमाहिताग्निं संवीक्ष्य कोपेनैवोचुरीदृशम् ॥ मूढेन भवता मंद मूढयागः कृतः किल ॥ २८ ॥ शूद्रं कंचित्समादाय शौचाचारादिवर्जितम् ॥ देवब्राह्मणसंपूर्णे शालामध्ये पवित्रके ॥ २९ ॥ ऋत्विजोन्याननादृत्य वेदवेदांतपारगान् ॥ अग्रासने समारोप्य तस्मै शूद्राय सत्वरम् ॥ ॥ ३० ॥ अग्रपूजा कृता तेन भवता सोमयाजिना ॥ प्रनष्टस्तव यागोयमेतेन च भवांस्तथा ॥ ३१ ॥ इत्युक्त्वा परुषं वाक्यं बहुशस्तं च दीक्षितम् ॥ तत्प्रभावमजानंतो निनिंदुरखिला जनाः ॥ ३२ ॥ असहिष्णुः स तद्वाक्यं निशम्य परुषं महान् ॥ प्रव्याकुलांतःकरणो भक्तिसारमुखांबुजम् ॥ ३३ ॥ विलोक्य भगवद्भक्तो व्याजहार वचः

शुभम् ॥ भक्तिसार महाभाग श्रुतं चैतद्वचः किल ॥ ३४ ॥ एते परुषवाक्यानि ह्यसह्यानि वदंति हि ॥ कथं सहिष्ये तानार्य्य त्वद्भक्तोहं महात्मक ॥ ३५ ॥ निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः ॥ ३६ ॥ अंगीकृत्य वचस्तस्य दीक्षितस्य दयांबुधिः ॥ इयेष तत्र यत्स्वीयं महिमानं प्रदर्शितुम् ॥ ३७ ॥ अष्टांगयोगसिद्धानां ह्ययोगनिरतात्मनाम् ॥ योगिनामधिकारः स्यादेकस्मिन्हृदयांबुजे ॥३८॥ हृत्पुंडरीके ध्यायंस्तं योगेन जगदीश्वरम् ॥ अनंतशयनं देवं शंखचक्रगदाधरम् ॥ ॥ ३९ ॥ बहुशः प्रार्थयामास लोकानुग्रहकारणात् ॥ प्रत्यक्षो भव सर्वेषामत्रत्यानां द्रुतं प्रभो ॥४०॥ प्रार्थितस्तेन भगवान् भक्ताधीनः श्रियः पतिः ॥ भक्तिसारशिरोमध्ये प्रत्यक्षमगमद्धरिः ॥ ४१ ॥ शयानं शेषपर्यंके शंखचक्रगदाधरम् ॥ नीलमेघनिभं दिव्यं पीतांबरधरं हरिम् ॥ ४२ ॥ तं दृष्ट्वा देवदेवेशं भगवंतं जगत्पतिम् ॥ अध्वर्युप्रमुखास्सर्वे नमश्चक्रुर्द्विजर्षभाः ॥ ४३ ॥ अध्वर्युप्रमुखास्तत्र भक्तिसारविरोधिनः ॥ भक्तिसारशिरोमध्ये शेषतल्पे समास्थितम् ॥ ४४ ॥ नीलमेघनिभं दिव्यं पीताम्बरधरं हरिम् ॥ प्रत्यक्षेण विलोक्यैव दिव्यमंगलविग्रहम् ॥ ४५ ॥ सर्वेतिविस्मिता भीताः परभक्तिसमन्विताः ॥ भक्तिसारस्य पादाब्जे भक्त्या साष्टांगवंदनम् ॥ ४६ ॥ विधाय सहसा चैव ह्यपराधक्षमापणम् ॥ भक्तिसारं ब्रह्मरथे सद्भक्त्यारोप्य सत्वरम् ॥ ४७ ॥ बहुधा पूजयामासुः कृतार्थास्तेन तेभवन् ॥ स तेभ्यो भक्तिसारश्च ऋत्विग्भ्यः करुणार्णवः ॥ ४८ ॥ ज्ञानोपदेशं बहुशश्चकार कृपया तदा ॥ ततः संप्रेषितस्तेन हरिपादेन पूजितः ॥ ४९ ॥ कुंभकोणं ययौ धीमान्भक्तिसारो महायशाः ॥ भक्तिसारः प्रणम्याशु शार्ङ्गपाणिं जगत्पतिम्॥५०॥ विलोक्य शयनं तस्य शार्ङ्गपाणेर्महात्मनः ॥ संतुष्टो ह्यवदच्चैकां गाथां कांचिन्महाकविः ॥५१॥

निशम्योक्तां स तां तेन हरिर्द्राविडभाषया ॥ उद्युक्तो भक्तवात्सल्यादुत्थितुं सहसा ह्यभूत् ॥ ५२ ॥ उत्तिष्ठमानं तं दृष्ट्वा भक्तिसारो भयान्वितः ॥ नोत्तिष्ठेति तदा देवं प्रार्थयामास भूरिशः ॥५३॥ संप्रार्थितस्तदा तेन भगवान् भक्तवत्सलः॥स्वभक्तजनवात्सल्यं लोकेभ्यः सूचयन्निव ॥५४॥ उत्तानशयनः श्रीमान् शार्ङ्गपाणिर्महोन्नतः ॥ तदाकारतयाद्यापि तत्रैव परिदृश्यते ॥ ५५ ॥ यत्तदुत्तानशयनं यत्तेजः सुमहाद्भुतम् ॥ अतः सन्निधिविस्तीर्णं यत्तदन्यादृशं भुवि ॥ ५६ ॥ वेदांतिन् भक्तिसारोथ शार्ङ्गपाणिं जगत्पतिम् ॥ भक्त्या संप्रार्थयामास तत्प्रेमातिशयेन सः ॥ ५७ ॥ विख्याते कुंभकोणे फणिपतिशयने प्राङ्मुखो दक्षिणाशादिग्भागे न्यस्तशीर्षो मृदुपदयुगलं चोत्तरे तत्प्रसार्य ॥ यः शेते शार्ङ्गपाणिः सकलतनुभृतां सर्वसंपत्प्रदाता दद्यान्मे देवदेवः सरसिजनयनः सन्निधिं योगिलभ्यः ॥ ५८ ॥ ताम्राधरं तरुणपल्लवपादपाणिं तारेशकोटिनयनं तरणिप्रकाशम् ॥ तत्कुंभकोणनगराधिपमाधिनाथं तं शार्ङ्गपाणिमनिशं हृदि चिंतयामि ॥ ५९ ॥ स शार्ङ्गपाणिः सरसीरुहाक्षः समस्तकल्याणगुणांबुराशिः ॥ सामप्रियः सर्वजनानुकूलः करोतु मे मंगलमार्तबंधुः ॥ ६० ॥ एवं दृष्ट्वानुभूयाथ सौंदर्यातिशयं हरेः ॥ तस्यानुभवसंजातप्रेमातिशयहेतुना ॥ ६१ ॥ प्रबंधद्वितयं तेन कृतं भार्गवसूनुना ॥ तत्र श्रीद्राविडी भाषा द्विशतं षोडशाधिकम् ॥ ६२ ॥ एकं चतुर्मुखांतादिनामदिव्यप्रबंधकम् ॥ गाथाः षण्णवतिस्तत्र वेदांतिन् परिकीर्तिताः ॥ ६३ ॥ अन्यं श्रीचंद्रवृत्ताख्यप्रबंधं द्राविडं मुने ॥ शतं च विंशतिस्तत्र विद्वन् गाथाः प्रकीर्तिताः ॥ ६४ ॥ स्तुतानि भक्तिसारेण स्थलान्येकादशात्र हि ॥ श्रीरंगं वेंकटाद्रिश्च वीक्षारण्यं महामते ॥ ६५ ॥ यथोक्तकारी यो वेगसिंधौ कांचीपुरे वरे ॥ गानगेहे पार्थसूतः शेषगेहे त्रिविक्रमः ॥ ६६ ॥ कैरविण्यां पार्थसूतः श्रीनृसिंहादिसंयुतः ॥ कुंभकोणे शार्ङ्गपाणिर्गजा-

तींघ्रः कपिस्थले ॥ ६७ ॥ प्रेमपुर्यां सुन्दरांगो ह्यपूपेशो महापुरे ॥ अस्मिन्नर्थे महान् श्लोकः श्रूयते लोकविश्रुतः ॥ ६८ ॥ रंगं प्रेमपुरं कपिस्थलवरं श्रीकुंभकोणस्थलं श्रीमाल्याख्यपुरं च वेंकटगिरिः श्रीकैरविण्यास्तटम् ॥ कांच्यां शेषगृहं च गानसदनं वेगार्णवो विश्रुतः श्रीमत्किंगृहपट्टणं भृगुसुतेनैकादशैते स्तुताः ॥ ६९ ॥ उत्तानशायिनं तस्य विग्रहं महदद्भुतम् ॥ हृत्पुंडरीके श्रीमंतं ध्यायन् भक्त्या निरंतरम् ॥७०॥ संवत्सराणां त्रिशतं सहस्रद्वितयं च सः ॥ सुखेन न्यवसद्योगी कुंभकोणे महायशाः ॥ ७१ ॥ क्षीरपानैकनिरतो ह्यन्नाहारादिवर्जितः ॥ सहस्रत्रितयं चैव यः सप्तशतवत्सरान् ॥ ७२ ॥ उवास भूम्यां भगवदनुभावेन सन्ततम् ॥ आसन्न सहस्रवर्षाणि भक्तिसारस्य षट् ततः ॥ ७३ ॥ पुरान्यमतसंचारे तस्य चैकसहस्रकम् ॥ अतो हि सप्तसाहस्रवर्षाण्यायुर्महात्मनः ॥ अस्मिन्नर्थे महान् श्लोकः श्रूयते लोकविश्रुतः ॥ ७४ ॥ मध्ये कलिद्वापरयोः सहस्रवर्षाणि सप्तैव विहृत्य भूमौ ॥ सौदर्शनीं मूर्तिमुपागतं च तं भक्तिसारं शरणं प्रपद्ये ॥ ॥ ७५ ॥ दिव्यप्रबंधमुपदिश्य ततोखिलेभ्यस्तं वेदसारमखिलार्थनिधिं जनेभ्यः ॥ अज्ञानघोरतिमिरं तदपोह्य तेषां स्वज्ञानदीपकलया ह्यवनिं ररक्ष ॥ ७६ ॥ दिव्यप्रबंधपठनात्सकला जनौघाः संत्यक्तपापनिवहाः परिशुद्धचित्ताः ॥ उत्तीर्णघोरभववारिधयो महांतो वैकुंठलोकमगमन्सहसा प्रपन्नाः ॥ ७७ ॥ कुंभकोणे महापुण्ये स्थित्वासौ बहुवत्सरान् ॥ तत्रैव चागमन्मुक्तिं भक्तिसारो महायशाः ॥ ७८ ॥ चित्रं चरित्रं परमं पवित्रं तद्भक्तिसारस्य वरं महार्थम् ॥ पठंति शृण्वंति च ये तु भक्त्या ते विष्णुलोके निवसंति सत्यम् ॥ ७९ ॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे भक्तिसारवैभवकथनं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पंचाशीतितमोऽध्यायः ।

श्रुत्वा माधवदासोथ भक्तिसारस्य वैभवम् ॥ संप्रहृष्टोथ भट्टार्य्यं प्रणिपत्येदमब्रवीत् ॥ १ ॥ श्रोतुमिच्छामि भगवञ् शठारेस्तस्य वैभवम् ॥ ब्रूहि मे करुणासिंधो यद्यद्भक्ताय सांप्रतम् ॥ २ ॥ प्रतिगृह्य वचस्तस्य भट्टार्य्यस्तमथाब्रवीत् ॥ अवतारक्रमेणैव शठकोपस्य वैभवम् ॥ ३ ॥ वक्तव्यं सांप्रतं विद्वंस्तथापि शृणु मद्वचः ॥ निरूप्यावयवान्पूर्वं पश्चात्तस्य निरूपणम् ॥ ४ ॥ यतोवयविनः शास्त्रे कर्तव्यमिति निर्णयः ॥ शठकोपो ह्यवयवी ये चान्येवयवाः किल ॥ ५ ॥ कासारयोगिप्रमुखचतुर्णां चरितं शुभम् ॥ उक्तं किल मया सम्यक् श्रुतं विस्तरतस्त्वया ॥ ६ ॥ सांप्रतं शृणु वक्ष्यामि कुलशेखरवैभवम् ॥ घुष्यते यस्य नगरे रंगयात्रा दिनेदिने ॥ ७ ॥ तमहं शिरसा वंदे राजानं कुलशेखरम् ॥ याम्यपश्चिमयोर्मध्ये देशः केरलनामकः ॥ ८ ॥ बभूव सर्वशोभाढ्यस्तालक्रमुकशोभितः ॥ बभूव सुमहद्दिव्यं तत्र श्रीकोळिपट्टणम् ॥ ९ ॥ तत्पुरं सर्वशोभाढ्यं राजस्थानं महोच्छ्रयम् ॥ दृढव्रताख्यो राजासीद्भगवद्भक्तिपारगः ॥ ॥ १० ॥ स चेरकुलदुग्धाब्धिचंद्रमाः क्षत्रियर्षभः ॥ तत्प्रभावपराः श्लोकाः श्रूयंते बहवो भुवि ॥ ११ ॥ अत्यद्भुता कांचन केरलेषु पुरी वरा कुक्कुटनामसाह्वा ॥ प्रायेण यस्याः परिखाविलासं पतिर्नदीनां प्रकटीकरोति ॥ १२ ॥ वेधास्तुलायामुभयोस्तुलार्थमारोपयद्यामरावतीं च ॥ पूर्वां तयोः प्राप भुवं गरिम्णा परोपरिष्टात्प्रययौ लघिम्ना ॥ ॥ १३ ॥ संतानकामः सततं श्रीहरिं समुपासत ॥ तथा यथा दशरथो ह्यश्वमेधादिभिः पुरा ॥ १४ ॥ दृढव्रतस्य राजर्षेः प्रसन्नो भगवान्हरिः ॥ अपत्यलाभं प्रददौ कृपया भक्तवत्सलः ॥ १५ ॥ वर्षे पराभवे मासे कुंभे वै शुक्लपक्षके ॥ श्रीमत्पुनर्वसूतारे दशम्यां गुरुवासरे ॥ १६ ॥ कौस्तुभांशेन संजज्ञे महात्मा कुलशेखरः ॥ दृढव्रतस्य राजर्षेः श्रीरामो भगवान्यथा ॥ अस्यावतारश्लोकाश्च गीयंते प्रथिता भुवि ॥ १७ ॥

तस्यामभूचेरकुलप्रदीपः श्रीकौस्तुभात्मा कुलशेखरोसौ ॥ महीपतिर्माघपुनर्वसूभे दिने हरेः पूर्णकटाक्षलक्ष्यः ॥ १८ ॥ कुंभे पुनर्वसूजातं केरले कोळिपट्टणे ॥ कौस्तुभांशं धराधीशं कुलशेखरमाश्रये ॥ १९ ॥ दृढव्रतो धराधीशं पुत्रं दृष्ट्वातिसुंदरम् ॥ ब्राह्मणेभ्योतिसंतुष्टो वसुधान्यादिकं बहु ॥ २० ॥ प्रददौ ह्याश्रितेभ्यश्च कृतकौतुकमंगलः ॥ चकार नामकरणं पुत्रस्यामिततेजसः ॥ २१ ॥ कुलस्य शेखरो यस्मात्कुलशेखर इत्ययम् ॥ दृढव्रतो महातेजाश्चकार कुलभूषणः ॥ २२ ॥ चौलादिसर्वसंस्कारान्यथाकालं यथाविधि ॥ संप्राप्य सर्वशास्त्राणि धनुर्वेदं च बुद्धिमान् ॥ २३ ॥ जग्राहाखिलविद्याश्च साक्षिमात्राद्गुरोर्मुखात् ॥ शासनात्स पितुः श्रीमांस्तेन राज्ये प्रतिष्ठितः ॥ २४ ॥ शशास पृथिवीं सर्वां स श्रीरामो यथा पुरा ॥ चतुरंगबलोपेतो राजा धर्मपरायणः ॥ २५ ॥ कुलशेखरभूपालो ह्यजयत्सकला दिशः ॥ रिपवः कांदिशीकास्ते सर्वे भूपाः पलायिताः ॥ ॥ २६ ॥ स्ववशे स्थापयामास राज्यं निहतकंटकम् ॥ रामराज्ये प्रजाः सर्वा यथा मुमुदिरे पुरा ॥ २७ ॥ कुलशेखरराज्ये च तथा मुमुदिरे प्रजाः ॥ दृढव्रतो महाराजः स्वपुत्रस्य महौजसः ॥ २८ ॥ विलोक्य विस्मितोत्यंतं प्रभावमतिमानुषम् ॥ संतुष्टः सकलं राज्यं पुत्रे निक्षिप्य सत्वरम् ॥ २९ ॥ कृतकृत्यस्तु राजर्षिस्तपोवनमुपागतः ॥ ततः स राजा धर्मेण तथा राज्यमरक्षत ॥ ३० ॥ यथा बलवता लोके बलहीनो न हन्यते ॥ गोसहस्रप्रदानानि श्रीराम इव सादरम् ॥ ३१ ॥ ब्राह्मणेभ्यो ददौ राजा महादानानि षोडश ॥ स्वतंत्रो दानशीलश्च नियंता कुलशेखरः ॥ ३२ ॥ शशास राज्यं धर्म्मेण ख्यातिलोभपरो महान् ॥ विभूतिद्वयनिर्वाहो भगवान्करुणार्णवः ॥ ३३ ॥ निर्हेतुककृपावेशात्तस्मै राज्ञे ददौ तदा ॥ निरस्ततामसरजोगुणं सत्त्वैकनिष्ठकम् ॥ ३४ ॥ तदीयशेषपर्य्यंतं सम्यग् ज्ञानमनूपमम् ॥ विज्ञापितोथ हरिणा सैन्येशो भुवमेत्य सः ॥ ३५ ॥

तस्मै नृपाय कृपया पंचसंस्कारपूर्वकम् ॥ सर्वार्थांश्चोपदिश्याशु यावतीस्तत्त्वसंपदः ॥ ३६ ॥ वैकुंठनगरं प्राप्तस्तेन संपूजितस्तदा ॥ तत्कृपालब्धसद्भक्तिर्ज्ञानवैराग्यसागरः ॥ ३७ ॥ आसीत्परमधर्मज्ञः स राजा कुलशेखरः ॥ सम्यक् श्रीभगवद्रूपं तद्गुणास्तद्विभूतयः ॥ ॥ ३८ ॥ सर्वं प्रकाशयामास वेदांतिंस्तस्य भूपतेः ॥ संजाता महती प्रज्ञा संसारार्णवतारिणी ॥ ३९ ॥ कुलशेखरदेवस्य तदा तस्य ततोनघ ॥ अकृत्यकरणादावप्यत्यंतोद्भटवृत्तकः ॥ ४० ॥ यथाग्निज्वालिकामध्ये संप्रविश्य च वर्त्तनम् ॥ अर्थकामाभिभूतोयमुन्मत्त इव वर्त्तते ॥ ४१ ॥ भगवद्विमुखैरेतैः शब्दादिविषयातुरैः ॥ देहाभिमाननिरतैर्नित्यसंसारिभिः सह ॥ ४२ ॥ तन्मध्ये वर्त्तनं मेद्य ध्रुवं कारागृहे यथा ॥ राज्यं विधाय तज्जातं सुखं संभोगरूपकम् ॥ ४३ ॥ यथाग्निज्वालिकामध्ये संप्रविश्यात्मवर्त्तनम् ॥ अतः संसारिभिः सार्द्धं सहवासोतिदुःसहः ॥ ४४ ॥ भगवद्दासभूतस्य तत्कैंकर्य्यरतस्य मे ॥ एवं निश्चित्य वेदांतिन् महात्मा कुलशेखरः ॥ ४५ ॥ देहानुबंधिनां तेषां सांगत्यं स विसृज्य तत् ॥ राज्यं भगवदायत्तं तत्कैंकर्योपयोगिं च ॥४६॥ कृत्वा भागवताधीनं श्रीरामं शरणं गतः ॥ परित्यक्ता मया लंका मित्राणि च धनानि च ॥ भगवद्गतं च मे राज्यं जीवितं च सुखानि च ॥ ४७ ॥ क्षेत्राणि मित्राणि धनानि नाथ पुत्राश्च दाराः पशवो गृहाणि ॥ त्वत्पादपद्मप्रवणानुवृत्तेर्भवंति सर्वे प्रतिकूलरूपाः ॥ ॥ ४८ ॥ इत्युक्त्वा राक्षसश्रेष्ठो वेदांतिन्स विभीषणः ॥ त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥ ४९ ॥ हरेरर्चावताराणां भक्तिः श्रीवेंकटेश्वरे ॥ श्रीरामे विभवानां तु कुलशेखरभूपतेः ॥ ५० ॥ कैंकर्य्यप्रार्थनां चक्रे वेदांतिन् कुलशेखरः ॥ सोपानभूतः स्थित्वाहं वेंकटेश त्वदालये ॥ ५१ ॥ संप्रेक्ष्य त्वन्मुखांभोजं प्रवालसदृशाधरम् ॥ ततः श्रीरंगमाहात्म्यमशृणोत्कुलशेखरः ॥ ५२ ॥ श्रीरंगयात्रा श्रीरंगं यियासा चैव नारद ॥ उत्तारयति संसारा-

न्नित्यवासस्तु किं पुनः ॥ ५३ ॥ एवं श्रीरंगमाहात्म्ये यो ह्यर्थः प्रतिपादितः ॥ तमर्थमंजसादाय हृदि भागवतोत्तमः ॥ ५४ ॥ अचिंतयत्तदा प्राज्ञो भगवान्कुलशेखरः ॥ नश्वराः प्राकृता भोगाः पुत्रवित्तकुलानि च ॥ ५५ ॥ श्रीरंगे रंगराजस्य सेवा नित्यसुखप्रदा ॥ नित्यवासस्तु कर्त्तव्यस्तद्देशे सर्वथा मया ॥ ५६ ॥ ततो महात्मा वेदांतिन् कुलशेखरभूपतिः ॥ रंगयात्रापरवशो घोषयामास पट्टणे ॥ ५७ ॥ श्रीरंगयात्राश्रीरंगयात्रेति सुमहारवम् ॥ अमंत्र्यंस्तदा सम्यक् श्रुत्वा तन्मंत्रिणोंजसा ॥ ५८ ॥ रंगयात्रापरवशो रंगं यदि स गच्छति ॥ भूयः स्वकीयनगरं नायाति किल निश्चयम् ॥ ५९ ॥ किरीटकेयूरसुवर्णकुंडलप्रवालमुक्तावलिहेमभूषणम् ॥ विशालवक्षस्थलहेमकौस्तुभं श्रिया च देव्याध्युषितोरुवक्षसम् ॥ ६० ॥ प्रशस्तचामीकरचारुवाससं समेखलानूपुरशोभितांघ्रिकम् ॥ सुस्वर्धुनीजातमृणालकोमलं दधानमच्छच्छवियज्ञसूत्रकम् ॥ ६१ ॥ भुजोपधानं प्रसृतान्यहस्तं निकुंचितोत्सारितपादयुग्मम् ॥ सुदीर्घमुद्बाहुसुदग्रवेषं भुजंगतल्पं पुरुषं महांतम् ॥ ६२ ॥ ब्रह्मादिवंद्यं भगवंतमाद्यं वेदांतवेद्यं भुवि रंगनाथम् ॥ विलोक्य नेत्रैः कमनीयगात्रं को वा समर्थो हि निवर्त्तने स्यात् ॥ ६३ ॥ विशेषतः सत्कुलशेखरोयं महानुभावो भगवत्पराग्र्यः ॥ अपश्यदाद्यं यदि रंगनाथं करोति तत्रैव हि नित्यवासम् ॥ ६४ ॥ तस्य विघ्नो हि कर्त्तव्यस्तस्मादद्यैव सत्वरम् ॥ इति निश्चित्य ते सर्वे सम्यगानाय्य वैष्णवान् ॥ ६५ ॥ प्रणिपत्य शुभं वाक्यमिदमूचुर्महौजसः ॥ श्रीरंगयात्रामुद्दिश्य प्रत्यूषे कुलशेखरः ॥ ६६ ॥ अनिवार्य्यगतिस्तस्मात्स गच्छति किलाधुना ॥ श्रीरंगराजसेवार्थं श्रीरंगं यदि गच्छति ॥ ६७ ॥ स्वकीयनगरं राजा भूयो नायाति निश्चयम् ॥ समर्था यूयमेवाद्य मनसो विनिवर्त्तने ॥ ६८ ॥ शृणोत्येव स तद्वाक्यं

युष्माकं नात्र संशयः ॥ येन केन प्रकारेण तं निवर्त्त्याद्य भूपतिम् ॥ ६९ ॥ तस्माच्छ्रीरंगगमनाद्वैष्णवाः कुलशेखरम् ॥ संरक्षताखिलजनं त्वदधीनं तमीदृशम् ॥ ७० ॥ अंगीकृत्य वचस्तेषाममात्यानां महात्मकाः ॥ तथैव चक्रुर्वेदांतिन् सहसा वैष्णवोत्तमाः ॥ ७१ ॥ श्रीरंगयात्राश्रीरंगयात्रेत्यत्यंतभक्तितः ॥ रवेण महता तस्य वदतो गच्छतोंजसा ॥ ७२ ॥ तदाभिमुखमायाता राजर्षेर्वैष्णवोत्तमाः॥तान्विलोक्य महाभक्त्या संतुष्टोर्व्यां प्रणम्य च ॥७३॥पूजनाद्विष्णुभक्तानां पुरुषार्थोस्ति नेतरः॥तेषु तद्द्वेषतः किंचिन्नास्ति नाशनमात्मनः ॥७४॥ षष्टिवर्षसहस्राणि विष्णोराराधने फलम् ॥ सकृद्वैष्णवपूजायाः कलां नार्हति षोडशीम् ॥ ७५ ॥ एवं हृदि निधायार्थं तमिमं शास्त्रवित्तमाः ॥ निवर्तयित्वा योगेन श्रीरंगगमने मतिम् ॥ ७६ ॥ तान्वैष्णवान्समादाय राजा भागवतप्रियः ॥ स्वपुरं संप्रविश्याशु तान् भक्त्या समपूजयत् ॥७७॥ तेषामराधनार्थाय तदेव श्लाघ्यमुत्तमम् ॥ सुवर्णसदृशं सूपमतिधावल्यतंडुलम् ॥ ७८ ॥ दध्याज्यगुडमाषादिनिखिलं वस्तु पुष्कलम् ॥ यावत्प्रमाणं यत्तस्माद्द्विगुणं त्रिगुणाधिकम् ॥ ७९ ॥ प्रददौ भक्तिभावेन प्रार्थनापूर्वकं स्वयम् ॥ विष्ण्वाराधनपर्यंतं तत्कैंकर्यरतोभवत् ॥ ८० ॥ कृतांजलिर्निराहारस्तस्थौ तद्भोजनावधि ॥ श्रीपादतीर्थं स्वीकृत्य पश्चात्परमपावनम् ॥ ८१ ॥ पश्चात्तद्भुक्तशिष्टान्नं बुभुजे कुलशेखरः ॥ ततः श्रीवैष्णवेभ्यश्च तेभ्यः परमहर्षितः ॥ ८२ ॥ पीतांबरैरलंकृत्य कुंडलादिविभूषणैः ॥ श्रीचंदनैः सुगंधैश्च कुसुमैर्दिव्यवासितैः ॥ ८३ ॥तांबूलं रुचिरं सम्यगर्पयामास भूमिपः ॥ ततः श्रीवैष्णवैः सम्यक् तैश्चोक्तान् भगवद्गुणान् ॥ ८४ ॥ भक्त्या परमया शृण्वंस्तस्थावासायमादरात् ॥ एवं दिनेदिने राजा वेदांतिन्मंत्रिचोदितः ॥ ८५ ॥ श्रीवैष्णवैः सन्निरुद्धरंगयात्रो बुधप्रियः ॥ राज्यं चकार धर्मात्मा वैष्णवाधीनवृत्तिकः ॥ ८६ ॥

ततः श्रीवैष्णवैः साकं वेदवेदांगपारगैः ॥ सहवासपरस्तस्थौ निरंतर-मतंद्रितः ॥ ८७ ॥ ततः श्रीवैष्णवाद्राजा भक्तिमान्कुलशेखरः ॥ वें-कटाचलमाहात्म्यमशृणोद्भक्तिपूर्वकम् ॥ ८८ ॥ एतादृशोर्थो वेदांतिन् महांस्तत्र समास्थितः ॥ त्रैलोक्यविश्रुता पुण्या स्वामिपुष्कारिणी शुभा ॥ ८९ ॥ गंगाद्यैः सकलैस्तीर्थैः सासमा विमलोदका ॥ तत्र देवर्षिगंधर्वाः सिद्धाश्च परमर्षयः ॥ ९० ॥ वसंति नियताहारा वेंकटाह्वयभूधरे ॥ श्रुत्वार्थं तमिमं राजा वेदांतिन् कुलशेखरः ॥ स्तुतिं मुकुंदमालाख्यां चक्रे लोकहितेच्छया ॥ ९१ ॥ एवं महात्मा कुलशे-खरार्यो रेजे तदा वैष्णवपारिजातः ॥ अव्याहतश्रीहरिभक्तिधर्मः प्रह्लादवद्विश्रुतदिव्यकीर्तिः ॥९२॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्ति-संवादे कुलशेखरावतारवर्णनं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ।

ततो महात्मनस्तस्य लीलामानुषरूपिणः ॥ बभूवैवं हि बुद्धिस्तु सर्वलोकैकशिक्षिका ॥ १ ॥ वेदवेद्ये परे पुंसि जाते दशरथात्मजे ॥ वेदः प्राचेतसादासीत्साक्षाद्रामायणात्मना ॥ २ ॥ वेदतुल्यमिदं साक्षा-च्छ्रीमद्रामायणं परम् ॥ अतो हि तस्य श्रवणं कर्तव्यं यावदायुषम् ॥ ३ ॥ तदेव साधनं मुक्तेस्तद्दतेन्यन्न विद्यते ॥ एवं हृदि विनिश्चित्य श्रीरामे दृढभक्तिमान् ॥ ४ ॥ स श्रीरामायणकथाश्रवणेनैव संततम् ॥ कालं संक्षिप्य तद्भक्त्या भगवान्कुलशेखरः ॥ ५ ॥ आरण्यकांडे वेदांतिन् खरदूषणसंगरे ॥ शुश्राव तमिमं श्लोकं भक्तिमान् कुलशेखरः ॥ ६ ॥ चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥एकश्च रामो धर्मात्मा कथं युद्धं भविष्यति ॥ ७ ॥ ऋषयोभ्यागमंस्तत्र द्रष्टुकामास्तदद्भुतम्॥ श्लोकार्थं तमिमं श्रुत्वा प्रेम्णा परवशस्तदा ॥ ८ ॥ असहिष्णुस्ततोऽ-धर्मयुद्धं शीघ्रं स्खलद्गतिः ॥ धनुर्बाणान् समादाय खड्गं चर्म च वीर्यवान् ॥९॥ चतुरंगबलोपेतो जनस्थानं कृतत्वरः ॥ प्रतस्थे तत्क्षणे

तस्य सहायार्थं हरिप्रियः ॥ १० ॥ अतिप्रवृत्तां यात्रां तां नृपतेस्तस्य मंत्रिणः॥विलोक्य विस्मयं गत्वा तस्य ते विनिवर्तने॥११॥ सम्यगालोच्य मनसा समर्थान् वैष्णवांस्तदा॥तस्य राज्ञो ह्यभिमुखं प्रेषयामासुरंजसा॥१२॥ ते तस्याभिमुखं गत्वा राजानमिदमब्रुवन्॥चतुर्दशसहस्राणि रक्षसां भीमकर्मणाम् ॥ १३ ॥ अर्धाधिकमुहूर्तेन राघवेणैव संगरे ॥ तेन धर्मात्मनैकेन निहतानि नृपोत्तम ॥ १४ ॥ तं दृष्ट्वा शत्रुहंतारं महर्षीणां सुखावहम् ॥ बभूव हृष्टा वैदेही भर्त्तारं परिषस्वजे ॥ १५ ॥ श्रीवैष्णवानां तद्वाक्यं सत्यं परमसंमतम् ॥ निशम्य संप्रहृष्टोथ रामभक्तो नृपोत्तमः ॥ १६ ॥ स्वभूषणानि सर्वाणि स तेभ्यः प्रददौ मुदा ॥ सर्वानादाय सहसा वैष्णवान्कुलशेखरः ॥ १७ ॥ विवेश स्वपुरं राजा तन्निवृत्तमतिस्तदा ॥ संप्रवक्ष्यामि ते भूयो वेदांतिन्महदद्भुतम् ॥ १८ ॥ श्रूयतां तस्य राजर्षेश्चरित्रमतिपावनम् ॥ असादृश्यं हि यद्भक्तिपारवश्यं महात्मनः ॥१९॥ अवैष्णवमुखं क्वापि नेक्षते कुलशेखरः ॥ श्रीवैष्णवमयं राज्यं सर्वं समभवत्ततः ॥ २० ॥ सर्वैः श्रीवैष्णवैः सार्द्धं मौनव्रतपरायणः ॥ नित्यं शृण्वन्पुराणानि तस्थौ रामायणं तथा ॥२१॥ आनंदबाष्पनयनः पुलकांकितविग्रहः॥ भक्त्या परमया युक्तो महात्मा कुलशेखरः ॥ २२ ॥ तद्भक्तिपारवश्यं च विदित्वा सुसमाहितः ॥ दक्षः पौराणिकस्तत्र श्रीमद्रामायणेनघ॥ २३ ॥ राघवस्याजयस्थानं यद्यत्सर्वं विसृज्य तत् ॥ सोत्कर्षमेव रामस्य प्रोवाच नृपतेः सदा ॥ २४ ॥ भक्त्या परमया युक्तस्तदेकहृदयोनिशम् ॥ तत्राक्षेपादिरहितः शृण्वन् रामायणं स्थितः ॥ ॥२५॥ संप्रविष्टोन्यकार्येथ कदाचित्स पुरोहितः ॥ तस्य रामायणं वक्तुं पुत्रं प्रेषितवान् किल ॥ २६ ॥ अजानानो ह्यभिप्रायं राज्ञः पौराणिकः परम् ॥ तत्रोक्तरीत्या तां सर्वां कथामकथयत्तदा ॥ २७ ॥ आरण्यकांडे वेदांतिंस्तत्रैवं विद्यते किल ॥ जहार रावणः सीतां बुधः खे रोहिणीमिव ॥ २८ ॥ श्रुत्वासहिष्णुस्तद्वाक्यं सीताहरणजं

तदा ॥ कोपेन महता युक्तः पदाहत इवोरगः ॥ २९ ॥ सर्वेषां
शृण्वतां राजा व्याजहार वचः शुभम् ॥ तामस्मन्मातरं देवीं रामप-
त्नीं यशस्विनीम् ॥३०॥ दुरात्मा रावणः पापः कथं हरति वा बत ॥
अधुनैवाशु गत्वाहं लंघयित्वा महोदधिम् ॥ ३१ ॥ भस्मीकृत्वा पुरीं
लंकां हत्वा रावणमाहवे॥सपुत्रदारं सामात्यं समित्रज्ञातिबांधवम्॥३२॥
आनयिष्यामि तां सीतां मातरं मे यशस्विनीम्॥ इत्युक्त्वा सधनुर्बाणः
खड्गमादाय सत्वरम्॥३३॥लंकां प्रतस्थे वेदांतिन्राजाश्रीरामभक्तिमान्॥
प्रतस्थे पृष्ठतस्तस्य चतुरंगबलं महत् ॥३४॥ तद्भक्तिपारवश्येन समु-
द्रमभिगच्छतः ॥ न लक्षितस्तदा तस्य शक्तः कोपि निवारणे ॥३५॥
वेलातिक्रमणस्याब्धेर्वेदांतिन् प्रलये यथा ॥ अतिदेवचरित्रस्य राम-
भक्तस्य भूपतेः ॥ ३६ ॥ वर्णयामि कथं विद्वंश्चरितं यदनूपमम् ॥
देवाः संद्रष्टुकामास्ते तद्भक्तिं परमाद्भुताम् ॥३७॥ आस्थिताः सहसा
सर्वे विमानस्था नभःस्थले ॥ ततो विवेश राजर्षिः स महोदधिमंजसा
॥ ३८ ॥ चतुरंगबलं तस्य यथा राजा तथा प्रजाः ॥ दिव्यंतरिक्षे
भूमौ च हाहाकारो महानभूत् ॥ ३९ ॥ तद्द्रष्टुमागतानां च मानवानां
दिवौकसाम् ॥ ततो भक्तपराधीनः श्रीरामः करुणांबुधिः ॥ ४० ॥
लक्ष्मणानुचरः सीतां हस्तेनादाय मैथिलीम् ॥ प्रसन्नो नृपतेस्तस्य
व्याजहार वचः शुभम् ॥ ४१ ॥ कुलशेखर सद्भक्त मयि तिष्ठति
पुत्रक ॥ किमर्थं भवतस्तात महानेतादृशः श्रमः ॥ ४२ ॥ समरे
रावणं हत्वा सपुत्रज्ञातिबांधवम् ॥ सीतामादाय वैदेहीमधुनाहं समा-
गतः ॥ ४३ ॥ सैषा हि भवतो माता वैदेहीं पश्य पुत्रक ॥ इत्युक्त्वा
राघवः श्रीमान् स्वभक्ताय महात्मने ॥ ४४ ॥ तदा प्रदर्शयामास
सीतां जनकनन्दिनीम् ॥ रामं च लक्ष्मणं सीतां विलोक्य कुलशेखरः
॥ ४५ ॥ संतुष्टः प्रणिपत्याथ तैः सार्द्धं राघवादिभिः ॥ वेलाधिरोहणं
चक्रे कृतकृत्यः ससैनिकः ॥ ४६ ॥ कंठमात्रजलेनैव सिंधौ गच्छंत-

मंजसा ॥ भक्त्या लंकां प्रति जवात्सीतानयनकारणात् ॥ ४७ ॥ ताम्रचूडपुरस्याशु तं कृत्वाभिमुखं तदा ॥ स भक्तिपारवश्येन ससैन्यं नृपपुंगवम् ॥ ४८ ॥ सर्वेषां पश्यतां तत्र श्रीरामोंतर्दधे हरिः॥ अदृष्ट्वा राघवं राजा दुःखितो विगतस्मृतिः ॥ ४९ ॥ क्षणमात्रं ततो धीमानबुध्यत तदाखिलम् ॥ यथा धनं स्वप्नलब्धमदृष्ट्वा बुद्धवाञ्जनः ॥ ५० ॥ ततो विबुध्य तत्सर्वं यत्सीताहरणादिकम् ॥ सम्यग्रामायणे प्रोक्तं पौराणिकमुखात्तदा ॥ स्वस्थचित्तो नृपो धीमान् स्वपुरं प्रत्यपद्यत ॥ ५१ ॥ अत्यद्भुताध्यायकथां सुपुण्यां शृण्वंति भक्त्या च पठंति ये वै ॥ ते पापसंघान् परिहृत्य शीघ्रं भवेयुरार्या भुवि रामभक्ताः ॥५२॥ इति श्रीप्रपन्नामृते भट्टार्यवेदान्तिसंवादे श्रीकुलशेखरस्य श्रीरामप्रत्यक्षदर्शनं नाम षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ।

रामभक्तस्य राजर्षेश्चरितं महदस्ति यत् ॥ तत्सर्वं गदितुं विद्वन् कः समर्थो महीतले ॥ १ ॥ तथापि शृणु वक्ष्यामि यत्किंचित्कृपया गुरोः ॥ चित्रं तदीयभक्तस्य चरित्रं नृपतेर्महत् ॥ २ ॥ श्रीवैष्णवानां वेदांतिन् वेदांतद्वयशालिनाम् ॥ चतस्रः कोट्यो राज्ञा षड्रसान्नैर्दिनेदिने ॥ ३ ॥ पायसान्नैश्च भक्ष्यैश्च परितृप्तास्तदाभवन् ॥ ततोऽधिकतराश्चान्ये तृप्तिं प्राप्ता हि वैष्णवाः ॥ ४ ॥ बहुनोक्तेन किं विद्वन् संक्षेपेण ब्रवीम्यहम् ॥ स्वराज्यं वैष्णवाधीनमकरोत्कुलशेखरः ॥ ५ ॥ राज्यं भगवतोऽधीनं सर्वं कृत्वा निरंतरम् ॥ दासभूतो हि सर्वेषां वैष्णवानां महात्मनाम् ॥ ६ ॥ गुणानुभवकैंकर्य्यनिरतोऽभूत्सदा हरेः ॥ कुलशेखरदेवस्य वृत्तांतं मंत्रिणस्तदा ॥ ७ ॥ विदित्वा सकलं तच्च विलोक्यैतद्विचेष्टितम् ॥ तदासहिष्णवस्तत्र समेत्य मंत्रिणस्तदा ॥ ८ ॥ राज्ञः स्वराज्यं वित्ताद्यं न किंचित्किल विद्यते ॥ विष्णुदासैकदासत्वमुपेत्य तदधीनकः ॥ ९ ॥ भ्रांतवद्भ्रमते

राजा भ्रांतसंगाद्भ्रमान्वितः ॥ महांश्चित्तभ्रमो जातो नीतिगस्यापि भूपतेः ॥ १० ॥ एतेषां सहवासेन वैष्णवानां महात्मनाम् ॥ राज्ञोस्य मरणं प्राप्तं सिंधौ किल तदा ह्यभूत् ॥ ११ ॥ केनचिद्दैवयोगेन तस्मात्संरक्षितो नृपः ॥ कालाकालमजानंतः संचरंति हि वैष्णवाः ॥ ॥ १२ ॥ राजस्थाने च शुद्धांते भोजनावसरेऽपि च ॥ सर्वदा कांक्षते राजा वैष्णवागमनं प्रति ॥ १३ ॥ वैष्णवा मद्गृहं पूर्णं ह्यागच्छंति यदायदा ॥ दृष्टमात्रेण संतुष्टः स तेषां हि यथा निधेः ॥ १४ ॥ संभ्रमात्सहसोत्थाय रत्नसिंहासनान्नृपः ॥ स्वकार्यं दूरतः क्षिप्त्वा महच्चापि तृणादिवत् ॥ १५ ॥ श्रीवैष्णवेभ्यः सर्वेभ्यो विधायापचितिं मुदा ॥ पांड्यदेशे ब्रह्मदेशे राजगोपालसन्निधौ ॥ १६ ॥ श्रीवैष्णवैस्तु तत्त्वार्थलग्नचित्तो हि भूमिपः ॥ एतद्विज्ञाय विज्ञाप्यमस्माभिर्हितकांक्षिभिः ॥ १७ ॥ इति निश्चित्य ते सर्वे मंत्रिणो मंत्रकोविदाः ॥ अर्थं निवेदितुं प्राप्ताः कांक्षंतः समयं स्थिताः ॥ १८ ॥ दृष्ट्वा तज्जगतीनाथः कार्यं ब्रूतेत्यचोदयत् ॥ तेऽब्रुवन् सहिता राजन् महाभागवतार्चनम् ॥ १९ ॥ एतत्तु खलु कर्त्तव्यं मुमुक्षूणां महात्मनाम् ॥ राजा तु खलु संतिष्ठेत् प्रजापालनकर्माणि ॥ २० ॥ सतां च संग्रहं कुर्वन्नसतां च विनिग्रहम् ॥ सप्तांगराज्यं बिभृयाच्छशक्तिभिस्तिसृभिर्युतः ॥ २१ ॥ सततं चतुरो वर्णांस्तत्तद्धर्मे नियोजयन् ॥ कुर्वंश्च विविधां भक्तिं भगवत्यंबुजेक्षणे ॥ २२ ॥ मानयन्मंत्रिणो मंत्रकोविदान्सूक्ष्मधीमतः ॥ एवं तिष्ठति यो राजा स चतुःसागरावधिम् ॥ २३ ॥ धरित्रीमखिलां भुंक्ते दिवमाखंडलो यथा ॥ एते भागवता राजन् राजधर्ममनुत्तमम् ॥ २४ ॥ न बोधयंति ते नित्यं प्रत्यक्षं सर्वसौख्यदम् ॥ तच्छ्रुत्वा मंत्रिणां वाक्यं राजा स्मित्वा ह्युवाच तान् ॥ २५ ॥ श्रीवैष्णवेभ्यो लोकेस्मिन् भुक्तिमुक्तिप्रदायके ॥ हितोपदेशकाः के स्युर्मम प्राणा हि वैष्णवाः ॥ २६ ॥ इत्युक्त्वा मंत्रिणः सर्वान् करणी-

येषु कर्मसु ॥ नियोज्य प्रयतान्कृत्वा राज्यकार्येषु स स्वयम् ॥ २७॥ वैष्णवैः सह तत्त्वार्थलग्नचित्तः सदाभवत् ॥ मंत्रिणोऽपि तदा राज्ञो वैष्णवानां च भेदने ॥२८॥ अभवन् पापमतयश्छिद्रान्वेषणतत्पराः॥ ततः कदाचिद्भूमीशो महाभागवतैः सह ॥ २९ ॥ दिव्यस्रग्वस्त्रललितो हारकेयूरकुंडलैः ॥ मणिग्रैवेयमंजीरकंकणाद्यैर्विराजितः ॥३०॥ पौराणिकैः सत्कविभिः मंत्रिभिः सपुरोहितैः ॥ सभायां शुशुभे राजा नक्षत्रैरिव चन्द्रमाः ॥ ३१ ॥ तदा भागवतश्रेष्ठाः महाकारुण्यसिंधवः ॥ श्रीमदष्टाक्षरमनुसदर्थासक्तचेतसः ॥ ३२ ॥ शमादिगुणसंपन्ना द्राविडश्रुतिबोधकाः ॥ तत्त्वत्रयज्ञाः शेषत्वज्ञानवंतस्तथाययुः ॥३३॥ राजोत्थाय प्रणम्याथ संस्तुत्य विनयान्वितः ॥ पूजयित्वा च तांस्तत्त्वगोष्ठ्यां रामे मनो दधौ ॥ ३४ ॥ श्रुत्वा यामद्वये राजा परमाह्लादनिर्भरः ॥ स्नातुकामस्ततः स्वांगाद्भूषणानि विमुच्य सः॥३५॥सिंहासने विनिक्षिप्य कथासक्तमनाः पिबन् ॥ श्रीरामतत्त्वार्थं सम्यक् सत्संलापकुतूहलः ॥३६॥ ततः प्रणम्य विधिवत्संविसृज्य च वैष्णवान् ॥ स्नात्वा संभोज्य तान्सर्वान्स्वयं भुक्त्वा च शेषतः ॥३७॥ संविश्य चाथ विश्रम्य सभां गंतुं मनो दधौ ॥ भूषणानि सभामध्ये स्थापितानि मयासने ॥ ३८ ॥ तान्यानयध्वमित्युक्ते राज्ञा स्ते परिचारकाः ॥ सभां प्रविश्याहष्ट्वा च तानि चिंतायुतास्तदा ॥ ३९ ॥ भूषणानि न संतीति तत्र राज्ञे न्यवेदयन् ॥ राजा तु तद्वचः श्रुत्वा कुपितो मंत्रिणस्तदा ॥ ४० ॥ आहूय रक्षकान्त्सर्वान् कुपितस्तानुवाच ह ॥ सदा युष्मासु तिष्ठत्सु रक्षां कुर्वत्सु सर्वतः ॥ ४१ ॥ तस्कराः किं तु मुष्णंति न दृष्टं स्तेयमीदृशम् ॥ अधुनैवानयध्वं मे भूषणान्यविलंबितम् ॥ ४२ ॥ नो चेत्प्राणांतिकं दंडं करिष्येहं भवत्सु वै ॥ अथामात्याः पुरः स्थित्वा कृतांजलिपुटा नृपम् ॥ ४३ ॥ ऊचुस्तदाज्ञया चोरनामापि श्रूयते नहि ॥ त्वन्मंदिरेधुना सर्वे

श्वेतमृन्मात्रधारणात् ॥ ४४ ॥ सर्वे निवारिताश्चैवायांति यांति च वैष्णवाः ॥ चित्तेस्माकं तु संदेहो वैष्णवेष्वपि जायते ॥ ४५ ॥ तान् विनान्ये न गृह्णंति भूषणानि नृपोत्तम ॥ तच्छ्रुत्वा दुष्कृतं वाक्यं मंत्रिणां दुष्टचेतसाम् ॥ ४६ ॥ पिधाय कर्णौ संरब्धो भगवन्नाम संस्मरन् ॥ मुखानि न निरीक्षेहं युष्माकं दुष्टचेतसाम् ॥ ४७ ॥ इति ब्रुवाणोमात्येषु दंडदाने मनो दधे ॥ एवं निश्चित्य मनसा सचिवानब्रवीन्नृपः ॥ ४८ ॥ लोके तिष्ठति यत्पापं तद्धरिस्मरणाद्धृतम् ॥ हरिनिंदाकृतं पापं वैष्णवस्तुतिभिर्हृतम् ॥ ४९ ॥ निंदया वैष्णवानां तु यत्पापं प्रतिपद्यते ॥ तन्न नश्यति केनापि वदंति हि महर्षयः ॥ ५० ॥ तस्माद्भवद्भिर्या निंदा कृता वैष्णवसज्जने ॥ दंडं करोमि युष्मासु तिष्ठेल्लोके न मेऽयशः ॥ ५१ ॥ तस्माद्दंडान्निवृत्तोहं युष्मास्वद्य समुद्यतात्॥ क्रोधलोभानृताज्ञानकामादिरहितेषु च॥५२॥ स्तेयमारोपितमहं वैष्णवेषु विमार्जयन् ॥ प्रमाणं तु करिष्यामि निःशंकेनांतरात्मना ॥ ५३ ॥ इत्युक्त्वाशीविषं घोरं स्थापयित्वा घटांतरे ॥ पुरोहितान् पौरजनान् पौरवर्गान्समाह्वयत ॥ ५४ ॥ उवाच चैवं श्रोतव्यं मद्वाक्यं यद्वदाम्यहम् ॥ श्रीवैष्णवा भुक्तिमुक्तिनिस्पृहा नैव तस्कराः ॥ ५५ ॥ सत्यंसत्यमिदं सत्यं वाक्यं चेन्मामयं विषी॥ न च दङ्क्ष्यति सर्पोपि पश्यतैतद्विचेष्टितम् ॥ ५६ ॥ इत्युक्त्वा पश्यतां तेषां सर्वेषां कुलशेखरः ॥ कुंभीनसफणां व्यात्तां कुंभांतर्गतसुस्थिताम् ॥ ५७ ॥ गृहीत्वा स्वर्णमुद्रां तां करेणोद्धृतवांस्तदा ॥ कुर्वत्येवं महाराजे नभस्संस्थितनिर्जराः ॥ ५८ ॥ विस्मयं परमं गत्वा पुष्पवर्षामकुर्वत ॥ दुंदुभिध्वानिभिश्चैव तं नृपं ह्यभितुष्टुवुः ॥ ५९ ॥ ततः समस्तदेवैश्च श्रीपतिस्तत्र चागतः ॥ कारुण्यसिंधुः श्रीरामः कोटिसूर्यसमप्रभः ॥ ६० ॥ आविर्बभूव सदसि राजानं समलोकत ॥ कृपासुधादृष्टिभिश्च शिशिरीकृत्य सद्गतिः ॥ ६१ ॥ उत्थाप्य संपरिष्वज्य प्राह वाक्यं कृपान्वितः ॥ कल्याणगुणसंपन्न वैष्णवोत्तम

भूपते ॥ ६२ ॥ मत्तोधिकान् महाभाग मद्भक्तान् मन्यसे यथा ॥ संतुष्टोहमनेनाद्य वृणीष्व वरमुत्तमम् ॥ ६३ ॥ इति ब्रुवाणे श्रीरामे वाक्यमुत्तरमब्रवीत् ॥ नृपतिः प्रांजलिर्भूत्वा विनयेन समन्वितः ॥ ६४ ॥ राम राजेंद्र लोकाभिराम राजीवलोचन ॥ योगींद्रचित्तकमलद्युमणे कमलासख ॥ ६५ ॥ वृणीष्वेति वरं देव ब्रवीषि करुणाकर ॥ किं प्रार्थयेहं देवेश सर्वमेवाददाः पुरा ॥ ६६ ॥ त्वद्भक्तेषु दृढां भक्तिं त्वयि चैव वृणोम्यहम् ॥ एवमुक्ते नृपवरे संतुष्टहृदयो हरिः ॥ ६७ ॥ वरं तथैव दत्त्वाथ पुनः प्रोवाच विस्मितः ॥ नीलांशजातां त्वत्पुत्रीं देहि मे नरनायक ॥ ६८ ॥ भवामि तेहं जामाता श्वशुरस्त्वं मतो मम ॥ तच्छ्रुत्वा रंगनाथस्य वाक्यं नृपशिखामणिः ॥ ६९ ॥ धन्योस्म्यहं कुलं जन्म पवित्रं च मम प्रभो ॥ इत्युक्त्वा स्वपुरीं रम्यां कृत्वालंकारसंयुताम् ॥ ७० ॥ भूषणैर्भूषयित्वाथ कन्यां परमशोभनाम् ॥ वेदीं कृत्वा सभामध्ये हुत्वाग्निं स यथाविधि॥७१॥ श्रीरंगपुरनाथाय देवेशेंद्रमुखामरैः ॥ सेविताय ददौ राजा कन्यां तां विधिपूर्वकम् ॥७२॥सोपि प्रगृह्य तां कन्यां राजपुत्रीं मनोहराम्॥राज्ञा संपूजितः सर्वैरनर्घ्यैर्वस्तुभिः शुभैः ॥ ७३ ॥ देवैः सह पुनः प्राप स्वधाम परमं हरिः ॥ ततो नृपस्य सचिवा विस्मयाविष्टचेतसः ॥ ७४ ॥ प्रभावं तस्य विज्ञाय गृहीत्वा भूषणान्यपि ॥ निक्षिप्य पुरतस्तस्य भूषणानि भयान्विताः ॥७५॥ राजानं प्रणिपत्याथ स्वापराधं निवेद्य च ॥ ययाचिरेऽभयं तेभ्यः स राजाप्यभयं ददौ ॥ ॥७६॥ ततः स्वपुत्रमनघं गुणवंतं महाबलम् ॥ राज्येभिषिच्य सततं तस्थौ वैष्णवसेवया ॥ ७७ ॥ ततो नराधिपः श्रीमान् रामायणपरायणः ॥ तास्ता रामकथाः शृण्वन्परमानंदनिर्भरः ॥ ७८ ॥ ततः कदाचिच्छ्रीरामनवम्यां सुमहोत्सवः ॥ बभूव रामचंद्रस्य सर्वलोकमहोत्सवः ॥ बभूवालंकृतः सम्यक्ताम्रचूडपुरं महत् ॥ ७९ ॥ रंभास्तंभैः पताकाभिः शोभमानैश्च तोरणैः ॥ भेरीकाहलनादैश्च वेदघोषैश्च

पूरितम् ॥ ८० ॥ कुलशेखरदेवस्य रामभक्तस्य भूपतेः ॥ गृहोत्तमे मणिमये विचित्रे देवतागृहे ॥ ८१ ॥ विशेषतो महानासीद्रामचंद्रमहोत्सवः॥ तस्यार्चाविग्रहस्यास्य सीतारामस्य भक्तितः ॥८२॥ राजगोपालदेवस्य मज्जनावसरे तदा ॥ विमुच्य भूषणान्याशु चानर्घ्यान्यखिलानि च ॥ ८३ ॥ तान्यर्चका यथामात्रं क्वचिद्देशे ह्यतिष्ठिपन् ॥ अभिषेकं तदा चक्रुर्हरये परमात्मने ॥ ८४ ॥ तदा पुरुषसूक्तैश्च श्रीसूक्तैर्वेदपारगाः॥ भूसूक्तैरनुवाकैश्च वैष्णवैश्च महारवैः॥८५॥ नृत्यगीतादिवाद्यैश्च महाभेरीरवैस्तथा ॥ बद्धांजलिर्महाराजस्तं मज्जनमहोत्सवम् ॥ ८६ ॥ सेवमानस्तदा तस्थौ तदेकहृदयो महान् ॥ तदेकहृदयाः सर्वे पश्यंतस्तं महोत्सवम् ॥ ८७ ॥ आस्थितास्तस्य ये चान्ये वैष्णवास्तत्र सादरम् ॥ तदंतरं समावेद्य मंत्रिणः सहसा तदा ॥ ८८ ॥ अनर्घ्यं मौक्तिकं हारं तत्रैकमपहृत्य ते ॥ केनाप्यलक्षितास्तत्र वैष्णवद्वेषकारणात् ॥ ८९ ॥ निक्षिप्यान्यस्थले ते तु निगूढं निपुणाश्च तम् ॥ पूर्ववद्राजनिकटे मंत्रिणः समुपस्थिताः ॥ ९० ॥ ततोलंकारसमये देवस्य परमात्मनः ॥ नालक्ष्यत तदा हारो बिभ्युस्ते वैष्णवास्ततः ॥ ९१ ॥ आचख्यिरेऽर्चकाः सर्वे तद्भूषाहरणं तदा ॥ हारस्य तस्य राहित्यात्कुपितः कुलशेखरः ॥ ९२ ॥ विलोक्य मंत्रिणः सर्वानब्रवीत्पृथिवीश्वरः॥आख्यात हारहर्त्तारं शीघ्रं सम्यग्विचार्य च ९३ अद्यैव सत्वरं चोरमानयध्वं ममांतिकम् ॥ प्रतिगृह्य वचस्तस्य राज्ञस्ते मंत्रिणस्तदा ॥ ९४ ॥ विचार्य तत्र सर्वत्र तं चोरं नृपशासनात् ॥ नृपांतिकमुपागत्य ते तमूचुर्गुरूद्वहः ॥ ९५ ॥ अस्माभिरधुना सम्यग्यत्नेन महता नृप ॥ विचार्य्यमाणे चोरोस्मिन्न चोरोन्येषु लक्षितः ॥ ९६ ॥ उद्देश्या भवतोत्यंतं वैष्णवाश्चांतरंगिणः ॥ तैरेवापहृतो हारो नृप नास्त्यत्र संशयः ॥ ९७॥ भगवद्भूयहरणे कः समर्थो विना हि तान् ॥ संचरंत्यखिला एते संपत्पुत्रा इवानिशम् ॥ ९८ ॥ अनि-

वारितपंथानः सर्वेऽत्रैव वैष्णवाः ॥ कोशस्थाने च शुद्धान्ते मंत्रस्थाने महीपते ॥ ९९ ॥ तेषां निवारणे राज्ञः कोपोभूदिति ते महान् ॥ प्रणम्य दृष्टमात्रेण सर्वे तूष्णीं स्थिता वयम् ॥ १०० ॥ तच्छ्रुत्वा नृपतिः क्रुद्धो मंत्रिणामशुभं वचः॥यन्मिथ्यारोपितं तीक्ष्णं चौर्यं भागवते जने ॥ १०१ ॥ असहिष्णुस्ततो विद्वान् कर्णशल्योपमं तदा ॥ आहर्त्तुकामस्तां निंदां व्याजहार वचः शुभम् ॥ १०२ ॥ न चोरा वैष्णवा लोके सत्यंसत्यं मयोच्यते॥ प्रमाणपूर्वकं तच्च दर्शयिष्यामि वः स्फुटम् ॥ १०३ ॥ निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा ॥ ततो नापैति यः सोपि यात्यधः सुकृताच्युतः ॥ १०४ ॥ करोति निन्दां यो लोके विष्णोर्भागवतस्य वा॥जिह्वायाश्छेदनं तस्य कर्तव्यं शास्त्रनिर्णयः ॥१०५॥ सर्वेषामधिको विष्णुर्ब्रह्मादीनां परः पुमान् ॥ तस्माद्विष्णोर्जगद्धेतोर्वैष्णवा ह्यधिकाः स्फुटम् ॥ १०६ ॥ श्रीवैष्णवमहानिंदां तां सहिष्ये कथं बत ॥ तद्भक्तोहं तादृशश्च महतीमयशस्करीम् ॥ १०७ ॥ इत्युक्त्वा सहसा राजा वेदांतिन् कुलशेखरः ॥ स्नातः सचैलः सद्भक्त्या महाभागवताश्रयः॥१०८॥श्रीमद्भागवतार्थाय राजगोपालरूपिणः॥विष्णोर्भगवस्तस्य सन्निधौ निश्चलस्तदा॥१०९॥ शुद्धा भागवता लोके न भवंति हि तस्कराः॥ इत्युक्त्वा पश्यतां तेषां जग्राह समहोरगम् ॥ ११० ॥ भीतास्ते मंत्रिणस्तत्र तं दृष्ट्वा सुमहाद्भुतम् ॥ विज्ञाप्य सकलं सम्यक् स्वकृत्यं राजसन्निधौ ॥ १११ ॥ हारमादाय सहसा प्रार्थयामासुरातुराः ॥ अपराधक्षमार्थाय नृपतेः पादपद्मयोः ॥ ११२ ॥ श्रीवैष्णवपदाब्जेषु प्रणामं विदधुश्च ते ॥ ततो ह्यचिंतयद्राजा भगवान्कुलशेखरः ॥ ११३ ॥ न शौरिचिंताविमुखजनसंवासवैशसम् ॥ वरं हुतवहज्वालापंजरांतर्व्यवस्थितिः ॥ ११४ ॥ इत्येवं सम्यगालोच्य भगवद्भक्तिपारगः ॥ मत्वातिदुःसहं तेषां सहवासं च मंत्रिणाम् ॥ ११५ ॥ दृढव्रताख्यं स्वसुतं राज्ये निक्षिप्य सत्वरम् ॥ श्रीवैष्णवैर्महाभागैर्विबुधैश्चांतरं-

गिभिः ॥ ११६ ॥ निवृत्तराज्यस्संतुष्टः प्रतस्थे रंगमंजसा ॥ श्रीरंगसत्पुरं प्राप्य दृष्ट्वा श्रीरंगनायकम् ॥ नत्वा मुमोद भूलोकमहानिधिमिवाधनः ॥ ११७ ॥ नीलांशजां चेरकुलप्रदीपां निजात्मजां रंगिणि सक्तचित्ताम् ॥ समर्प्य तस्मै जगदीश्वराय स्वसंपदं यौतकमेव चक्रे ॥ ११८ ॥ प्रबंधं देवगीताख्यं दिव्यद्राविडभाषया ॥ विधाय लोकरक्षार्थं सर्वं जगदपालयत् ॥ ११९ ॥ भगवद्वैभवं चात्र तद्भागवतवैभवम् ॥ उभयं सम्यगेवार्यं प्रबंधे प्रतिपादितम् ॥ १२० ॥ पंचोत्तरशतं तत्र गाथानां समुदीरितम् ॥ अभिष्टुता दिव्यदेशास्तेन सप्तानघादरात् ॥ १२१ ॥ रंगेशं रंगनिलये श्रीनिवासं वृषाचले ॥ रघूद्वहमयोध्यायां गोविंदं चित्रकूटके ॥ १२२ ॥ कृष्णपुर्यां शौरिराजं सुंदरांगं वनाचले ॥ वाराहस्वामिनं चैतानस्तौषीत्कुलशेखरः ॥ अस्मिन्नर्थे महान् श्लोकः श्रूयतेस्मद्यते भुवि ॥ १२३ ॥ साकेतो मुनिभूधरो वृषगिरिः श्रीचित्रकूटस्थलं रंगं कृष्णपुरं च केरलतले वाराहनामा पुरी ॥ सप्तैते कुलशेखरेण मुनिना श्रीदिव्यदेशाः स्तुतास्तान्प्रातः प्रतिवासरं पठति यः श्रीमान् स भूयान्नरः ॥ १२४ ॥ अनुग्रहेण स्वयमाप्ततत्त्वज्ञानोदयो रंगपतेर्दयालोः ॥ अभाषत द्राविडभाषयासौ गाथाशतेनास्य महाप्रबंधम् ॥ १२५ ॥ श्रीशस्य रंगाधिपतेः स्वसूक्तीर्गाथाशते वेदशिखार्थगर्भे ॥ चक्रे पुनः सप्ततिमञ्जनाद्रिधुरीणकंसारिरघूद्वहानाम् ॥ २२६ ॥ ततः श्रीरंगनगरे कंचित्कालं नृपोत्तमः ॥ स्थित्वा संसेवयन्सन्यक् श्रीरंगेश्वरमद्भुतम् ॥ १२७ ॥ विधाय बहुलं तत्र तदीयाराधनं तथा ॥ कृतकृत्यस्ततः सर्वदिव्यदेशदिदृक्षया ॥ १२८ ॥ सार्द्धं श्रीवैष्णवैः सर्वैः प्रतस्थे कुलशेखरः ॥ सर्वस्थलानि संसेव्य दिव्यदेशस्थलानि च ॥ १२९ ॥ तदीयाराधनं चक्रे तत्र तत्र महत्तरम् ॥ कुरुकानगराभ्याशे ब्रह्मदेशाख्यमुत्तमम् ॥ १३० ॥ नगरं प्राप सहसा कुलशेखरभूपतिः ॥ नत्वा श्रीराजगोपालं ब्रह्मदे-

शपुराधिपम् ॥ १३१ ॥ तस्याभिप्रायवशतो वसंस्तत्रैव चादरात् ॥ स्थित्वा भूम्यां सप्तषष्टिं वत्सरान् सुखवर्त्मना ॥ १३२ ॥ पांड्यदेशे ब्रह्मदेशे राजगोपालसन्निधौ ॥ वैकुंठनगरं प्राप महात्मा कुलशेखरः ॥ १३३ ॥ विख्यातराजर्षिकुलेवतीर्य वितत्य भूमौ भगवत्प्रभावम् ॥ विरिंचिरुद्रादिसुरैरगम्यं विष्णोः पदं सम्यगवाप धीरः ॥ ॥ १३४ ॥ दिव्यं यत्तदनूपमाद्भुततरं श्रोतुः श्रवानंददं विख्यातं कुलशेखरस्य चरितं भक्ताब्जसूर्योदयम् ॥ पुण्यं पापविनाशनं शुभकरं संपत्करं सर्वदा ये शृण्वंति पठंति सौम्यहृदयास्ते यांति विष्णोः पदम् ॥ १३५ ॥ इति श्रीप्रपन्नामृते भट्टार्यवेदांतिसंवादे कुलशेखरार्य्यचरित्रं नाम सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

## अष्टाशीतितमोऽध्यायः ।

प्रणिपत्य स वेदांती भट्टार्यो देशिकोत्तमम् ॥ विष्णुचित्तस्य चरितं परिपप्रच्छ सादरम् ॥१॥ श्रीविष्णुचित्तचरितं श्रोतुमिच्छामि देशिक ॥ ब्रूहि मे विशदं विद्वन् भक्ताय करुणार्णव ॥ २ ॥ प्रतिगृह्य वचस्तस्य भट्टार्यः शिष्यवत्सलः ॥ व्याजहार शुभं वाक्यं शिष्यं वेदांतिनं प्रति ॥३॥ विष्णुचित्तस्य चरितं विमलं ज्ञानसाधनम् ॥ दशानां महतस्तस्य शृणु वक्ष्यामि सांप्रतम् ॥४॥ अग्रे वक्ष्यामि वेदांतिंस्तन्महत्त्वस्य कारणम् ॥ प्राग्भागे केरलस्याथ दक्षिणांभोनिधेस्तटे ॥ ५ ॥ पांड्यदेशे बभूवार्यश्चोलदेशस्य दक्षिणे ॥ तत्र धन्विपुरं नाम दिव्यमस्ति स्थलं महत् ॥ ६ ॥ विष्णोः प्रीतिकरं स्थानं यच्च त्रैलोक्यविश्रुतम् ॥ विराजते पुण्यतीर्थं सप्तसागरनामकम् ॥७॥ क्षीराब्धिवासं स विहाय भूम्यां तत्राविरासीद्वटपत्रशायी ॥ संरक्षणार्थं भगवान्मुकुंदस्तत्रागताः सप्तमहार्णवाश्च ॥८॥ ब्रह्मादयः सर्वसुरासुरेंद्रा वाणीमुखाः सर्वसुरस्त्रियश्च ॥ सेवार्थमन्ते निवसंति विष्णोर्देवर्षयस्तत्र च नारदाद्याः ॥९॥ ततो महद्धन्विपुरं सुपुण्यं विख्यातमेकं सकलस्थलेषु ॥ विद्वज्जनैर्विष्णुपदा-

ब्जभृंगैः संपूर्णमासीत्सकलोत्सवैश्च ॥ १० ॥ अथाभवद्धन्विवनाभिधाना पांड्याभिगुप्ता नगरी प्रतीता ॥ यत्संपदालोकनलज्जयैव पुरं सुराणामभजत्सुमेरुम् ॥ ११ ॥ तत्र वेदविदां श्रेष्ठो महात्मा द्विजपुंगवः ॥ यः शालावृतगोत्राब्धिचन्द्रमा वैष्णवोत्तमः ॥ १२ ॥ श्रीबोधायनसूत्रश्च यजुःशाखः पुरःशिखः ॥ मुकुन्दार्य्य इति श्रीमान् बभूव भगवत्प्रियः ॥ १३ ॥ पद्माख्या तस्य भार्य्यायां काचित्साध्वी बभूव ह ॥ सन्तानकामः सततं भार्यया सह सत्तमः ॥ १४ ॥ वटपत्रशयानं तं प्रार्थयामास भूरिशः ॥ संप्रार्थितस्ततो देवो मुकुन्दार्य्येण केशवः ॥ १५ ॥ अपत्यलाभं प्रददौ तस्मै भक्ताय सादरम् ॥ ततः क्रोधनवर्षे तु ग्रीष्मर्त्तौ ज्येष्ठमासके ॥ १६ ॥ शुक्लपक्षे हरितिथौ सुलग्ने भानुवासरे ॥ स्वातितारे खगाधीश भागेन द्विजपुंगवात् ॥ १७ ॥ पद्मार्य्यायां मुकुन्दार्य्याद्विष्णुचित्तस्ततोजनि ॥ अस्यावतारश्लोकाश्च गीयंते प्रथिता भुवि ॥ १८ ॥ श्रीज्येष्ठमासे पवमानतारे ज्येष्ठो गुणेनाजनि भट्टनाथः ॥ कृताभिरूपः स गरुत्मदात्मा कटाक्षलक्ष्यः कमलापतेर्यः ॥ १९ ॥ तादात्मकप्रतिभया भगवत्परत्वं विस्तार्य पांड्यकटके विजयी गजेन ॥ गच्छन् प्रियादुपगते गरुडेन नाथे प्रेम्णाशिषं रचयति स्म नमोस्तु तस्मै ॥ २० ॥ ज्येष्ठे स्वातिभवं विष्णो रथांशं धन्विसत्पुरे ॥ प्रपद्ये श्वशुरं विष्णोर्विष्णुचित्तं पुरःशिखम् ॥ २१ ॥ चत्वारो भ्रातरस्तस्य बभूवुः सुमहौजसः ॥ भट्टनाथस्य वेदांतिन् भगवद्भक्तिपारगाः ॥ २२ ॥ तन्मध्ये सुमहातेजा भट्टनाथो महायशाः ॥ व्यरोचत कलापूर्णो ग्रहैरिव निशाकरः ॥ २३ ॥ जातकर्मादिसंस्कारान्यथाकालं यथाविधि ॥ अकरोद्विष्णुचित्तस्य मुकुन्दार्य्यः पिता तदा ॥ २४ ॥ वैकुण्ठाद्भुवमासाद्य देवो वेत्रवतीसखः ॥ विधाय पञ्चसंस्कारान् भट्टनाथस्य सादरम् ॥ २५ ॥ तेन संपूजितः सम्यक् स्वधाम प्रत्यपद्यत ॥ तस्य विष्णोर्भगवतो निर्हेतुककटाक्षतः ॥ २६ ॥

प्रह्लादवद्भट्टनाथो ह्यभवज्जन्मवैष्णवः ॥ सहजं वैष्णवं दास्यं नैजं संप्राप्य वैष्णवः ॥ २७ ॥ अकिंचित्कुर्वतो नास्ति शेषत्वमिति निश्चितम् ॥ कर्तुकामो भगवतो नित्यं कैंकर्य्यमादरात् ॥ २८ ॥ किंचित्तत्र च कैंकर्य्यं कर्त्तव्यमिति बुद्धिमान् ॥ वेदांतिन् भट्टनाथार्यो हृदि सम्यगचिंतयत् ॥ २९ ॥ दशावतारान् वेदांतिन् सम्यगालोडयत्तदा ॥ कृष्णावतारे तस्यासीत्प्रावण्यं सुमहत्ततः ॥ ३० ॥ एष नारायणः श्रीमान् क्षीरार्णवनिकेतनः ॥ नागपर्य्यंकमुत्सृज्य ह्यागतो मथुरां पुरीम् ॥ ३१ ॥ पुण्या द्वारावती तत्र यत्रास्ते मधुसूदनः ॥ साक्षाद्देवः पुराणोसौ स हि धर्मः सनातनः ॥ ३२ ॥ भगवानवतीर्यैव साधुसंरक्षणाय च ॥ माणिक्यवर्णो देवेशो विभूतिद्वयनायकः ॥ ३३ ॥ ब्रह्मेशसनकादीनामपि ध्यानाद्यगोचरः ॥ स भक्तसुलभः श्रीमान्भगवान्नंदगोकुले ॥ ३४ ॥ गोपिकाधीनवृत्तिश्च तन्निर्माल्यधरः सदा ॥ नवनीतापहारादिकरणे ताडितो भृशम् ॥ ३५ ॥ यद्युलूखलबंधादिकरणे दृढसंमतः ॥ अनिष्टवारणं तेषां कुर्वंस्तत्र समास्थितः ॥ ३६ ॥ ततः कंसवधार्थाय मथुरामागतः पुरीम् ॥ कंसकार्यकृतस्तस्य सुदाम्नः सदनं प्रति ॥ ३७ ॥ स्वयमेवार्पितां मालामग्रहीत्साग्रजस्ततः ॥ प्रसादपरमौ नाथौ मम गेहमुपागतौ ॥ ३८ ॥ धन्योहमर्चयिष्यामीत्याह माल्योपजीविकः ॥ अर्थं महांतं ज्ञात्वैवं श्रीकृष्णे दृढभक्तिमान् ॥ ३९ ॥ श्रीवृंदावनकैंकर्य्यं विधाय भगवत्परः ॥ वटपत्रे शयानाय श्रीधन्विपुरवासिने ॥ ४० ॥ मनोहराः सुगंधाश्च तुलसीपुष्पमालिकाः ॥ नित्यं समर्पयंस्तस्थौ विष्णवे बृहतेनघ ॥ ४१ ॥ एवं महात्मा भगवत्परायणो मुकुंदसूनुर्मुदितानुरागः ॥ श्रीविष्णुकैंकर्य्यरतः स धन्विपुरे विरेजे महतां समाजे ॥ ४२ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे भट्टनाथावतारकथनं नामाष्टाशीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः ।

तस्य धन्विपुरस्याथ पंचयोजनमात्रतः ॥ आसीत्कौबेरदिग्भागे मथुराख्या महापुरी ॥ १ ॥ योजनानां द्विषट्के च श्रीरंगस्याथ दक्षिणे ॥ तस्यां पुर्य्यां महातेजा धार्मिकः पांड्यभूपतिः ॥ २ ॥ आसीद्वल्लभदेवाख्यो विद्वान् कश्चिद्बुधप्रियः ॥ दुर्बलं बलवान् राष्ट्रे न यथा बाधते जनम् ॥ ३ ॥ तथैव राज्यं धर्मेण प्रशशास महीपतिः ॥ ततो वल्लभदेवाख्यो धार्मिको धरणीधरः ॥ ४ ॥ नगरीशोधनार्थाय निशीथे निर्ययौ तदा ॥ वीथ्यां बहिर्वितर्द्यां तु कस्यचिद्वेश्मनोऽनघ॥५॥ एकाकिनं शयानं तमपश्यद्वल्लभो द्विजम् ॥ विलोक्यांतिकमागत्य राजा वचनमब्रवीत् ॥ ६ ॥ को भवानिह संप्राप्तः कुत्रत्यस्तद्वदाशु मे ॥ स राज्ञो वचनं श्रुत्वा ब्राह्मणस्तमथाब्रवीत् ॥ ७ ॥ ब्राह्मणस्तीर्थगो राजन् कृतगंगावगाहनः ॥ सेतुस्नानेच्छया गच्छन्नत्राहं समुपागतः ॥ ८ ॥ तस्य तद्वचनं श्रुत्वा प्रहृष्टेनांतरात्मना ॥ प्रणिपत्य द्विजश्रेष्ठं राजा वचनमब्रवीत् ॥ ९ ॥ भवत्संदर्शनादेव कृतार्थोऽस्मि न संशयः ॥ तथापि मे परं पथ्यं वदात्महितमंजसा ॥ १० ॥ ब्राह्मणस्तद्वचः श्रुत्वा वेदांतिस्तस्य सादरम् ॥ समीचीनतरं श्लोकं जगाद नृपतिं तदा ॥ ११ ॥ वर्षार्थमष्टौ प्रयतेत मासान्निशार्थमन्यं दिवसं यतेत ॥ वार्द्धक्यहेतोर्वयसा नवेन परत्र हेतोरिह जन्मना च ॥ १२ ॥ तं तदा श्लोकमाकर्ण्य व्युत्पन्नः स नृपोत्तमः ॥ श्लोकार्थं सम्यगेवाशु ज्ञात्वा धीमानचिंतयत् ॥ १३ ॥ दृष्टादृष्टे उभे ह्येते संपाद्ये वै ततः किल ॥ विचारः कोपि वा नास्ति मम दृष्टे महीपतेः ॥ १४ ॥ अदृष्टयत्नः कर्तव्यः सांप्रतं सहसा मया ॥ को वा मोक्षप्रदो देवस्तत्र ते बहवः सुराः ॥ १५ ॥ प्रव्याकुलांतःकरणः संचिन्त्यैवं महीपतिः ॥ तं ब्राह्मणं समाराध्य विवेशांतःपुरं तदा ॥ १६ ॥ प्रभातायां तु शर्वर्यां कृत-

कर्मा नृपोत्तमः ॥ संपत्पूर्णे समाहूय पुरोहितमथाब्रवीत् ॥ १७ ॥
पुरुषार्थप्रदं वस्तु शास्त्रनिर्णयपूर्वकम् ॥ ब्रूहि मे मोक्षसिद्ध्यर्थं
जगज्जन्मादिकारणम् ॥ १८ ॥ संप्रहृष्टः स तद्वाक्यं निशम्याथ
पुरोहितः ॥ वेदांतिन् भूपतिं सम्यग्व्याजहार वचः शुभम् ॥ १९ ॥
धर्मज्ञसमयो वेदाः प्रमाणं च नृपोत्तम ॥ अतः शास्त्रविदः सर्वान्स-
माहूय बुधर्षभान् ॥ २० ॥ वाक्यैर्वेदांतसिद्धांतैः परतत्त्वस्य
निर्णयम् ॥ कारयित्वा बुधश्रेष्ठैस्तन्मार्गेणार्यसंमतम् ॥ २१ ॥
ज्ञातव्यं तन्महद्वस्तु परतत्त्वमिदं स्फुटम् ॥ निशम्य वल्लभो राजा
तस्य वाक्यं पुरोधसः ॥ २२ ॥ संतुष्टः सर्वविबुधानानयामास वि-
श्रुतान् ॥ बबंध तोरणस्तंभे विद्याशुल्कं महद्धनम् ॥ २३ ॥ तत्त्वार्थ-
निर्णयं कृत्वा गृहाणेति नृपस्तदा ॥ राजाज्ञया च वेदांतिन्मथुरानगरीं
प्रति ॥ २४ ॥ दिग्भ्यो दशभ्यः सहसा बुधाः सर्वे समागताः ॥
तदा राजसभायां ते राज्ञा सम्यक् प्रपूजिताः ॥ वादांश्चक्रुस्तदान्योन्यं
ब्राह्मणाः शास्त्रवादिनः ॥ २५ ॥ एवं वादपरैस्तैस्तु विद्वद्भिः संशया-
कुलः ॥ २६ ॥ राजा निर्णीततत्त्वार्थाभिलाषी व्याकुलोऽभवत् ॥ स
तदाचिंतयच्छौरिर्धान्विमंगलनायकः ॥ २७ ॥ परतत्त्वमजानानाः
सर्वे संसारिचेतनाः ॥ अज्ञानतमसा छन्नाः कर्ममार्गे भ्रमंत्यहो ॥
॥ २८ ॥ अनेन कारयित्वाशु सांप्रतं तत्त्वनिर्णयम् ॥ भट्टनाथेन ते
लोका रक्षितव्या न संशयः ॥ २९ ॥ तस्याज्ञानं निवार्याथ स्वपद-
प्रापणाय च ॥ प्रकाशयामि स्वपदशरणागतिवर्त्तिने ॥ ३० ॥ इति
निश्चित्य तं प्राह वटपत्रशयो हरिः ॥ ततः प्रसन्नो भगवान् स्वप्ने
तस्य जगत्पतिः ॥ ३१ ॥ अवोचल्लोकरक्षार्थं भट्टनाथं वचः शुभम् ॥
मथुरानगरं गत्वा पांड्यराजसभास्थले ॥ ३२ ॥ उक्त्वात्र विष्णुरेवे-
ति परतत्त्वं बुधांतरे ॥ तद्द्रव्यं सहसा छित्त्वा तोरणस्तंभसंस्थितम् ॥
॥ ३३ ॥ मच्छासनात्तदादाय समागच्छाशु सत्वरम् ॥ हरेर्वाक्यं

समाकर्ण्य भट्टनाथस्तमब्रवीत् ॥ ३४ ॥ विद्याशुल्कं तु तद्द्रव्यं विद्या मम न विद्यते ॥ कथं हरामि देवेश विद्वत्संघेन मानितम् ॥ ३५ ॥ तदंगीकृत्य वचनं शौरिस्तं प्रत्यभाषत ॥ तूष्णीं यातु भवानद्य यद्विद्वन्मंडलं प्रति ॥ ३६ ॥ अहमेव हि तत्कर्ता वेदार्थप्रतिपादने ॥ एवं निर्बंधितस्तेन वेदांतिञ्छौरिणा तदा ॥ ३७ ॥ अंगीचकार तद्वाक्यं भट्टनाथो जगत्पतेः ॥ ततः स्वप्नात्समुत्थाय विस्मयं परमं ययौ ॥ ॥ ३८ ॥ भट्टनाथश्च वेदांतिन् भगवद्भक्तिपारगः ॥ ब्राह्मे मुहूर्ते चोत्थाय कृतकर्मा द्विजर्षभः॥३९॥स्वप्नोक्तिं हृदि निश्चित्य तथ्यामत्यंतंसस्मितम् ॥ प्रतस्थे सहसा धीमान्विद्वद्गोष्ठीं दृढव्रतः॥४०॥ स तदा वल्लभो राजा संपत्पूर्णपुरोहितम्ः॥ संवीक्ष्य तावुभौ हृष्टौ भट्टनाथं द्विजोत्तमम् ॥ ४१ ॥ अभ्यागतः स्वयं विष्णुरिति मत्वातिभक्तितः ॥ प्रत्युत्थानप्रणामादिपूर्वकं विधिपूर्वकम् ॥ ४२ ॥ अर्चयामासतुर्भट्टनाथं श्रीवैष्णवोत्तमम् ॥ विद्वद्गोष्ठ्यां स्थिताः सर्वे महांतो विबुधर्षभाः ॥ ४३ ॥ सर्वविद्वत्सभामध्ये सर्वराजन्यमंडले ॥ सिंहासने समासीनं भट्टार्यं हेमनिर्मिते ॥ ४४ ॥ दृष्ट्वा न सेहिरे पूजां वेदांतिंस्तस्य तां च ते ॥ भट्टनाथं तृणीकृत्य वीक्ष्य राजपुरोहितम् ॥ ४५ ॥ नृपमूचुश्च परुषं वाक्यं तद्विषयं बुधाः ॥ वेदाक्षराणि न क्वापि प्रातान्यस्य श्रुतेः पथि ॥ ४६ ॥ तत्संध्यादिक्रिया क्वापि न चास्माभिर्विलोकिता ॥ द्विजो निरक्षरो योयं गायत्रीं वेत्ति वा न वा ॥ ४७ ॥ वृत्तिं चास्य प्रवक्ष्यामः शृणु राजन् समाहितः॥ दासवृत्तिं समास्थाय कुर्वन्नारामपोषणम् ॥ ४८॥ श्रीकृष्णतुलसीमाला विधायातिमनोहराः ॥ स मालाकारवन्नित्यं शौरिणे सम्यगार्पयत् ॥ ४९ ॥ वृत्त्यानयानुदिवसं कालक्षेपमथाकरोत् ॥ वेदं वा शास्त्रवाक्यं वा नायं वेत्ति नृपोत्तम ॥५०॥ ब्राह्मणानां पुरः शूद्रो निकृष्टः खलु भूपते ॥ विद्वद्गोष्ठ्यां राजसभास्थाने चासने शुभे ॥ ५१ ॥ पूजितो यत्त्वयानेन ह्यस्मा-

कं पश्यतां नृप ॥ संपत्पूर्णश्च तद्वाक्यं श्रुत्वा राजपुरोहितः ॥ ५२ ॥ असहिष्णुस्ततः सर्वान्निर्भर्त्स्य विबुधर्षभान् ॥ भट्टनाथमुखं वीक्ष्य भक्त्या तं प्रणिपत्य सः॥५३॥महानुभावः सर्वेषां शृण्वतामब्रवीद्वचः॥ परतत्त्वं विनिर्णीय वेदांतप्रतिपादितम् ॥ ५४ ॥ ब्रूहि मे विशदं नित्यं शिष्याय विबुधांतिके ॥ पुरोहितवचः श्रुत्वा भट्टनाथो दृढव्रतः ॥ ५५ ॥ सस्मार हृदये विष्णुं स्वप्नोक्तिं मनसा स्मरन् ॥ तथा शौरिकटाक्षेण विष्णुचित्तस्य धीमतः ॥ ५६ ॥ हस्तामलकवत्सम्यक् सर्वार्थाः संप्रदर्शिताः ॥ हसितं भाषितं चैव गतिर्या यच्च चेष्टितम् ॥ ॥५७॥ तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ॥ वाल्मीकिर्भगवान्पूर्वं यथा ब्रह्मप्रसादतः ॥ ५८ ॥ शंखप्रांतेन गोविंदः संपस्पर्श कृतांजलिम् ॥ उत्तानपादतनयं द्विजवर्य्यं जगत्पतिः ॥ ५९ ॥ ततः प्रसन्नवदनस्तत्क्षणान्नृपनंदनः ॥ कृष्णं च प्रणतो भूत्वा भूतधातारमच्युतम् ॥ ६० ॥ तथैवायं भट्टनाथो ज्ञातसर्वार्थसंचयः ॥ सर्वविद्वत्सभामध्ये विदधे तत्त्वनिर्णयम् ॥ ६१ ॥ तच्चरित्रं महाचित्रं तत्कथं वर्ण्यतेऽधुना ॥ स साक्षाल्लोकरक्षार्थं वेदात्मा विहगेश्वरः ॥ ६२ ॥ भट्टनाथस्वरूपेण संजातः किल भूतले ॥ विष्णोः पूर्णकटाक्षश्च तावुभौ मिलितौ यदि ॥ ६३ ॥ तत्प्रसंगप्रवचने कः शक्तो भुवनत्रये ॥ गंगाप्रवाहवद्वाचस्ताः सहस्रमुखास्तदा ॥ ६४ ॥ विष्णुचित्तमुखात्तत्र निर्ययुर्निगमांतजाः ॥ सर्वे सभासदस्तत्र चासंश्चित्रार्पिता इव ॥६५॥ श्रुतिस्मृतीतिहासैश्च पुराणैर्निखिलैरपि ॥ ऐककंठ्यं विधायाशु सर्ववेदांतसद्गिरः ॥ ६६ ॥ विशदं बालबोधार्थमुपन्यस्य विचक्षणः ॥ हरिरेव परं तत्त्वमिमं संस्थापनं व्यधात् ॥ ६७ ॥ तत्र द्वित्रीणि वाक्यानि वक्ष्ये गुरुकटाक्षतः ॥ श्रूयतामवधानेन सर्वविद्वद्गणाधिप ॥ ६८ ॥ सर्वार्था वेदगर्भस्था वेदाश्चाष्टाक्षरे स्थिताः॥ अष्टाक्षरस्तु प्रणवे ह्यकारे प्रणवः स्थितः ॥६९॥ यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः॥ तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ ७० ॥ समस्तशब्दमूल-

त्वादकारस्य स्वभावतः॥ समस्तशब्दवाच्यात्वाद्ब्रह्मणोपि स्वभावतः॥
७१ ॥ वाच्यवाचकसंबंधस्तयोरर्थात्प्रतीयते ॥ अक्षराणामकारोऽ-
स्मि गीताचार्य्येण भाषितम् ॥ ७२ ॥ अकार एव सर्वार्थो ह्यकारो
विष्णुवाचकः ॥ अकारवाच्यस्तत्रैवं विष्णुरेवेति मीयते ॥ ७३ ॥
अकारवाच्यो भगवान्विष्णुर्नारायणः परः॥ सर्ववेदादिवाक्यैश्च सर्वस्मा
त्पर इष्यते ॥ ७४ ॥ जगज्जन्मास्थितिलयास्तत्परत्वस्य सूचकाः॥
अतोवधारणाद्यैश्च धात्वर्थः श्रीपतौ स्फुटः ॥ ७५ ॥ अतो नेत्यादिवा-
क्यानि तस्यैवापादकानि च ॥ एवं जन्मादिहेतुत्वं श्रुतिसिद्धं हरेः किल
॥ ७६ ॥ नारायणानुवाकेन वेदांतवचनैस्तथा ॥ निश्रेयसप्रदातृत्वं
मुमुक्षूपास्यतानघ॥ ७७ ॥तस्यैवाकारवाच्यस्य श्रीहरेः प्रतिपादित॥
विष्णोः सकाशादुद्भूतं जगत्तत्रैव संस्थितम् ॥७८॥ स्थितिसंयमकर्त्ता-
सौ जगतोऽस्य जगच्च सः ॥ नारायणात्परो देवो न भूतो न भविष्यति
॥७९॥एतद्रहस्यं वेदानां पुराणानां च संमतम्॥ सत्यंसत्यं पुनः सत्य-
मुद्धृत्य भुजमुच्यते॥८०॥वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः॥
एवं प्रमाणवाक्यानि भट्टनाथे वदत्यलम्॥८१॥यत्स्थूणाग्रे दृढं बद्धं वि-
द्यच्छुल्कं महद्धनम् ॥ क्षिप्रं त्रुटच्चत्पपातोर्व्यां रवेण महता तदा॥८२॥
पतत्तच्च समुद्दिश्य विद्याशुल्कं प्रहृष्टधीः ॥ भित्त्वा जग्राह वेगेन
भट्टनाथो महायशाः ॥ ८३ ॥ राजा पुरोहितश्चैते ब्राह्मणा विबुधा-
स्तथा ॥ सर्वेतिविस्मयाविष्टाः प्रणेमुस्तं द्विजर्षभम् ॥ ८४ ॥स्थितोऽ-
स्य हृदये विष्णुर्यदभूद्विबुधर्षभः ॥ विष्णुचित्ताभिधां तस्य नृपश्चक्रे
तदादरात् ॥ ८५ ॥ विष्णुचित्तं गजस्कंधे प्रतिष्ठाप्य महौजसम् ॥
पुरप्रदक्षिणं राजा कारयामास भक्तितः ॥ ८६ ॥ छत्रचामरवृंतादी-
न्समादाय विपश्चितः ॥ ते सर्वेऽनुययुर्धीरं वेदपाठैः सहादरात् ॥८७॥
भेरीमृदंगवाद्यैश्च चतुरंगबलैः सह ॥ अमात्यसहितः श्रीमान्स राजा-
नुययौ गुरुम् ॥ ८८ ॥ संपत्पूर्णो महाभक्त्या तस्य राजपुरोहितः ॥

जांबूनदमयं छत्रं दधार महतस्तदा ॥ ८९ ॥ विचित्रतोरणवती पताकाध्वजमालिनी ॥ साऽयोध्येवाभवद्दिव्या श्रीरामोत्सवशोभिता ॥ ९० ॥ तथा ब्रह्मरथारूढं पुत्रमप्रतिमौजसम् ॥ यथा प्रेम्णा पिता पुत्रं द्रष्टुकामो महौजसम् ॥ ९१ ॥ तदा सर्वेश्वरः श्रीमान् जगद्बीजप्रदः पिता ॥ जगन्मात्रा महालक्ष्म्या सहितः पुत्रवत्सलः ॥ ९२ ॥ दिव्यपंचायुधधरो ब्रह्मरुद्रादिसेवितः ॥ नीलांबुदनिभाकारः पीतांबरधरो युवा ॥ ९३ ॥ वैनतेयं समारुह्य व्योममार्गे श्रियः पतिः ॥ अनेकदिव्याभरणो दिव्यमंगलविग्रहः ॥ ९४ ॥ भगवान्विष्णुचित्तस्य प्रत्यक्षमगमत्तदा ॥ केषांचिन्महतां तत्र नृपतेश्च पुरोधसः ॥ ९५ ॥ ते सर्वे भट्टनाथस्य कृपया जगदीश्वरम् ॥ भगवंतं समुद्वीक्ष्य लोचनाभ्यां महौजसम् ॥ ९६ ॥ प्रणम्य बहुधा भक्त्या कृतार्था ह्यभवंस्तदा ॥ भट्टनाथो भगवतः परमप्राकृतं महः ॥ ९७ ॥ विलोक्य विस्मयं गत्वा परं तं हर्षमाप्तवान् ॥ स संप्राप्तानवधिकज्ञानभक्तिमहार्णवः ॥ ९८ ॥ भट्टनाथो भगवतो निर्हेतुककटाक्षतः ॥ सर्वज्ञत्वादिकान्विष्णोर्गुणान्सर्वाननूपमान् ॥ ९९ ॥ दिव्यज्ञानेनानुभूय विशदं विबुधाग्रणीः ॥ सौंदर्य्यं सौकुमार्य्यं च लावण्यं चाद्वितीयकम् ॥ १०० ॥ परिणामादिरहितं सर्वभूतमनोहरम् ॥ नित्यसिद्धं भगवतस्तत्पंचोपनिषन्मयम् ॥ १०१ ॥ यद्रूपं परमस्थाने सदा पश्यंति सूरयः ॥ क्षणक्षरस्वभावेन कालात्मपरिणामिके ॥ १०२ ॥ कलिसाम्राज्यभूयिष्ठे लोकेस्मिन् निरयोपमे ॥ अज्ञानतमसाछन्ने चार्थकामपरायणे ॥ १०३ ॥ नित्यमुक्तैकभोग्यं यत्तत्पञ्चोपनिषन्मयम् ॥ अप्राकृतं दिव्यरूपमचक्षुर्विषयं गतम् ॥ १०४ ॥ हानिशंकां समासाद्य तस्यैवालभ्यवस्तुनः ॥ अनिष्टपरिहाराय प्रेमावेशवशात्तदा ॥ १०५ ॥ गजकण्ठगता घण्टास्तालवाद्यं विधाय च ॥ तदनिष्टनिवृत्त्यर्थं सौकुमार्यादिसंपदाम् ॥ १०६ ॥ तत्रैव पारवश्येन विष्णवे लोकजिष्णवे ॥

मंगलाशासनं चक्रे धीमानकृतवंदनः ॥ १०७ ॥ तावन्मात्रेण चातृप्तो
विष्णोर्दिव्यविभूतयः ॥ ताः समुद्दिश्य सहसा मंगलाशासनं व्यधात्
॥ १०८ ॥ स तं लोकोपकाराय गाथाद्वादशसंमितम् ॥ प्रबंधमकरो-
द्भक्त्या मंगलाशासनात्मकम् ॥ १०९ ॥ श्रीहरिर्भगवान्विष्णुर्विष्णुचि-
त्तेन भूयसा ॥ कृताशीः प्रययौ विद्वन् कृतार्थः परमं पदम् ॥ ११० ॥ ततः
स राजा वेदांतिञ्छिष्यत्वमगमत्तदा ॥ विष्णुचित्तस्य महतः सामात्यः
सपुरोहितः ॥ १११ ॥ तेन संपूजितः सम्यगाज्ञा प्रस्थापितस्तदा ॥
महता वैभवेनैव भट्टनाथो महायशाः ॥ ११२ ॥ सुवर्णशिबिकारूढः
सुवाद्यैश्छत्रचामरैः ॥ मथुरानगराद्धीमान् प्रतस्थे धन्विमंगलम् ॥
॥ ११३ ॥ धन्विनव्यपुराधीशशौरिणा प्रेषिता जनाः ॥ भेरीमृदंग-
वाद्यैश्च तदीयच्छत्रचामरैः ॥ ११४ ॥ क्रोशमात्रेण तस्याथ पुरस्य
पुरवासिनः ॥ विष्णुचित्तं महात्मानं प्रत्युद्गम्याभिपूज्य च ॥ ११५ ॥
पुरमानीय तत्रार्यं कारयित्वा प्रदक्षिणम् ॥ वीथीचतुष्टयेष्वार्यं विन्यस्तं
स्वामिसन्निधिम् ॥ ११६ ॥ भक्तं संवीक्ष्य भगवान्वटपत्रशयो हरिः ॥
तीर्थं प्रसादं मालां च दापयित्वार्चकैर्मुदा ॥ ११७ ॥ विष्णुचित्ताय
वेदांतिन् सम्मानमकरोन्महत् ॥ विष्णुचित्तः स तत्सर्वं भक्त्या संगृह्य
सादरम् ॥ ११८ ॥ यद्यद्राज्ञार्पितं तस्मै तत्सर्वं विष्णवे धनम् ॥
समर्प्य पूर्ववत्तत्र तुलसीवनकारकः ॥ ११९ ॥ सुगंधतुलसीमालाः
पुष्पमालाश्च सादरम् ॥ श्रीमालाकारवन्नित्यं भक्त्या तच्छौरये
मुदा ॥ १२० ॥ भट्टनाथोर्पयंस्तस्थौ वेदान्तिन् दृढभक्तिमान् ॥
तस्य श्रीकृष्णभक्तत्वात्सम्यग्भागवतास्थितम् ॥ १२१ ॥ कृष्णा-
वतारचरितं सम्यग्ज्ञात्वा विचक्षणः ॥ कृष्णस्य गोपवेषं च
तस्यामानुषचेष्टितम् ॥ १२२ ॥ नवनीतादिहरणं गोपीजनविहा-
रणम् ॥ सौंदर्यं सौकुमार्यं च सौलभ्याद्यखिलान्गुणान् ॥ १२३ ॥
तद्भक्तिपरवश्येन गोपिकाजनवत्तदा ॥ अनुभूय स तत्सर्वं कृष्णली-

लामहोत्सवम् ॥ १२४ ॥ अतिष्ठत्तन्मयो नित्यं कृष्णादन्यं न वेद सः ॥ कृष्णानुभवसंजातमहानंदो महात्मनः ॥ १२५ ॥ न ममुस्तत्र वेदांतिन्भट्टार्य्यस्य तनौ किल ॥ तमेवार्थं समुद्दिश्य महाकारुणिकस्तदा ॥ १२६ ॥ ततो लोकोपकाराय भट्टनाथो महायशाः ॥ तं भट्टनाथगीताख्यं दिव्यद्राविडरूपकम् ॥ १२७ ॥ कृत्वा प्रबंधं वेदांतिन्सर्वं जगदपालयत् ॥ चतुःशतं चैकषष्टिर्गाथास्तत्र प्रकीर्तिताः ॥ १२८ ॥ भट्टनाथस्तुता विष्णोर्दिव्यदेशास्त्रयोदश ॥ धन्विनव्यपुरं रंगं मधुरा कुरुकापुरी ॥ १२९ ॥ गोष्ठीकुरंगनगरं तोताद्रिः सुंदराचलः ॥ श्रीकृष्णनगरं चैव शेषाद्रिः पुरुषोत्तमः ॥ ॥ १३० ॥ नंदव्रजश्च मथुरा तस्मादेते त्रयोदश ॥ तस्मिन्नर्थे महान्श्लोकः श्रूयते लोकविश्रुतः ॥ १३१ ॥ रंगं धन्विपुरं च पांड्यमधुरा-गोष्ठीकुरंगस्थलं श्रीमत्कृष्णपुरं वनाचलवरः श्वेताचलः श्रीपुरी ॥ शेषाद्रिः पुरुषोत्तमं च मथुरा नंदव्रजश्चैव ते देशा भट्टमुनींद्रदिव्यकृतिना षट् सप्त चाभिष्टुताः ॥ १३२ ॥ विष्णुचित्तः स वेदांतिंस्तथैव सुकृती मुदा ॥ महाकारुणिको धीमाञ्जगत्सर्वमपालयत् ॥ १३३ ॥ तत्तच्छ्रुत्वा च वेदांती महात्म्यं तस्य चाद्भुतम् ॥ प्रहृष्टः प्रणिपत्योर्व्यां भूयो विज्ञापनं व्यधात् ॥ १३४ ॥ संपूर्णज्ञानभक्त्यादिगुणैः सर्वैर्देशैव ते ॥ तेभ्यो महत्त्वं सुतरां भट्टनाथस्य देशिक ॥ १३५ ॥ माहात्म्यं येन संजातं तन्मे ब्रूहि विचक्षण ॥ महार्य इति नामास्य भट्टनाथस्य देशिक ॥ १३६ ॥ तन्नाम तस्य कैर्दत्तं विशदं जगतीतले ॥ भट्टनाथसुतेत्येवं गोदा देवी प्रगीयते ॥ १३७ ॥ अवतारक्रमं ब्रूहि देव्यास्तस्यास्तु विस्तरम् ॥ किं कृत्वा भुवि भट्टार्यो महार्यः स्थितवानयम् ॥ ॥१३८॥ तस्य तद्वचनं श्रुत्वा भट्टार्य्यः शास्त्रवित्तमः ॥ अवोचद्वचनं धीमान् शिष्यं वेदांतिनं प्रति॥१३९॥भगवंतं समुद्दिश्य नवैते स्वेष्टकांक्षिणः॥वेदांतिन्बहुधा विष्णुं नमस्कारं प्रचक्रिरे ॥१४०॥ अयं तु भगवत्प्रेमपारवश्येन भूयसा ॥ कदाचिद्दीनता तस्य यद्यथा न भवे-

त्तथा॥१४१॥ महत्यै भगवद्भूत्यै मंगलाशासनं व्यधात्॥ यदाचार्य्यं-
वरो यस्माद्विष्णुचित्तो बभूव ह॥ १४२ ॥ ततो महार्य्यनामास्य
बभूव भुवि विश्रुतम्॥ चक्रुस्तन्नाम तस्यैव नवैते दिव्यसूरयः
॥ १४३ ॥ तत्प्रबंधो महादिव्यो मंगलाशासनात्मकः ॥ स प्रबंधः
प्रथमतो वेदादौ प्रणवो यथा ॥ १४४ ॥ सर्वप्रबंधाध्ययने पठ्यते
विबुधर्षभैः ॥ चतुर्णां तु सहस्राणां प्रबंधानां वरः स्मृतः ॥१४५॥ प्र-
बंधः स यतस्तेषां विष्णुचित्तस्ततः परः ॥ श्रीवैष्णवत्वसिद्ध्यर्थं स
एवादौ प्रयत्नतः ॥१४६॥ पठितव्यो वैष्णवेन मंगलाशासनात्मकः॥
महत्प्रबंधद्वितयं भट्टनाथकृतं तथा ॥ १४७ ॥ त्रिसप्ततिश्च गा-
थानां तत्प्रबंधं चतुःशतम्॥ प्रबंधं विष्णुचित्तस्य ये पठंति महार्थ-
दम्॥१४८॥ सर्वपापविनिर्मुक्तास्ते भवेयुर्मुमुक्षवः ॥ य इदं शृणुया-
न्नित्यं भट्टार्य्यचरितं महत्॥ १४९ ॥ सर्वकामान् स संप्राप्य विष्णु-
लोके महीयते ॥ १५० ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे
श्रीविष्णुचित्तार्येण राजसभास्थाने तत्त्वनिर्णयकथनं नामैकोननवति-
तमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ।

श्रीवत्सचिह्नतनयो भगवान् भट्टदेशिकः॥ गोदावतारं शिष्याय प्रवक्तु-
मुपचक्रमे ॥ १ ॥ देवस्य महिषीं दिव्यामाद्यां गोदामुपास्महे ॥ यन्मौ
लिमालिकां प्रीत्या स्वीकरोति स्वयं प्रभुः ॥ २ ॥ नीलातुंगस्तन-
गिरितटीसुप्तमुद्बोध्य कृष्णं पारार्थ्यं स्वं श्रुतिशतशिरःसिद्धमध्यापयं-
ती॥स्वोच्छिष्टायां स्रजि निगलितं या बलात्कृत्य भुंक्ते गोदा तस्यै नम
इदमिदं भूय एवास्तु भूयः॥३॥इतीव वंदनं कृत्वा गोदादेव्यै महामतिः॥
वेदांतिनं समुद्दिश्य व्याजहार वचः शुभम् ॥ ४ ॥ अवतारं प्रवक्ष्यामि
गोदायास्तन्महाद्भुतम्॥शृणुष्वावहितः सम्यक् सीताया इव चोत्तमम्
॥५॥यजतः कर्षतः क्षेत्रं लांगलादुत्थिता यथा ॥ क्षेत्रं शोधयता लब्धा

नाम्ना सीतेति विश्रुता॥६॥भूतलादुत्थिता सा तु व्यवर्द्धत ममात्मजा ॥ एवं जनकराजेन सीताया जन्म भाषितम् ॥ तथैव गोदा तुलसी वनभूमौ तदाजनि ॥ ७ ॥ समंततो वीक्ष्य चरन्वनांतरे नवप्रसूनान्यपचित्य कुत्रचित् ॥ स विष्णुचित्तस्तुलसीवनावनिं खनित्रवक्रेण निखन्य कल्पयन् ॥ ८ ॥ तदा खनित्रवक्रेण विष्णुचित्ते महात्मनि॥ तुलसीवृक्षमूलस्य खननं च प्रकुर्वति॥९॥ अषाढे पूर्वपक्षे च चतुर्थ्यां भौमवासरे ॥ मध्याह्ने पूर्वाफाल्गुन्यां तुलालग्ने शुभे दिने ॥ १० ॥ लक्ष्म्यंशाल्लोकरक्षार्थं गोदा भूम्यास्ततोजनि ॥ गोदावतारश्लोकाश्च गयिंते प्रथिता भुवि ॥ ११ ॥ स विष्णुचित्तस्तुलसीवनस्य खनित्रवक्रेण निखानमाचरत् ॥ शुभे मुहूर्ते शुचिमासि फल्गुनीप्रतीततारे तुलसीवनांतरे ॥ भुवोऽभवत्काचन बालकन्यका स तां तदा प्रेक्ष्य विसिस्मिये मुदा ॥ १२ ॥ तां दृष्ट्वा विस्मयाद्बालां विष्णुचित्तः प्रहर्षितः ॥ आदाय गृहमागत्य गोदां कृत्वा स्वपुत्रिकाम् ॥ १३ ॥ नित्यं पुपोष वेदांतिन् सम्यग्दुहितृवत्सलः ॥ राजर्षिर्जनकः पूर्वं यथा सीतां जगत्प्रसूम् ॥१४॥ श्रीवैष्णवान्समाहूय कारयित्वाथ मंगलम्॥ गोदेति नामकरणं चकार दुहितुस्तदा ॥ १५ ॥ लालिता पोषिता नित्यं पितृभ्यां प्रेमपूर्वकम् ॥ ववृधे बालिका गोदा पित्रोरानंददायिनी ॥ १६ ॥ गोदाजन्म समारभ्य धन्विनव्यपुरं हि तत् ॥ अशोभतानुदिवसं वेदांतिन्नधिकश्रिया ॥ १७॥ ततोऽखिलजनास्तत्र दृष्ट्वा गोदां रमांशतः ॥ जातां ज्ञात्वाधिकां भक्तिं तस्यां चक्रुर्बुधोत्तमाः ॥ १८ ॥ बाल्यात्प्रभृति सुस्निग्धा सदाचारसमाश्रया ॥ वैराग्यज्ञानभक्तीनां सीमा भूमौ बभूव सा ॥१९॥ जनकावाप्तसंस्कारपंचका भगवत्परा ॥ पंचमोपायनिष्ठैका गोदा देवी बभूव सा ॥२० ॥ दुहितुर्ज्ञानभक्त्यादिसद्गुणान्वीक्ष्य संततम् ॥ सादृश्यरहितान्क्वापि संतुष्टो विस्मयं गतः ॥ २१ ॥ अलंकारप्रिया बाला तस्य ताः पुष्पमालिकाः ॥ जनकाज्ञातवृत्तांता सा धम्मिल्ले दधौ रहः ॥ २२ ॥ ततः पितृभयाद्भीता

पूर्ववत्पेटिकांतरे ॥ निधाय मालिकाः सम्यगम्लानमतिकोविदा ॥ २३ ॥ केनाप्यज्ञातवृत्तांता गोदा देवी समास्थिता ॥ गोदा प्रकुर्वतीत्येवं प्रत्यहं सा समास्थिता ॥ २४ ॥ कदाचिद्विष्णुचित्तोथ गोदायास्तद्विचेष्टितम् ॥ विलोक्य भीतोऽप्यकृतकोपो दुहितृवत्सलः ॥ २५ ॥ व्याजहार शुभं वाक्यं गोदां तां सांत्वपूर्वकम् ॥ अपचारतमं कार्यमबले यत्त्वया कृतम् ॥ २६ ॥ मनागपि न कर्त्तव्यं नैव चिंत्यं हृदापि तत् ॥ एवं दुहितरं सम्यक् शिक्षयित्वा महामनाः ॥ २७ ॥ तास्ततो विष्णवे तत्र नार्पयत्पुष्पमालिकाः ॥ तस्यां रात्र्यां तदा तस्य वटपत्रशयो हरिः ॥२८॥ स्वप्ने प्रसन्नो भगवान् भट्टनाथं वचोऽब्रवीत् ॥ किमर्थमस्मिन् दिवसे न दत्ताः पुष्पमालिकाः ॥ २९ ॥ नित्यं प्रदात्रा भवता मह्यं मद्भक्तिशालिना ॥ तस्य तद्वचनं श्रुत्वा चक्रे विज्ञापनं तदा ॥ ३० ॥ दिनेस्मिन्बालया पुत्र्या धृता मे पुष्पमालिकाः ॥ अतो मया हि भगवन् प्रदत्ता हंत ते न ताः ॥३१॥ निशम्य तद्वचस्तस्य भगवानब्रवीत्तदा ॥ धृता यदि तया मालाः सुगंधा मे ह्यतिप्रियाः ॥ ३२ ॥ धृतपूर्वास्तयैवैता मालिकाः सम्यगर्पय ॥ ततः स्वप्नात्समुत्थाय विष्णुचित्तः सविस्मयः ॥ ३३ ॥ गोदां मत्वा महालक्ष्मीं वैदेहीमिव भूमिजाम् ॥ गोदासहशलावण्या साक्षाल्लक्ष्मीरिवाबभौ ॥ ३४ ॥ जन्मारभ्य बभौ गोदा ज्ञानभक्त्यादिसद्गुणैः ॥ दिव्यगंधयुतेवासीद्यथा श्रीतुलसी वरा ॥ ३५ ॥ ज्ञानभक्त्यादयस्तस्याः गुणा ववृधिरेधिकाः ॥ दशभ्यो दिव्यसूरिभ्यो गोदादेव्यास्ततोऽन घ ॥३६॥ यत्पुंसः पुरुषे प्रेम स्त्रीप्रीतिर्योषितश्च या ॥ निम्नोन्नताधिरोहेव सा महायत्तसाधिता ॥ ३७ ॥ योषितः पुरुषप्रेम स्त्रीप्रीतिः पुरुषस्य या ॥ उन्नतान्निम्नपतनं तद्यथा सुकरं भुवि ॥ ३८ ॥ अतो हि भगवत्प्रीतिर्गोदायाः परमाधिका ॥ कृष्णप्रीतिर्गोपिकानां नंदादिभ्योधिका ततः ॥ ३९ ॥ स्त्रियः साधुरिति प्राह वेदव्यासस्ततः किल ॥

पुरुषेभ्योऽधिका प्रीतिः स्त्रीणां विष्णौ भविष्यति ॥ ४० ॥ श्रीकृष्णविरहाद्गोप्यो यथातप्यंत संततम् ॥ अतप्यत तदा गोदा वेदांतिन्भगवत्परा ॥४१॥ हेमंते प्रथमे मासि नंदव्रजकुमारिकाः ॥ चेरुर्हविष्यं भुंजानाः कात्यान्यर्चनव्रतम् ॥४२॥ एवं गोदा महाभागा भगवत्प्रेमपारगा ॥ सा सम्यगनुभूयार्थं श्रीमद्भागवतस्थितम् ॥४३॥ तमेवार्थं समुद्धृत्य लोकसंरक्षणाय च ॥ प्रबंधद्वितयं चक्रे सर्वलोकामृतप्रदम् ॥ ४४ ॥ गाथानां द्वितयं तत्र त्रिसप्तत्यधिकं शतम् ॥ दिव्यप्रबंधस्तत्रैको लक्ष्मीनित्याभिधो महान् ॥ ४५ ॥ त्रिचत्वारिंशदधिकं गाथानां शतमत्र हि ॥ गोदास्तवाभिधस्तत्र द्वितीयः परिकीर्तितः ॥ ४६ ॥ धनुर्मासोत्सवपरस्त्रिंशद्गाथाविराजितः ॥ संस्तुतानि तयाष्टौ च विष्णुस्थानानि भूतले ॥ ४७ ॥ श्रीरंगं वेंकटाद्रिश्च वनाद्रिर्धन्विमंगलम् ॥ क्षीराब्धिः कृष्णनगरं मथुरा गोकुलं तथा ॥ अस्मिन्नर्थे महाञ्छ्लोकः श्रूयते लोकविश्रुतः ॥ ४८ ॥ रंगं कृष्णपुरं च धन्विनगरं पांड्ये वनाद्रिर्महान् क्षीराब्धिर्वृषभूधरश्च मथुरा नंदव्रजश्चोत्तरे ॥ अष्टौ ते समभिष्टुता भगवतः श्रीगोदया भक्तितस्तानेवं प्रतिवासरं पठति यः श्रीमान् स भूयान्नरः ॥ ४९ ॥ एवं गोदा महादेवी वेदांतिन् भक्तितत्परा ॥ दिव्यप्रबंधं कृत्वाशु जगत्सर्वमपालयत् ॥ ५० ॥ एतादृशगुणोपेतां यौवनारंभपेशलाम् ॥ अनिर्देश्यवयोरूपामतुल्यहरिभक्तिकाम् ॥ ५१ ॥दृष्ट्वा दुहितरं साध्वीं विष्णुचित्तो महामतिः ॥ इयं मम सुता गोदा कस्मै देयेत्यचिंतयत् ॥ ५२ ॥ ( पतिसंयोगसुलभं वयो दृष्ट्वैव मे पिता ॥ चिंतार्णवगतः पारं नाससादाप्लवो यथा ॥ ५३ ॥ ) एवं स जनको राजा चिंतामाप दुरत्ययाम् ॥ पतिसंयोगसुलभं गोदाया यद्वयः शुभम् ॥५४॥ दृष्ट्वा तदा विष्णुचित्तश्चिंतामाप दुरत्ययाम् ॥ तद्व्याकुलांतःकरणं विलोक्य पितरं तदा ॥ ५५ ॥ व्याजहारः शुभं वाक्यं गोदा देवी हरिप्रिया ॥ भगवंतं विना नान्यं वरिष्येहमतः सती ॥ ५६ ॥ मा

शोकं कुरु धर्मज्ञ मदर्थे रक्षको हरिः ॥ तच्छ्रुत्वा वचनं तस्याः सं-
तुष्टो विष्णुचित्तकः ॥ ५७ ॥ गोदां विलोक्यार्द्रदृशा व्याजहार वचः
शुभम् ॥ अष्टोत्तरशतं विष्णोः स्थानानि जगतीतले ॥ ५८ ॥
तेषु स्थितान् हरीन् वीक्ष्य श्रुत्वा भगवतोखिलान् ॥ वृणीष्वाभि-
मतं विष्णुं सुंदरं वांछितप्रदम् ॥ ५९ ॥ गोदादेवि प्रवक्ष्यामि
स्थलानि शृणु सादरम् ॥ भूम्यां पुराणसिद्धानि विष्णुस्थानानि
भूरिशः ॥ ६० ॥ मुख्यान्यष्टोत्तरशतं तत्र दिव्यानि योगि-
भिः ॥ शठकोपादिभिर्दिव्यप्रबंधापादितानि च ॥ ६१ ॥ अष्टाद-
दशस्थलान्यत्र पांड्यदेशे रमापतेः ॥ केरले सुमहाभागे दिव्यदेशाश्च-
तुर्दश ॥६२॥ द्विचत्वारिंशदित्याहुश्चोलदेशे स्थलानि हि ॥ ते त्रयो-
विंशतिर्दिव्या देशास्तुंडीरमंडले ॥ ६३ ॥ उदीच्यां दिशि दिव्यानि
स्थलान्येकादश स्फुटम् ॥ एतेष्वष्टोत्तरशतस्थानेष्वंभोजलोचने ॥
॥६४॥आस्थितानां भगवता भक्तानुग्रहकारणात् ॥ सौंदर्यसौकुमार्या-
दिगुणान्सर्वाननूपमान् ॥ ६५ ॥ श्रीरंगेशादिदेवानां हृष्टचित्तापहारि-
णाम् ॥ प्रभावानद्भुतान् दिव्याञ्छृणु वक्ष्यामि तत्त्वतः ॥६६॥ एवं दु-
हितृवात्सल्याद्भट्टनाथस्ततोऽनघ ॥ अष्टोत्तरशतस्थानस्थितानां पर-
मात्मनाम् ॥ ६७ ॥ प्रभावं कृपया सर्वं तस्यै सम्यक् सविस्तरम् ॥
वेदांतिन् क्रमशो विद्वान् गोदादेव्यै न्यवेदयत् ॥ ६८ ॥ अष्टोत्तरशतं
धाम्नामस्त्यर्चारूपिणो हरेः ॥ भुवि यद्वैभवं श्रुत्वा पुंसां मुक्तिः करे
स्थिता ॥६९॥ विष्णुनामपदान्येवं विष्णुचित्ते विवृण्वति ॥ मथुराधी-
शकृष्णस्य वृत्तं श्रुत्वातिविस्मिता ॥ ७० ॥ ततः सुंदरराजस्य चरितं
शृण्वती मुदा ॥उदारपुलकांकूरसुवाह सुतनुस्तनौ ॥ ७१ ॥ वेंकटाद्रि-
पतेर्विष्णोः कथाकर्णनकर्मणा ॥ रमणीये मुखे तस्या विकासोऽभूद्वि-
जृंभितः ॥ ७२ ॥ श्रीमतो रंगराजस्य शृण्वती महिमोदयम् ॥ आध-
त्तामंदमानंदमरविंददलेक्षणा ॥ ७३ ॥ एवं निशम्य सर्वेषां हरीणां

वैभवं तदा ॥ भट्टनाथमुखात्सर्वं गोदानंदमवाप सा ॥७४॥ अष्टोत्तर-शतस्थानस्थिताचार्रूपिणस्तदा ॥ ते विष्णुमूर्त्तयः सर्वे भट्टनाथेन संस्तुताः ॥ ७५ ॥ गोदास्वयंवरे शीघ्रं गोदोद्वाहाभिकांक्षिणः ॥ स्वकीयदिव्यलावण्ययौवनाद्यभिसंयुताः ॥ ७६ ॥ श्रीरंगेशादयो देवा धन्विमंगलमागताः ॥ रंगेशादींस्ततः सर्वान् गोदा देवी विलोक्य तान् ॥ ७७ ॥ तन्मध्ये सुमहात्मानं तं विलोक्य महौजसम् ॥ रंगेशं सुंदरवरं वरयामास सुंदरी ॥ ७८ ॥ भट्टनाथेन हरयस्तेन संपूजितास्ततः ॥ संप्रेषिताश्च ते सर्वे स्वंस्वं स्थानं प्रपेदिरे ॥ ७९ ॥ स्वलावण्यादिमहिमसंपद्भिः सादरं मुहुः ॥ गोदां तु मोहयित्वाशु रंगेशो रंगमभ्यगात् ॥ ८० ॥ गोदा रंगेश्वरं देवं मत्वा स्वाभिमतं वरम् ॥ ध्यायंती सततं तस्थौ तमेवानन्यमानसा ॥ ८१ ॥ इति श्रीप्रपन्नामृते श्रीभट्टार्य्यवेदांतिसंवादे गोदावतारकथायां तत्स्वयंवरे देवानां धन्विपुरागमनं नाम नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ।

संतुष्टोस्मद्यातिः सम्यङ्निशम्याद्भुतवत्ततम् ॥ तां कथां परिपप्रच्छ भूयो भट्टार्यमादरात ॥१॥ श्रोतुमिच्छामि भगवन् गोदाकल्याणमद्भुतम् ॥ ब्रूहि मे विशदं विद्वन्छिष्याय करुणार्णव ॥ २ ॥ तदंगीकृत्य वचनं भट्टार्य्यस्तमथाब्रवीत् ॥ अनिर्देश्यवयोरूपविभ्रमौदार्य्यसुस्मितैः ॥ ३ ॥ पुंसामपि च वेदांतिन् हृष्टचित्तापहारकैः ॥ मोहयित्वाशु तां गोदां रंगेशो रंगमभ्यगात् ॥ ४ ॥ रंगेशागमनाभावात्सा गोदा विरहातुरा ॥ रंगेशलग्नहृदया ह्यतप्यत दिवानिशम् ॥ ५ ॥ गोपिकाः कृष्णविरहाद्यथातप्यंत भूरिशः ॥ रंगेशबद्धहृदया गोदा नियतमानसा ॥ ६ ॥ जितनिद्रा जिताहारा राधिकेव समास्थिता ॥ रंगेशविरहेणैव संतप्तां तामहर्निशम् ॥ ७ ॥ पिता दुहितरं वीक्ष्य विष्णुचित्तोप्यतप्यत ॥ अचिंतयद्भट्टनाथस्ततो दुहितृवत्सलः ॥ ८ ॥ रंगेशो

भगवान् देवः क्व च श्रीरंगनायकः ॥ तस्मादद्य महत्कार्य्यं कथं वा घटते मम ॥ ९ ॥ वरं समीचीनतरमकामयत मे सुता ॥ तयोर्वैवाहिकं कार्यं श्रीरंगेश्वरगोदयोः ॥ १० ॥ केनोपायेन तत्साध्यमिति चिंतापरोऽभवत् ॥ प्रव्याकुलांतःकरणो भट्टनाथस्तदानघ ॥ ११ ॥ तमेव शरणं गत्वा सुष्वापाकृतभोजनः ॥ स्वप्ने प्रसन्नो भगवान् भट्टनाथस्य रंगराट् ॥ १२ ॥ व्याजहार शुभं वाक्यं वेदांतिन् भक्तवत्सलः ॥ स त्वं श्वशुर सर्वज्ञ किमर्थं परितप्यसे ॥१३॥ तूर्णं दुहितरं गोदां समादायार्य सादरम् ॥ मम रंगं समायाहि महता वैभवेन च ॥ १४॥ सर्वेषां पश्यतां शीघ्रं गोदाया दुहितुस्तव ॥ करिष्याम्यहमेवाद्य पाणिग्रहणमंगलम् ॥ १५ ॥ ततः स्वप्नात्समुत्थाय भट्टनाथः सविस्मयः ॥ दुहित्रे स्वप्नवृत्तांतं सर्वं सम्यङ्निवेद्य तत् ॥१६॥ संतुष्टो निर्भरस्तस्थौ तां सुतां लालयंस्तदा ॥ अतिप्रियतमं सत्यं तन्निशम्य पितुर्वचः ॥ १७ ॥ अकरोद्भगवत्प्रीत्यै धनुर्मासव्रतोत्तमम् ॥ सा लोकरक्षणार्थाय गोदा देवी पतिव्रता ॥ १८ ॥ हेमन्ते प्रथमे मासि नन्दव्रजकुमारिकाः ॥ चेरुर्हविष्यं भुञ्जानाः कात्यायन्यर्चनं व्रतम् ॥ १९ ॥ इति चैवं यथा चक्रुर्वेदांतिन्गोपिकाः स्त्रियः ॥ धनुर्मासि व्रतं गोदा तथैव भगवत्परा ॥ २० ॥ स्ववेश्मनि प्रतिष्ठाप्य तं सुंदरवरं हरिम् ॥ रंगेशं पूंजयामास विधिना नियतव्रता ॥ २१ ॥ ब्राह्मे मुहूर्ते चोत्थाय रंगरंगेति भाषिणी ॥ स्नात्वा शुभ्रांबरधरा चोर्द्ध्वपुंड्रधरा शुभा ॥ २१ ॥ पीतांबरेण रंगेशं समलंकृत्य भूषणैः ॥ गंधपुष्पैश्च धूपैश्च दीपैर्नीराजनैस्तथा॥२३॥ संपूज्य सम्यग् विधिवत्तदा हरिपरायणा॥ मुद्रान्नं शर्कराज्यादिसंप्लुतं फलसंयुतम् ॥२४॥ नैवेद्यं विष्णवे सम्यक् समर्प्यात्यंतभक्तितः ॥ दत्त्वा कर्पूरतांबूलं नीराजनमनुत्तमम् ॥ २५ ॥ गाथां मनोहरामेकां कृत्वा द्राविडभाषया ॥ तां समर्प्य च पूजांते पुनर्नीराजनं ददौ ॥ २६ ॥ ततः प्रदक्षिणं कृत्वा रंगेशं प्रणिपत्य तम् ॥ कृतांजलिपुटा भक्त्या प्रार्थयामास निश्चला ॥२७॥

रंगेश करुणासिंधो मत्पाणिग्रहणं कुरु ॥ त्वां विनान्यं न जानामि सत्यं वच्मि नमोस्तु ते ॥ २८ ॥ एवं संप्रार्थ्य वेदांतिन्स्वमनोभीष्टमुत्तमम् ॥ तदीयाराधनं चक्रे भगवत्प्रीतयेनिशम् ॥ २९ ॥ भुक्तैकवारं नैवेद्यं हविष्यं नियतव्रता ॥ दृढभक्तियुता गोदा भूशया ब्रह्मचारिणी ॥ ३० ॥ रंगेशलग्नहृदया राधिकेव समास्थिता ॥ मासमेकं चरित्वैवमेतद्व्रतमनुत्तमम् ॥ ३१ ॥ त्रिंशद्गाथायुतं दिव्यं प्रबंधं विदधे तदा ॥ कृष्णलीलाविहरणं तत्सर्वमवधारय ॥ ३२ ॥ तत्समाप्तिदिने रंगनायकः सहसा तदा ॥ स्वप्ने प्रसन्नो भगवान् गोदादेव्याः श्रियः पतिः ॥ ३३ ॥ व्याजहार शुभं वाक्यं मंदस्मितमुखः सतीम् ॥ परितुष्टोस्मि भद्रं ते स्तोत्रेणानेन बालिके ॥ ३४ ॥ अर्चनेन विशेषेण धनुर्मासि कृतेन च ॥ त्वत्पाणिग्रहणं शीघ्रं करिष्यामि न संशयः ॥ ३५ ॥ इत्युक्त्वा सर्वभोगांश्च गोदायै प्रददौ हरिः ॥ तन्मासांतदिने गोदा सर्वभोगसमन्विता ॥ ३६ ॥ रंगेशेनाखिलान्भोगान्बुभुजे हरिणा सह ॥ यस्मिन्दिने सर्वभोगाञ्छ्रीगोदा बुभुजे ततः ॥३७॥ भोगीति नाम तस्यासीद्दिवसस्य तदानघ ॥ भूम्यास्तले शायिनी सा निराहारा यतव्रता ॥ ३८ ॥ धनुर्मासे सुसंपूज्य रंगेशं राधिका यथा ॥ तदेकहृदया तस्थौ श्रीकृष्णविरहातुरा ॥ ३९ ॥ तया संपूजितः सम्यग्गोदया रंगराट् तदा ॥ धनुर्मासेंत्यदिवसे प्रत्यक्षमगमद्धरिः ॥ ४० ॥ गोदाविवाहदिवसं तमित्याहुर्मनीषिणः ॥ विधाय मंगलस्नानं बंधुभिः सह सादरम् ॥ ४१ ॥ उत्सवं कारयेत्तत्र सर्वभोगसमृद्धये ॥ अभोगं भोगिदिवसे यः करोति विमूढधीः ॥ ४२ ॥ ततो ह्यभोगवान्नित्यं स नरो जायते भुवि ॥ गोदारंगेशकल्याणं ये कुर्वंति स्ववेश्मनि ॥ ४३ ॥ तेषां च नित्यकल्याणं भविष्यत्यनिशं ध्रुवम् ॥ कल्याणं ये प्रकुर्वंति गोदाकल्याणवासरे ॥ ४४ ॥ कल्याणसहिताः सर्वे भवेयुः सर्वदा नराः ॥ श्रीभो-

गिदिवसे ये तु गोदारंगेशयोस्तदा ॥ ४५ ॥ सम्यग्विवाहं कुर्वंति संपन्नास्तेऽनिशं भुवि ॥ विष्णवालये गृहे वापि गोदाकल्याणमुत्तमम्॥ ये सेवंते महात्मानः श्रीमंतस्ते सदा भुवि ॥ ४६ ॥ इति श्रीप्रपन्नामृते श्रीभट्टार्यवेदांतिसंवादे गोदायै रंगेशप्रत्यक्षभवनं नामैकनवतितमोऽध्यायः ॥ ९१ ॥

## द्विनवतितमोऽध्यायः ।

अस्मद्यतिः स भट्टार्य्यं प्रणिपत्येदमब्रवीत् ॥ धन्विनव्यपुरे गोदा स्वसद्मनि किलास्थिता ॥ १ ॥ रंगेशो रंगनगरे सोर्चारूपो हरिः स्थितः ॥ बभूव कथमुद्वाहः श्रीगोदारंगनाथयोः ॥ २ ॥ तत्सर्वं विशदं ब्रूहि यन्महच्चाद्भुतं भुवि ॥ अवधार्य स भट्टार्य्यः शुभमस्मद्यतेर्वचः ॥ ३ ॥ अवोचदखिलं तस्मै गोदाकल्याणमद्भुतम् ॥ स तयाराधितः सम्यग् रंगेशो गोदयानघ ॥ ४ ॥ स्वप्ने प्रसन्नो भगवानिदं वचनमब्रवीत् ॥ परितुष्टोस्मि भद्रं ते स्तोत्रेणानेन सुंदरि ॥ ५ ॥ अर्चनेन विशेषेण धनुर्मासि कृतेन च ॥ त्वत्पाणिग्रहणं शीघ्रं करिष्यामि न संशयः ॥ ६ ॥ इत्युक्त्वा सुंदरवरस्तत्रैवांतर्दधे हरिः ॥ ततः स्वप्नात्समुत्थाय गोदा संतुष्टमानसा ॥ ७ ॥ पित्रे निवेद्य तत्सर्वं निश्चला सुखमास्थिता ॥ ततो रंगेश्वरः श्रीमान् स्वश्रीरंगाधिकारिणः ॥ ८ ॥ इत्युवाच प्रवालोष्ठः स्फुरद्दशनसुप्रभः ॥ मदीयैर्मंगलैर्वाद्यैः सकलैश्छत्रचामरैः ॥९॥ नवरत्नमयीं दिव्यां मदीयां शिबिकां पराम् ॥ आदाय धन्विनगरं संप्राप्यात्यंतवैभवैः ॥ १० ॥ विष्णुचित्तसुतां गोदामानयध्वं ममांतिकम् ॥ अंगीकृत्यांजसा सर्वे रंगेशाज्ञां त्वरान्विताः ॥ ॥ ११ ॥ धन्विनव्यपुरं जग्मुर्गोदानयनकारणात् ॥ विष्णुचित्ताय तत्सर्वं तस्मै सम्यगबोधयन् ॥ १२ ॥ तेषां तद्वचनं श्रुत्वा महत्कर्णामृतं च सः ॥ विस्मितः संप्रहृष्टोऽथ तान्सर्वान्समपूजयत् ॥ १३ ॥ अतिप्रहृष्टो वेदांतिन् भट्टनाथः कृतत्वरः ॥ श्रीधन्विपुरनाथाय तत्स-

न्यग्विष्णवेखिलम् ॥ १४ ॥ विज्ञाप्य सादरं भक्त्या तेनानुज्ञापितस्तदा॥ ततः श्रीरंगगमने चकार मतिमान्मतिम्॥१५॥वल्लभाय स्वशिष्याय गोदोद्वाहं च शंसितुम् ॥ भूपाय प्राहिणोच्छिष्यान्भट्टेशो मथुरां पुरीम् ॥१६॥ निशम्य स तदुद्वाहमतिमानुषवैभवम् ॥ श्रीवैष्णवेभ्यः सर्वेभ्यो वल्लभस्तानपूजयत् ॥ १७ ॥ प्रगृह्य शिरसा राजा गुरोराज्ञामलंघिताम् ॥ धन्विनव्यपुरं प्राप चतुरंगबलो महान् ॥ १८ ॥ तमागतमभिप्रेत्य स्वाशिष्यं वल्लभं गुरुः ॥ भट्टनाथः संप्रहृष्टो यथोचितमपूजयत् ॥ १९ ॥ रंगेश्वरं विना नान्यमकामयत मे सुता ॥ अनन्या राघवेणाहं भास्करेण प्रभा यथा ॥ २० ॥ गोदा देवी तथैवासीत्पातिव्रत्यपरायणा ॥ सर्वलोकेश्वरस्यैवं रंगेशस्य प्रिया सती ॥ ॥ २१ ॥ नोचितं दृष्टिपतनं तदन्यपुरुषस्य हि ॥ इत्येवं सम्यगालोच्य भट्टनाथो महामतिः ॥ २२ ॥ शिबिकां तां समारोप्य गोदां दुहितरं तदा ॥ पीतांबरेण संछाद्य सुदृढं शिबिकां बहिः ॥ महता वैभवेनैव रंगेशच्छत्रचामरैः ॥ २३ ॥ राज्ञा वल्लभदेवेन तत्रत्यैर्निखिलैर्जनैः ॥ भेरीमृदंगनादैश्च जयशब्दैश्च बंदिनाम् ॥ २४ ॥ प्रतस्थे सहसा धीमाञ्छ्रीरंगं प्रति सादरम् ॥ धन्विमंगलमारभ्य ह्याश्रीरंगं समंततः ॥ २५ ॥ सुपुष्पकायमानैश्च निवासस्थानमंडपैः ॥ तन्मार्गे सहसा सम्यगलंकारं प्रचक्रिरे ॥ २६ ॥ वैकुंठमार्गवद्रंगमार्गस्तेनाभवत्तदा ॥ अयं रंगेश्वरो देवो विष्णुचित्तसुतामिमाम् ॥ २७ ॥ कथं करोति मनुजां पाणिग्रहणकौतुकाम् ॥ इति तद्द्रष्टुकामास्ते विस्मयाविष्टमानसाः ॥ २८ ॥ श्रीरंगं निखिला जग्मुश्चोलपांड्यादिमानवाः॥ ते समेत्याखिलं रंगं गोदागमनमुत्तमम् ॥ २९ ॥ प्रतीक्षंतोनिशं तस्थुस्तद्विवाहदिदृक्षया ॥ श्रीरंगनगरं सर्वैर्जनैरापूरितं बभौ ॥ ३० ॥ नित्यमुक्तसमाकीर्णवैकुंठनगरं यथा॥निचुलानगरं प्राप गोदा देवी तदानघ॥३१॥पित्रा नृपतिना सार्द्धं चतुरंगबलेन च॥गोदागमनवृत्तस्यरंगे-

शाय महात्मने॥३२॥रंगाधिकारिणःसम्यक् चक्रुर्विज्ञापनं तदा॥संतुष्टः
स्तेन वाक्येन रंगराट् प्राह तांस्तदा॥३३॥सम्यङ्‌ममेदं यत्तूर्णमलंकृ
त्य पुरं तदा ॥ विष्णुचित्तसुतां गोदां विष्णुचित्तादिभिः सह ॥ ३४॥
महता वैभवेनैव चानयध्वं मदंतिकम् ॥ निचुलानगरस्यास्य श्रीरंग-
स्य च सत्तम ॥ ३५ ॥ सुपुष्पकायमानानि मध्ये चक्रुर्महांति हि ॥
नीपक्रमुकरंभादिस्तंभान्पार्श्वद्वयेनघ ॥ ३६ ॥ मध्येमध्ये तथैतेषा-
मिक्षुदंडानकुर्वत ॥ प्राकारसप्तकं तत्र सर्वत्र समलंकृतम् ॥ ३७ ॥
शुभे मुहूर्त्ते सुदिने सुनक्षत्रे सुलग्नके ॥ विधाय मंगलस्नानं सर्वभूष
णभूषिता ॥ ३८ ॥ रंगेशपाणिग्रहणत्वरया श्रीहरिप्रिया ॥ कृतांज-
लिपुटा भक्त्या चिंतयंती तमेव सा ॥ ३९ ॥ श्रीगोदा शिबिकारूढा
वैष्णवैः कृतमंगला ॥ महता वैभवेनैव देशिकानुज्ञया तदा ॥ ४० ॥
निचुलानगरात्तूर्णं प्रतस्थे रंगमुत्तमम् ॥ सुमहान्काहालिरवो गोदाग-
मनसूचकः ॥ ४१ ॥ तद्यशःसूचकश्चाग्रे तदाश्रावि महारवः ॥ श्री-
वैष्णवाः पठंतोग्रे प्रबंधान् भगवत्परान् ॥ ४२ ॥ अन्योन्यबद्धहस्ता-
श्च निर्ययुः शुभवाससः ॥ सर्वालंकारसहितं कुथास्तरणरंजितम् ॥
॥ ४३ ॥ अनेकघंटासहितं ततो भद्रगजद्वयम् ॥ ततश्चाश्वयुगं पश्चा-
त्सर्वालंकारसंयुतम् ॥ ४४ ॥ निर्जितामरसुंदर्यस्ततो वारांगनास्तदा॥
निर्ममाश्चित्रवसनाः सर्वालंकारशोभिताः ॥ ४५ ॥ गायंत्यश्च प्रनृत्यं-
त्यः सम्यक् शैलूषशिक्षिताः॥गोदायाः पुरतः सम्यङ् मोहयंत्यःसुहृज्ज-
नान् ॥४६॥ तस्याः पार्श्वद्वये देव्या उभौ भट्टेशवल्लभौ ॥ विरेजतुर्म-
हात्मानौ गोदासंरक्षणोद्यतौ ॥ ४७ ॥ वेत्रहस्ताः प्रदृश्यंते शतशोथ
सहस्रशः ॥ शिबिकायाश्चतुर्दिक्षु सुवस्त्राश्चारुभूषणाः ॥ ४८ ॥ शि-
बिकायास्ततः पश्चात्कुर्वंतः स्वस्तिवाचनम् ॥ द्विजसंघाश्च शतशो
रवेण महता तदा ॥ ४९ ॥ ततः संकीर्त्तनपरा ब्राह्मणा मधुरस्वराः ॥
गाननिर्जितगंधर्वा ययुर्भागवतास्ततः ॥ ५० ॥ वाचामगोच-

रेणैव वैभवेन महत्यसौ ॥ विवेश रंगनगरे सप्तप्राकारशोभिते ॥ ५१ ॥ विचित्रतोरणवति विचित्रध्वजमालिनि ॥ विचित्रचित्रदीपालिचित्रवीथीविराजिते ॥ ५२ ॥ सा सप्तवरणान्यत्र प्रदक्षिणमथाकरोत् ॥ हेमाद्रिशिखराभानि चित्रसौधानि ताः स्त्रियः ॥ ५३ ॥ निर्जितामरसौंदर्याः सिंजन्मंजीरभूषणाः ॥ समारुह्याथ वेदांतिन् गोदादर्शनकौतुकाः ॥ ५४ ॥ ववृषुः पुष्पवर्षाणि गोदायाः शिबिकोपरि ॥ सौधानि गोपुराण्याशु प्रकारान्मण्डपाङ्गनाः ॥ ५५ ॥ आरोहन्नथ ते सर्वे तदुत्सवदिदृक्षया ॥ तत्सर्वं जनसंपूर्णमदृश्यत महाद्भुतम् ॥ ५६ ॥ एवं प्रदक्षिणं कृत्वा तत्रावरणसप्तकम् ॥ आससादांजसा गोदा श्रीमच्चंदनमण्डपम् ॥ ५७ ॥ औत्सवो भगवांस्तत्र श्रीसुन्दरवराभिधः ॥ विधाय मङ्गलस्नानं सर्वालंकारशोभितः ॥ ५८ ॥ पुण्याहवाचनं कृत्वा ह्यंकुरारोपणं तथा ॥ विधिज्ञैर्ब्राह्मणैः साकं वेदवेदांगपारगैः ॥ ५९ ॥ त्रयस्त्रिंशत्कोटिसुरैर्ब्रह्मरुद्रादिभिः सह ॥ गोदागमनमाकांक्षंस्तस्थौ तत्र स मण्डपे ॥ ६० ॥ ततस्समागतां गोदां रंगेशो वीक्ष्य हर्षितः ॥ सुमुहूर्त्ते सुलग्ने च द्विजदेवाग्निसन्निधौ ॥ ६१ ॥ चकार पाणिग्रहणं गोदादेव्याः श्रियः पतिः ॥ विवाहं शेषहोमांतं विधिज्ञैर्ब्रह्मसत्तमैः ॥ ६२ ॥ निर्वर्त्य विधिवत्सम्यग्विप्राशीःकृतमंगलः ॥ प्रहर्षमतुलं प्राप श्रीसुन्दरवरस्तदा ॥ रंगेशपाणिग्रहणाद्गोदा परमहर्षिता ॥ ६३ ॥ वेदान्त्युवाच ॥ विशदं ब्रूहि मे विद्वञ्छिष्याय करुणार्णव ॥ विवाहं लोकविख्यातं गोदादेव्याः श्रियः पतेः ॥ ६४ ॥ भट्टार्यस्तमुवाचाथ विवाहं रंगगोदयोः ॥ एवं स्वयंवरे गोदां वरणस्रक्करां तदा ॥ ६५ ॥ रंगेशः प्रीतितः स्निग्धां दृष्ट्वा तां निकटे स्थितः ॥ तया च पश्यतां तेषां वरणस्रग्वृतोऽभवत् ॥ ६६ ॥ दृष्ट्वाथ विष्णुचित्तोपि वृतं श्रीरंगनायकम् ॥ प्रेम्णा प्रत्युज्जगामाथ हृष्टश्च प्रणनाम च ॥ ६७ ॥ विनयेन समानीय रंगिणं भक्तवत्सलम् ॥ प्रवेशयामास गृहं महेंद्रभवनोपमम् ॥ ६८ ॥ पद्मासनभवाद्यैश्च देवैर्ब्रह्मर्षिभिस्तदा ॥ सिद्ध-

चारणगंधर्वैरप्सरोभिश्च संयुतम् ॥ ६९ ॥ बंदिभिः स्तूयमानं चच्छत्रचामरशोभितम् ॥ मंत्रैः सिंहासनासीनं कृत्वा योगविदां वरः ॥७०॥ पूजयामास चार्घ्यादिमधुपर्कादिभिर्हरिम् ॥ सभार्यस्तमलंकृत्य वस्त्राभरणधेनुभिः ॥ ७१ ॥ गंधपुष्पाक्षतैः पीतैरुपवीतादिशोभितम् ॥ पाणिग्रहविधानेन गोदाहस्तं च धारयन् ॥ ७२ ॥ तस्मै परात्मने रंगनाथाय करमादरात् ॥ तस्याः समर्पयामास गोदायाः सगलंकृतम् ॥७३॥ मंगलाशासनैर्वेदपुराणैर्ऋषिकल्पितैः ॥ तां च भूम्यंशसंभूतां तस्मै त्वेवं समर्पयत् ॥ ७४ ॥ ततश्चाग्निं प्रतिष्ठाप्य हावयामास वैष्णवैः ॥ अग्नेः समीपे गोदायाः पाणिभ्यां लाजहोमकम् ॥ ७५ ॥ कारयित्वा रंगनाथो ब्राह्मणैश्च पुरस्कृतः ॥ गोदां नवोढां संगृह्य भूषितां भूषणोत्तमैः ॥ ७६ ॥ अगादग्रे स्वयं गोदा स्वयं पश्चाच्चलन् हरिः ॥ सप्त प्रदक्षिणाः कृत्वा मुमोद सह भार्यया ॥ ७७ ॥ विष्णुचित्तो महायोगी दैवतैः सह पूजितैः ॥ कासाराद्यैर्योगिमुख्यैर्विवाहं द्रष्टुमागतैः ॥ ७८ ॥ तमनुज्ञाप्य संपूज्य भूषणादिभिरुज्ज्वलैः॥रंगनाथं तन्निलयं प्रेषयामास गोदया ॥ ७९ ॥ शेषतल्पे शयानं तं रंगेशं सेवितुं तदा ॥ इयेष भक्त्या सा गोदा सत्वरं वरवर्णिनी ॥ ८० ॥ सर्वेषां पश्यतां तस्माद्गोदा चन्दनमण्डपात् ॥ सुमुहूर्त्ते विनिर्गत्य प्रविश्यांतःपुरं तदा ॥ ८१ ॥ विहितप्रांजलिर्भूत्वा तद्विमानप्रदक्षिणम् ॥ संप्राप्य सहसा भक्त्या सन्निधिं रंगशायिनः ॥ ८२ ॥ शेषतल्पे शयानं तमपश्यद्रंगशायिनम् ॥ लावण्यं यत्तदेवाद्यं रंगेशस्य महाद्भुतम् ॥ ८३ ॥ दृष्ट्वादृष्ट्वासकृत्सम्यगनुभूयानुभूय च ॥ शेषतल्पं समारुह्य तत्पादाब्जसमीपगा ॥ ८४ ॥ नादृश्यत तदा देवी सर्वैस्संदर्शिभिस्ततः ॥ तद्दृष्ट्वाश्चर्यमतुलं विस्मयं परमं ययुः ॥ ८५ ॥ विष्णुचित्तो वल्लभश्च ते सर्वे पुरवासिनः ॥ श्रीभूमिलीलागोदाभिः स तत्र रमितः सदा ॥ ८६ ॥ शयानो भोगिशयने तस्थौ मुक्तिप्रदो नृणाम् ॥ अंगी-

कृत्याथ तां देवीं भगवान् रंगराट् तदा ॥ ८७॥ विष्णुचित्तं समाहूय सर्वेषां शृण्वतां तदा ॥ इत्युवाच प्रवालोष्ठः स्फुरद्दशनसुप्रभः ॥८८॥ समुद्रराजवन्मेद्य श्वसुरोभूद्भवान् किल ॥ तीर्थं प्रसादं मालां च शठकोपं च सादरम् ॥ ८९ ॥ दापयित्वार्चकैः सम्यक्श्वशुराय स रंगराट् ॥ द्विपटं हाटकमयमाच्छाद्यात्यंतसंभ्रमम् ॥ ९० ॥ वटपत्रशयानाय पूर्ववद्धन्विमंगले ॥ श्रीपुष्पतुलसीमालाकैंकर्य्यं प्रतिवासरम् ॥ ९१ ॥ कुर्वंस्तत्रैव भट्टार्य्य सुखमास्स्व निरंतरम् ॥ इत्युक्त्वा भट्टनाथाय तदा प्रास्थापयद्धरिः ॥ ९२ ॥ कृत्वा विवाहं भट्टार्यो गोदां संस्थाप्य तां हरौ ॥ विषादप्रीतियुक्तात्मा तेन संप्रेषितस्तदा ॥ ९३ ॥ राज्ञा वल्लभदेवेन चतुरंगबलैः सह ॥ धन्विनव्यपुरं प्राप्य पूर्ववत्सुखमास्थितः ॥ ९४ ॥ ततो वल्लभराजोथ भट्टार्यं देशिकोत्तमम् ॥ तं धन्विमंगले सम्यक् प्रतिष्ठाप्य महौजसम् ॥९५॥ तेनानुज्ञापितो धीमान् प्रययौ मथुरां पुरीम् ॥ विष्णुचित्तो महाभागः श्वशुरो रंगभूपतेः ॥ ९६ ॥ तत्कैंकर्य्यं सदा कुर्वंस्तस्थौ दास्यैकजीवनः ॥ वटपत्रशयानाय पूर्ववद्धन्विमंगले ॥९७॥ श्रीपुष्पतुलसीमालाकैंकर्य्यं प्रतिवासरम ॥ कुर्वंस्तत्रैव भट्टार्य्यः सुखमास्ते निरंतरम् ॥ ९८ ॥ नित्यं तस्य हरेर्मनोज्ञतुलसीश्रीपुष्पमालाः पराः सम्यग्भट्टगुरुस्तदेकहृदयो भक्त्यार्पयद्विष्णवे ॥ मुष्णन्सर्वजनौघपापतिमिरं बाह्यं तमो भानुवत् पंचाशीतिसमाः स तत्र न्यवसतच्छ्रीधन्विनव्ये पुरे ॥९९॥ ततो रंगेश्वरस्तस्या गोदायाः पृथगेव सः ॥ अष्टमावरणे सम्यक् कारयित्वालयं महान् ॥ १०० ॥ प्राकारगोपुरयुतं मंडपैरुपशोभितम् ॥ नित्योत्सवादिसहितं वर्द्धयामास तं तदा ॥ १०१ ॥ तदारभ्याखिलस्थानेष्वष्टोत्तरशतेषु च ॥ शिलालोहादिरूपेण गोदादेव्यास्ततोऽनघ॥१०२॥ आविर्बभूवुः सर्वत्र मूर्त्तयः पृथिवीतले ॥ स्वावतारस्थलत्वेन यद्धन्विनगरं महत् ॥ १०३ ॥ सुमहद्वैभवं तत्र गोदादेव्याः प्रदृश्यते ॥ गोदादेवी शठारातिर्यतिराजश्च ते त्रयः ॥ १०४ ॥ सर्वथावश्यकतमाः

सर्वविष्णुस्थलेषु च ॥ १०५ ॥ गोदाशठारिपरकालमुखादिसिद्धैर्नाथार्ययामुनयतीश्वरकूरनाथैः ॥ सार्द्धं जगत्करुणया कलिदोषजुष्टं स्वाधीनरंगनिलया सकलं ररक्ष ॥ १०६ ॥ गोदाचरित्रं सुमहद्विचित्रं समस्तसन्मंगलपूर्णपात्रम् ॥ शृण्वंति ये भक्तियुताः पठंति सन्मंगलास्ते सततं भवन्ति १०७ ॥ इति श्रीप्रपन्नामृते श्रीपराशरभट्टार्य्यश्रीवेदांतिसंवादे गोदारंगेश्वरविवाहादिकथनं नाम द्विनवतितमोध्यायः ॥ ९२ ॥

---

## त्रिणवतितमोऽध्यायः ।

अस्मद्यातिं प्रणम्याथ भट्टार्य्यं प्रेमपूर्वकम् ॥ भक्तांघ्रिरेणुचरितं पप्रच्छ भगवत्परः ॥ १ ॥ कासारयोगिप्रमुखयोगिनां चरितानि च ॥ वत्तः श्रुतानि भट्टार्य्य सम्यग्विस्तरतो मया ॥ २ ॥ भक्तांघ्रिरेणु चरितं श्रोतुमिच्छामि सांप्रतम् ॥ विशदं ब्रूहि मे विद्वन् भक्ताय करुणार्णव ॥ ३ ॥ तस्य तद्वचनं श्रुत्वा भट्टार्य्यो भगवत्परः ॥ आलोक्यास्मद्यातिं सम्यक् प्रहृष्टो वाक्यमब्रवीत् ॥ ४ ॥ भक्तांघ्रिरेणुचरितं विचित्रं पापनाशनम् ॥ वक्ष्यामि शृणु वेदांतिन् समाहितमनास्ततः ॥ ५ ॥ काश्मीरसदृशो देशश्चोलदेश इति स्मृतः ॥ देशः कश्चिद्भूवाद्यः प्रसिद्धः सकलावनौ ॥ ६ ॥ नित्यप्रवाहा कावेरी दक्षिणोत्तरभागयोः ॥ या प्रहृष्टा प्रवहति तस्य सर्वत्र सर्वदा ॥७॥ संपूर्णसस्यैः सकलश्चोलदेशः समंततः ॥ प्रसिद्धः सर्वदेशेषु ततः संराजते भृशम् ॥ ८ ॥ विष्णुस्थानानि सर्वत्र संति तत्र पदेपदे ॥ अनंतत्वात्ततस्तेषां संख्यातुं नैव शक्यते ॥ ९ ॥ परांकुशादियोगींद्रप्रबंधैः प्रतिपादिताः ॥ विख्याता दिव्यदेशास्तु द्विचत्वारिंशदीरिताः ॥ १० ॥ तन्मध्ये सुमहत्पुण्यं कुंभकोणं सुविश्रुतम् ॥ भक्तिसारेण वकुलाभरणेन महात्मना ॥ ११ ॥ परकालेन वेदांतिंस्तच्च सम्यगभिष्टुतम् ॥ तस्य पश्चिमदिग्भागे क्रोशद्वयविदूरतः ॥ १२ ॥

मंडंगुडिसमाख्यातं बभूव नगरं महत् ॥ कावेर्याश्चोत्तरतटे सर्वविद्वज्जनावृतम् ॥ १३ ॥ तत्प्रभावपराः श्लोकाः श्रूयंते प्रथिता भुवि ॥ श्रीदिव्यसूरिचरिते वेदांतिश्लोकविश्रुताः ॥ १४ ॥ ततो महाञ्छ्रीमति चोलदेशे कवेरजायास्तटसीम्नि कश्चित् ॥ ग्रामोस्ति मंडंगुडिनामधेयो यत्रासते सप्तशतानि विप्राः ॥ १५ ॥ ऋग्वेदिनः केचन भूसुरेंद्राः केचिद्यजुर्वेदधरा महांतः ॥ अन्ये च सामश्रुतिपाठशौंडास्तन्वंति यत्रोर्द्ध्वशिखा निवासम् ॥ १६ ॥ तत्राभवद्वेदविशारदाख्यो द्विजोत्तमः पूर्वशिखो महात्मा ॥ विद्वत्प्रियो विष्णुरतः सभार्यो संतानकामो हरिमेव दध्यौ ॥ १७ ॥ नारायणाद्रिं प्रयतः समेत्य कल्याणतीर्थे कृतमज्जनोत्र ॥ संतानकामः स बुधः सदारो ननाम नारायणमप्रमेयम् ॥ १८ ॥ तत्र रामप्रियं नत्वा संपत्पुत्राभिधं हरिम् ॥ मंडंगुडिपुरं प्राप भूयः स द्विजपुंगवः ॥ १९ ॥ नारायणकटाक्षेण ब्राह्मणस्य ततोजनि ॥ विप्रनारायणो नाम धीमांस्तस्य सुतो महान् ॥२०॥ तत्कालनिर्णयं वक्ष्ये शृण चावहितोनघ ॥ गतेष्वष्टोत्तरशतवत्सरेषु कलौ युगे ॥ २१ ॥ प्रभवाब्दे धनुर्मासे वेदांतिन्निंद्रभे ततः ॥ श्रीविष्णुवनमालांशाद्विप्रनारायणोऽजनि ॥ २२ ॥ मंडंगुडिपुरे श्रीमान् ब्राह्मणस्य निवेशने ॥ अस्यावतारश्लोकाश्च गीयंते बहवो भुवि ॥ २३ ॥ चोलक्षितौ धनुषि मासि महेंद्रतारे प्रादुर्बभूव सुरभिद्वनमालिकांशः ॥ रंगेशकेलिसुखमूर्द्ध्वशिखं द्विजेंद्रं भक्तांघ्रिरेणुमनघं सगुणं प्रपद्ये ॥ २४ ॥ तत्रोदभूद्भागवतद्विजेंद्राज्ज्येष्ठाख्यभे मासि च मार्गशीर्षे ॥ श्रीविप्रनारायणनामधेयो मुरारिवक्षोवनमालिकांशः ॥ ॥ २५ ॥ कोदंडे ज्येष्ठनक्षत्रे मंडंगुडिपुरोद्भवम् ॥ चोलोर्व्यां वनमालांशं भक्तपद्रेणुमाश्रये ॥ २६ ॥ नारायणप्रसादेन यतोऽभूदात्मजो महान् ॥ विप्रनारायणो नाम चक्रे तस्याभिधां तदा ॥२७॥ ततोन्नप्राशनमुखैः संस्कारैः संस्कृतो द्विजः ॥ जग्राहाखिलशास्त्राणि वेदान्सांगान् स देशिकात् ॥ २८ ॥ स बुधाग्रेसरो धीमान् विप्रनाराय-

णो महान् ॥ पित्रोरानंददः श्रीमान् व्यवर्द्धत महायशाः ॥ २९ ॥
विप्रनारायणस्याथ देवो वेत्रवतीसखः ॥ विधाय पंचसंस्कारान् मंत्रा-
र्थं चाप्यबोधयत् ॥ ३० ॥ संजातज्ञानवैराग्यो विप्रनारायणस्ततः ॥
मतिमानकृतोद्वाहः श्रीरंगेशदिदृक्षया ॥ ३१ ॥ प्रतस्थे सहसा धी
माञ्छ्रीरंगं प्रति सादरम् ॥ मरुद्वृधाया मध्यस्थं चन्द्रपुष्करिणीतटे ॥
॥३२॥ श्रीरंगमतुलं श्रेष्ठं श्रिया जुष्टं महाद्भुतम् ॥ आससादांजसा
श्रीमान् विप्रनारायणोऽनघः ॥ ३३ ॥ विमानमभ्येत्य चतुःप्रद-
क्षिणं चतुर्दिशं तस्य कृतप्रणामः ॥ तदंतरे विश्वनिधिं ददर्श महार्ह-
नीलाचलसन्निकाशम् ॥ ३४ ॥ प्रसन्नवक्त्रं नलिनायतेक्षणं कृपामयं
कांतिनिकेतरूपम् ॥ संसेव्य रंगेश्वरदिव्यदेहं विरिंचिवद्विप्रकुलाग्र-
गण्यः ॥ ३५ ॥ स तस्य लावण्यमिदं विलोक्य जगाम हर्षं सुतरां
महात्मा ॥ अनूपमात्यद्भुतदिव्यसुंदरं प्रादर्शयद्दृष्टिमनोपहारिणम् ॥
स्वरूपमस्मै परमंजसादरात्स्वभक्तियुक्तं स चकार तं द्विजम् ॥३६॥
विप्रनारायणो धीमानपारकरुणांबुधिः ॥ सदा रंगदयापात्रं स बभूव
तदानघ ॥ ३७ ॥ यथाभूद्भगवद्भक्तः पुंडरीकश्च पुण्यकृत् ॥ तथा-
भूद्भगवद्भक्तो विप्रनारायणो महान् ॥ ३८ ॥ मालां सकृत्समर्प्यैकां
श्रीकृष्णाय स्वसद्मनि ॥ मालाकारोऽभवत्तेन कृतार्थो भगवत्प्रियः
॥ ३९ ॥ अतः प्रियतमेष्वस्य कैंकर्य्येष्वखिलेषु च ॥ श्रीपुष्पदाम-
कैंकर्य्यं सुतरां भगवत्प्रियम् ॥४०॥इति सम्यक् समालोच्या विप्रनारा-
यणस्तदा ॥ श्रीभट्टनाथवद्भक्त्या भगवद्भक्तिपारगः ॥ ४१ ॥ नंदनो-
द्यानवद्रम्यं श्रीपुष्पतुलसीवनम्॥ रंगप्रतीच्यां कृत्वाशु नित्यं श्रीरंग-
शायिने ॥ ४२ ॥ श्रीपुष्पतुलसीमालां दिवा रात्रौ समर्प्पयत् ॥ श्री-
वैष्णवगृहेष्वत्र भिक्षाशनरतः शुचिः ॥ ४३ ॥ जितकामः सुखं
तस्थौ वेदांतिन् प्रथमाश्रमी ॥ तदा कदंबनगरे कावेर्य्याश्चोत्तरे तटे
॥ ४४ ॥ उत्तमस्वामिनिलये वेश्या काचिद्बभूव ह ॥ देवदेवीति

विख्याता सा वै देवांगनांशजा ॥ ४५ ॥ कदाचिच्चोलभूपालदर्शनार्थं सखीजनैः ॥ निचुलानगरं प्राप सा वेश्या लोकमोहिनी ॥ ४६ ॥ चोलेंद्रं मोहयित्वाशु लास्यगीतादिविभ्रमैः ॥ राज्ञो बहुधनं प्राप्य रत्नभूषांबराणि च ॥ ४७ ॥ गर्वेण महता युक्ता प्रतस्थे स्वपुरं प्रति ॥ मार्गखेदापनोदार्थं विप्रनारायणाश्रमम् ॥ ४८ ॥ आससादांजसा श्रीमद्देवदेवी सखीजनैः ॥ नंदनोद्यानसदृशे जितचैत्ररथे वने ॥४९॥ सर्वश्रमापहरणे वृक्षमूले च सा स्थिता ॥ वनं सर्वं विलोक्यैषा देवदेवी तदानघ ॥ ५० ॥ अतिप्रहृष्टा पार्श्वस्थामग्रजां वीक्ष्य हर्षिता ॥ वेदांतिन्नालिवेण्याख्यां देवदेवी तदानघ ॥ ख्यापनाभिमुखी वेश्या व्याजहार वचः शुभम् ॥ ५१ ॥ पश्याग्रजे सुंदरमेतदद्भुतं वनं महच्चैत्ररथाधिकश्रियम् ॥ वृक्षा महांतः फलभारपीडिता नम्राश्च गर्भिण्य इवात्र भान्त्यहो ॥ ५२ ॥ नारिकेलाम्रपनसकदंबवनराजयः ॥ पुन्नागलिकुचाशोकजंबीरवनराजयः॥५३॥ राजंते सम्यगेवात्र कदलीवनराजयः॥ पिकाश्चात्रैव मधुरं कूजंति शुकसारिकाः ॥ ५४ ॥ निरंतरं वसंत्यस्मिन्नारामे सुमनोहरे ॥ केतकीमल्लिकाजातिमालत्यादीनि संततम् ॥ ॥५५॥ कुसुमानि विराजंते नक्षत्राणीव चांबरे ॥ पुष्पासवं पिबंतश्च कूजंतः सादरं महत् ॥५६॥ नृत्यंतः पुष्पनिकरे भ्रमंति भ्रमरास्सदा ॥ ॥ वापीकूपसरांस्यत्र संपूर्णांभांसि संततम् ॥ ५७॥ सपद्मानि विराजंते पश्यपश्याग्रजे वनम् ॥ वनमध्ये प्रवहति कावेरी निर्मलोदका॥५८॥ सुशीतलः सुगंधश्च मंदवातो मनोहरः ॥ सर्वदा वाति सुश्रोणि सर्वश्रमहरो महान् ॥ ५९ ॥ सदा हसदिवाभाति रंगेशोद्यानमुत्तमम् ॥ इंद्रोद्यानं चैत्ररथं कुबेरस्य च तद्वनम् ॥ ६० ॥ प्रवहत्यस्य कावेरी वनस्योभयपार्श्वयोः ॥ आधारं सर्वजंतूनां वल्लीतरुसुशोभितम् ॥६१॥ रंगेशरंगनायक्योर्विहारस्थानमुत्तमम् ॥ क्वेत्थं वनमिदं रम्यं दुर्गमं क्व च नंदनम् ॥ ६२ ॥ रंगेशमृगयायासश्रमापहरणं वनम् ॥ अस्माकमध्वगायासहरणे किमुताग्रजे ॥ ६३ ॥ तद्वर्णयंती सा चैवं देवदेवी

वनोत्तमम् ॥ आरामलक्ष्मीं पश्यंती साभिप्राया सखीजनैः ॥ ६४ ॥ संचरंती तत इतस्तत्रारामे महौजसम्॥अपश्यत्पुरुषं कंचिद्वैष्णवं तद्व-नाधिपम् ॥ ६५ ॥ शुभ्राभांबरयज्ञसूत्रममलं छिद्रोर्ध्वपुंड्रोज्ज्वलं कंठो-दग्रविराजमानतुलसीपद्माक्षमालांचितम् ॥ दीर्घश्मश्रुशिरोजरोमवित-तिं संधारयंतं परं श्रीवृंदावनसुद्घटेन पयसा संपूरयंतं घटैः ॥ ६६ ॥ रंगेशांघ्रिसरोरुहामृतरसास्वादैकसंजीवनं तत्कैंकर्य्यपरायणं प्रतिदिनं चाज्ञातकामादिकम् ॥ स्वप्ने किंचिदपि प्रमादवशतोप्यज्ञातयोषि-त्सुखं तं मौनव्रतमद्भुतार्य्यचरितं श्रीविप्रनारायणम् ॥ ६७ ॥ तरुगुल्मलतानां च ह्यालवालं विधाय च ॥ आलवाले-ष्वविरतं पूरयंतं पयः स्वयम् ॥ ६८ ॥ विप्रनारायणं सम्य-ग्देवदेवी विलोक्य तम् ॥ विस्मयाविष्टहृदया ह्यलिवेण्या समेत्य च ॥ ६९ ॥ विनयेन प्रणम्यार्यं प्रांजलिः समुपस्थिता ॥ दृष्ट्वाप्यप-श्यन् वेदांतिन् देवदेवीं दृढव्रतः ॥ ७० ॥ तिरस्कृत्य स तां स्वस्थः कैंकर्यनिरतोभवत् ॥ विप्रनारायणं दृष्ट्वा देवदेवीपराङ्मुखम् ॥ ७१ ॥ आदेरणाग्रजां वीक्ष्य देवदेवी वचोब्रवीत् ॥ उन्मत्त एष षंढो वा न पश्यति पुरः स्थिताम् ॥ ७२ ॥ मामसादृश्यलावण्यां सर्वलोकैक-मोहिनीम् ॥ देवदेवीवचः श्रुत्वा सा प्रहस्य तदग्रजा ॥ ७३ ॥अलि-वेण्यब्रवीद्दिव्यं तत्प्रभावममानुषम् ॥ न च षंढो न चोन्मत्तो न चैष प्राकृतो जनः ॥ ७४ ॥ महाविरक्तो रंगेशकैंकर्य्यनिरतः सदा ॥ दत्ते लक्षधने चापि न त्वां द्रक्ष्यति चक्षुषा ॥७५॥ अयं न चोलभू-पालस्त्वद्विभ्रमविमोहितः ॥ लोके सामान्यपुरुषं न चेमं पश्य चो-त्तमम् ॥ ७६ ॥ अलिवेण्या वचः श्रुत्वा देवदेवी रुषान्विता ॥ लाव-ण्यस्यैव गर्वेण स्वसामर्थ्यमथाब्रवीत् ॥ ७७ ॥ अजानंतीवं वदसि दृष्ट्वाप्यन्यादृशं मम ॥ सामर्थ्यं सन्ततं सुभ्रूस्तदसाध्यं न मन्यते ॥ ७८ ॥ मयोपार्जितवित्तस्य न संख्या विद्यते किल ॥ वातपर्णज-

लाहारा योगिनश्चोर्द्ध्वरेतसः ॥ ७९ ॥ मन्मुखालोकनेनैव किलासन् गलितेंद्रियाः ॥ पीनश्चायं सुन्दरांगः सुवक्षाः पद्मलोचनः ॥ ८० ॥ कोमलावयवः श्रीमान् यौवनारंभविग्रहः ॥ एकाकी विजनारामे वर्तते सुमनोहरे ॥८१॥ वशीकरणकार्य्ये तु तस्य चारामवासिनः ॥ कः प्रयासोऽग्रजे मेऽद्य साधवः सुलभाः किल ॥८२॥ तस्यास्तद्वचनं श्रुत्वा मद्यौवनगर्वितम्॥प्राह साऽसहमानैवं रोषाद्रक्तांतलोचना॥८३॥ रूपविभ्रमसंपद्भिश्चारुहासावलोकनैः ॥ धीमान् वैराग्यनिलयस्त्वयायं मोहितो यदि ॥ ८४ ॥ वारस्त्रीजनमुख्यैव सा तदा त्वं भविष्यसि ॥ अहं दासी भविष्यामि ह्याषण्मासं तवैव हि ॥ ८५ ॥ प्रतिज्ञारूपकं वाक्यं तस्याः श्रुत्वा तनूदरी ॥ संरक्तनयना रोषाद्देवदेवी तदानघ ॥ ८६ ॥ प्रतिज्ञामकरोत्तद्वद्वेदांतिह्लोकसुंदरी ॥ अलिवेण्यग्रजे सम्यङ् मद्वाक्यं श्रूयतामिदम् ॥ ८७ ॥ मद्विभ्रमविलासादिमोहितं तमिमं वरम् ॥ यद्यहं न करिष्यामि महावैराग्यवारिधिम् ॥ ८८ ॥ तव दासी भविष्यामि ह्याषण्मासं तदा ध्रुवम् ॥ कृत्वा प्रतिज्ञां सा चैवमग्रजां तां सखीजनैः ॥ ८९ ॥ प्रस्थापयित्वा स्वगृहं देवदेवी तदानघ ॥ विसृज्य भूषणान्याशु सर्वाणि चतुरा तदा ॥ ९० ॥ स्नात्वा स्थूलपटं सम्यक् परिधायानतानना ॥ धृतोर्द्ध्वपुंड्रा वेदांतिस्तदा सात्त्विकवेषतः ॥ ९१ ॥ समागत्यांजसा तस्य सन्निधौ कृतवंदना ॥ कृतांजलिपुटा तस्थौ सा सतीवासती तदा ॥ ॥ ९२ ॥ विप्रनारायणो दृष्ट्वा तामेवमवदत्तदा ॥ किमर्थमागता का त्वं वद तत्कारणं मम ॥ ९३ ॥ विप्रनारायणस्याथ श्रुत्वा वारांगना वचः॥ भक्तियुक्तेव निपुणा तं पुनः प्रणिपत्य च ॥ ९४ ॥ सम्यग्विज्ञापयामास स्ववृत्तांतं नतानना॥ अंगीकुरुष्व भोः स्वामिन् मम विज्ञापनं गुरो ॥ ९५ ॥ अहं तु पापबाहुल्याद्वारस्त्रीवंशसंभवा ॥ दशसूनिसमश्चक्री दशचक्रिसमो ध्वजी ॥ ९६ ॥ दशध्वजिसमा वेश्या

इत्येते शास्त्रनिर्णयाः ॥ वेश्याजन्म ततो विद्वन् बहुपापसमुद्भवम् ॥
॥ ९७ ॥ केन चित्पुण्यलेशेन काचिन्मतिरभून्मम ॥ जाताहं पापबा-
हुल्यादस्मिन्वेश्याकुलेऽधुना ॥ ९८ ॥ भूयोहमधुना ह्यस्मिन्न कृत्वा
पापं सुदारुणम् ॥ काँल्लोकांश्च गमिष्यामीत्येवं चिंता महत्यभूत् ॥
॥ ९९ ॥ कृत्वा श्रीवैष्णवानां च विष्णोः कैंकर्य्यमन्वहम् ॥ तन्मार्ग-
वर्तनं सम्यगितीयं मे मतिर्गुरो ॥ १०० ॥ अस्मन्मातृमतिस्त्वार्य
घोरा नैतादृशी परा ॥ भार्या भूत्वा तु सर्वेषां मोहयित्वा स्वविभ्रमैः ॥
॥ १०१ ॥ सर्वाञ्जनांश्च भैषज्यैर्धनसंपादनं कुरु ॥ इति मामनिशं
माता स्वामिन्संपीडयत्यलम् ॥ १०२ ॥ तन्मातृवचनं घोरं निर्भर्त्स्य
नरकप्रदम् ॥मुक्तिकामा मुमुक्षोश्च भवतः पादपंकजम्॥१०३॥संसेव्य
त्वदधीनाहं वर्तिष्येऽत्र न संशयः ॥ अतिलुब्धामनादृत्य मातरं
पापचारिणीम् ॥ १०४ ॥ त्वां गतास्म्यद्य शरणमलुब्धं धर्मचारि-
णम् ॥ युष्मद्दास्यां घृणासिंधो निक्षिप्य करुणां मयि ॥ १०५ ॥
अनाथामातुरां दीनां रक्ष मां शरणं गताम् ॥ रंगेशतुलसीदामप्रदानस-
मये तदा ॥ १०६ ॥ भिक्षाचरणवेलायामप्यहं वनपालिका ॥ भवि-
ष्यामि न संदेहस्त्वदाज्ञापरिपालिनी ॥१०७॥ तोयं वा शीर्णपर्णं वा
फलं वा शाकमेव वा॥ शरीरधारणं कृत्वा वर्तिष्ये तव शासने॥१०८॥
दास्यै त्वद्भुक्तशिष्टान्नं दत्तं हि कृपया यदि ॥ सदानंदा भविष्यामि कृ-
तार्थाहं न संशयः ॥ १०९ ॥ अंगीकुरुष्व मां दीनां साधवो दीनव-
त्सलाः ॥ अजानानः स साधुत्वात्कौटिल्यं वारयोषितः ॥११०॥ तथ्यं
मत्वा तदा तस्या वेदांतिन्दीनवत्सलः॥ सम्यङ्नियोजयामास स ता-
मारामरक्षणे ॥ १११ ॥ तेन वाक्येन संतुष्टा देवदेवी शुचिस्मिता ॥
तीर्णप्रतिज्ञामात्मानमम न्यत तदानघ ॥११२॥ नित्यं त्रिषवणस्नानं
कावेर्य्यां कुर्वती ततः ॥ कृतोर्द्ध्वपुंड्रा नियता तुलसीबद्धमालिका ॥
॥११३॥विप्रनारायणांघ्र्यब्जात्रिकालकृतवन्दना॥ तेन निर्णीतकैंकर्य्य-
निरताभूत्सदानघ ॥ ११४ ॥ वेदांतिन् वैष्णवश्रेष्ठो विप्रनारायणो

महान् ॥ कृत्वा माधुकरं सम्यक् तत्समर्प्य च विष्णवे ॥११५॥ स्वयं भुक्त्वावशिष्टान्नं देवदेव्यै तदा ददौ ॥ सा देवदेवी संतुष्टा प्रतिगृह्य तदोदनम् ॥ ११६ ॥ भुक्त्वा सम्यङ्‌ महाभक्त्या विसृष्टा सर्वपातकैः ॥ अशोभत महाशुभ्रा शरद्राकानिशा यथा ॥ ११७ ॥ देवदेवी ततः सम्यक् पुष्पारामे निरंतरम् ॥ सर्वेषां पुष्पतुलसीवृक्षाणां प्रयतानघ ॥ ११८ ॥ तदा खनित्रवक्रेण परेषामपि सादरम् ॥ विधाय खननं तेषामालवालांश्च सादरम् ॥११९॥ घटाभ्यां जलमादाय कृत्वा चात्र प्रपूरणम् ॥ तानेव वर्द्धयामास रंजयंती मुनेर्मनः॥१२०॥ सहमानानिशं सम्यग्वातवर्षहिमातपान् ॥ १२१ ॥ सर्वांश्च भोगान्सुविसृज्य शीघ्रं तामग्रजोक्तां गिरमेव चित्ते ॥ स्मृत्वा मुहुः शल्यमिव प्रतिज्ञामप्राप्तकामा परिशोषमाप ॥ १२२ ॥ रंगेशकैंकर्य्यपरंपराभिः कालः सुखेनैव दिवापयाति ॥ रात्रिर्महाकालनिशेव चासीत् तस्या वने तेन पृथक् स्थितायाः ॥ १२३ ॥ सा देवदेवी भगवत्परापि रंगेशकैंकर्य्यरतैव तस्थौ ॥ स्वकार्य्यसिद्धिं प्रति साभिलाषा श्रीविप्रनारायणदास्यचित्ता ॥ १२४ ॥ इति श्रीप्रपन्नामृते श्रीपराशरभट्टार्य्यश्रीवेदांतिसंवादे भक्तांघ्रिरेण्ववतारचरितकथनं नाम त्रिणवतितमोध्यायः ॥ ९३ ॥

## चतुर्णवतितमोऽध्यायः ।

ततोस्मद्यतिराडेदं स भट्टार्य्यं कृतांजलिः ॥ संत्यक्तसर्वभोगैका देवदेवी दृढव्रता ॥ १ ॥ कैंकर्य्यं कुर्वती चैवं कियत्कालं समास्थिता ॥ कार्य्यसिद्धिः कथमभूद्वेश्यायाः पापसंततेः ॥ २ ॥ वश्यः कथमभूत्तस्याः स वैराग्यनिधिर्महान् ॥ एतत्सर्वमशेषेण वद कौतूहलं मम ॥३॥ अस्मद्यतेर्वचः श्रुत्वा भट्टार्य्यस्तमथाब्रवीत् ॥ हंत ते कथयिष्यामि शृणु त्वमवधानतः ॥ ४ ॥ भक्तांघ्रिरजसस्तस्य कथां तामद्भुतां शुभाम् ॥ सम्यगारामकैंकर्य्यं कुर्वती तत्पथानुगा ॥ ५ ॥ एवं षण्मा-

सपर्य्यैतं देवदेवी समास्थिता ॥ प्रतिज्ञा सफला नाभूद्वेदांतिन्वारयो-
षितः ॥ ६ ॥ सा च चिंतार्णवे मग्ना देवदेवी परं तदा ॥ सा चिंत-
यित्वा बहुधा रंगेशं शरणं गता ॥ ७ ॥ रंगेश करुणासिंधो देवदेव
प्रसीद मे ॥ वृथा प्रतिज्ञा गर्वेण नीचया च मया कृता ॥ ८॥ वैराग्य-
निधिरक्षोभ्यो मादृशामपि योषिताम् ॥ एवं श्रीमाञ्जितारातिर्विप्रनारा-
यणो महान् ॥ ९ ॥ मयानुवर्त्तितः सम्यगाषण्मासं निरंतरम् ॥ अपां-
गवीक्षणेनापि मां न पश्यति कर्हिचित् ॥ १० ॥ महागाढांधकारेपि
निशीथसमये वने ॥ एकाकिनीमनाथां बहिश्शयां शरणाग-
ताम् ॥ ११ ॥ मां त्यक्त्वा निर्दयो धीरस्सुखं स्वपिति वै किल ॥ किं
भुक्तं कुत्र शेषे त्वमित्येवं मां कदाचन ॥ १२ ॥ स्थित्वाप्यसम्मुखे
किंचिन्न पृच्छति बतैष हि ॥ आरामे किं कृतं बाले किं कैंकर्य्यं करि-
ष्यसि ॥ १३ ॥ सांप्रतं श्वः परश्वो वा किं कैंकर्य्यं चरिष्यसि ॥
इत्येवं रंगिकैंकर्य्यकरणेनापि मां प्रति ॥ १४ ॥ किंचिद्वचो महानेष
न पृच्छति कदाचन ॥ आस्था च यावती ह्यस्य वनवृक्षेषु वर्तते ॥
॥ १५ ॥ मय्येकशरणायां तु तावत्यपि न विद्यते ॥ कदा तीर्णप्रति-
ज्ञाहं भविष्यामि न वेद्म्यतः ॥ १६ ॥ रंगेश करुणासिंधो मामना-
थां विलोकय ॥ मामकानपराधांस्तान् क्षमस्व पुरुषोत्तम ॥ १७ ॥
तीर्णप्रतिज्ञां रंगेश मामंगीकुरु सर्वदा ॥ अनन्यशरणा चैव देवदेवी
तदानघ ॥ १८ ॥ भक्ताभीष्टप्रदं देवं रंगेशं शरणं गता ॥ तदा रंगेश्वरः
श्रीमान्भक्तानुग्रहकारकः ॥ १९ ॥ प्रतिज्ञां सफलां तस्याः सत्यां
कर्त्तुमसमन्यत ॥ प्रावृट्कालस्ततः श्रीमान् सर्वसस्यसमृद्धिदः ॥
॥ २० ॥ देवदेवीमनोभीष्टपूरकः समवर्तत ॥ आसारवर्षः सुमहा-
न्कदाचिदभवान्निशि ॥ २१ ॥ महाविद्युद्गणो भीमो महाशनिसम-
न्वितः ॥ पर्णशालास्थितो धीमान् विप्रनारायणस्तदा ॥ २२ ॥
वर्षेण हन्यमाना सा देवदेवी बहिः स्थिता ॥ रंगेशानुग्रहादेव विप्र-

नारायणस्य वै ॥ २३ ॥ कारुण्यं तस्य संजातं देवदेव्यां तदानघ ॥ वर्षेण पीड्यमानां तां देवदेवीं विलोक्य सः ॥ २४ ॥ कृपया प्राह धर्मात्मा विप्रनारायणो महान् ॥ वातवर्षो महानस्ति बहिः स्थातुं न शक्यते ॥ २५ ॥ अत्रागच्छाशु शालायां देवदेवि क्वचित्स्थले ॥ अंगीकृत्याशु तद्वाक्यं प्रहृष्टेनांतरात्मना ॥ २६ ॥ धन्यास्मीति वदंत्याशु पर्णशालां विवेश सा ॥ प्रविश्य पर्णशालायां तस्य पादांतिके स्थिता ॥२७॥ विचित्ररूपलावण्या कोकिलस्वरभाषिणी ॥ रंजयंती मनः सम्यङ्मुनेर्मधुरभाषणैः ॥ २८ ॥ स्ववाक्यश्रवणे सक्तमकरोत्तं तदानघ ॥ पादसंवाहने यत्नं नैपुण्याच्छनकैर्व्यधात् ॥ ॥२९॥ विप्रनारायणस्याथ देवदेवी महामतेः ॥ देवदेव्या कृतं सम्यक् पादसंवाहनं तदा ॥ ३० ॥ अंगीचकार वेदांतिन् विप्रनारायणोपि सः ॥ अन्योन्यप्रीतिसंयुक्तौ तावुभौ मिलितौ तदा ॥ ३१ ॥ अंगारसदृशी नारी घृतकुंभसमः पुमान् ॥ तस्मान्नारीषु संसर्गं दूरतः परिवर्जयेत् ॥ ३२ ॥ यथैव वह्निसान्निध्यादाज्यं स्रवति निश्चयम् ॥ तथा युवतिसान्निध्यात्पुंसां चेतश्चलत्यहो ॥ ३३ ॥ सर्वथा परिहर्त्तव्यो योषित्संगः सुदुर्मदः ॥ योगिनामपि सर्वेषां सत्यं चैवोर्ध्वरेतसाम् ॥ ॥ ३४ ॥ विप्रनारायणस्तत्र देवदेव्या सहादरात् ॥ रेमे चिरं स वेदांतिञ्छ्रीकृष्णो राधया यथा ॥ ३५ ॥ तस्य तद्वचनं श्रुत्वा महाश्चर्यसमन्वितः ॥तमवोचत्स भट्टार्य्यं वेदांती गुरुपुंगवम्॥३६॥दुःशीलया विरक्तस्य महावैराग्यवारिधेः ॥ सुज्ञानिनस्तया सार्द्धं कथमासीत्समागमः ॥३७॥तद्विचित्रमिवाभाति वद विस्तरतो मम ॥ प्रतिगृह्य स तद्वाक्यं भट्टार्य्यस्तमथाब्रवीत् ॥ ३८ ॥ अजेया वैष्णवी माया योषिद्रूपा न संशयः ॥ न शक्नुवंति तां जेतुं ब्रह्मेशानादयोपि हि ॥ ३९ ॥ पादाब्जस्पर्शमात्रेण स्ववशीकृत्य तं तदा ॥ साभिप्रायमनोहारिमंदहासावलोकनैः ॥ ४० ॥ तन्मनश्चालयंती सा वायुर्दीपशिखां यथा ॥

कोकिलस्वरयुक्तेन मनोज्ञवचसा तदा ॥ ४१ ॥ अवोचदसितापांगी पश्यंती तं मुहुर्मुहुः ॥ दास्यै तव हितं वाक्यं ब्रूहि मे करुणाकर ॥ ४२ ॥ त्वत्पादपद्मकैंकर्य्यं करिष्येहं यथामतम् ॥ मंदस्मितमुखी सुभ्रूः साभिप्रायावलोचना ॥ ४३ ॥ अपांगवीक्षणैः सम्यग्विप्रनारायणं स्थिता ॥ विप्रनारायणः सोपि तद्विलासादिमोहितः ॥ ४४ ॥ चक्रेऽथ पाणिग्रहणं देवदेव्याः शुचिस्मितः ॥ धन्यास्मीति वदंत्याशु प्रहृष्टेनांतरात्मना ॥ ४५ ॥ मंदस्मितमुखी सुभ्रूर्देवदेवी दृढव्रता ॥ सा गाढालिंगनं चक्रे विप्रनारायणस्य हि ॥ ४६ ॥ रेमे मुदा सुतन्वंगी सा तेन परमर्षिणा ॥ विचित्रसुरतैस्सम्यगज्ञातविषयादिना ॥ ४७ ॥ अज्ञातयोषिदानंदं मुनिं स्वप्नेपि कर्हिचित् ॥ विषयार्णवनिर्मग्नं तत्क्षणे साकरोच्च तम् ॥ ४८ ॥ युवतीजनसामर्थ्यं न वक्तुं कोपि शक्यते ॥ ब्रह्मादयोखिला देवास्तदधीनाः किलाभवन् ॥ ४९ ॥ ततः स्वगृहमागत्य देवदेवी दृढव्रता ॥ विधाय मंगलस्नानं सा सम्यक्कृतभोजना ॥ ५० ॥ सर्वाभरणसंयुक्ता विचित्रांबरशोभिता ॥ आभिरूप्येण तन्वंगी विप्रनारायणं मुहुः ॥ ५१ ॥ सम्यक् स्वसुंदरांगानां योगीशभ्रांतिकारिणाम् ॥ एकदेशे विनिर्मग्नं नैपुण्याद्विदधे तदा ॥ ५२ ॥ आरामे नंदनोद्यानसदृशे तत्र सुंदरी ॥ मल्लिकामाधवीजातिलताकुंजेषु संततम् ॥ ५३ ॥ रमणीये मनोहारि मत्तभृंगविनादिते ॥ शुककोकिलकोयष्टिशारिकागणशोभिते ॥ ५४ ॥ विचित्रनिर्भरानंगमहोत्सवमहारसम् ॥ दृढानुरागावन्योन्यमनुभूयासकृद्गृहः ॥ ५५ ॥ अन्योन्यक्षणविश्लेषं मन्यमानौ महायुगम् ॥ संक्रीडेतां निकुंजेषु श्रीराधामाधवाविव ॥ ५६ ॥ तमेवं स्ववशीकृत्य देवदेवी द्विजोत्तमम् ॥ सुश्लाघ्यमाना सकलैरलिवेण्या च तर्जनैः ॥ ५७ ॥ सा तीर्णकामा स्वगृहं तेन सार्द्धं विवेश सा ॥ त्यक्तवर्णाश्रमाचारं विटवेषविशारदम् ॥ ५८ ॥ योषित्परवशं सम्याग्विप्रनारायणं व्यधा-

त् ॥ ततः स्वधर्मानुष्ठानं यत्संध्यावंदनादिकम् ॥ ५९ ॥ सर्वं त्यक्त्वानिशं सम्यग्वेश्याभोगपरायणः ॥ त्यक्तरंगेशकैंकर्य्यस्स वारवनितागृहे ॥ ६० ॥ विप्रनारायणः श्रीमान् कंचित्कालमवर्त्तत ॥ आकर्ण्य तद्वचस्तस्य वेदांती भयमोहितः ॥ ६१ ॥ अत्यंतविस्मितो धीमान् भट्टार्य्यं प्रणिपत्य सः ॥ बद्धांजलिपुटः सम्यक् चक्रे विज्ञापनं तदा ॥ ६२ ॥ स्वामिन्नेतादृशं चित्रं न दृष्टं न मया श्रुतम् ॥ अत्यद्भुततमं कार्य्यं तदिदं लोकगर्हितम् ॥ ६३ ॥ तस्य रंगेशभक्तस्य वर्णिनश्चाभवत्कथम् ॥ कासारयोगिप्रमुखदशांतर्वर्त्तियोगिराट् ॥ ६४ ॥ नैव सामान्यपुरुषो वनमालांशजो हरेः ॥ नित्यमस्पृष्टसंसारगंध इत्यभिधीयते ॥ ६५ ॥ कथमेतादृशस्यास्य संजातं कार्य्यमीदृशम् ॥ वेश्यायाः पापरूपायाः सर्वपापप्रणाशनः ॥६६॥ कथं समभवत्तस्य पादस्पर्शो महात्मनः ॥ अस्याः कथमभूज्जन्म रंगक्षेत्रे बुधर्षभ ॥ ६७ ॥ साक्षात्परं पदं रंगं मुक्तिस्थानं न संशयः॥ तत्कथाश्रवणेत्यंतं स्वामिन्कौतूहलं हि मे ॥ ६८ ॥ न तवाविदितं किंचित्त्रिषु लोकेषु विद्यते ॥ भवान्कूरेश्वरसुतः श्रीरंगेशपुरोहितः॥६९॥ सर्वशास्त्रार्थतत्त्वज्ञः साक्षान्नारायणो गुरुः ॥ विशदं ब्रूहि मे विद्वंस्तच्च सर्वं सहेतुकम् ॥ ७० ॥ तेनोदीरितमाकर्ण्य संतुष्टः कूरराट्सुतः ॥ तत्पूर्वजन्मवृत्तांतं वक्तुकामोऽब्रवीद्वचः ॥ ७१ ॥ विप्रनारायणकथा सा श्रीकृष्णकथा यथा ॥ राधामाधवसंवादसदृशं चरितं तयोः॥७२॥ विप्रनारायणः श्रीमान् साक्षात्कृष्णो न संशयः ॥ कुब्जैव देवदेव्याख्या वेश्या जाता पुनर्भुवि ॥ ७३ ॥ शृणु चाभिहितं सम्यग्वक्ष्ये तज्जन्मकारणम्॥पुरा कृष्णावतारे तु कुब्जा श्रीचंदनं परम् ॥ ७४ ॥ प्रददौ भक्तिभावेन कृष्णाय किल विष्णवे॥संतुष्टस्तेन तां कृष्णो ऽन्यदधाद्दिव्यसुंदरीम् ॥ ७५ ॥ मन्मथाविष्टहृदया कृष्णं संजातयौवना ॥ जितकंदर्प्पलावण्यमकामयत सुन्दरी॥७६॥कुब्जाभवनमासाद्य कृष्णः

शृंगारवल्लभः ॥ रमयामास तन्वंगीं विचित्रसुरतैस्तदा ॥ ७७ ॥ सैरं-
ध्र्याः कामतप्तायाः संतुष्टोऽभीष्टदायकः ॥व्याजहार शुभं वाक्यं श्री-
कृष्णस्तां तदानघ ॥७८॥ वरं वरय भद्रं ते भक्तानां वरदोस्म्यहम् ॥
वांछितानि प्रदास्यामि सर्वाभीष्टानि सांप्रतम् ॥ ७९ ॥ तच्छ्रुत्वा
भगवद्वाक्यं सैरंध्री कामपीडिता ॥ अयाचित्वा तु तं मोक्षं श्रीकृष्णं
मोक्षदायकम् ॥ ८० ॥ तस्मात्कामवरं वव्रे तद्विभ्रमविमोहिता ॥ तस्यै
कामवरं दत्त्वा सैरंध्र्यै भगवान्हरिः ॥ ८१ ॥ कंचित्कालं तया सार्द्धं
रेमेऽत्यन्तं स केशवः ॥ तदुद्धवादिसहितस्तया संप्रेषितो हरिः॥८२॥
कुब्जया भगवान्कृष्णः स्वगृहं प्रविवेश सः ॥ श्रीकृष्णविरहात्कुब्जा
संतप्ताहर्निशं सती ॥८३॥ जितनिद्रा जिताहारा राधिकेव समास्थि-
ता ॥ तस्याः प्रसन्नो भगवान् स भूयो भक्तवत्सलः ॥ ८४ ॥ व्या-
जहार शुभं वाक्यं वेदांतिस्तां तदानघ ॥ संतापस्त्यज्यतां भद्रे तव
भद्रं भविष्यति ॥८५॥ मत्संगमस्तवाद्यायं जन्मन्यस्मिन्यथा तथा ॥
रंगक्षेत्रे महापुण्ये मम प्रीतिकरे शुभे ॥ ८६ ॥ सर्वसंपत्प्रदे सुभ्रूः
पापिनामपि मुक्तिदे ॥ तत्र रंगेश्वरः श्रीमांश्चंद्रपुष्करिणीतटे ॥८७॥
शयानः शेषपर्यंके भक्तानुग्रहतत्परः ॥ सर्वाभीष्टप्रदो देवो जयत्यव्या-
हतः सदा ॥ ८८ ॥ रंगेशनृत्यगीतादिमहाकैंकर्य्यकारणम् ॥ तव श्री-
रंगनगरे वेश्याजन्म भविष्यति ॥ ८९ ॥ सर्वासां नायिका भूत्वा वे-
श्यानां लोकसुंदरी ॥ श्रीरंगेश्वरकैंकर्य्यनिरता त्वं भविष्यसि ॥९०॥
विप्रनारायणो भूत्वा सोहं तत्र द्विजर्षभः ॥ रंगेशतुलसीदामकैंकर्य्य-
निरतः सदा ॥ ९१ ॥ सैरंध्रि लोकशिक्षार्थं भविष्यामि न संशयः ॥
तदा भवत्यै सुश्रोणि तत्र सम्यगमानुषम् ॥९२॥ कामभोगं प्रदास्या-
मि मुक्तिं चापि विशेषतः ॥ एवमुक्त्वा ततः कृष्णः स्वधाम प्रत्यपद्यत
॥ ९३॥ ततः कालांतरे कुब्जा रंगक्षेत्रे तदाजनि ॥ विष्णोर्लीलावता-
रास्तु बहवः संति भूतले ॥ ९४ ॥ अंशावताराः कतिचित्तत्र संति

बुधर्षभ ॥ आवेशाद्यवताराश्च केचित्तात्कालिकाः स्मृताः ॥
॥ ९५ ॥ तस्यावतारास्ते सर्वे भक्तानुग्रहहेतवः॥स्वभक्तानुग्रहः काय्यों
न गुणागुणचिंतनम् ॥ ९६ ॥ नह्युच्चनीचव्यापारः सर्वभूतात्मनो
हरेः ॥ कृष्णस्तु राधाविरहात्संतापमगमद्बहु ॥९७॥ संजाता न्यूनता
का वा श्रीकृष्णस्य ततोनघ ॥ राधामाधवसंवादं यदेतन्मुक्तिसाधनम्
॥ ९८ ॥ यत्तत्पवित्रममलं तथैव चरितं तयोः ॥ भवता विस्मयः
कार्यो वेदांतिन्नात्र सत्तम ॥ ९९ ॥ तस्य तद्वचनं श्रुत्वा वेदान्ती
छिन्नसंशयः ॥ [ [1]जाताह्लादः पुनर्वाक्यं पप्रच्छ गुरुपुंगवम् ॥ १०० ॥
वृत्तांतं श्रोतुमिच्छामि राधायाः पूर्वजन्मनः ॥ केन पुण्यप्रभावेण
तस्याः प्रियतमो हरिः ॥ १०१ ॥ ब्रूहि मे विशदं विद्वन्भक्ताय करु-
णार्णव ॥ तन्निशम्य वचस्तस्य भट्टाय्यस्तमथाब्रवीत् ॥१०२॥ हंत
ते कथयिष्यामि राधाचरित्रमुत्तमम् ॥ तच्च गुह्यतमं सम्यक् श्रूयताम-
वधानतः ॥ १०३ ॥ दशग्रीवस्य भगिनी याभूच्छूर्पणखा पुरा ॥
नन्दव्रजे समुत्पन्ना सैवाऽभूद्राधिका तथा ॥ १०४ ॥ यमुनातीरकुं-
जेषु श्रीकृष्णो राधिकां तु ताम् ॥ भक्ताभीष्टप्रदो धीमान्नात्मारामोप्यरी-
रमत् ॥ १०५ ॥ रक्षोनाथवधोपायसहकारिनिशाचरी ॥ कोटिकंद-
र्पलावण्यं जगन्मोहनविग्रहम् ॥ १०६ ॥ श्रीरामचन्द्रं सा दृष्ट्वा
कंदर्पशरपीडिता ॥ तेनैव सार्द्धं रामेण सा विहर्तुमियेष हि ॥ १०७ ॥
कृष्णावतारे तस्यास्तु फलितस्स मनोरथः ॥ रामावतारे ये सम्यग-
संप्राप्तफला जनाः ॥ १०८ ॥ ते संप्राप्तफलाः सर्वे ह्यभवन्कृष्णज-
न्मनि ॥ वेदांतिन् राघवो भूयः कृष्णो भूत्वा जगत्पतिः ॥ १०९ ॥
तेषां मनोरथान् सर्वान् पूरयामास भूरिशः ॥ कृष्णलीलाविहरणं
तस्याः कथमभून्महत् ॥ ११० ॥ न विचारोत्र कर्त्तव्यो दुष्टा शूर्पण-
खेति सा ॥ सर्वभूतात्मनस्तस्य सत्यं सर्वजनः समः ॥ १११ ॥

१ इत आरभ्यैत-[ ] चिह्नान्तर्गतः पाठो बहुषु पुस्तकेषूपलभ्यते, स च भगवतोऽनन्तचरितत्वादत्र निवेशितः ।

श्रीरामस्मरणादेव पापात्मा ह्यपि मुक्तिभाक् ॥ भविष्यतीति सर्वाणि शास्त्राण्याहुः किल स्फुटम् ॥ ११२ ॥ संभाषणाद्दर्शनाच्च विग्रहानुभवाद्धरेः ॥ स्वमनोभीष्टसंसिद्धौ तस्याः कः संशयोनव ॥ ११३ ॥ शिवं तु शिशुपालस्य सायुज्यं प्रददौ किल ॥ श्रीकृष्णो धर्मभूपालराजसूयाध्वरे तदा ॥११४॥ दक्षे जडे शिशौ दुष्टे स्तुवत्येव दयावति॥ प्रीतिस्तुल्या यथा मातुर्वेदांतिन्नात्मसंभवे ॥ ११५ ॥ श्रीहरेः सर्वभूतेषु तथैव परमात्मनः ॥ लीलाकार्य्योपकरणं सर्वमित्युपधारय ॥ ॥ ११६ ॥ अभूच्छूर्पणखामोक्षो राधाजन्मनि दैवतः ॥ देवदेव्यवतारे तु कुब्जामोक्षं ततो गता ॥ ११७ ॥ एवं क्रमेण सर्वेषां भगवत्कृपयानघ ॥ तेन निःश्रेयसप्राप्तिर्भविष्याति न संशयः ॥ ११८ ॥ विच्छिन्नसंशयस्तेन भट्टार्य्यवचसा तदा ॥ ] संप्रहृष्टमना भूयस्तत्कथाश्रवणे महान् ॥ स बभूव महातेजा वेदान्ती गुरुभक्तिमान् ॥ ११९ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदान्तिसंवादे भक्तांघ्रिरेणुदेवदेवीविवाहो नाम चतुर्णवतितमोऽध्यायः ॥ ९४ ॥

---

## पञ्चनवतितमोऽध्यायः ।

भट्टार्य्यं प्रणिपत्योर्व्यां वेदांती समपृच्छत ॥ देवदेवीगृहे तत्र कियत्कालं तया सह ॥१॥ रममाणः सुखं तस्थौ विप्रनारायणो महान्॥ कथं वियोगः संजातो जातप्रीत्योः परस्परम् ॥ २ ॥ सा देवदेवी संसारात्केन रूपेण मोचिता ॥ तत्सर्वं विशदं ब्रूहि शिष्याय गुरुपुंगव ॥३॥ स तद्वाक्यं समाकर्ण्य कृपया भट्टदेशिकः ॥ वेदांतिनेखिलां तस्य कथामकथयत्तदा ॥ ४ ॥ रममाणस्तया सार्द्धं देवदेवीगृहोत्तमे ॥ विप्रनारायणः श्रीमान् कंचित्कालमवर्तत ॥ ५ ॥ विप्रनारायणं मत्वा साक्षाद्रंगेश्वरं तदा ॥ पादसंवाहनादीनि कैंकर्य्याण्यखिलानि च ॥६॥ कुर्वती ह्यनिशं तस्य देवदेवी समास्थिता ॥ तदेकहृदया साध्वी पुरुषांतरवर्जिता ॥ ७ ॥ नित्यवित्तार्जनरता तन्माता विटकंटकी ॥ विप्र-

नारायणधनं यत्सर्वमपहृत्य तत् ॥ ८ ॥ निःस्वं कृत्वा क्षणेनाशु निर्भर्त्स्यं बहुधा तदा ॥ निर्दया धनराहित्यात्तं बहिर्निरसारयत् ॥९॥ भ्रव्याकुलांतःकरणो देवदेव्या गृहाद्बहिः ॥ तन्मोहपाशसंबद्धो वितर्दावशयिष्ट सः ॥१०॥ ह्रिया नतमुखोऽत्यंतं सम्यगाच्छादितांबरः॥ समाकुंचितसर्वांगो विप्रनारायणोनघः ॥ ११ ॥ तदा रंगेश्वरः श्रीमाञ्छ्रिया सार्द्धं जगत्पतिः ॥ कुर्वन् विलाससंचारं रथ्यायां तत्रतत्र च ॥ १२ ॥ विप्रनारायणाभ्याशमाससाद यदृच्छया ॥ वेश्यांगनागृहद्वारि शयानं तं तथाविधम्॥१३॥श्रीरंगनायिकी दृष्ट्वा मंदस्मितमुखी तदा ॥ रंगेशं तस्य वृत्तांतं परिपप्रच्छ सादरम् ॥ १४ ॥ कोयं वेश्यागृहद्वारि शयानो रंगभूपते ॥ समाकुंचितसर्वांगः सम्यगाच्छादितांगकः ॥ १५ ॥ तद्वृत्तं ब्रूहि मे सर्वं विस्मयो जायते मम ॥ श्रुत्वा स्वनायकीवाक्यं प्रभू रंगेश्वरस्तदा ॥१६॥ वृत्तांतं तस्य तत्सर्वं देव्यै सम्यङ्न्यवेदयत् ॥ पुष्पदामप्रदोऽस्माकं विप्रनारायणो ह्ययम् ॥ १७ ॥ वेश्यासक्तमना वित्ताभावादद्य निराकृतः ॥ दुःखितस्तद्गृहद्वारे मोहादेवं समास्थितः ॥ १८ ॥ श्रीरंगेशवचः श्रुत्वा दुःखिता सा जगत्प्रसूः ॥ कृपया रंगिणं वाक्यमेवमाह तदानघ ॥ १९ ॥ तवांतरंगभक्तं तं युष्मत्कैंकर्यकारिणम् ॥ एवमेतादृशं कर्तुं विश्वमोहन मायया ॥ २० ॥ तवोचितमिदं किं नु भक्तसंरक्षकस्य वै ॥ स्वामिन् रंगेश भवतः किं मायाविषयो ह्ययम् ॥ २१ ॥ वेश्यासंसर्गजं दोषं निःशेषं परिहृत्य तत् ॥ त्वत्कृपाविषयं शीघ्रं भक्तमंगीकुरुष्व तम् ॥ २२ ॥ प्रतिगृह्य वचस्तस्याः सत्वरं रंगभूपतिः ॥ सुवर्णपंचपात्राणां मध्ये स्वर्णमयं महत् ॥ २३ ॥ शुद्धोदकप्रदं पात्रं समादायांजसा तदा ॥ देवदेवीगृहद्वारसमीपं प्राप्य सादरम् ॥ २४ ॥ कपाटताडनं कृत्वा पाणिनोच्चतरं तदा ॥ आजुहाव स्वरेणोच्चैर्देवदेवीं तदा हरिः ॥ २५ ॥ सा तद्वाक्यं समाकर्ण्यं तत्कपाटसमीपगा ॥ कपाटनिकटस्थोत्र कोयमित्यभ्यभाषत ॥ २६ ॥ रंगेशस्तद्वचः श्रुत्वा तामुवाच तदा हरिः ॥ रंगेशदासनामाहं

तेन सुप्रेषितोधुना ॥ २७ ॥ विप्रनारायणेनैव तवांतिकमुपागतः ॥
तेनोक्तं यन्महद्वाक्यं वक्तव्यं तन्महार्थदम् ॥ २८ ॥ कपाटपाटनं शी-
घ्रं विधाय शृणु मद्वचः ॥ सा तद्वाक्यं समाकर्ण्य समुद्धाट्यारं जवात्
॥ २९ ॥ किं तवागमने कार्य्यं तद्ब्रूहीत्यब्रवीत्तदा ॥ तदंगीकृत्य वचनं
रंगेशस्तामभाषत ॥ ३० ॥ संप्रेषितमिदं तेन स्वर्णपात्रं तवांतिकम् ॥
देवदेवि गृहाणेदमिति तस्यै ददौ हरिः ॥ ३१ ॥ सा गृहीत्वा तु संतुष्टा
स्वर्णपात्रं महत्तदा ॥ विप्रनारायणं शीघ्रमानयेत्याह सादरम् ॥ ३२ ॥
तच्छ्रुत्वा भगवाञ्शीघ्रं विप्रनारायणांतिकम् ॥ गत्वा तमब्रवीद्देशे वेदांति-
न्भक्तवत्सलः ॥ ३३ ॥ भवंतमंतः सुप्रीता समागच्छतु सादरम् ॥ देवदेव्य-
ब्रवीदेवं विप्रनारायणाधुना ॥ ३४ ॥ श्रुत्वा कर्णामृतं वाक्यं संप्रहृष्ट-
स्तदानघ ॥ देवदेवीगृहं प्राप्य विप्रनारायणस्ततः ॥ ३५ ॥ रममाणस्त-
या सार्द्धं जातसौहार्दया परम् ॥ क्रीडापरवशः सम्यगतिष्ठत्स यथासु-
खम् ॥ ३६ ॥ रंगेशश्च समासाद्य तत्स्वधामाब्धिकन्यया ॥ शयानः
शेषपर्यंके सुखं सुष्वाप निश्चलः ॥ ३७ ॥ तस्यां रात्र्यां व्यतीतायां श्रीरं-
गेशार्चकास्तदा ॥ तस्य पात्रस्य राहित्यात्स्थितास्तत्राधिकारिणे ॥ ३८ ॥
सम्यगावेदयांचक्रुस्तद्वृत्तांतं सुविस्मिताः ॥ स निशम्याशु तद्वाक्यमा-
चख्यौ चोलभूपतिम् ॥ ३९ ॥ स तेन कुपितो राजा रंगेशपरिचारका-
न् ॥ बबंध रज्जुभिः सर्वानर्चकांश्चाप्यपीडयत् ॥ ४० ॥ देवदेव्या-
स्तदा काचिद्भुजिष्या निर्ययौ गृहात् ॥ घटमादाय सहसा जलाहरण-
हेतुना ॥ ४१ ॥ सा तद्व्यूहं समालोक्य तत्र चागत्य संभ्रमात् ॥ रज्ज्वा
च संयतं वीक्ष्य स्वविटं विस्मिता तदा ॥ ४२ ॥ किमेतदित्यपृच्छत्सा
कमपि ब्राह्मणं किल ॥ तस्यै शशंसुस्तत्सर्वं वृत्तं ते दंडधारिणः ॥ ४३ ॥
घटचेटी समाकर्ण्य तद्वृत्तांतं तदाखिलम् ॥ स्वविटं पीडितं दृष्ट्वा कश-
यैव प्रताडितम् ॥ ४४ ॥ वेदांतिन्स्वविटप्रेम्णा मौढ्यान्मूढतमा च
सा ॥ तत्स्वर्णपात्रवृत्तांतं तेभ्यः सर्वं न्यवेदयत् ॥ ४५ ॥ विप्रनाराय

णो रात्रौ स्वर्णपात्रं महत्परम् ॥ मद्देवदेव्यै प्रददौ विद्यते तद्गृहेधुना ॥४६॥ तच्छ्रुत्वा सहसा दंडधारकाः संभ्रमान्विताः ॥ घटचेटीं समादाय विविशुस्तद्गृहं तदा ॥ ४७ ॥ विशोध्य तद्गृहं सर्वं स्वर्णपात्रं प्रगृह्य तत् ॥ विप्रनारायणं देवदेवीं चात्यंतहर्षिताः ॥ ४८ ॥ निधाय चोलभूपालसन्निधौ दंडधारकाः ॥ सम्यग्विज्ञापयामासुः सर्वं वृत्तांतमादरात् ॥ ४९ ॥ स नृपस्तद्वचः श्रुत्वा स्वर्णपात्रं विलोक्य च ॥ कोपेन महता युक्तो देवदेवीमथाब्रवीत् ॥ ५० ॥ श्रीरंगेशस्य महतो हेमपात्रप्रतिग्रहः ॥ मूढे तवोचितः किं नु तस्माद्दंडचा त्वमद्य हि ॥ ५१ ॥ तद्वाक्यश्रवणाद्भीता देवदेवी कृतांजलिः ॥ एवं विज्ञापनं चक्रे चोलेंद्रं प्रति सत्वरम् ॥ ५२ ॥ यदिदं भगवत्पात्रमिति न ज्ञायते मया ॥ शपे त्वत्पादपद्माभ्यां सत्यमेवोच्यते मया ॥ ५३ ॥ रंगदासाभिधानेन स्वदूतेनैव केनचित् ॥ पात्रं मदीयमित्येव विप्रनारायणः स्वयम् ॥५४॥ सहसा निशि चोलेंद्र प्राहिणोन्मद्गृहं प्रति ॥ अज्ञानाद्धि मया पात्रं गृहीतं चोलभूमिप ॥ ५५॥ तन्निशम्य नृपं प्राह विप्रनारायणस्तदा ॥ स्वर्णपात्रं न जानेहं मम भृत्यो न विद्यते ॥ ५६ ॥ सा निशम्य वचस्तस्य विप्रनारायणस्य तत् ॥ त्वयैव प्रेषितं पात्रमिदमित्यब्रवीद्दृढम् ॥ ५७ ॥ न मयापहृतं पात्रं न चैव प्रेषितं तव ॥ इत्येवं तु तदन्योन्यं विवादं वीक्ष्य भूमिपः ॥ ५८ ॥ निर्भर्त्स्य तावुभौ शीघ्रं विवादं परिगृह्य तम् ॥ अपराधं समादाय देवदेव्यास्तदानघ ॥ ५९ ॥ प्रदाय रंगराजाय स्वर्णपात्रं च तद्धनम् ॥ तत्स्वर्णस्तेयदोषस्य विप्रनारायणस्य च ॥ ६० ॥ कर्तुकामो युक्तदंडं विचार्य्य विबुधैः सह ॥ विप्रनारायणं सम्यक् स तं कारागृहे तदा ॥ ६१ ॥ निःक्षिप्य स्वगृहं शीघ्रमविशच्चोलभूपतिः ॥ रंगेश्वरी तदा देवी देवं रंगेश्वरं प्रति ॥ ६२ ॥ अवोचत्पुत्रवात्सल्याद्भर्त्तारं भगवत्प्रिया ॥ इतः परं मा कुरुष्व

स्वलीलाविषयं हरे ॥६३॥ विप्रनारायणं शीघ्रं भवतोभिमुखं कुरु ॥ तदंगीकृत्य वचनं देव्याः श्रीरंगभूपतिः ॥ ६४ ॥ स्वप्ने प्रसन्नो भगवाँश्चोलेंद्रस्य दयानिधिः ॥ प्रारब्धकर्माहरणं विप्रनारायणस्य वै ॥ ६५ ॥ मयाद्य कर्तुकामेन देवदेव्यै नृपोत्तम ॥ दत्तं हिरण्मयं पात्रं नात्र कार्या विचारणा ॥ ६६ ॥ एवं रूपेण स श्रीमान् मयायं दंडितो द्विजः ॥ अदंड्यो भवता राजन् निर्दोषोयं महामनाः ॥६७॥ मत्पुत्राय मया दत्तं मद्धनं तत्र को भवान् ॥ यत्तद्वेश्याधनं पात्रं तच्च मे मास्तु भूपते ॥ ६८ ॥ तस्यैव दत्त्वा तत्पात्रं विप्रयारायणं मुनिम् ॥ विमुच्य पूर्ववत्पुष्पदामकैंकर्य्यकारिणम् ॥ ६९ ॥ विधेहि शीघ्रं मद्भक्तं चोलराज मदाज्ञया ॥ तस्यां रात्र्यां व्यतीतायां चोलेंद्रः सहसोत्थितः ॥ ७० ॥विस्मितः स्वप्नवृत्तांतं मंत्रिभ्यः संन्यवेदयत्॥ आनयित्वा ततः शीघ्रं विप्रनारायणं तदा ॥ ७१ ॥ प्रणम्य सम्यक् सत्कृत्य स नृपस्तमपूजयत् ॥ भूयोभूयोथ संस्मृत्य हीनकृत्यं तदद्भुतम् ॥७२॥ अनुतापं गतः सम्यग्विप्रनारायणस्तदा ॥ तद्दोषापहारार्थं प्रायश्चित्तमथाकरोत् ॥ ७३ ॥ एतत्समस्तपापानां प्रायश्चित्तं मनीषिभिः ॥ निर्णीतं भगवद्भक्तपादोदकनिषेवणम् ॥ ७४ ॥ एवमुक्तप्रकारेण वैष्णवांघ्रिजलं शुभम् ॥ अपिबद्भक्तिभावेन विप्रनारायणोनघ ॥ ७५ ॥ वेदान्तिन् भगवद्भक्तपादोदकसमं भुवि ॥ न विद्यते पुण्यतमं तीर्थं पापहरं महत् ॥ ७६ ॥ वाञ्छंति सकला नद्यः कलुषस्नानकल्मषाः ॥ आत्मपापविशुद्ध्यर्थं वैष्णवांघ्र्यवगाहनम् ॥७७॥ तन्महापापसंघस्य प्रायश्चित्तादिरूपकम् ॥ वैष्णवांघ्रिजलं पीत्वा पूतात्मा प्रत्यनन्दत ॥ ७८ ॥ ततो ग्रामकुलादिभ्यो यन्नामापादितं हि तत् ॥ अनर्थकारि तन्मेने विप्रनारायणो महान् ॥ ७९ ॥ यस्य मूर्ध्नि स्थितं यावद्वैष्णवांघ्रिरजः शुभम् ॥ गंगादिसर्वतीर्थानि तावत्तिष्ठंत्यसंशयम् ॥ ८० ॥ निरपेक्षं मुनिं शांतं निर्वैरं समदर्शिनम् ॥

अनुव्रजाम्यहं नित्यं पूयेयेत्यंघ्रिरेणुभिः ॥ ८१ ॥ इत्येवं भगवद्गीताश्लोकं ज्ञात्वा विचक्षणः ॥ अतोहं भगवद्भक्तपादरेण्वभिधानकः ॥ ८२ ॥ भवेयमिति वेदांतिस्तदामन्यत बुद्धिमान् ॥ अतोर्चकमुखेनाह रंगेशो भक्तवत्सलः ॥ ८३ ॥ विप्रनारायणं सम्यक् समाहूय तदानघ ॥ वत्साद्य न्यूनता काचिन्न कदाचित्तवानघ॥८४॥ मत्कैंकर्य्यरतो भूत्वा त्वं वसात्रैव पूर्ववत् ॥ तवाहं संप्रदास्यामि सर्वाभीष्टानि सांप्रतम् ॥८५॥ वत्स त्वं वांछ निःशंकं यद्यदिष्टतमं वरम् ॥ प्रतिगृह्य प्रहृष्टात्मा रंगेशस्य वचः शुभम् ॥ ८६ ॥ विप्रनारायणो धीमांश्चक्रे विज्ञापनं तदा ॥ भवत्संदर्शनादेव सर्वाभीष्टानि मेभवन् ॥ ८७ ॥ तथापि मे वरं देहि त्वद्दासस्याधुना हरे ॥ भक्तांघ्रिरेणुनामास्य यथा स्यात्प्रथितं मम ॥ ८८ ॥ तथैव मे वरं देहि रंगेश करुणानिधे ॥ संतुष्टो रंगराट् तेन विप्रनारायणस्य वै ॥ ८९ ॥ भक्तांघ्रिरेणुनामैव प्रथितं प्रददौ भुवि ॥ परभक्तिं परं ज्ञानं वैराग्यं परमं महत् ॥ ९० ॥ भक्तांघ्रिरेणवे सर्वं यत्तद्रंगेश्वरो ददौ ॥ तेन संजातसर्वार्थो ज्ञानवान्भगवत्परः ॥ ९१ ॥ भक्तांघ्रिरेणुस्तत्रैव तत्कैंकर्य्यरतः सदा॥ रंगेशसन्निधौ श्रीमानतिष्ठत्सुमहायशाः ॥ ९२ ॥ तज्ज्ञानभक्तिवैराग्यं यत्तस्यानुत्तमं महत् ॥ भक्तांघ्रिरजसो वीक्ष्य देवदेवी महाद्भुतम्॥९३॥ संप्रहृष्टा महाश्चर्यनिरता प्रीतिसंयुता ॥ तादृश्यहं भविष्यामीत्येवं निश्चित्य वै ध्रुवम् ॥ ९४ ॥ सर्वस्वं रंगनाथाय महाविश्वासपूर्वकम् ॥ समर्प्य साधुहृदया शुद्धसत्त्वगुणान्विता ॥ ९५ ॥ संमार्जनादिकैंकर्यनिरता मानवर्जिता ॥ रंगेशसन्निधौ नित्यं जितकामा बभूव सा॥९६॥ जितदुःसंगतिः स्निग्धा सत्संगतिपरायणा ॥ रंगेशकैंकर्यरता तीर्णसंसारसागरा ॥ ९७ ॥ सा देवदेवी तत्रैव कस्मिंश्चित्कालपर्यये॥जगाम वैष्णवं लोकं सत्संगमविशेषतः ॥ ९८ ॥ भक्तांघ्रिरेणुः सर्वार्थज्ञानमासाद्य निश्चितम् ॥ रंगेशानुग्रहादेव कृतकृत्यो महानभूत् ॥९९॥ माता

पिता सखा भ्राता पुत्रो बंधुर्गुरुर्धनम् ॥ विद्या संपच्च भोगाश्च सर्वं रंगेश एव मे ॥ १०० ॥ इति मत्वानिशं तस्य कैंकर्यनिरतः सदा ॥ श्रीपुष्पतुलसीमाला विधायातिमनोहराः ॥ १०१ ॥ भक्तांघ्रिरेणुस्तद्भक्त्या ताः समर्प्य च रंगिणः ॥ दिव्यप्रबंधं विदधे स श्रीमालाभिधं महत् ॥ १०२ ॥ श्रोता रंगेश्वरस्तत्र स्वयं वक्ताभवत्तदा॥ शतानंदोभवच्छ्रोता वक्ताभूच्छौनको यथा ॥ १०३ ॥ मंत्रत्रयार्थं तद्ग्रंथे सम्यगापाद्य विश्रुतम् ॥ विशदं बालबोधार्थं लोकोज्जीवनहेतुना ॥१०४॥ तेन मालाभिधेनैव जगत्सर्वमपालयत् ॥ भक्तांघ्रिरेणुर्वेदांतिन् रंगेशविषयं महत् ॥ १०५ ॥ प्रबंधद्वितयं चक्रे सर्वलोकामृतप्रदम् ॥ पंचपंचाशदित्यत्र गाथा ग्रंथद्वयेऽनघ ॥ १०६ ॥ प्राबोधिकीस्तवे तत्र दशगाथाः प्रकीर्तिताः ॥ १०७॥ चत्वारिंशत्तथा पंच गाथा मालाभिधे कृताः ॥ एक एवात्र रंगेशो भगवांस्तेन संस्तुतः ॥ ॥१०८॥ततो रंगेश्वरः श्रीमान् दशभिर्गीयते महान् ॥ ततो मुख्यतमं स्थानं श्रीरंगमिति विश्रुतम् ॥ १०९ ॥ स तच्छ्रुत्वाथ वेदांती भट्टार्य्यमिदमब्रवीत् ॥ शेषाचलादिस्थानानि स्तुतानि कतिभिर्हरेः ११०॥ विशदं ब्रूहि मे विद्वञ्छिष्याय करुणार्णव ॥ तदंगीकृत्य वचनं तस्मै प्रोवाच सद्गुरुः ॥ १११ ॥ हरेरष्टोत्तरशतं स्थानानि किल भूतले ॥ दिव्यानि दिव्ययोगींद्रस्तुतानि प्रथितान्यलम् ॥ ११२ ॥ अनेकसंस्तुता दिव्या देशाः षड्विंशतिः पुरा ॥ एकैकसंस्तुतास्तत्र ह्यशीतिः परिकीर्तिताः ॥ ११३ ॥ दशभिस्तत्र योगींद्रैरेकमेव स्थलं स्तुतम् ॥ नवभिर्दिव्ययोगीन्द्रैरेकमेव स्थलं स्तुतम् ॥११४॥ चतुर्भिः संस्तुतास्तत्र दिव्यदेशास्त्रयोऽनघ ॥ त्रिभिः स्तुतानि पंचैव स्थलानि परमात्मनः ॥ ११५ ॥ वेदांतिन् दिव्यदेशाश्च द्वाभ्यां षोडश संस्तुताः ॥ दशभिः संस्तुतं रंगं नवभिर्वेंकटाचलः ॥ ११६ ॥ चतुर्भिर्गोपनगरं तथैव वृषभाचलः॥ श्रीकृष्णनगरं चैव वेदांतिन् समभिष्टुतम्॥११७॥

त्रिभिः श्रीरामनगरं कुंभकोणस्थलं महत् ॥ कुरंगनगरं चैव कैरविण्या-
स्तटं महत् ॥ ११८ ॥ कांच्यां वेगस्थलं चैव संस्तुतं दिव्यसूरिभिः॥
द्वाभ्यां श्वेताचलो व्योमनगरं च कपिस्थलम् ॥ ११९ ॥ गोष्ठीपुरं
चित्रकूटं धन्विनव्यपुरं तथा ॥ मौहूरं दक्षिणपुरं श्रीमन्मुक्तिकलाभि-
धम् ॥१२०॥स्थानं केरलदेशेषु ह्यवेद्येतद्वयं मुने ॥ यत्रोरगगृहं गीता-
वेश्म कांच्यां तु तद्वयम् ॥२२१॥ वीक्षारण्ये किंगृहाख्यनगरं घटिका-
चलः ॥ नंदव्रजश्च मथुरा साकेतं समभिष्टुतम् ॥ १२२ ॥ अस्म-
द्यतिः संप्रहृष्टो गुरोर्वचनमुत्तमम् ॥ निशम्य प्रांजलिर्भूयो भट्टार्य्य-
मिदमब्रवीत् ॥ १२३ ॥ दशानां दिव्यसूरीणां दिव्यदेशा हरेरमी ॥
कैस्त्रिभिः कैश्चतुर्भिश्च काभ्यां द्वाभ्यामभिष्टुताः ॥ १२४ ॥ विशदं
ब्रूहि मे विद्वन्सर्वज्ञाश्रितवत्सल ॥ अपृष्टं यन्मयाज्ञानात्तत्सर्वं च
दयानिधे ॥ १२५ ॥ अस्मद्यतेर्वचः सम्यगंगीकृत्य कृतादरः ॥
आचचक्षेखिलं तस्मै यदिदं भट्टदेशिकः ॥ १२६ ॥ दिव्यदेशाश्चो-
लदेशे द्विचत्वारिंशदीरिताः ॥ अष्टैव दिव्यदेशाश्च तत्रानेकैरभिष्टुताः
॥१२७॥ दशभिर्दिव्ययोगींद्रैर्गोदादेव्या च संस्तुतः ॥ अत्र श्रीरंगन-
गरे रंगेशो भगवानयम् ॥ १२८॥ भट्टेशकलिवैरिभ्यां श्वेताद्रौ पद्मलो-
चनः ॥ अपूपरंगनाथाख्यः श्रीरामनगरे हरिः ॥ १२९ ॥ भक्तिसार-
शठारिभ्यां परकालेन च स्तुतः ॥ कपिस्थले गजार्तिघ्नो भगवान्कृ-
ष्णसंयुतः ॥१३०॥ परकालेन वेदांतिन् भक्तिसारेण संस्तुतः ॥ कुंभ-
कोणे शार्ङ्गपाणिरपर्याप्तामृताभिधः ॥ १३१ ॥ भक्तिसारशठारिभ्यां
संस्तुतः कलिवैरिणा ॥ लवणाभावताताख्यश्चाकाशनगरे हरिः ॥
॥ १३२ ॥ शठजित्परकालाभ्यां संस्तुतो लोकविश्रुतः ॥ शौरिराजः
कृष्णपुरे वेदांतिँल्लोकविश्रुतः ॥ १३३ ॥ शठारिभट्टनाथाभ्यां कुल-
शेखरयोगिना ॥ गोदादेव्या च भगवान् परकालेन संस्तुतः ॥श्चि
॥ १३४ ॥ गोविंदराजो भगवान् श्चित्रकूटे श्रियः पतिः ॥ कुल-

शेखरनीलाभ्यां वेदांतिन् समभिष्टुतः ॥ १३५ ॥ अवशिष्टानि सर्वाणि तत्र प्रेमपुरं विना ॥ दिव्यस्थानानि चैकेन स्तुतानि कलिवैरिणा ॥ १३६ ॥ हरिः सुंदरराजाख्यः प्रेमपुर्यां जगत्पतिः ॥ तेनैकेनैव वदांतिन् भक्तिसारेण वै स्तुतः ॥ १३७ ॥ पांड्यदेशे दिव्यदेशा हरेरष्टादशानघ ॥ अनेकसंस्तुतास्तत्र चतस्रो दिव्यभूमयः ॥ १३८ ॥ वनाद्रौ सुंदरभुजो भगवान् संस्तुतो हरिः ॥ शठजिद्भट्टनाथाभ्यां कुलशेखरयोगिना ॥ १३९ ॥ गोदादेव्या च वेदांतिन् परकालेन विश्रुतः ॥ भट्टनाथेन वेदांतिन् संस्तुतः कलिवैरिणा ॥ १४० ॥ गोष्ठीपुरे गोष्ठपतिः सौम्यनारायणाभिधः ॥ शठजित्परकालाभ्यां कालमेघस्तु मोहुरे ॥ १४१ ॥ धन्विनव्यपुरे शौरिर्विष्णुचित्तेन गोदया ॥ शीतोद्यानं शक्तिगिरिः श्रीदर्भशयनं तथा ॥ १४२ ॥ त्रीण्येतानि स्थलान्यत्र स्तुतानि कलिवैरिणा ॥ भट्टनाथेन वेदांतिन्मथुरा नगरी स्तुता ॥ १४३ ॥ स्थलानि नव यान्यत्र श्रीवैकुंठमुखानि च ॥ अभिष्टुतानि चैकेन वनाद्रिः शठवैरिणा ॥ १४४ ॥ वेदांतिन् केरले देशे दिव्यदेशाश्चतुर्दश ॥ दिव्यस्थलानि त्रीण्येव तत्रानेकस्तुतानि वै ॥ १४५ ॥ कुरंगनगरीपूर्णो भगवान्समभिष्टुतः ॥ शठारिभट्टनाथाभ्यां परकालेन चानघ ॥ १४६ ॥ संस्तुतो दक्षिणपुरे भगवानमराधिपः ॥ शठजित्परकालाभ्यां यच्छ्रीमूर्धकलः स्तुतः ॥ १४७ ॥ वराहनगरे तत्र वराहोत्र श्रियः पतिः ॥ कुलशेखरदेवेन येनैकेन स्तुतोऽनघ ॥ १४८ ॥ अवशिष्टानि सर्वाणि स्तुतानि शठवैरिणा ॥ तुंडीरमंडले विष्णोर्ये त्रयोविंशतिः स्मृताः ॥ ॥ १४९ ॥ सप्तैव दिव्यदेशाश्च तत्रानेकैरभिष्टुताः ॥ यथोक्तकारी भगवान् काञ्च्यां वेगस्थले हरिः ॥ १५० ॥ कासारभक्तिसाराभ्यां संस्तुतः कलिवैरिणा ॥ तत्रोरगगृहे कांच्यां देवोरगगृहाधिपः ॥ १५१ ॥ कलिजिद्भक्तिसाराभ्यां श्रीपतिः समभिष्टुतः ॥ गीतागृहे पांडुदूतः कांच्यां कृष्णो जगत्पतिः ॥ १५२ ॥ भक्तिसारेण वेदांतिन् कलिघ्नेनेडितो हरिः ॥

शठारिपरकालाभ्यां नृसिंहो घटिकाचले ॥ १५३ ॥ कासारभूतभ्रांता-
दिसंस्तुतः कलिवैरिणा॥त्रिविक्रम इति ख्यातो गोपपुर्य्यां तु गोपतिः
॥१५४॥ श्रीमत्कैरविणीतीरे भगवान् पार्थसारथिः ॥ नृसिंहरामरंगेश-
गजेंद्रवरदान्वितः ॥ १५५ ॥ संस्तुतो भक्तिसारेण कलिघ्नेन
शठारिणा ॥ वीक्षारण्ये किंगृहाख्यनगरे वीरराघवः ॥ १५६ ॥ पर-
कालेन वेदांतिन् भक्तिसारेण संस्तुतः ॥ तत्रावशिष्टाः सकला
दिव्यदेशाश्च षोडश ॥ १५७ ॥ चतुष्कवींद्रकृतिभिर्वेदांतिन् सम-
भिष्टुताः ॥ एकादशोत्तरदिशि दिव्यदेशाः प्रकीर्तिताः ॥ १५८ ॥
दिव्यस्थलानि चत्वारि तत्रानेकस्थलानि हि ॥ तत्र श्रीशेषशैले
च भगवान् वेंकटेश्वरः ॥ १५९ ॥ नवभिर्दिव्ययोगींद्रैर्गोदादेव्या
च संस्तुतः ॥ कुलशेखरनीलाभ्यामयोध्यारघुनंदनः ॥ १६० ॥
श्रीकृष्णो भगवान्नंदव्रजे गोपीजनप्रियः ॥ भट्टेशपरकालाभ्यां गोदा-
देव्या च संस्तुतः ॥१६१॥ मथुरायां बालकृष्णो वेदांतिन् संस्तुत-
स्त्रिभिः ॥ भट्टेशपरकालाभ्यां गोदया च यदूद्वहः ॥१६२॥ जगन्नाथे
जगन्नाथो भट्टनाथेन संस्तुतः ॥ अवशिष्टानि षट् चात्र स्तुतानि क-
लिवैरिणा ॥ १६३ ॥ अंतः श्रीरंगनगरं सर्वेषामुत्तमोत्तमम् ॥ गोदया
दिव्यदेशानां गीयते दशभिर्यतः ॥ १६४ ॥ नाथयामुनपूर्णादियतीं-
द्राद्यर्चितं तु तत् ॥ आद्यं स्वयं व्यक्तमिदं विमानं रंगसंज्ञकम्
॥१६५॥ प्रथमोद्दिष्टं तत्रापि स्वयंव्यक्तस्थलेषु च ॥ ब्रह्मणा पूजितः
सम्यगिक्ष्वाकुप्रमुखैर्नृपैः ॥१६६॥ धर्मवर्मादिभिः सर्वैस्तस्माद्रंगमनु-
त्तमम् ॥ नित्यवासरतानां च कैवल्यं तु करस्थितम् ॥ १६७ ॥
भक्तांघ्रिरेणुस्तत्रैव श्रीरंगे सर्वथोत्तमे ॥ नित्यवासरतो धीमांस्तत्कैं-
कर्य्यैरतः सदा ॥ १६८ ॥ पृथुकीर्तिः सुखेनाब्दान् नीत्वा पंचोत्तरं
शतम् ॥ अगमद्विष्णुसालोक्यं श्रीरंगेश्वरसन्निधौ ॥ १६९ ॥ दिव्य-
प्रबंधं वेदांतिन् भक्तांघ्रिरजसा कृतम् ॥ यः पठेच्छृणुयाद्वापि स मुक्तो

नात्र संशयः ॥ १७० ॥ भक्तांघ्रिरजसस्तस्य माहात्म्यं परमाद्भुतम् ॥
यः शृणोत्यनिशं भक्त्या स गच्छेद्वैष्णवं पदम् ॥ १७१ ॥ बहुनो-
क्तेन किं विद्वन् संक्षेपाद्धि तवोच्यते ॥ श्रीमालां यो न जानाति न
दैवं वेत्ति तद्दृढम् ॥ १७२ ॥ भक्तांघ्रिरेणुचरितं यदिदं महत्तच्छ्रीकृष्णदेव-
चरितप्रतिमानमाद्यम् ॥ ये भक्तियुक्तमतयो ह्यनिशं पठंति ते विष्णुलोक-
निरता हि भवेयुरार्याः ॥ १७३ ॥ श्रीविष्णोर्वनमालिकांशवशतो भक्तांघ्रि-
रेण्वाख्यया भक्तानुग्रहहेतवे करुणया पश्चादभूद्भूतले ॥ तं मण्डंगुडि-
नायकं द्विजवरं रंगेशमालाप्रदं श्रीमालाकृतिकारकं गुणनिधिं संचिंतये
संततम् ॥ १७४ ॥ श्रीरंगेश्वरकैंकर्यहेतवे गुणसिंधवे ॥ भक्ताब्जभा-
नवे तस्मै नमो भक्तांघ्रिरेणवे ॥ १७५ ॥ इति श्रीप्रपन्नामृते भट्टार्य्य-
वेदांतिसंवादे भक्तांघ्रिरेणुचरितं नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

## षण्णवतितमोऽध्यायः ।

भट्टार्य्यं प्रणिपत्योर्व्यां वेदान्ती तमपृच्छत ॥ श्रोतुमिच्छाम्यहं
स्वामिञ्छ्रीपाणचरितं महत् ॥ १ ॥ विशदं ब्रूहि मे विद्वञ्छिष्याय करु-
णार्णव ॥ अंगीकृत्य वचस्तस्य भट्टार्य्यस्तमथाब्रवीत् ॥ २ ॥ श्रीपाणच-
रितं दिव्यं शृणु वक्ष्यामि सांप्रतम् ॥ श्रीलोकसारंगमहामुनींद्रस्कंधा-
धिरूढं कलयामि नित्यम् ॥ कलंकहीनं कमनीयभक्तं कवीश्वरं गाय-
कसार्वभौमम् ॥ ३ ॥ इतीव वन्दनं कृत्वा कथामकथयत्तदा ॥ कावे-
रीतोयमाश्रित्य वातो यत्र प्रवर्त्तते ॥ ४ ॥ तद्देशवासिनां मुक्तिः
किमु तत्तीरवासिनाम् ॥ एतादृशप्रभावायाः कावेर्या दक्षिणे तटे ॥ ५ ॥
श्रीरंगेशस्य नैर्ऋत्यां क्रोशमात्रेण विश्रुता ॥ निचुला नाम नगरी
रक्षिता धर्मवर्मणा ॥ ६ ॥ धर्मेण राज्यमेतस्यां धर्मवर्मा चकार सः ॥
धर्मवर्मसुता चैव निचुलानायकी हरेः ॥ ७ ॥ यस्यां देव्यां महामो-
हात्तत्रैव निचुलापुरे ॥ रममाणस्तया सार्द्धं रंगेशो राजतेनिशम् ॥ ८ ॥
तद्वाक्येन स वेदांती प्रहृष्टः प्रणिपत्य तम् ॥ कल्याणं निचुलादेव्याः

पप्रच्छ प्रीतिपूर्वकम् ॥ ९ ॥ तच्छ्रुत्वाथ स भट्टार्य्यो यत्तत्सर्वं न्यवेदयत् ॥ पुरात्र निचुलापुर्य्यां धर्मवर्माभिधो नृपः ॥ १० ॥ सूर्यान्वये महानासीन्महाभागवतोत्तमः ॥ तदा तस्यैव कावेरीसैकते धर्मवर्मणः ॥ ११ ॥ प्रत्यक्षमगमच्चात्र प्रथमं रंगराडपि ॥ रंगेशभक्तो रंगेशकैंकर्य्यनिरतः सदा ॥ १२ ॥ तदेकहृदयः श्रीमान्धर्मवर्मा बभूव ह ॥ तस्यान्ववाये मतिमान्कश्चिद्भागवतोत्तमः ॥ १३ ॥ धर्मवर्माभिधः श्रीमानजायत महायशाः ॥ निचुलानायकी नाम काचिन्नीलांशभासुरा ॥ १४ ॥ संजज्ञे सर्वशोभाढ्या दुहिता तस्य भूपतेः ॥ यथा क्षीरार्णवे लक्ष्मीर्य्यथाभूज्जनकस्य च ॥ तत्प्रभावपराः श्लोकाः गीयंते बहवो भुवि ॥१५॥ अथ चोलमहीपतेरभून्निचुलानामपुरी पुरातनी ॥ कनकाख्यकवेरकन्यकातटिनीदक्षिणतीरसीमनि ॥ १६ ॥ तपसा त्वथ धर्मवर्मणः कुलजः कश्चन चोलभूपतिः ॥ महसा मथितारिमंडलः सकलां यत्र शशास मेदिनीम् ॥ १७ ॥ तपसा विभवेन तादृशीं स नृपो रंगिणि सक्तमानसः ॥ कमलां कमलाकरोद्भवामुदधेस्तां तनयामुदारधीः ॥ १८ ॥ दुहितुस्तपनीयकुंडलत्रिशतं षष्ट्यधिकं च भारतः ॥ स हिरण्मयवस्तुकुंडलान्यदिशत्तत्सदृशानि यौतकम् ॥ १९ ॥ जन्मप्रभृति सा बाला श्रीरंगेशपदाब्जयोः ॥ एकांतभक्तिसंपन्ना ववृधेहर्निशं सती ॥ २० ॥ बालक्रीडास्वपि सदा सा श्रीरंगेश्वरं विना ॥ अजानती बभूवान्यत्तदेकहृदया स्थिता ॥ २१ ॥ रंगेशोत्सवपूजादिकार्याणि निखिलानि च ॥ बालक्रीडोपयोगीनि कृत्वा तानि सखीजनैः ॥ २२ ॥ वदन्ती रंगरंगेति क्रीडयामास तन्मनाः ॥ ववृधे बालिका बाल्ये पित्रोरानंददायिनी ॥ २३ ॥ दोलायां नंदनोद्यानसदृशे पुष्पमंडपे ॥ सदाभिरामे चारामे रममाणा सखीजनैः ॥ २४ ॥ संजातयौवनारंभा सा कदाचिदवर्तत ॥ रंजेशो मृगयायासविश्रांत्यै तद्वनं प्रति ॥ २५ ॥ समागत्य तदा

देवीमपश्यत्कमलेक्षणाम् ॥ अनिर्देश्यवयोरूपमधुरस्मितभाषणैः ॥ २६ ॥ तस्याः संमोहितो रंगराजोऽभूल्लोकमोहनः ॥ श्रीसुंदरवरस्याथ निचुलापुरनायकी ॥ २७ ॥ रंगेशलग्नहृदया जितनिद्रा जिताशना ॥ वदंती रंगेरंगेति राधिकेव समास्थिता ॥ २८ ॥ धर्मवर्मा ततो ज्ञात्वा दुहितुस्तन्मतं महत् ॥ प्रहृष्टः प्राप्य रंगेशसन्निधिं तं प्रणम्य च ॥ २९ ॥ दुहितुः सर्ववृत्तांतं रंगेशाय न्यवेदयत् ॥ अंगीकृत्य वचस्तस्य संप्रहृष्टोथ रंगराट् ॥ ३० ॥ व्याजहार शुभं वाक्यं धर्मवर्माणमद्भुतम् ॥ करिष्याम्यहमेवाद्य तत्पाणिग्रहणं नृप ॥ ३१ ॥ युष्मद्दुहितरं मह्यं प्रदेहि जलपूर्वकम् ॥ रंगिणस्तद्वचः श्रुत्वा धर्मवर्मा हरिप्रियः ॥ ३२ ॥ ओमित्युक्त्वा प्रणम्याशु रंगेशं भक्तवत्सलम् ॥ निचुलानगरं प्राप्य तदलंकृत्य पत्तनम् ॥ ३३ ॥ स तां दुहितरं सम्यगलंकृत्याब्जलोचनाम् ॥ प्रदातुकामः सहसा श्रीरंगेशाय विष्णवे ॥ ३४ ॥ विवाहमंडपे पीठे विन्यस्यैवात्मसंभवाम् ॥ रंगेशागमनाकांक्षी तदा तस्थौ सुनिश्चलः ॥ ३५ ॥ सहितः सकलैर्देवैर्ब्रह्मेशानपुरोगमैः ॥ निचुलानगरीं रम्यां महेंद्रनगरोपमाम् ॥ ३६ ॥ महता वैभवेनाशु रंगेशः स्वयमेव सः ॥ चकार पाणिग्रहणं दुहितुर्धर्मवर्मणः ॥ ३७ ॥ धर्मवर्माथ हरये रंगेशाय महौजसे ॥ ब्रह्मर्षिमध्ये ब्रह्मेशपाकशासनसन्निधौ ॥ ३८ ॥ सर्वलक्षणसंपन्नां कन्यकां तां स्वलंकृताम् ॥ अलंकाराणि सर्वाणि पूर्वं दत्त्वाथ रंगिणे ॥ ३९ ॥ सफलाक्षततांबूलदक्षिणादिसमुज्ज्वलाम् ॥ तस्मै दुहितरं सम्यक् पवित्रोदकपूर्वकम् ॥ ४० ॥ प्रददौ भक्तिभावेन पवित्रेणांतरात्मना ॥ सीतां श्रीरामचन्द्राय प्रददौ जनको यथा ॥ ४१ ॥ क्षीरार्णवो महालक्ष्मीं श्रीमहाविष्णवे यथा ॥ देवदुंदुभिनिर्घोषः पुष्पवृष्टिर्महानभूत् ॥ ४२ ॥ तस्य वैवाहिकं सम्यक् शेषहोमांतमद्भुतम् ॥ निर्वर्त्य स यथाशास्त्रं देवैर्ब्रह्मर्षिपुंगवैः ॥ ४३ ॥ पूजयामास तान् सर्वान् यथायोग्यं दिवौक-

साम् ॥ वराय रंगराजाय पारिबर्हं महाद्भुतम् ॥ ४४ ॥ सौवर्णतंडुलानां च ददौ भारशतत्रयम् ॥ भक्त्या षष्ट्यधिकं सम्यग् धर्मवर्मा महायशाः ॥४५॥ प्रददौ भक्तिभावेन रंगेशाय महात्मने ॥ रथानश्वान् गजान्सर्वान् गोमहिष्यादिकानजान् ॥ ४६ ॥ दासीदासजनांश्चैव भूषणान्यंबराणि च ॥ हिरण्मयरथे तत्र समारोप्य वधूवरौ ॥ ४७ ॥ तावुभौ प्रेषयामास महता वैभवेन सः ॥ धर्मवर्मसुतां सम्यक् स तामुद्वाह्य रंगराट् ॥ ४८ ॥ संतुष्टः श्वशुरेणैव पूजितो धर्मवर्मणा ॥ संप्रेषितः स्वधामैतत्समासाद्य तदानघ ॥ ४९ ॥ निचुलापुरनायक्या तया सार्द्धं जगत्पतिः ॥ रममाणः सुखं तस्थावनिशं स यथासुखम् ॥ ५० ॥ निचुलानगरे तत्र रंगेशः श्वशुरालये ॥ निचुलापुरनायक्या प्रीत्यर्थं धर्मवर्मणः ॥५१॥ तया संक्रीडमानोसावद्यापि परिदृश्यते ॥ कल्याणं निचुलादेव्या ये शृण्वंति पठंति च ॥५२॥ कल्याणसहिता एव भवेयुस्तेनिशं ध्रुवम् ॥ ततः पुण्यतमे तत्र नगरे मुनिवाहनः ॥ ॥५३॥ अवतारं जगद्रक्षाहेतवे विदधे तदा ॥ शृणु त्वं विशदं वक्ष्ये तच्चरित्रं महाद्भुतम् ॥ ५४ ॥ श्रीपाणचरितं दिव्यं तदन्यस्य न विद्यते ॥ द्वाविंशत्युत्तरशतवत्सरानंतरं कलौ ॥ ५५ ॥ दुर्मत्यब्दे कार्तिकाख्ये मासेराकामहातिथौ॥रोहिण्यां सौम्यवारे तु श्रीपाणो निचुलापुरे॥५६॥ कस्मिंश्चिद्ब्राह्मणक्षेत्रे व्रीहिगुच्छान्महायशाः ॥ श्रीवत्सांशेन संजज्ञे श्रीहरेराज्ञया तदा ॥ तस्यावतारश्लोकाश्च गीयंते प्रथिता भुवि ॥५७॥ अथ तत्र कुलेऽतिमे रमारमणोरःस्थललांछनांशजः ॥ समजायत पाणसंज्ञकः सुकविः कार्तिकमासि वैभवे ॥ ५८ ॥ कावेरीतटनिचुलापुरेंत्यवंशे रोहिण्यां विलसति वृश्चिकेऽवतीर्णः ॥ श्रीनाथस्त्वथ महिशायिभक्तिभाजं पाणाख्यं वरमुनिवाहनं प्रपद्ये ॥ ५९ ॥ कार्तिके रोहिणीजातं श्रीपाणं निचुलापुरे ॥ श्रीवत्सांशं गायकेंद्रं मुनिवाहनमाश्रये ॥ ६० ॥ अयोनिसंभवो जातो वेदांतिन् मुनिवाहनः ॥ पश्चात्पंच-

मवर्णे तु ववृधे बालभावितः ॥ ६१ ॥ जायमानं हि पुरुषं यं पश्येन्म-
धुसूदनः ॥ सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिंतकः ॥ ६२ ॥
जायमानकटाक्षेण स चैवं मुनिवाहनः ॥ बाल्यप्रभृति संस्निग्धः प्रह्लाद
इव सत्तम ॥ ६३ ॥ संजातज्ञानवैराग्यो ह्यभवज्जन्मवैष्णवः ॥ विशे-
षतोथ वेदांतिन् विष्वक्सेनकृपावशात् ॥ ६४ ॥ संप्राप्तपंचसंस्कारो
विदिताखिलतत्त्वधीः ॥ आसीन्निवृत्तसंसारो महाभागवतोत्तमः॥६५॥
कृताधिवासो निचुलागनर्यां भगवत्परः ॥ कावेरीतीरमाश्रित्य रंग-
क्षेत्राविदूरतः ॥ ६६ ॥ तत्र श्रीमुखतीरे तु वीणापाणिरचंचलः ॥रंगे-
शाभिमुखं स्थित्वा कीर्त्तयन्भगवद्गुणान् ॥ ६७ ॥ व्यतिष्ठतानुदिवसं
महागांधर्वमाश्रितः ॥ कुरंगनगरे पूर्वं मातंगः कश्चिदुत्तमः ॥ ६८ ॥
स यथा कैशिकं गीतमगायत तदानघ ॥ संप्रार्थितस्तदा तेन मातं
गो ब्रह्मरक्षसा ॥६९॥ निग्रहात्तारयायुष्मं स्तेन गीतफलेन माम् ॥
एवमुक्त्वा स मातंगं राक्षसः शरणं गतः ॥७०॥ अंगीकृत्य स तद्या-
श्चां मातंगः करुणाकरः॥यत्तद्गीतफलं दत्त्वा कृपया रक्षसेनघ ॥७१॥
वेदांतिन् सम्यगेवालं महिमानं न्यवेदयत् ॥ यन्मया पश्चिमं गीतं
स्वरं कैशिकमुत्तमम्॥७२॥फलं तस्यैव भद्रं ते मोक्षयिष्यति किल्बि-
षात् ॥ यागदोषं स तस्याशु मातंगः परिगृह्य तम् ॥ ७३ ॥ तेन गी-
तफलेनैव ररक्ष ब्रह्मराक्षसम् ॥ तथैवायं महातेजाः श्रीपाणो निचु-
लापुरे ॥७४॥ कृताधिवासः संरंजे भगवद्ध्यानतत्परः ॥ भगवद्गानवि-
द्यानां सार्वभौमो बभूव सः ॥ ७५ ॥ श्रीपाणो नित्यवेदानां सामगा-
नरतात्मनाम् ॥ नित्यसूरिरिवाभाति देवगानेन सत्तमः ॥ ७६ ॥ स
श्रीमान् पुण्यचरितो भगवान् मुनिवाहनः ॥ यत्स्ववर्णोचितं धर्ममा-
चरन्भगवत्प्रियः ॥ ७७ ॥ दिव्यगानेन रंगेशं गायन्निश्चलमानसः ॥
आनंदबाष्पः सततं निर्भरः पुलकांकितः ॥ ७८ ॥ हरिगानरसास्वाद-
विस्मृतान्यरतिः सदा ॥ रंगेशाभिमुखं तस्थौ गानेनैवातिदूरतः॥७९॥

कावेरीद्वयमध्यस्थं श्रीरंगमतिपावनम् ॥ अतः पदाभ्यां संस्प्रष्टुं ममैवायुक्तमित्यतः ॥ ८० ॥ सप्तप्राकारसहितं ज्ञानदृष्ट्या विलोक्य तत् ॥ श्रीरंगमखिलं सम्यक् कावेरीसैकतेनघः ॥ ८१ ॥ विधाय तस्य निर्माणमनुभूय मुहुर्मुहुः ॥ रंगेशं सुंदरवरं शयानं शेषभोगिनि ॥ ८२ ॥ ध्यायन्निरंतरं तस्थौ तन्मयत्वेन चेतसा ॥ तत्र कश्चिन्महायोगी सारंगाख्य इति श्रुतः ॥ ८३ ॥ नित्यं श्रीरंगराजस्य कुर्वन्कैंकर्य्यमास्थितः ॥ स स्वर्णकुंभमादाय कावेरीतोयमुत्तमम् ॥ ॥ ८४ ॥ गृहीतुकामस्तत्तीरमभ्यगाद्द्विजपुंगवः ॥ तदंतिकस्थमालोक्य श्रीपाणं भगवत्परम् ॥ ८५ ॥ दूरतो गच्छगच्छेति तमवोचत्स योगिराट् ॥ अज्ञातबाह्यव्यापारस्तन्मयत्वेन चेतसा ॥ ८६ ॥ नाशृणोत्तद्वचः पाणस्तूष्णींभूतः समास्थितः ॥ वर्णधर्मपराः केचिद्ब्राह्मणा रंगवासिनः ॥ ८७ ॥ कवेरजातटे विष्णुं गायंतं रंगवासिनम् ॥ ऊचुर्मतंगं मत्वा तं गच्छगच्छेति दूरतः ॥ ८८ ॥ गुणानुभवकैंकर्य्यजितबाह्येंद्रियो मुनिः ॥ स तदाज्ञातवचनस्तूष्णींभूतो मुनिश्चलः ॥ ८९ ॥ ततः कोपेन महता श्रीपाणं प्रति भूसुराः ॥ शिलाः प्रचिक्षिपुस्तत्र ते सर्वे रंगवासिनः ॥ ९० ॥ जर्जरीकृतसर्वांगः शिलावर्षैर्दृढाशयः ॥ अतिष्ठद्भगवत्प्रेमपारवश्येन निश्चलः ॥ ९१ ॥ श्रीपाणं निश्चलं दृष्ट्वा जितबाह्येंद्रियं मुनिम् ॥ किमेतदिति सर्वे ते बिभ्युर्विस्मितचेतसः ॥ ॥ ९२ ॥ सम्यक् समाप्तगीतोथ पूर्ववत्स दृढव्रतः ॥ श्रीपाणः स्वाश्रमं प्राप जितक्रोधस्तदानघ ॥ ९३ ॥ तेषां शिलाप्रहारेण न काचिदपि वेदनाम् ॥ अगादुपरतक्रोधो न्यस्तभारः श्रियः पतौ ॥ ९४ ॥ तेन रंगेश्वरस्यैव संजाता महती व्यथा ॥ रक्तं ललाटे सुस्राव भक्तांतर्यामिणस्तदा ॥ ९५ ॥ अर्चकास्तद्विलोक्याशु बिभ्युर्विस्मितमानसाः ॥ तदा तद्देशभूपालो रंगेशस्य विलोक्य तत् ॥ ९६ ॥ रक्तं ललाटे प्रत्यक्षं सुतरां भीतिमागतः ॥ तेन संमोहिता

लोकाः सर्वेपि भगवत्पराः ॥ ९७ ॥ संजातं केन दोषेण मम राज्ञोथ
भूपतेः ॥ इत्येवं विबुधैः साकं मंत्रयामास भूपतिः ॥ ९८ ॥ तदा
श्रीरंगनायक्या रंगेशो बोधितस्तया ॥ मतिं चकार भगवान् मुनिवा-
हनरक्षणे ॥ ९९ ॥ सारंगयोगिनः स्वप्ने प्रसन्नः प्रत्यभाषत ॥ श्रीपाणं
मामकं विप्र निकृष्टं तं न चिंतय ॥ १०० ॥ स्कंधाभ्यां तं वहन्
भक्त्या प्रापयस्व मदंतिकम् ॥ ततः स्वप्नात्समुत्थाय सारंगमुनिपुंगवः
॥ १०१ ॥ अद्य मे सफलं जन्म सुप्रभाता निशा च मे ॥ इत्युक्त्वा
संप्रहृष्टोथ स्वप्नवृत्तांतमद्भुतम् ॥ १०२ ॥ तथ्यं मत्वा यथाशास्त्रं
स्नातः शुचिरलंकृतः ॥ कृताह्निकः संप्रतस्थे श्रीपाणो यत्र वर्तते ॥
॥ १०३ ॥ सुदूरमपि गंतव्यं यत्र भागवताः स्थिताः ॥ श्रीरंगस्या-
तिदूरे तु कावेर्याश्च तटे रहः ॥ १०४ ॥ तन्मयत्वेन गायंतं सततं
भगवद्गुणान् ॥ गुणानुभवसंजातमहानंदाश्रुवारिभिः ॥ १०५ ॥संम्य-
क्संसिक्तसर्वांगं पुलकांकितविग्रहम् ॥ अज्ञातबाह्यव्यापारं हरौ संन्य-
स्तमानसम् ॥ १०६ ॥ दृष्ट्वा सारंगयोगींद्रस्तं स भागवतोत्तमम् ॥
दीर्घप्रणामं साष्टांगं चक्रे तस्य पदाब्जयोः ॥ १०७ ॥ एवं प्रणम्य
बहुशः सत्कृत्य प्रेमपूर्वकम् ॥ रंगेशेन यदुक्तं तत्सर्वं तस्मै न्यवेदयत्
॥ १०८ ॥ स्वनैच्यं पुरतः कृत्वा तन्निशम्य वचः शुभम् ॥ श्रीपाणः
प्रांजलिर्भूत्वा तमवोचद्द्विजोत्तमम् ॥ १०९ ॥ मातंगोहं महाभाग
पद्भ्यां श्रीरंगमुत्तमम् ॥ स्प्रष्टुं नार्हामि तेनाद्य प्रवेष्टुं नोत्सहे ध्रुवम्
॥११०॥ प्रतिगृह्य स तद्वाक्यं सारंगमुनिरब्रवीत्॥अतश्चेन्मम दासस्य
कुरु स्कंधाधिरोहणम्॥१११॥यथा रंगेश्वरस्याज्ञा तथैव क्रियतां गुरो ॥
दिव्या श्रीरंगराजस्य नैवोल्लंध्येयमावयोः ॥११२॥ स तद्वचनमाकर्ण्य
श्रीपाणो भगवत्परः॥कृतांजलिर्न्यस्तभरः परतंत्रःसमास्थितः॥११३॥
तदा सारंगयोगींद्रः स्कंधाभ्यां भगवत्परः ॥ उवाह भक्त्या श्रीपाणं
रंगेशं खगराडिव ॥ ११४ ॥ वेदपारायणं पश्चात्प्रबन्धाध्ययनं पुरः ॥

ब्राह्मणा वैष्णवाश्चक्रुस्तस्य श्रीरंगशासनात् ॥ ११५ ॥ यथैव मुक्तं पुरुषं समादायातिवाहकः ॥ निनाय सर्वविभवैर्वैकुंठे मणिमंडपम् ॥ ११६ ॥ तथा सारंगयोगींद्रः श्रीपाणमनयत्तदा ॥ महता वैभवेनैव श्रीरंगतिरुमंडपम् ॥ ११७ ॥ स तदा रंगराजस्य शासनान्मुनिवाहनः ॥ सम्यक्प्रदक्षिणं कृत्वा विमानस्य कृतांजलिः ॥ ११८ ॥ श्रीरंगशायिनस्तस्य संनिधिं चागमत्तदा ॥ तथैव दर्शयन्नित्यं दरिद्राय महानिधिम् ॥ ११९ ॥ तदा रंगेश्वरस्तस्मै श्रीपाणाय कृपानिधिः ॥ दर्शयामास चात्मीयं दिव्यमंगलविग्रहम् ॥ १२० ॥ किरीटकेयूरसुवर्णकुंडलप्रलंबमुक्तामणिहेमभूषणम् ॥ विशालवक्षःस्थलहेमकौस्तुभं श्रिया च देव्याध्युषितोरुवक्षसम् ॥ १२१ ॥ प्रतप्तचामीकरचारुवाससं सुमेखलापूरितशोभितांघ्रिकम् ॥ सुवर्द्धुनीजातमृणालकोमलं दधानमच्छच्छवियज्ञसूत्रकम् ॥ १२२ ॥ भुजोपधानं प्रसृतान्यहस्तं निकुंचितोत्सारितपादयुग्मम् ॥ सुदीर्घमुद्बाहुमुदग्रवेषं भुजंगतल्पं पुरुषं ददर्श ॥ १२३ ॥ एवमुक्तप्रकारेण ब्रह्मादिनिखिलैः सुरैः ॥ इक्ष्वाकुप्रमुखैः सर्वैर्भूपैश्च परिपूजितम् ॥ १२४ ॥ रंगेशं शेषशय्यायां शयानं रंगनायकम् ॥ सम्यग्दृष्ट्वाथ संसेव्य श्रीपाणो भगवत्परः ॥ १२५ ॥ आपादमस्तकं तस्य तस्थावनिमिषो यथा ॥ रंगेशावयवान्सर्वान् दृष्ट्वा तत्पादपद्मयोः ॥ १२६ ॥ वेदांतिन् भक्तिभावेन संजातप्रीतिमानभूत् ॥ सर्वानवयवान् हित्वा स्तन्यपाने च यः शिशुः ॥ १२७ ॥ लोके स्तनंधयो मातुः स्तनमेवाग्रहीद्यथा ॥ शेषत्वप्राप्तये शेषभूतस्य प्रथमं किल ॥ १२८ ॥ एतदेवावतरणतरं तत्पादपंकजम् ॥ पादादिकेशपर्यंतं दिव्यमंगलविग्रहम् ॥ १२९ ॥ अनुभूयासकृद्भक्त्या श्रीपाणो रंगशायिनः ॥ तदानुभवसंजातप्रेमातिशयहेतुना ॥ १३० ॥ तमेवार्थं समुद्धृत्य रंगेशानुभवोद्भवम् ॥ संगृह्य दशगाथाभिर्जगत्संरक्षणाय च ॥ १३१ ॥ चकारामल-

नाथाख्यं प्रबंधं द्राविडं महत् ॥ एवं प्रबंधं कृत्वाशु श्रीपा-
णो भगवत्परः ॥ १३२ ॥ निर्व्याजकृपया सम्यग्जगत्सर्वम-
पालयत् ॥ रंगेशो वेंकटेशश्च तेनाभूत्तत्र सन्नुतः ॥ १३३ ॥
ईषत्स्तुतो वेंकटेशो रंगेशो बहुशः स्तुतः ॥ लोकसारंगयोगीं-
द्रमुखास्ते सकला जनाः ॥ १३४ ॥ श्रीपाणं सम्यगाश्रित्य
कृतार्था ह्यभवंस्तदा ॥ एवं दिव्यप्रबंधेन कृतलोकैकरक्षणम्
॥ १३५ ॥ कृतांजलिपुटं धीरं भगवद्भक्तिपारगम् ॥ स्वपादपद्माभिमु-
खं श्रीपाणं वीक्ष्य रंगराट् ॥ १३६ ॥ निर्हेतुकदयावेशात्सशरीरेण
सादरम् ॥ अंगीचकार भगवान् सर्वेषां पश्यतां तदा ॥ १३७ ॥ सर्वे-
षां पश्यतां तत्र रंगेशपदपद्मयोः ॥ श्रीपाणो ह्यगमद्भक्त्या नित्यकैंक-
र्य्यवाञ्छया ॥ १३८ ॥ नित्यकैंकर्य्यनिरतो रंगेशपदपद्मयोः ॥ श्री-
पाणस्तत्र वेदांतिन्नद्यापि परिदृश्यते ॥ १३९ ॥ एवं भक्तपराधीनो
भगवान् रंगनायकः ॥ संप्राप्तः परमामोदं श्रीपाणेन श्रिया सह ॥
॥ १४० ॥ सुदूरागतपुत्रेण सभार्यो जनको यथा ॥ तदद्भुततमं दृष्ट्वा
जनाः सर्वेनिशं महत् ॥ १४१ ॥ विस्मयं परमं गत्वा नत्वा रंगेश्वरं
तदा ॥ प्रपेदिरे स्वसद्मानि रंगेशानुज्ञया तदा ॥ १४२ ॥ एतच्चारित्रं वेदां-
तिञ्छ्रीपाणस्य महाद्भुतम् ॥ पुरातनं पुण्यतमं संक्षेपात्कथितं तव
॥ १४३ ॥ निचुलापुरमाहात्म्ये सम्यगेव समीरितम् ॥ पाणावतारच-
रितं द्रष्टव्यं तत्त्वयानघ ॥ १४४ ॥ श्रीपाणचारितं पुण्यं ये शृण्वंति
पठंति च ॥ ते सर्वे पापनिर्मुक्ता यास्यंति परमां गतिम् ॥ १४५ ॥
श्रीवत्सांश उपायतः कलियुगे चोलावनौ ब्राह्मणक्षेत्रे श्रीनिचुलापुरे
समभवद्यो व्रीहिगुच्छे महान् ॥ पंचाशाद्भुवि वत्सरानपनयद्रंगेशपा-
दाब्जयोर्वीणापाणिरुदंचितः प्रतिदिनं तं पाणदेवं भजे ॥ १४६ ॥
इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे श्रीपाणचारितं नाम षण्णव-
तितमोऽध्यायः ॥ ९६ ॥

# सप्तनवतितमोऽध्यायः ।

श्रीपाणस्य कथां पुण्यां श्रुत्वास्मद्यतिरद्भुताम् ॥ श्रीपराशरभट्टार्य्यं भूयो वचनमब्रवीत् ॥ १ ॥ श्रीपाणस्याद्भुतकथा पुण्या त्वत्तः श्रुता मया ॥ श्रोतुमिच्छामि भगवन् कथां श्रीकलिवैरिणः ॥ २ ॥ कथयस्व महाभाग श्रोतुं कौतूहलं हि मे ॥ प्रतिगृह्य स तद्वाक्यं भट्टार्य्यस्तस्य सादरम् ॥ ३ ॥ कथामकथयत्तस्मै सकलां कलिवैरिणः ॥ परकालहरिं वंदे पादपद्मगुहाश्रयम् ॥ ४ ॥ उन्नतप्रतिकूलेभकुंभसंभेदविभ्रमम् ॥ नादप्रहाससंत्रस्तशैवशक्त्यादिकद्विपम् ॥ ५ ॥ परकालमृगेंद्रं तं प्रपद्येद्भुतवन्दनम् ॥ इतीव वन्दनं कृत्वा भट्टार्य्य इदमब्रवीत् ॥ ६ ॥ प्रवक्ष्यामि कथां पुण्यां श्रूयतां कलिवैरिणः ॥ विष्णुशार्ङ्गांशसंभूतः परकालो महायशाः ॥ ७ ॥ लोकसंरक्षणे विष्णुर्यथा चैष तथा ध्रुवम् ॥ आज्ञप्तो विष्णुना तेन परकालो युगेयुगे॥८॥ कृतावतारो मेदिन्यां धर्मसंस्थापनाय च ॥ धर्मान्संस्थापयामास गूढान् भागवतान्छुभान् ॥ ९ ॥ चतुर्युगेषु संजज्ञे चतुर्वर्णेषु चानघ ॥ एष शार्ङ्गांशजः श्रीमान् परकालो महायशाः ॥ १० ॥ ब्राह्मणः कर्दमो भूत्वा संजातः प्रथमं पुरा ॥ यथा कृतयुगे सम्यक्सर्वं जगदपालयत्॥ ११॥ तथोपरिचरो भूत्वा त्रेतायां वसुनामकः ॥ ररक्ष क्षत्रधर्मेण स जगत्क्षत्रियर्षभः ॥ १२ ॥ द्वापरे शंखपालाख्यो जज्ञे वैश्यकुलोत्तमः ॥ स चकाराखिलान्धर्मान् महात्मा भगवत्परान् ॥ १३ ॥ चतुर्थवर्णे संजज्ञे ततः कलियुगे महान् ॥ परकाल इति ख्यातो लोकसंरक्षणाय सः ॥ १४ ॥ लोकसंरक्षणं तत्र सर्वत्र विदधेऽनघ ॥ लोकसंरक्षणं कार्य्यं परकालस्य सर्वदा ॥ १५ ॥ आश्लिष्टपुरमाहात्म्ये द्रष्टव्यैषा कथा किल ॥ अवतारं प्रवक्ष्यामि परकालस्य सांप्रतम् ॥ १६ ॥ श्रूयतामवधानेन निगृह्येंद्रियवाजिनः ॥वेदांतिं श्चोलदेशेस्मिन् पूर्वाब्धेः पश्चिमे तटे ॥ १७ ॥ आविनाडिति विख्यातः कश्चिद्देशोस्ति वै

किल ॥ तत्र नागपुरक्षेत्रं भाति चैकादशस्थलैः ॥१८॥ तत्र शंखमुखं नाम पुण्यस्थानं च विश्रुतम् ॥ तस्य पश्चिमदिग्भागे क्रोशद्वयविदूरतः ॥ १९ ॥ बिल्वारण्यं महापुण्यं तत्र दिव्यस्थलं महत् ॥ नृसिंहपञ्चकं तत्र वर्तते दिव्यरूपकम् ॥ २० ॥ परिरंभपुरी सैव विश्रुता जगतीतले ॥ तत्प्रभावपराः श्लोका गीयन्ते बहवो भुवि॥२१॥ अथ कापि कवेरकन्यकासरितो रोधसि चोलमंडले ॥ परिरंभपुरी पयोनिधेः प्रथमस्याजनि पश्चिमे तटे ॥ २२ ॥ नटवत्परिपाकसंपदा कमला बिल्ववनांतरे पुरा ॥ करुणापरिपूर्णचक्षुषा घनमालिंग्यत यत्र विष्णुना ॥ २३ ॥ उपकंठगते उभे शुभे परितः कांचननूपुरापगे ॥ मवहारलताविडंबनं विदधाते भुवि यत्र निर्मले ॥ २४ ॥ कृतमुख्ययुगेष्वनुक्रमादुदभूदत्र हरिः श्रुतीश्वरः ॥ भुवि कर्दमवेधसस्ततः परिणामैर्वसुवैरमेचयोः ॥ ॥२५॥ अथ काचिदभूत्तदंतिके कमलापूर्णपुरी गरीयसी ॥ कमलारमणाक्षिविभ्रमैः करुणार्द्रैः परिपूर्णवैभवा ॥ २६ ॥ परिरंभपुरस्यास्य कमलानगरस्य च ॥ अन्यूननगरं नाम मध्ये भाति महत्तरम् ॥२७॥ न्यूनता यत्र वसतां कदाचिदपि नास्ति यत् ॥ तस्यैवान्यूनता नाम तेनाभूल्लोकविश्रुतम् ॥ २८ ॥ आविनाडुदयाराख्यो दंडदानिकभूपतिः ॥ बभूव पादजः कश्चिज्जितारातिर्महायशाः ॥ २९ ॥ शिवभक्तिरतः श्रीमान् देवब्राह्मणपूजकः ॥ लोकसंरक्षणार्थाय तस्य जज्ञे चतुष्कविः ॥ ३० ॥ वेदांतिन् कार्तिके मासि विष्णुशार्ङ्गांशजो महान् ॥ तत्कालनिर्णयं वक्ष्ये शृणु चावहितोनघ ॥ ३१ ॥ कलौ युगे गताब्दानां सप्तोत्तरशतद्वये ॥ नलाब्दे कार्तिके मासि राकायां कृत्तिकोडुनि ॥ ३२ ॥ चतुर्थवर्णे संजज्ञे शार्ङ्गांशाद्गुरुवासरे ॥ परकालो महातेजाश्चतुष्कविशिखामणिः ॥ अस्यावतारश्लोकाश्च गीयंते बहवो भुवि ॥ ३३ ॥ समजायत तत्र पादजप्रमुखे कश्चन नीलनामकः ॥ पुरुषोत्तमकार्मुकांशजः स्फुरिते कार्तिककृत्तिकोडुनि ॥ ३४ ॥ का-

र्तिके कृत्तिकाजातं चतुष्कविशिखामणिम् ॥ षट्प्रबंधकृतं शार्ङ्गमूर्त्तिं कलिहरं श्रये ॥ ३५ ॥ चतुर्थवर्णेच्युतशार्ङ्गशक्त्या कृतोदयं कार्तिककृत्तिकायाम् ॥ रंगेशकैंकर्य्यतरंगितांशं चतुष्कवींद्रं शरणं प्रपद्ये ॥ ३६ ॥ आविनाडुदयाराख्यः पुत्रं दृष्ट्वा स तं वरम् ॥ प्रमोदमतुलं प्राप्य बंधुभिः सपुरोहितः ॥ ३७ ॥ चकार नामकरणं पुत्रस्यादित्यवर्चसः ॥आविनाडन्निलितिख्यातं सर्वलोकैकविश्रुतम् ॥३८॥ पित्रोरानंददःश्रीमान् सुंदरांगो महायशाः॥अवर्धत महातेजा बालसूर्य इवोदितः ॥३९॥संप्राप्तयौवनःश्रीमाञ्छास्त्रेषु कुशलो महान्॥राजसेवापरस्तस्थौ परकालस्ततः परम्॥४०॥तेजस्विनं महात्मानं दीर्घबाहुं महामतिम् ॥ परकालं जितारातिं नीतिशास्त्रविशारदम्॥४१॥विलोक्य विस्मितोत्यंतं संतुष्टश्चोलभूपतिः ॥ देशाधिपत्यं प्रददौ ।जिष्णवे कलिवैरिणे ॥४२॥ धर्मेण पालयन् सर्वान् प्रजारंजनतत्परः ॥ चोलराजप्रियस्तस्थौ परकालो महायशाः ॥४३॥ कालं ग्राम्यसुखेन वल्लवजनैर्नित्यं क्षिपन्सादरं वारस्त्रीवरनाट्यलोलनिपुणः संगीतसक्तश्रुतिः ॥ अज्ञातात्मविचारणः खलरतिः स्वच्छन्दवृत्तिः परं रेजे शौर्यपराजिताखिलरिपुर्नीलो नरेंद्राश्रयः ॥ ४४ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे परकालावतारकथनं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ।

तस्य नागपुरस्याथ वायव्यां दिशि सत्तम ॥ विश्रुतः क्रोशमात्रेण कश्चिच्छ्वेतह्रदो महान् ॥ १ ॥ वेदांतिन् राजते तत्र फुल्लपंकजशोभितः ॥ तीरे तस्य तटाकस्य विष्णुः संराजते सदा ॥ २ ॥ श्वेतह्रदे शांतमूर्तिर्यः स एवेति गीयते ॥ तस्माच्छ्वेतसरः पुण्यमपंकं पंकजावृतम्॥३॥ तदद्भुततमं शुद्धं गंभीरमातिविस्तृतम् ॥ अप्सरोगण संकीर्णं तन्मानससरो यथा ॥ ४ ॥ जलक्रीडेच्छया स्वर्गात्तत्रागत्यामरांगनाः ॥ तस्मिन्सरोवरे सम्यग्जलक्रीडां विधाय च ॥ ५ ॥

कुर्वंत्येका तदा तस्थौ कुमुदापचयं ह्रदे ॥ तां विहाय तदा स्वर्गं ययुः सर्वाः सुरांगनाः ॥ ६ ॥ देवरूपं परित्यज्य मानुषं रूपमास्थिता ॥ तटाकतीरे एकैव सा चचारामरांगना ॥ ७ ॥ नागपुर्यांस्तदा कश्चि-द्वैष्णवोथ भिषग्वरः ॥ यदृच्छयागतस्तत्र तामपश्यद्वरांगनाम् ॥ ८ ॥ वात्सल्यादवलोक्याशु व्याजहार वचः शुभम् ॥ का त्वं कमलपत्राक्षि कन्यके कलभाषिणि ॥ ९ ॥ तटाकतीरे एकैव किमर्थं वर्तसेधुना ॥ सा तद्वाक्यं समाकर्ण्य भिषग्वरमथाब्रवीत् ॥ १० ॥ मया सहागताः कन्या मां विसृज्याखिला गताः ॥ एकैव विचराम्यद्य साहं सर्वविवर्जिता ॥ ११ ॥ मातापितृविहीनां मामवेह्यद्य भिषग्वर ॥ मां युष्मत्सदनं तात भवान्संप्रापयेद्यदि ॥ १२ ॥ आगच्छामि त्वया सार्द्धं संशयोत्र न विद्यते ॥ कन्यावचनमाकर्ण्य स तत्कर्णामृतं तदा ॥ १३ ॥ पुत्रिकामिव संवीक्ष्य वात्सल्याद्वाचमब्रवीत् ॥ यद्येष्यत्यद्य भवती मया मन्नगरं प्रति ॥ १४ ॥ सर्वदा पालयिष्यामि सुतामिव न संशयः ॥ तेन भागवतेनोक्तमंगीकृत्य वचः शुभम् ॥ १५ ॥ मतिं चकार वेदांतिन् गमने तत्पुरस्य सा ॥ भिषक्चैवानपत्यत्वात्तामादाय कृतादरः ॥ १६ ॥ प्रविश्य नागनगरं गृहमागत्य संभ्रमात ॥ भार्य्याहस्ते ददौ कन्यां प्रहृष्टेनांतरात्मना ॥ १७ ॥ तदा साप्यनपत्यत्वात्तां कन्यां प्रतिगृह्य हि ॥ मेने तां वैद्यवनिता स्वात्मजामिव सादरम् ॥ १८ ॥ चकार नामकरणं दुहितुः स भिषग्वरः ॥ ततः कुमुदवल्लीति दधार कुमुदं यतः ॥ १९ ॥ तदा दधार कुमुदं या तटाकस्य रोधसि ॥ तस्याः कुमुदवल्लीति तेनाभून्नाम विश्रुतम् ॥ २० ॥ अवर्द्धतानुदिवसं पित्रोरानंददायिनी ॥ बाला कुमुदवल्ल्याख्या रूपलावण्यसंपदा ॥ २१ ॥ भिषग्वरो भागवतो दृष्ट्वा दुहितरं तदा ॥ संजातयौवनां साध्वीं जित-देवांगनाश्रियम् ॥ २२ ॥ अज्ञातकुलगोत्रैषा रंभैवाभाति रूपतः ॥ ममात्मजा गुणवती कस्मै देयेत्यचिंतयत् ॥ २३ ॥ तदा नीलस्य वेदांतिश्चाराः केचित्प्रियंवदाः ॥ तस्याः कुमुदवल्ल्याश्च रूपलाव-

ण्यसंपदम् ॥ २४ ॥ सम्यगावेदयांचक्रुस्तस्मै ते कलिवैरिणे ॥ बहुशः श्लाघयित्वोक्तं चारैः सम्यङ्गनिवेदितम् ॥ २५ ॥ स तदद्भुतलावण्यं द्रष्टुकामश्चतुष्कविः ॥ यत्रयत्र यथापूर्वं यत्कार्यं समवास्थितम् ॥२६॥ तत्रतत्र तथैवासौ तद्राज्ञो विनिधाय च ॥ कृतस्वरक्षणो नैव तत्रत्यैर-भिसंवृतः ॥ २७॥ स्वपुरान्निर्ययौ वेगात्तदा नागपुरीं प्रति ॥ अभ्येत्य नागनगरीं भिषग्राजस्य वेश्मनि ॥ २८ ॥ तेन संमानितस्तस्थौ कृतासनपरिग्रहः ॥ तेन संभाषमाणोसौ सम्यग्भागवतेन वै ॥२९ ॥ अपश्यत्तत्सुतां तत्र बालां सुरसुतोपमाम् ॥ तां दृष्ट्वा विस्मितोत्यंतं संप्रहृष्टश्चतुष्कविः॥३०॥स तं भागवतं प्रीत्या भिषग्राजं वचोब्रवीत ॥ अनपत्यस्य भवतः कस्मात्कन्यैवमागता ॥ ३१ ॥ वद तत्कारणं मेद्य श्रोतुं कौतूहलं परम्॥अंगीकृत्य स तद्वाक्यं तदागमनकारणम् ॥ ३२ ॥ सम्यङ् निवेद्य वेदांतिस्तत्सर्वं कलिवैरिणे ॥ ममानपत्यतादोषस्त्वनयैव प्रमार्जितः ॥ ३३ ॥ इत्युक्त्वाथ पुनः प्राह परकालं भिषग्वरः ॥ अज्ञातकुलगोत्रैषा कन्यका वरवर्णिनी ॥ ३४ ॥ कल्याण-गुणसंयुक्ता कस्य भार्या भविष्यति ॥ इति व्याकुलचित्तोसौ तदा भागवतोभवत् ॥ ३५ ॥ प्रहृष्टः तन्निशम्यासौ वैष्णवं स भिषग्वरम् ॥ परकालः सुसंपूज्य सद्वस्त्रांबरभूषणैः ॥ ३६ ॥ पत्न्यर्थं वरयामास भिषग्राजसुतां वराम् ॥ अंगीकृत्य स तद्वाक्यं सभार्य्यः संप्रहर्षितः ॥ ३७ ॥ प्रदातुमैच्छत्तां कन्यां श्रीमते कलिवैरिणे ॥ पित्रोः कुमुदव-ल्यांख्या तदुद्योगं निशम्य सा ॥ अवोचत्परकालस्य सन्निधौ पितरौ प्रति ॥ ३८ ॥ तापः पुंड्रस्तथा नाम मंत्रो यागश्च पंचमः ॥ अमीह पंचसंस्काराः पारमैकांत्यहेतवः ॥३९॥ एवमुक्तप्रकारेण पंचसंस्कार-संस्कृतम् ॥ श्रीवैष्णवं विनान्यं तं न वृणेहं कदाचन॥४०॥एतमध्यव-सायं च ज्ञात्वा सम्यक् सुसादरम् ॥४१॥ शुभस्य शीघ्रमित्युक्त्वा पर-कालो महामतिः ॥ नागपुर्य्याः संप्रतस्थे श्रीनिवासपुरं प्रति ॥४२॥

श्रीनिवासस्थलं तूर्णं नत्वा तत्सन्निधौ तदा ॥ अग्नितप्तेन चक्रेण शंखे-
न भुजमूलयोः ॥ ४३ ॥ पूर्णेन हरिणा तेन स सम्यक्कृतलांछनः ॥
धृतोर्द्ध्वपुंड्रः कुमुदवल्ल्यास्सन्निधिमेत्य सः ॥४४॥ श्रीवैष्णववरस्त-
स्थौ दिव्यचिह्नैरलंकृतः ॥ विलोक्य वैष्णवं साध्वी सा तं भूयोऽब्रवी-
द्वचः ४५ ॥ अष्टोत्तरसहस्रेभ्यो वैष्णवेभ्यो दिनेदिने ॥ भोजनं षड्र-
सैर्दत्त्वा सतांबूलं सदक्षिणम् ॥ ४६ ॥ ततः श्रीपादतीर्थं च तदन्नमति-
पावनम् ॥ स्वीकर्त्तव्यं प्रयत्नेन भुक्तशेषं त्वयादरात् ॥ ४७ ॥ यद्येकं
वत्सरं सम्यगेवं हि भवता कृतम् ॥ ततः परं भविष्यामि तव भार्या
तदानघ ॥ ४८ ॥ एवं कृते सुसुलभा ह्यन्यथा दुर्लभा तव ॥ वचः
कुमुदवल्ल्योक्तमंगीकृत्य चतुष्कविः ॥ ४९ ॥ दृढां प्रतिज्ञामकरोत
करिष्ये तदिति ध्रुवम् ॥ ततो भिषग्वरः श्रीमान् महाभागवतस्तदा
॥ ५० ॥ ददौ कुमुदवल्लीं तां सुतामुदकपूर्वकम् ॥ संतुष्टलोकविदित-
श्रीमते कलिवैरिणे ॥५१॥ कृतोद्वाहस्सवेदांतिन्प्रतिज्ञां सफलां व्य-
धात ॥५२ ॥ आराधनानां सर्वेषां विष्णोराराधनं परम् ॥ तस्मात्प-
रतरं प्रोक्तं तदीयाराधनं नृप॥५३॥हृदि सम्यङ्निधायार्थं तमिमं भगव-
त्परः॥अष्टोत्तरसहस्रेभ्यो वैष्णवेभ्यो मुदान्वितः॥५४॥षड्रसोपेतमशनं
प्रददौ प्रतिवासरम् ॥ वस्त्रं वा भूषणं वापि यद्यदिच्छति वैष्णवः॥५५॥
तत्सर्वमदिशत्तेभ्यः सत्वरं कलिजित्तदा ॥ वैष्णवाराधनार्थाय तद्रा-
जधनमंजसा ॥ ५६ ॥ अगमद्विलयं सर्वं वेदांतिन् कलिवैरिणः ॥
वृत्तांतं चोलभूपाय तत्सर्वं कलिवैरिणः ॥५७॥ वेदांतिन् सुदृढं तस्मै
चाराः सम्यङ् न्यवेदयन् ॥ ततो दूताः समाजग्मुश्चोलराजेन
चोदिताः ॥ ५८ ॥ तद्धनाहरणार्थाय परकालांतिकं जवात् ॥
दूतान्समागतान्दृष्ट्वा परकालः स तांस्तदा ॥ ५९ ॥ धनं
दास्यामि तत्सर्वमित्युक्त्वापूजयत्परम् ॥ ६० ॥ दद्यामेव निशामुखे
परादिने मध्याह्नसूर्यास्तयोः पश्चादग्रज गम्यतामवसरो नैवास्तिमे
सांप्रतम् ॥ इत्युक्त्वा मृदुभाषणैर्बहुविधं सामाजदूतान्कनैर्निर्विघ्नं प्र-

तिवासरं कुशलतश्चक्रे तदीयार्चनम् ॥ ६१ ॥ एवं दिनेषु कतिषु गतेषु तदनंतरम् ॥ द्रव्यार्थं राजदूतास्ते रुरुधुः कलिवैरिणम् ॥ ६२ ॥ ततः संजातकोपेन परकालेन भर्त्सिताः ॥ तत्कृत्यं चोलभूपाय भटाः सम्यङ् न्यवेदयन् ॥ ६३ ॥ तेन वाक्येन संक्रुद्धः पदाहत इवोरगः॥ चोलराजो महातेजाः किंकरान् षट्सहस्रकम् ॥ ६४ ॥ ग्रहणे परकालस्य लब्धलक्ष्यानयोजयत् ॥ स्वावतारस्थलस्याथ दक्षिणे क्रोशमात्रतः ॥ ६५ ॥ कमलानगरे रम्ये परकालो महायशाः ॥ तदीयाराधनं तत्र नित्यमव्याहतं महत् ॥ ६६ ॥ चक्रे कुमुदवल्ल्यर्थं तल्लोकविदितं किल ॥ तदीयसेवया नित्यं तदुच्छिष्टान्नभोजनात् ॥ ६७ ॥ तत्पादतीर्थपानेन वेदांतिन्कलिवैरिणः ॥ नित्यं ववृधिरे तस्य ज्ञानभक्त्यादयो गुणाः ॥ ६८ ॥ शुक्लपक्षे चंद्रमसः कला इव दिनेदिने ॥ ततस्तदीयकैंकर्य्यसक्तो नीलस्ततोनिशम् ॥ ६९ ॥ यथा श्रीरामकैंकर्य्ये महोत्साहो महाबलः ॥ अव्याहतगतिस्तस्थौ सर्वथा मारुतात्मजः ॥७०॥ ततः समागता दूताश्चोलराजेन चोदिताः ॥ ग्रहीतुकामास्तं नीलं कमलानगरं गताः ॥ ७१ ॥ मारुतिग्रहणार्थाय यथा रावणकिंकराः ॥ गृह्यतां वध्यतामेष ताड्यतां वध्यतामिति ॥ ७२ ॥ राजद्रव्यापहारी च राजशासनदूषकः ॥ इत्युक्त्वा परकालं तं परिवव्रुः समंततः ॥ ७३ ॥ प्रभावः परकालस्य प्रवक्तुं केन शक्यते ॥ अभूत्तस्य तदा तेषां तद्युद्धमतिमानुषम् ॥ ७४ ॥ संरक्तनयनः कोपान्महाखड्गं प्रगृह्य सः ॥ परकालोथ वेदांतिन्नेक एव महाबलम् ॥ ७५ ॥ गजयूथे महोत्साहात्प्रतस्थे मृगराडिव ॥ खड्गेन शितधारेण तत्किंकरबलं महत् ॥ ७६ ॥ क्षणमात्रेण निःशेषं निहतं कलिवैरिणा ॥ यथा हनुमता कृत्तं तद्रावणबलं महत् ॥७७॥ चोलराजेन वेदांतिन् सप्तकृत्वस्ततः परम् ॥ नीलस्य ग्रहणार्थाय पूर्ववत् प्रेषितं बलम् ॥७८॥ गजवाजिसमाकीर्णं पूर्ववत्कलिवैरिणा ॥

क्षणमात्रेण निःशेषं तत्सर्वं निहतं बलम् ॥ ७९ ॥ ततस्तत्सर्ववृत्तांतं श्रुत्वा चोलमहीपतिः ॥ चिंताशोकसमाविष्टो महाश्चर्यसमन्वितः ॥ ८० ॥ मंत्रिभिर्बहुधा सम्यङ् मन्त्रयित्वा पुनःपुनः ॥ युद्धार्थं स्वयमेवाशु तदा गंतुमियेष सः ॥ ८१ ॥ सेनानीः श्रीधरो नाम तदा चोलमहीपतिम् ॥ निवार्य तद्रणोद्योगं चतुरंगबलो महान् ॥ ८२ ॥ प्रतस्थे सहसा कर्तुं कदनं कलिवैरिणा ॥ कमलानगरे तत्र वैष्णवश्रीसमुज्ज्वले ॥ ८३ ॥ तदीयाराधनपरः परकालः समास्थितः ॥ तत्राजगाम वेदांतिन् महाबलसमन्वितः ॥ ८४ ॥ सेनानीः श्रीधरः श्रीमान् निशि निःशब्दमञ्जसा ॥ श्रीधरागमनं श्रुत्वा संतुष्टः कलिजित्तदा ॥ ८५ ॥ उच्चैःश्रवोनिभं चाश्वं चारुह्यादाय पट्टिशम् ॥ सिंहनादेन महता स तस्याभिमुखं ययौ ॥ ८६ ॥ कुत्राप्यव्याहतगतिं रामबाणमिवागतम् ॥ आवितर्क्यमहाकांतिं यथा दिव्यं सुदर्शनम् ॥८७॥ प्रवृद्धतेजसं युद्धे वायुसूनुमिवाक्षतम् ॥ असंख्येयबलं धीरं नारायणमिवापरम् ॥ ८८ ॥ गोभिर्विवर्द्धमानं तं दिवाकरमिवोदितम् ॥ व्योममार्गं समायांतं रणवीथ्यां समागतम् ॥ ८९ ॥ तं दृष्ट्वा सैनिकास्सर्वे तमांसीव पलायिताः ॥ दृष्ट्वा पलायितान्सर्वान् सेनानीः सैनिकांस्तदा ॥ ९० ॥ शांतयित्वा बहुविधैर्वाक्यैश्च समयोचितैः ॥ तदा सञ्चोदयामास तानेव कलिवैरिणे ॥ ९१ ॥ महान्तः सैनिका मेघाः सेनानीवायुचोदिताः ॥ तदा प्रच्छादयामासुः परकालदिवाकरम् ॥ ९२ ॥ तद्युद्धदर्शनौत्सुक्याद्विमानस्था नभःस्तले ॥ तदा देवगणाः सर्वे तस्थुस्तत्रैकमानसाः ॥ ९३ ॥ श्रीवैष्णवास्तदा सर्वे ह्याशीर्वादं प्रचक्रिरे ॥ राघवाय जनस्थाने खरदूषणसंगरे ॥ ॥९४॥ सीता यन्मंगलं प्रादात्तत्ते भवतु मंगलम् ॥ याऽवर्तत कृपा देव्या वैदेह्या मारुतात्मजे ॥ ९५ ॥ सा कृपा वर्ततां नित्यमेतस्मिन्कलिवैरिणि ॥ पूर्णः पुरस्तात्त्वां पातु पश्चात्ते भगवान्परः ॥ ९६ ॥ रंगे-

शो दक्षिणे भागे शौरिराडुत्तरे तथा ॥ मुखं पातु मुकुंदस्ते लोचने पद्मलोचनः ॥ ९७ ॥ दामोदरोऽव्यादुदरं वक्षः श्रीवत्सलांछनः॥बाहुं सुंदरबाहुस्ते पायाद्बुद्धिं हयाननः ॥ ९८ ॥ पादौ त्रिविक्रमः पायात्सर्वांगं पार्थसारथिः॥ चक्रं चक्रायुधेभ्यश्च शरेभ्यः शार्ङ्गमुत्तमम् ॥९९॥ खड्गेभ्यो नंदकः पातु गदा त्वां मुशलायुधात् ॥ महारवेभ्यो द्विपतां पांचजन्यं निरंतरम् ॥ १०० ॥ एवं कुमुदवल्ली सा परकालस्य भक्तितः ॥ सम्यग्दृढतरां रक्षामकरोत्प्रांजलिस्तदा ॥ १०१ ॥ कृतरक्षोऽथ देव्या च वैष्णवैः कलिजित्तदा ॥ सिंहनादं विनद्योच्चैः स सैन्ये खड्गमाददे ॥ १०२ ॥ यथा वज्रधरो वज्रं पुरा रक्षोगणे तथा ॥ परकालस्य खड्गेन केचिद्द्विच्छिन्नबाहवः ॥१०३॥केचिद्द्विच्छिन्नसर्वांगाः पतिता धरणीतले ॥ तमंतकमिवायातं दृष्ट्वा भीताः पलायिताः ॥१०४॥ परकालं महाशूरा रणं त्यक्त्वा तदानघ ॥ त्यक्तदेहासवः केचित्तस्याभिमुखमास्थिताः ॥ १०५ ॥ सेनान्यं शरणं जग्मुः केचिद्भीता रणाजिरात् ॥ अश्वा गजाश्च बहवस्तेन संचोदितास्तदा ॥ १०६ ॥ परिवव्रुश्च वेदांतिन् परकालं समंततः ॥ यत्तत्सर्वं कलिघ्नेन क्षणेनैव निपातितम् ॥ १०७ ॥ तल्लक्ष्मीधरसेनायां त्रिभागबलमंजसा ॥ रात्रिशेषेण निहतं वेदांतिन् कलिवैरिणा ॥ १०८ ॥ एकस्य बहुभिः सार्द्धं कथं युद्धमभूदिति ॥ द्रष्टुकाम इवादित्यः सहसैवोदितो महान्॥१०९॥ निहतं च बलं दृष्ट्वा हतशेषान्पलायितान् ॥ परिशेषितमात्मानमायांतमातिसत्वरम् ॥ ११० ॥ युगांते सर्वहर्त्तारं कालरुद्रमिवोदितम् ॥ खड्गपाणिं च तं दृष्ट्वा नरांतकमिवागतम्॥१११॥अतिभीतिसमायुक्तः सेनानीस्सत्वरं तदा ॥ स गजादवरुह्याश्वमारुह्यालक्षितस्तदा॥११२॥ कांदिशीको ययौ शीघ्रं तदा कुत्राप्यलक्षितः ॥ निवृत्तसंगरो धीमान्न परकालस्ततोऽनघ॥११३॥विबुधैः संस्तुतो धीरो बलारिरिव चाबभौ॥॥ देवदुंदुभिनिर्घोषः पुष्पवर्षो महानभूत् ॥ ११४ ॥ वंदिनां जयशब्देन शंखभेरीरवैः सह ॥ कमलानगरं रम्यं प्रविवेश महायशाः ॥ ११५ ॥

जितशत्रुर्यथा पूर्वं श्रीकृष्णो मथुरां पुरीम् ॥ तद्वत्कुमुदवल्ल्या-श्च पाणिस्पर्शात्तदानघ ॥ ११६ ॥ विनाशितक्षतः श्रीमान् महोत्साहो महाबलः ॥ परकालोथ वेदांतिन् खरांतक इवाबभौ ॥ ११७ ॥ अविच्छिन्नगतिः श्रीमान् कमलानगरे तदा ॥ तदीयाराधनं कुर्वन् पूर्ववत्सुखमास्थितः ॥ ११८ ॥ हतशेषास्ततः केचिद्भीता राजभटाः शनैः ॥ सर्वं तद्युद्धवैचित्र्यं चोलेंद्राय न्यवेदयन् ॥ ११९ ॥ सर्वसेनाक्षयं तच्च सेनापतिपलायनम् ॥ निशम्य मूर्छितो राजा क्वचिद्भूमौ पपात ह ॥ १२० ॥ मंत्रिभिर्बोधितः सम्यगुत्थितो भूपतिस्तदा ॥ तत्तस्य सर्वं वृत्तांतं भूयश्चारैर्निशम्य सः ॥ १२१ ॥ कोपसंरक्तनयनो ग्रहीतुं कलिवैरिणम् ॥ उद्युक्तः स्वयमेवाशु चतुरंगबलान्वितः ॥ १२२ ॥ कृतस्वस्त्ययनो विप्रैश्चोलराजो महाबलः ॥ सुमुहूर्ते महातेजाः प्रतस्थे कमलापुरीम् ॥ १२३ ॥ स राजागमनं श्रुत्वा परकालः प्रहृष्टधीः ॥ प्रगृह्य पूर्ववत्खड्गं प्रविश्य पृथिवीपतेः ॥ १२४ ॥ सेनासमुद्रमक्षोभ्यं मंदराचलवत्तदा ॥ ममंथ तद्बलं सर्वं परकालो महायशाः ॥ १२५ ॥ परकालपुरः स्थातुमक्षमाः सैनिकास्तदा ॥ चोलराजांतिकं जग्मुः सहसा तेन मर्दिताः ॥ १२६ ॥ तानालोक्य स भूपालो विनिश्चित्य महामतिः ॥ स्वयमेतेन योत्स्येहं यावद्बलपराक्रमम् ॥ १२७ ॥ हताश्वरथमातंगपदातिश्चोलभूपतिः ॥ परकालेन संगम्य चक्रे युद्धं महाद्भुतम् ॥ १२८ ॥ उभौ शस्त्रास्त्रसंघातैर्विनिघ्नंतौ परस्परम् ॥ कृतप्रतिकृतौ छत्रध्वजचापादिकर्तनैः ॥ १२९ ॥ युयुधाते महावीरौ चिरं युद्धविशारदौ ॥ ततः क्षीणबलो राजा बाणौघैः पीडितो भृशम् ॥ १३० ॥ स्थातुं तत्पुरतोऽशक्तः प्रदुद्राव पराङ्मुखः ॥ एवं पराजयं प्राप्य धनलोभाद्विनिःश्वसन् ॥ १३१ ॥ धर्मेण यावद्द्रव्यं मे त्वया देयं परांतक ॥ इदं तु धर्ममेवेति सभार्योंगीचकार सः ॥ १३२ ॥ वैष्णवाराधनार्थं हि जातः सर्वधनव्ययः ॥ केनोपायेन संगृह्य राज्ञे देयं धनं बहु ॥ १३३ ॥ एवं तस्मिंश्चिंतयति

श्रीहस्तिगिरिनायकः ॥ स्वप्ने तं समुपागम्य संस्पृशन्करपल्लवैः ॥
॥ १३४ ॥ कांचीमागच्छ दास्यामि धनं तुभ्यं महायशाः ॥ इत्युक्त्वांऽ
तर्दधे स्वामी प्रतिबुद्धः परांतकः ॥ १३५ ॥ वरदोक्तं वचो मत्वा
तथ्यमत्यंतसंभ्रमः ॥ चतुर्थदिवसे चोलमंत्रिणं वाक्यमब्रवीत् ॥
॥ १३६ ॥ कांच्यामस्मद्धनं किंचिन्निक्षिप्तं यन्मया पुरा ॥ तत्रागतश्चे-
दास्यामि युष्मद्द्रव्यं न संशयः ॥१३७॥ अमात्यः स तदाकर्ण्य राज्ञे
सर्वं निवेद्य तत् ॥ तेनानुज्ञापितो धीमान् कृतयत्नो बलान्वितः ॥
॥ १३८ ॥ परकालं समादाय कांचीपुरमगात्तदा ॥ स राजभटम-
ध्यस्थः सत्यवादी महायशाः ॥ १३९ ॥ कांचीपुरं समभ्येत्य तत्र
स्वप्नोक्तमार्गतः ॥ वेगवत्यां धनं तत्र कृतान्वेषो न लब्धवान् ॥
॥ १४० ॥ चिंताव्याकुलितोऽशेत परकालस्तदानघ ॥ महाकारु-
णिकस्तस्य प्रसन्नो वरदस्तदा ॥ १४१ ॥ तन्निक्षेपधनस्थानं स्वप्ने
विशदमब्रवीत् ॥ संतुष्टः सहसोत्थाय परकालस्ततोऽनघ ॥ १४२ ॥
तदा वेगवतीतीरे वरदोक्तप्रकारतः ॥ खनित्रेण खनित्वाशु तन्निक्षे-
पधनं बहु ॥ १४३ ॥ उद्धृत्य राज्ञे यद्द्रव्यं दातव्यं तन्निवेद्य सः ॥
धनशेषं समादाय तदीयाराधनाय च ॥ १४४ ॥ कमलानगरं शीघ्र-
माजगाम महायशाः ॥ चोलामात्यो धनं सर्वमादायात्यंतविस्मितः
॥ १४५ ॥ चोलभूपालनिकटे तन्निधाय तदा धनम् ॥ सर्वं निवेद-
यामास वृत्तांतं कलिवैरिणः ॥ १४६ ॥ प्रसन्नो देवराजोस्य प्रददौ
यद्धनं बहु ॥ इत्याप्तमंत्रिवचनं श्रुत्वा दृष्ट्वा धनं च तत् ॥ १४७ ॥
विस्मयाविष्टहृदयश्चोलभूपोऽब्रवीद्वचः ॥ न सामान्यजनो ह्येष महा-
भागवतोत्तमः ॥ १४८ ॥ महापदः सुसंप्राप्तौ दुर्योधनसभांतरे ॥
द्रौपद्याः सहसा कृष्णः कृपया चाक्षयांबरम् ॥ १४९ ॥ दत्त्वा ररक्ष
तां तत्र द्रौपदीं च यथा पुरा ॥१५०॥ तथाद्य वरदः शीघ्रं ररक्ष कलिवै-
रिणम्॥द्रौपदीमानभंगादिदोषेण कुरुसंततिः ॥१५१॥ स्वबले विद्यमा-

नेपि निःसंततिरभूत्किल ॥ तदीयावमतिस्तस्माद्दुर्जया कुलनाशिनी ॥ १६२ ॥ कर्तव्यमधुना सम्यगपराधक्षमापणम् ॥ तमानीय प्रयत्नेन सत्कृत्य कलिवैरिणम् ॥ १६३ ॥ इति निश्चित्य सहसा वेदांतिन् मंत्रिणा नृपः ॥ परकालं समादाय विविधैर्भूषणांबरैः ॥ १६४ ॥ पूजयित्वा बहुविधं राजा भक्त्या पुनःपुनः ॥ मया चाज्ञातदोषेण तेऽपराधाः कृताश्च ये ॥ १६५ ॥ ते क्षन्तव्यास्त्वया तात परकाल नमोस्तु ते ॥ इति क्षमापणं कृत्वा परिरभ्य मुहुर्मुहुः ॥ १६६ ॥ परकालं महात्मानं वेदांतिन् वैष्णवोत्तमम् ॥ तदा प्रस्थापयामास कमलानगरं प्रति ॥ १६७ ॥ अचिंतयत्ततो धीमान्वेदांतिंश्चोलभूमिपः ॥ मदर्थं परकालोऽयं त्रिरात्रं समुपोषितः ॥ १६८ ॥ तद्दोषपरिहाराय देवब्राह्मणपूजनम् ॥ कर्त्तव्यमिति निश्चित्य यद्दत्तं कलिवैरिणा ॥ स जवात्तद्धनं सर्वं देवब्राह्मणसात्तदा ॥ विधाय विज्वरः श्रीमान्मुमोद नृपसत्तमः ॥ १६९ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे परकालराजयुद्धवर्णनं नामाष्टनवतितमोऽध्यायः ॥ ९८ ॥

## एकोनशततमोऽध्यायः ।

ततोऽव्याहतसंकल्पः परकालो महायशाः ॥ चोलेंद्रपूजितः सम्यक्कमलानगरे महान् ॥ १ ॥ अविच्छिन्नगतिः कुर्वंस्तदीयाराधनं बहु ॥ स श्रीमांस्तेन वित्तेन वेदांतिन् सुखमास्थितः ॥ २ ॥ द्रव्याभावे ततो यत्नं चौर्य्यकर्मणि स व्यधात् ॥ परकालस्य तस्यासन्शिष्याः पंच तदाऽनघ ॥ ३ ॥ तेषां नामानि वक्ष्यामि वेदांतिञ्छृणु सादरम् ॥ जलोपरिगतिः कश्चिच्छायासंलीनकस्तथा ॥ ४ ॥ वृक्षाग्रारोहकः कश्चिदजितव्यवहारकः ॥ कश्चिदर्गलफूत्कारकारकश्चेति विश्रुतः ॥ ५ ॥ पत्नीसहोदरः कश्चित्परकालाभिधो महान् ॥ षडेतेऽनुचरास्तस्य बहिःप्राणा इवाभवन् ॥ ६ ॥ एतैरनुगतः सम्यक् सहितो वैष्णवैः सदा ॥ रुद्धमार्गो महारण्यमुपाश्रित्य महाबलः ॥७॥

ऊर्द्ध्वपुंड्रललाटांश्च चक्रांकितभुजान्विना ॥ गतागतानामन्येषां
तत्र मार्गे निरंतरम् ॥ ८ ॥ धनान्याहृत्य वेदांतिन्नित्यमन्याहृतं
तदा ॥ सहस्रसंख्यया चक्रे तदीयाराधनं बहु ॥ ९ ॥ शिष्या
देशांतराच्चौर्य्याद्धनान्याहृत्य भक्तितः ॥ ददुः कलिजिते सम्य-
क्तदीयाराधनाय च ॥ १० ॥ ग्रामे जनपदे चैव नगरे च
वनांतरे ॥ सर्वत्र सञ्चरन्नीलो हरिभक्तो निरंकुशः ॥ ११ ॥ स तदा
बहुशः कृत्वा चोरवृत्त्या धनार्जनम् ॥ भक्त्या संप्रेषयामास नित्यं
लक्ष्मीपुरं प्रति ॥ १२ ॥ देवी कुमुदवल्ल्याख्या वैष्णवाराधनप्रिया ॥
तदीयाराधनं नित्यं कुर्वती सा समास्थिता ॥ १३ ॥ वर्जयित्वा
वैष्णवानां सद्मानि कलिजिन्महान् ॥ ग्रामे जनपदे चैव सर्वत्र नगरेषु
च ॥ १४ ॥ चौर्याद्धनार्जनं कुर्वन् सदावर्तत भक्तितः ॥ ततः कदा-
चिद्वेदांतिन् परकालो महायशाः ॥ १५ ॥ कस्मिंश्चिदवसद्ग्रामे स
धनाहरणेच्छया ॥ वातवर्षो महानासीद्गाढांधतमसावृतः ॥ १६ ॥
अलक्षितान्योन्यगतिर्जनसंचारवर्जितः ॥ तदा बहिर्वितर्द्यां तु कस्य-
चित्सद्मनोऽनघ ॥१७॥ धनाहरणकामोसौ नीलो लीनो व्यतिष्ठत ॥
वर्षंत्यासारवर्षे तु काचिद्द्वारांतरस्थिता ॥ १८ ॥ शोधयन्ती भुक्तपात्रं
तस्थौ तमसि वै निशि॥ तस्याः प्रक्षालनरवं निशम्य कलिजित्तदा ॥
॥ १९ ॥ तस्याः करस्थितं पात्रं हठादाहृत्य दुद्रुवे ॥ तदीयभक्ति-
स्सा तस्य वर्णितुं केन शक्यते ॥ २० ॥ अस्मद्गुरुभ्यो नम इत्यवोचं-
द्वाक्यं तदा भागवतांगना सा॥ आकर्ण्य वाक्यं तदतीव संभ्रमस्तद्धे-
मपात्रं प्रमुमोच नीलः ॥ २१ ॥ पात्रं तदादाय हठात्स्वभर्त्रे वृत्तांतमे-
तद्विशदं भयार्त्ता ॥ निवेद्य तद्विस्मयसंभ्रमाभ्यां पंकावृतं पात्रम-
दर्शयत्सा ॥ २२ ॥ निशम्य पत्न्या वचनं विदित्वा धीमांस्ततस्तं
परकालमार्य्यम् ॥ स तां समुद्वीक्ष्य चुकोप हृष्टचा प्रव्याहरद्वाचमिमां
हि धीरः ॥ २३ ॥ मुग्धे महात्मा परकाल एष कैंकर्य्यहेतोः कृपया-

गतोत्र ॥ तूष्णीं स्थिता चेत्सफलं हि वित्तं स्वातंत्र्यतस्तद्विफलं ममेदम् ॥ २४ ॥ एवं सम्यग्विशोध्यार्य्यः परकालस्ततोऽनघ ॥ तदीयाराधनपरस्तस्थौ श्रीकमलापुरे ॥ २५ ॥ ततः कदाचिद्वेदांतिन्न बिल्वारण्ये चतुष्कविः ॥ स पांथागमनाकांक्षी रुद्धमार्गो व्यतिष्ठत ॥ २६ ॥ नालक्ष्यत जनः कश्चित्तदा यामत्रयावधि ॥ प्रव्याकुलांतः-करणस्तेनासीत्कलिंजित्तदा ॥२७॥ वृक्षाग्रारोहणं वीक्ष्य शिष्यं वाक्य-मथाब्रवीत् ॥ कश्चिज्जनोस्मिन्दिवसे पथि नैवागतः किल ॥ २८ ॥ अद्य यामत्रयं जातं वैष्णवाः क्षुधयान्विताः ॥ वृक्षाग्रशाखामारुह्य-विलोकय दिशो दश ॥२९॥ अंगीकृत्य वचस्तस्य स तदेवाकरोत्तदा॥ तदा सर्वेश्वरः श्रीमान् भगवान् रंगनायकः ॥ ३० ॥ कृपयाचिंतय-च्छीघ्रं भक्तानुग्रहहेतवे ॥ करोत्याराधनं सम्यग्वैष्णवानां निरंतरम् ॥ ॥३१॥परकालोऽनया वृत्त्या महाविश्वासपूर्वकम् ॥ एष एवात्र चरमपु-रुषार्थो ह्यनुत्तमः ॥३२॥ एतत्पुण्यफलं प्राप्यं हेतुनाद्य मया महान् ॥ तस्मात्संरक्षितव्योयं परकालो विशेषतः॥ ३३ ॥इति संचिन्त्य मनसा वेदांतिन् रंगराट् तदा ॥ सम्यग्गृह्णाति वै चोरो यद्वेषेण समागतम् ॥ ३४॥ यद्धनं प्राप्यं नान्यत्र कदाचिदपि वांछति ॥ धनेन तेन वेषे-ण तूर्णं तत्राजगाम सः ॥ ३५ ॥ साक्षान्नारायणो देवः कृत्वा मर्त्य-मयीं तनुम् ॥ मग्नानुद्धरते लोकान् कारुण्याच्छास्त्रपाणिना ॥ ३६ ॥ इत्युक्तेन प्रकारेण वेदांतिन् रंगराट् तदा ॥ कृपया ब्राह्मणो भूत्वा कृ-तोद्वाह इव श्रिया ॥ ३७ ॥ विराजमानः सर्वांगभूषितोऽखिलभूषणैः॥ लक्ष्मीसमेतो बहुभिर्धनैश्च सह संयुतः ॥ ३८ ॥ अनेकाभरणैर्वस्त्रै-र्मित्रैः परिजनैस्तदा ॥ शिबिकायां समारोप्य लक्ष्मीं श्रीरंगनायिकीम् ॥ ३९ ॥ तुरंगवरमारुह्य स स्वयं रत्नभूषितम् ॥ आदरादाययौ शीघ्रं परकालांतिकं तदा ॥ ४० ॥ वृक्षाग्रस्थः समालोक्य स दिशो दश सत्वरम् ॥ अट्टहासं विधायोच्चैः परकालमथाब्रवीत् ॥ ४१ ॥ भो भो-

ऽव्याहतसंकल्प सन्नद्धो भव सत्वरम् ॥ मार्गरोधं भटैः सार्द्धं विधायायुधपाणिभिः ॥ ४२ ॥ कश्चिद्द्विजः कृतोद्वाहः सभार्यः संपदान्वितः ॥ महत्याशु समायाति शिबिकाश्वसमन्वितः ॥ ४३ ॥ अद्य प्रतीचीदिग्भागात्साक्षाद्रंगेश्वरो यथा ॥ तस्य तद्वचनं श्रुत्वा संतुष्टः स चतुष्कविः ॥ ४४ ॥ तस्थौ गृहीतसन्नाहः सायुधः सपरिच्छदः ॥ ततो विलोक्य संतुष्टो रंगेशं द्विजरूपिणम् ॥ ४५ ॥ निरुध्य स्वभटैः सार्द्धं धनान्याहृत्य सत्वरम् ॥ तस्य सर्वाणि सहसा भूषणान्यंबराणि च ॥ ४६ ॥ पादांगुलीयमात्रं तु तस्य संशेषितं तदा ॥ तस्या ग्रहीतुं तच्चाशु सपादांगुलिमग्रहीत् ॥ ४७ ॥ यत्नेन महता चापि ग्रहीतुं नाशकत्तदा ॥ दन्तैरुत्पाट्य सहसा तद्ग्रहीतुं मनो दधौ ॥४८॥ द्विजरूपधरो रंगी समुद्वीक्ष्य वचोऽब्रवीत् ॥ ममैतद्धनसर्वस्वं हृतं सम्यक् त्वया किल ॥४९॥ पादांगुलीयमात्रं मे न चैतत्किं विसृज्यते ॥ तस्य तद्वचनं श्रुत्वा कलिजित्तमथाब्रवीत् ॥ ५० ॥ तत्ते विसृष्टमात्रेण तस्मात्किं ते प्रयोजनम्॥वैष्णवार्थं हि किं न स्याद्भुक्तिपात्रार्थमेव तत्॥५१॥ एकस्य दिवसस्यापि तत्कथं हि विसृज्यताम् ॥ इत्युक्त्वा दशनैः शीघ्रं तज्जहांगुलीयकम् ॥ ग्रहीतुं परकालस्तत्र समर्थोऽभवत्तदा ॥ ५२ ॥ तमालोक्याथ रंगेशः सस्मितं वाक्यमब्रवीत् ॥ कलिहन् किं भवान्न वत्स तदीयाराधनप्रियः ॥ ५३ ॥ कलिजिन्नाम तेनाभून्नीलस्य विदितं भुवि ॥ यत्तद्धनमिदं सर्वं तच्छैलमिव चास्थितम् ॥ ५४ ॥ समर्था नाभवन्सर्वे भटाश्चालयितुं ततः ॥ स चैतत्कलिजिद्वीक्ष्य कोपसंरक्तलोचनः ॥ ५५ ॥ खड्गेन भीषयन् विप्ररूपिणं तमथाब्रवीत् ॥ मंत्रवादस्त्वया विप्र कृतः सम्यङ् ममाहितः ॥५६॥ संप्रत्यसांप्रतं ह्येतत्तन्मंत्रमुपसंहर ॥ स तद्वचनमाकर्ण्य रंगेशस्तमथाब्रवीत् ॥ ५७ ॥ तन्मंत्रं तव वक्ष्यामि विनीतः शृणु सांप्रतम् ॥ तथेति प्रतिगृह्याशु तदा रंगेश्वरांतिकम् ॥ ५८ ॥ दत्तकर्णो विनीतात्मा

प्रांजलिः पुरतः स्थितः ॥ स तदा दक्षिणे कर्णे रंगेशः कृपया हरिः ॥ ५९ ॥ वेदांतिन् परकालस्य तन्मंत्रं प्रददौ रहः ॥ ऋचो यजूंषि सामानि तथैवाथर्वणानि च ॥ ६० ॥ सर्वमष्टाक्षरांतःस्थं यच्चान्यदपि वाङ्मयम् ॥ सर्ववेदांतसारार्थः संसारार्णवतारकः ॥ ६१ ॥ गतिरष्टाक्षरो नृणामपुनर्भवकांक्षिणाम् ॥ ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ॥ ६२ ॥ कैवल्यं भगवंतं च मंत्रोयं साधयिष्यति ॥ मंत्राणां परमो मंत्रो गुह्यानां गुह्यमुत्तमम् ॥ ६३ ॥ पवित्रं च पवित्राणां मूलमंत्रं सनातनम् ॥ एतादृशप्रभावेण सहितं मंत्रमुत्तमम् ॥ ६४ ॥ अष्टाक्षरं चोपदिश्य तन्मंत्रप्रतिपादितम् ॥ यद्दिव्यात्मस्वरूपं च हरिस्तस्मै न्यवेदयत् ॥ ६५ ॥ लक्ष्म्या सह हृषीकेशो देव्या कारुण्यरूपया ॥ सुपर्णपृष्ठे प्रबभौ श्यामः पीतांबरो हरिः ॥ ६६ ॥ कांचनस्य गिरेः शृंगे सतडित्तोयदो यथा ॥ एवं हि भगवान् रंगनायकः कृपया तदा ॥ ६७ ॥ प्रत्यक्षमगमत्तस्य परकालस्य सादरम् ॥ तदा भगवतस्तस्य दिव्यमंगलविग्रहम्॥६८॥ अनुभूयानुभूयाथ सम्यक् साक्षात्कृतं मुहुः॥तत्स्वरूपगुणांश्चैव तद्विभूत्यादिकांश्च तान् ॥ ६९ ॥ लक्ष्मीपुरुषकारेण ज्ञानेन स चतुष्कविः॥ आनंदार्णवनिर्मग्नः स बभूव हरिप्रियः ॥ ७० ॥ ब्रह्मानुभवसंजातप्रेमातिशयसंपदः॥न ममुस्तत्र वेदांतिन् परकालतनौ तदा॥७१॥ परकालगिरेर्थजलौघाः षड्विधा भुवि ॥ निर्ययुः प्राणिसस्यानि प्लावयंतोनिशं स्थिताः ॥ ७२ ॥ पुरा चतुर्णां वेदानामर्थमुद्धृत्य चोत्तमम् ॥ शठारिर्लोकरक्षार्थं प्रबंधांश्चतुरः क्रमात् ॥ ७३ ॥ कृत्वा द्राविडरूपेण जगत्सर्वमपालयत् ॥ वेदांगानां तथा षण्णामर्थमुद्धृत्य चोत्तमम् ॥ ७४॥ षट् प्रबंधांस्ततः कृत्वा जगत्सर्वमपालयत् ॥ आशु चित्रं च मधुरं विस्तरं च चतुर्विधम् ॥७५॥ कवनं क्रियते येन स चतुष्कविरीरितः ॥ दिव्यप्रबंधाः षट् तत्र गाथाः श्रीकलिजित्कृताः ॥ ७६ ॥ त्रिशतं

चैकसाहस्रमेकषष्टिः प्रकीर्तिताः॥वेदांतिस्तत्र गाथानां शतकेनाभिसंस्तुतः ७७ ॥ रंगेशो भगवान्साक्षात्परकालेन चानघ ॥ परकालस्य संतुष्टः स्तोत्रेणानेन रंगराट् ॥ ७८ ॥ आलोक्य शीतलदृशा भगवान्कलिवैरिणम् ॥ व्याजहार शुभं वाक्यं मंदस्मितमुखो हरिः ॥ ७९ ॥ परितुष्टोस्मि भद्रं ते स्तोत्रेणानेन बालक ॥ त्वया मदीयकैंकर्य्यं तत्सम्यग् बहुशः कृतम् ॥ ८० ॥ सांप्रतं तेन सुप्रीतः प्रसन्नोभवमंजसा ॥ वरं वरय भद्रं ते वरदोहं समागतः ॥ ८१ ॥ कलिहन् संप्रयच्छामि सर्वाभीष्टानि सांप्रतम् ॥ रंगेशस्य वचः श्रुत्वा संतुष्टः कलिजित्तदा ॥ ॥८२॥प्रांजलिः प्रणतो भूत्वा व्याजहार वचः शुभम् ॥ दर्शनादेव भवतः कृतार्थोहं न संशयः ॥ ८३ ॥ वांछितव्यो वरः को मे त्वद्दासस्याद्य विद्यते ॥ तथापि मे वरं देहि भक्ताय करुणार्णव ॥ ८४ ॥ बिल्वारण्ये तथा चात्र परिरंभपुरे वरे ॥ सान्निध्यं कुरु देवेश भक्तानां वरदः सदा ॥ ८५ ॥ सर्वाभीष्टप्रदो यस्मादेष मेस्तु वरः परः ॥ अंगीकृत्य वचस्तस्य रंगेशो भक्तवत्सलः ॥ ८६ ॥ भक्तसंरक्षणेद्यापि तत्रैव परिदृश्यते ॥ तदाप्रभृति वेदांतिन् हरिणांगीकृतं भुवि ॥ ८७ ॥ परकालकृतं ह्येतद्धनापहरणं भुवि ॥ सर्वस्थलेषु सर्वत्र चोत्सवेष्वश्ववाहने ॥ ८८ ॥ अतः सर्वेश्वरः सर्वस्थलेषु च महोत्सवे ॥ तुरंगवाहदिवसे कृपया भक्तवत्सलः ॥ ८९ ॥ सर्वस्वदानमद्यापि करोति कलिवैरिणे ॥ एतच्चोरोत्सवं चित्रं ये सेवंते नरोत्तमाः ॥ ९० ॥ तेषां रंगेश्वरः शीघ्रं सुप्रसन्नो भविष्यति ॥ अथ रंगेश्वरः श्रीमान् परकालं वचोब्रवीत ॥ ९१ ॥ श्रीरंगे मम कैंकर्य्यं विधेहि कलिहन् परम् ॥ प्राकारगोपुरे धान्यनिलयं च महानसम् ॥ ९२ ॥ युष्मत्प्रियतमं वत्स तत्सर्वं यद्यदेव तत् ॥ परकालोथ रंगेशादिव्याज्ञां शिरसा वहन् ॥ ९३ ॥ संतुष्टः संपरिक्रम्य प्रांजलिः पुरतः स्थितः ॥ आयाहि रंगमित्युक्त्वा कलिघ्नं करुणाकरः ॥ ९४ ॥ तत्रैवांतर्दधे

श्रीमान् वेदांतिन् रंगराट् तदा ॥ परकालस्ततो धीमान् स शिष्यैः सहितस्तदा ॥ ९५ ॥ कमलानगरं प्राप्य सम्यगाराध्य वैष्णवान् ॥ देव्यै कुमुदवल्ल्यै च वृत्तांतं च निवेद्य तत् ॥ ९६ ॥ तयानुज्ञापितः श्रीमान् वेदांतिन्स चतुष्कविः ॥ श्रीरंगेशस्य कैंकर्य्यं कर्तुंकामो महायशाः ॥ प्रतस्थे रंगनगरं स्वजनैः सह सादरम् ॥ ९७ ॥ श्रीरंगमासाद्य फणींद्रतल्पे शयानमाद्यं रघुवंशनाथम् ॥ रंगेश्वरं तं परभक्तियुक्तो प्रणम्य लेभे परमं प्रहर्षम् ॥ ९८ ॥ दृष्ट्वा भक्तवरोथ सुंदरवरं देवं च रंगेश्वरं नत्वा मोदमवाप्य भक्तिसहितस्तीर्थप्रसादादिकान् ॥ स्वीकृत्याशुतरं सुनम्रशिरसा ताभ्यामनुज्ञापितस्तत्कैंकर्य्यविधौ दधार हृदये चिंतां परां धीवरः ॥ ९९ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे परकालस्य रंगेश्वरप्रत्यक्षदर्शनं नामैकोनशततमोऽध्यायः ॥ ९९ ॥

## शततमोऽध्यायः ।

रंगं समालोक्य बुधांतरंगं भक्त्या प्रहृष्टः सचतुष्कवींद्रः ॥ सर्वं हि कैंकर्य्यमुदारकीर्तिर्विधातुमैच्छद्विविधप्रकारैः ॥ १ ॥ रहःप्रदेशं समुपेत्य सर्वाञ्छिष्यान समादाय चतुष्कवींद्रः ॥ रंगेशकैंकर्य्यरतैकचित्तो जगाद वाक्यं स तदाप्तवर्गान् ॥ २ ॥ अमात्या भो महात्मानः शुभं शृणुत मे वचः ॥ श्रीरंगराजकैंकर्य्यं कर्तव्यं महदद्य नः ॥ ३ ॥ द्रव्यसंपादने यत्नः सावधानैर्विधीयताम् ॥ प्रगृह्य परकालस्य वचनं वैष्णवोत्तमाः ॥४॥ ऊचुः प्रहृष्टा वेदांतिन्नमात्यास्तं महौजसम्॥उपायं संप्रवक्ष्यामः श्रूयतां भगवत्पराः ॥५॥ हैरण्यबौद्धप्रतिमा विद्यते नागपत्तने ॥ काचिन्महति सा लब्धा यद्यस्माकं हि सांप्रतम् ॥ ६ ॥ श्रीरंगराजकैंकर्य्ये चिंता काचिन्न विद्यते ॥ गतो यदि भवांस्तत्र त्वदधीना भविष्यति ॥ ७ ॥ सा बौद्धप्रतिमा शीघ्रं स्वामिंस्तत्र न संशयः ॥ मंत्रिवाक्यं तदाकर्ण्य संतुष्टः स चतुष्कविः ॥ ८ ॥ प्रति-

माहरणार्थाय प्रतस्थे नागपत्तनम् ॥ स नागपत्तनं प्राप्य सौंदरारण्य-
नायकम् ॥ ९ ॥ नत्वा सुन्दरराजाख्यं सारपुष्करिणीतटे ॥ तेनानु-
ज्ञापितो धीमान् ययौ बौद्धालयं प्रति ॥ १० ॥ अतिस्निग्धं महोच्चुंगं
महागोपुरसंयुतम् ॥ कुत्राप्यलक्षितद्वारं वीक्ष्य बौद्धालयं महान् ॥
॥ ११ ॥ सम्यगेतत्समालोच्य प्रतिमाहरणोद्यतः ॥ न वेद ग्रहणोपायं
कथंचिदपि यत्नतः ॥ १२ ॥ तत्रत्यैः पुरुषैर्ज्ञात्वा तन्निर्मातृकशि-
ल्पिनः ॥ वेपाणनामकं द्वीपं नावमारुह्य तं ययौ ॥ १३ ॥ स तद्वीपं
समासाद्य सानुगो वणिगिंद्रवत् ॥ परकालोथ वेदांतिञ्छिल्पिना
निपुणो महान् ॥ १४ ॥ बौद्धालयकृता तेन सख्यं चक्रे महत्तरम् ॥
सर्वाञ्जनान् वशीकृत्य गिरा मधुरया तदा ॥ १५ ॥ बहिश्चरप्राण-
समस्स आसीत्कंसस्य चाक्रूर इवांतरंगः ॥ कार्यार्थमेतत्कालिजिन्न
शिल्पिवरस्य तस्यात्र तदा महात्मा ॥ १६ ॥ एवं स शिल्पिना तेन
परकालो महामतिः ॥ सख्यं कृत्वाथ वेदान्तिन् कश्चित्कालमवर्त्तत
॥ १७ ॥ ततः कदाचिद्विविधाः कथाः श्रोत्रसुखावहाः ॥ उक्त्वा स
शिल्पिनं सम्यग्रंजयित्वा मुहुर्मुहुः॥ १८॥तन्मध्ये निपुणं वाक्यमब्रवी-
च्छिल्पिनं प्रति ॥ तक्षार्य भोः सुखं चैव किमप्यद्भुतवत्तरम् ॥ १९ ॥
वचनं न किमु प्राप्तं भवतः श्रोत्रवर्त्मनि ॥ सखे बौद्धालयः श्रीमान्
यो महान्नागपत्तने ॥ २० ॥ महोन्नतो महाचित्रो विद्यते किल सांप्र-
तम् ॥ न मानुषकृतो ह्येष साक्षादेवेन निर्मितः ॥२१॥ तदमानुषकर्मैव
भूम्यामन्यादृशं किल ॥ महत्तच्छिल्पिनैपुण्यं वर्णितुं केन शक्यते
॥ २२ ॥ आसीद्बौद्धालये काचिद्धिरण्यप्रतिमा शुभा ॥ केनाप्य-
ज्ञातवृत्तेन प्रतिमा सा हिरण्मयी ॥ २३ ॥ केनचित्सावधानेन चोरे-
णापहृता बत ॥ परकालोनुतापं च तमित्युक्त्वा ययौ तदा ॥ २४ ॥
निशम्य तद्वचस्तस्य स तदालयकृत्तदा ॥ स्वरेण किंकिमित्युच्चैः प्रवद-
न्सहसोत्थितः ॥ २५ ॥ कोपेन महता युक्तो दंडाहत इवोरगः ॥

परकालं समालोक्य तक्षा वाचमथाब्रवीत् ॥ २६ ॥ परकाल महाभाग किमुक्तं भवता बत ॥ भूयस्तद्ब्रूहि विशदं यद्विचित्रमनुत्तमम् ॥ २७ ॥ एतच्चित्रमिवाभाति प्रतिमाहरणं मम ॥ परकालोऽथ निपुणस्तस्य वाक्यं निशम्य तत् ॥ २८ ॥ चातुर्येणैव चतुरस्तस्मै यत्तन्न्यवेदयत् ॥ प्रतिमाहरणं श्रुत्वा दुःखितो विस्मितश्च सः॥२९॥ रोषेण दीर्घनिःश्वासं कुर्वन्वाचमुवाच ह ॥ मर्मज्ञेनैव महता शृंगमुत्पाटितं बत ॥ ३० ॥ रंभाबाहुल्यदेशोयं यतस्तेनैव सा हृता ॥ परकालस्तदाकर्ण्य वेदांतिन् निपुणो महान् ॥ ३१ ॥ शिल्पिनं स्ववशीकृत्य परिपप्रच्छ तच्छनैः ॥ ३२ ॥ तथ्यं मत्वा तदा तक्षा प्रतिमाहरणं ततः ॥ तन्निर्माणप्रकारं च तस्मै सम्यङ् न्यवेदयत् ॥ ३३ ॥ सव्यापसव्यचक्राभ्यां शिखरं तत्समन्वितम् ॥ रंभास्तंभेन संरुध्य तच्चक्रभ्रमणं शनैः ॥ ३४ ॥ उद्धर्तव्यं च यत्नेन महता शिखरं महत् ॥ तत्सर्वमाबिलद्वारं शिखरं शिल्पिनस्तदा ॥ ३५ ॥ ज्ञात्वा प्रहृष्टः स तदा करस्थांताममन्यत ॥ बौद्धदोषेण सा नष्टा प्रतिमा तव किं ततः ॥ ३६ ॥ सखे त्वत्सदृशः शिल्पी भूम्यामिह न विद्यते ॥ इत्येवं बहुशः सम्यक् श्लाघयित्वा पुनः पुनः ॥ ३७ ॥ तेनानुज्ञापितो धीमान् प्रपेदे स्वनिकेतनम् ॥ अथ रात्र्यां व्यतीतायां सानुगः स चतुष्कविः ॥ ३८ ॥ वेपाणनामकद्वीपान्निर्ययौ नागपत्तनम् ॥ तदा प्रतस्थे क्रमुकवणिगत्यंतवित्तवान् ॥ ३९ ॥ कश्चिदादाय संपूर्णक्रमुकान्नागपत्तनम् ॥ सख्यं कृत्वा तेन सार्द्धं वणिजा स चतुष्कविः ॥ ४० ॥ आरुरोहाशु तन्नावं वेदांतिन्सानुगस्तदा ॥ कथाभिरभिरामाभिश्चातुर्यवचनैस्तथा ॥ ४१ ॥ तदा सर्वो जनस्तेन क्षणेनैव वशीकृतः ॥ परकालस्ततो धीमांश्चतुरोचिंतयत्तदा॥ ४२ ॥ अयं च नौवणिक्छ्रेष्ठो धनाढ्यो मत्सखोऽधुना॥ रक्षितव्यः प्रयत्नेन मत्कर्मनिरतः सदा ॥ ४३ ॥ श्रीरङ्गेश्वरकैंकर्ये

प्राप्तमेतद्वनं यदि ॥ कृतार्थोऽसौ तरीवैश्यो भविष्यति न संश-
यः ॥ ४४ ॥ इत्यालोच्य स वेदांतिन्नेकं क्रमुकमंजसा ॥
आदाय द्विदलं कृत्वा तत्रार्द्धक्रमुकं तदा ॥ ४५ ॥ दर्शयित्वाथ
सर्वान्स वणिजश्चैव सादरम् ॥ मयार्द्धक्रमुको नावि नि क्षिप्तो भोः
सखेधुना ॥ ४६ ॥ इत्यर्द्धं क्रमुकं तत्र चतुरः क्षिप्तवांस्तदा ॥ ततस्तं
तु तरीवैश्यं नीलो वाचमुवाच सः॥४७॥मयार्द्धक्रमुको नावि नि क्षिप्तः
किल सांप्रतम्॥प्राप्स्यतीयं यदा नौका शुभात्तीरं सुपुष्कलम् ॥४८॥
नावोऽर्द्धक्रमुकं शीघ्रं तदा दास्यामि निश्चयम् ॥ इत्यद्य पात्रिकां शीघ्रं
लिखित्वा देहि भोः सखे ॥ ४९ ॥ तच्छ्रुत्वा स वणिक् प्राह परकालं
शुचिस्मितः ॥ किमर्थं पत्रिकालेखस्तीरमेष्यति नौर्यदा ॥ यावन्मात्रा-
भिलाषस्ते तावन्मात्रं प्रगृह्यताम् ॥ ५० ॥ द्वित्राणि क्रमुकाणां तु सह-
स्राण्ययुतानि हि ॥ ५१ ॥ वेदांतिन्परकालेन बहुशः प्रार्थितोऽभवत्॥
तद्वाक्यामृतपानेन मत्तो मंदविचारणः ॥ ५२ ॥ स सम्यग्लेखयि-
त्वाथ पत्रारूढां सुपात्रिकाम् ॥ सर्वेषां पश्यतां तत्र प्रददौ कलिवैरिणे
॥ ५३ ॥ आससादाथ नौः शीघ्रं नागपत्तनरोधसि ॥ व्यवहारेण
जित्वा तं वणिजं स चतुष्कविः ॥ ५४ ॥ नावोऽर्द्धक्रमुकान्सम्य-
[illegible] भगवत्परः ॥ तान्वणिजेथ विक्रीय कैंकर्यार्थं स रंगिणः ॥
॥ ५५ ॥ प्रतिमाहरणार्थाय प्रयतोभूत्तदानघ ॥ ततो निशीथसमये
स्वांतरंगभटैर्युतः ॥ ५६ ॥ स तत्साधनसामग्रीसहितः सत्वरं वशी ॥
उपरिष्टात्समारुह्य तदा बौद्धालयस्य वै ॥५७॥ उन्मूल्य तच्च शिखरं
सुकरोपायतो वशी॥ अपश्यदंतः प्रतिमां परकालो हिरण्मयीम्॥५८॥
अखंडदीपमध्यस्थां मंत्रमूर्तिमिवापराम् ॥ दृष्ट्वा प्रहृष्टः स तदा ग्रहणे
कृतनिश्चयः ॥५९॥ प्रतिमाहरणार्थाय गाथामेकां जगाद सः॥ गाथार्थं
संप्रवक्ष्यामि श्रूयतां श्लोकरूपतः ॥ ६० ॥ एषा कर्तुमलं हि भूरिशि-
लया कांस्येन वै दारुणा ताम्रेण त्रपुणाथ वा च रजसा रौप्येण सा

स्यान्न किम् ॥ बौद्धार्चाल्पतमेयमस्य महतः स्वर्णस्य योग्या कथं बौद्धैर्व्यर्थतमा हिरण्मयकृता हा हंत मूढात्मभिः ॥ ६१ ॥ सा समाकर्ण्य वेदांतिन् गाथां तां कलिजित्कृताम् ॥ अतिभीतिसमायुक्ता चकंपे बौद्धदेवता ॥ ६२ ॥ परकालः स तां दृष्ट्वा देवतां भयमोहिताम् ॥ पत्नीसहोदरं धीरं परकालाभिधं तदा ॥ ६३ ॥ प्रतिमाहरणार्थाय चोदयामास सत्वरम् ॥ अतः संचोदितस्तेन विवेशांतः स सत्वरम् ॥ ६४ ॥ ग्रहीतुकामः प्रतिमां तदंतिकमुपागतः ॥ तस्याः संपूर्णशक्तित्वात्सा बौद्धप्रतिमानघ ॥ ६५ ॥ न तस्य परकालस्य ग्रहणं समुपागमत् ॥ स खिन्नहृदयस्तेन चतुष्कविमभाषत ॥ ६६ ॥ परिभ्रमति कोणेषु चतुर्ष्वपि समंततः ॥ कथंचिदपि यत्नेन न चैषा मद्वशं गता ॥ ६७ ॥ किं करिष्यामि भोः स्वामिन्यत्नः कश्चिद्विचार्य्यताम् ॥ तस्य तद्वचनं श्रुत्वा चतुष्कविरभाषत ॥ ६८ ॥ मूर्त्तिभंगाय तस्यास्त्वं मखे मूत्रं समुत्सृज ॥ अंगीकृत्य तथैवाशु तत्कृत्वा तां प्रगृह्य सः ॥ ६९ ॥ प्रहृष्टः परकालाय प्रददौ प्रतिमां तदा ॥ तल्लब्धामोदतस्तस्य देहः स्थूलीकृतो महान् ॥ ७० ॥ न समर्थः स निर्यातुं तत्सूक्ष्मद्वारतोनघ ॥ वेदांतिंस्तच्छिरोमात्रं तद्वाराद्बहिरागतम् ॥ ७१ ॥ कायो नैवागतस्तस्य कथंचिदपि यत्नतः ॥ परकालस्ततो धीरो नीलं वाचमुवाच सः ॥ ७२ ॥ स्वामिन्नमोघसंकल्प चतुष्कविशिखामणे ॥ विलंबं च विसृज्याद्य मद्वाक्यं शृणु सादरम् ॥ ७३ ॥ यत्नेन महता चैव संलब्धा प्रतिमाधुना ॥ तेन संजातहर्षेण देहः स्थूलीकृतो महान् ॥ ७४ ॥ सूक्ष्मं तु शिखरद्वारमेतद्धनतरं महत् ॥ निबद्धं सांप्रतं तस्मादसमर्थोभवं ततः ॥ ७५ ॥ रात्रौ यामत्रयं जातं कालोयं सुगमः किल ॥ कैंकर्य्यविघ्नो न भवेद्यथैवाशु तथा कुरु ॥ ७६ ॥ आचार्यपादपद्माभ्यां वः शपे नोत्तरं वद ॥ स तदैवाशु

वेदांतिन्परकालो विधाय च ॥ ७७ ॥ तच्छिरःप्रतिमां सम्यक्
संगृह्यात्यंतगूढतः ॥ बौद्धालयाद्विनिर्गत्य तस्मात्सानुचरस्तदा॥७८॥
अगमद्रात्रिशेषेण तेन कृष्णपुटीपुरम् ॥ जानुप्रमाणगंभीरतोयपंक-
विशोभिते ॥ ७९ ॥ कस्मिंश्चित्कर्षकक्षेत्रे निक्षिप्य प्रतिमां तदा ॥
सानुगः परकालोथ निषसाद तदंतिके ॥ ८० ॥ तिंतिणीवृक्षमा-
लोक्य तत्समीपगमब्रवीत् ॥ निद्राविरहितः सम्यक् त्वमेतां
परिपालय ॥ ८१ ॥ प्रतिमारक्षणे वृक्षं तन्निवेद्य दृढव्रतः ॥ विश्रमार्थं
तदा तत्र सुष्वाप विगतज्वरः ॥ ८२ ॥ ततः प्रभातसमये स तत्क्षेत्रा-
धिपस्तदा ॥ अंकुराहरणार्थाय तत्रैवाशु समागतः ॥ ८३ ॥ तदुद्यमं
तदालोक्य सहसा स परांतकः ॥ शप्त्वा नृपतिना सार्द्धं वारयामास
कर्षकम् ॥ ८४ ॥ ततस्तयोर्महानासीत्कलहः क्षेत्रकारणात् ॥
आकृष्य कर्षकं नीलो विवेश ग्राममञ्जसा ॥ ८५ ॥ व्यवहारं तयोर्ज्ञा-
त्वा यत्तद्ग्रामाधिकारिणः ॥ परकालं विलोक्याशु विस्मितास्तमथा-
ब्रुवन् ॥ ८६ ॥ परकालाद्य तत्क्षेत्रं भवतः कथमागतम् ॥ त्रीण्येव
व्यवहारस्य साधनानि प्रजेश्वरे ॥ ८७ ॥ भुक्तिः साक्षी च लिखितं
व्यवहारः स तैर्जितः ॥ भुक्तिर्नास्त्यद्य भवतो जानीमस्त्वां दृढं वयम्
॥ ८८ ॥ तथैव साक्षी नास्त्यद्य तस्माल्लिखितमानय ॥ एवमुक्तोथ
मध्यस्थैः परकालोऽब्रवीत्स तान् ॥ ८९ ॥ पित्रा दामोदरेणैवमिदानी-
मनुभूयते ॥ तस्मात्क्षेत्रं ममैवेदं सत्यं वच्मि न संशयः ॥ ९० ॥ एवं-
विधं विधायाशु प्रेमाणं भगवत्परः ॥ तत्क्षेत्रं स्ववशीकृत्य मुमोद
विगतज्वरः ॥ ९१ ॥ यतः कैंकर्य्यंविज्ञाय ग्रामस्था मामपीडयन् ॥
अतोत्र व्यवहारस्य जयो न स्यात्कदाचन ॥ ९२ ॥ एवं शप्त्वाथ
कोपेन सहसा स परांतकः ॥ दामोदरस्य सेवार्थं चकार मतिमान्
मतिम् ॥ ९३ ॥ तदाप्रभृति वेदांतिस्तत्र कृष्णकुटीपुरे ॥ व्यवहारज-
यस्तत्र तेनाद्यापि न दृश्यते ॥ ९४ ॥ स्नात्वा श्रवणतीर्थेथ चोर्द्ध्वपुं-

ड्रूधरस्तथा ॥ गृह्णन् बकुलपुष्पाणि वाचं बकुलमब्रवीत् ॥ ९५ ॥
शलाटुरहितो नित्यं पुष्पाण्येवात्र धारय ॥ मदाज्ञयैव बकुलभूज कृष्ण-
कुटीपुरे ॥ ९६ ॥ तदाप्रभृति वेदातिन् स तत्र बकुलद्रुमः ॥ नित्यपु-
ष्पसमायुक्तो वर्तते फलवर्जितः ॥ ९७ ॥ सूचयन्निव तत्कीर्तिं बकुलः
परिदृश्यते ॥ स तैः पुष्पैः समाराध्य तदा दामोदरं हरिम् ॥ ९८ ॥
कृतकृत्यो महातेजाः परकालो मुमोद ह ॥ निर्गत्य तस्माद्वेदांतिन्
रथ्यामभ्येत्य सत्वरम् ॥ ९९ ॥ तत्रत्यान्वैष्णवान् सर्वान्नीलो जलम-
याचत ॥ पिपासया परिश्रांतो बहुवारं परांतकः ॥ १०० ॥ तत्रस्थः
कोपि पानीयं न ददौ कलिवैरिणे ॥ अकारणविवादोयमिति भीत्या
बुधर्षभ ॥ १०१ ॥ स तदादत्तदोषेण परकालः शशाप तम् ॥
ग्रामेस्मिन्सर्वथा कूपा भवेयुर्ज्जलवर्ज्जिताः ॥ १०२ ॥ आपातालं
खनित्वापि जलं न द्रक्ष्यते ततः ॥ तत्र कृष्णकुटीराख्ये नगरेऽद्यापि
सत्तम ॥ १०३ ॥ आसायं परकालोथ तत्र स्थित्वा सहानुगैः ॥
प्रतिमां तां समादाय प्रतस्थे निशि वै रहः ॥ १०४ ॥ दामोदर-
स्तु भगवाञ्छ्रीकृष्णनगराधिपः ॥ गच्छतः परकालस्य पश्चादनु-
ययौ तदा ॥ १०५ ॥ परकालस्तमालोक्य जगाद वचनं तदा ॥
को भवानागतः कस्मात्कुत्र गच्छति सांप्रतम् ॥ १०६ ॥ मत्पृष्ठतः
समायासि किमर्थं वद तत्त्वतः ॥ परकाले वदत्येवं तदा दामोद-
रोऽब्रवीत् ॥ १०७ ॥ मार्गसंप्रेषणार्थाय भवतो निशि गच्छतः ॥
आदरादागतो नील सोहं नगरपालकः ॥ १०८ ॥ प्रहस्य तद्वचः
श्रुत्वा परकालस्ततोब्रवीत् ॥ अलमेतद्दयाधिक्यं गच्छ स्वनगरं
जवात् ॥ १०९ ॥ चोरेभ्यो निशि रक्षस्व प्रत्यहं दंडधारक ॥ मम
युष्मद्दयामात्रमलं भोः साधु गम्यताम् ॥ ११० ॥ ततः क्षणांतरे
देवः पूर्ववत्प्रत्यदृश्यत ॥ तेनैवमुक्तस्तं प्राह परकालं हरिस्तदा
॥ १११ ॥ त्वया तत्सीमापर्यंतमागमिष्याम्यहं ध्रुवम् ॥ तव संप्रे

पणार्थाय दयया निशि गच्छतः ॥ ११२ ॥ न चक्षुर्विषयं प्राप मा-
गच्छेत्यभिभाषितः ॥ पथि दामोदरस्तेन परकालेन सत्तम ॥११३॥
प्रस्थापितोपि तेनैवं द्विवारं कलिवैरिणा ॥ दामोदरस्तु सहसा पूर्व-
वत्समदृश्यत ॥ ११४ ॥ स पृष्ठतः समायांतं कालांबुदनिभाकृतिम्॥
आज्ञातिलंघिनं धीरं स तमेकाकिनं निशि ॥ ११५ ॥ विलोक्य
शंकितश्चिंतां परकालोऽगमत्तदा ॥ सत्यं वदंति मामेव चोर इत्यखि-
ला जनाः ॥ ११६ ॥ मत्तोधिकोऽयमधुना कश्चिच्चोरो महानभूत् ॥
तिमिस्तिमिंगिला यद्वत्तद्गिलस्य च तद्गिलः ॥ ११७ ॥ यत्नेन भूयसा
मेद्य लब्धैषा प्रतिमा किल ॥ वंचयत्याशु मामेष प्रतिमां हर्तुमागतः
॥ ११८ ॥ इदानीं लक्षितश्चैकस्तत्तदीयबलं कियत् ॥ मया न
लक्ष्यते तत्र वर्तते गूढचारिणः ॥ ११९ ॥ न सहायं विना रात्रौ एक
एवायमागतः ॥ अतोऽयमधुना शीघ्रं हंतव्यो नात्र संशयः
॥ १२० ॥ एवन्निश्चित्य सहसा परकालस्तदानघ ॥ आदाय
च हठान्नीलः करवालं भयंकरम् ॥ १२१ ॥ आकाशे भ्राम-
यन्हंतुं स तस्याभिमुखं ययौ ॥ खड्गहस्तं तमायांतं वीक्ष्य
दामोदरो हरिः ॥ १२२ ॥ शंखचक्रधरः श्रीमान् निश्यदृश्य-
त चंद्रवत् ॥ ततः खड्गं विसृज्योर्व्यां प्रणम्याशु परांतकः ॥१२३॥
कृतांजलिपुटो भूत्वा तुष्टाव जगदीश्वरम् ॥ स्तुत्वाथ दशगाथाभिरिदं
वचनमब्रवीत् ॥ १२४ ॥ दामोदर हृषीकेश नमस्ते भक्तवत्सल ॥ भ-
वतोऽत्रैव कैंकर्य्यं करिष्येहं न संशयः ॥१२५ ॥ को विशेषोत्र रंगेश-
कैंकर्येण ममाधुना ॥ दामोदरो निशम्यैवं परकालवचः शुभम् ॥
॥१२६॥मंदस्मित मुखः श्रीमानिदं वचनमब्रवीत्॥परकाल सुखं वत्स
रंगक्षेत्रं व्रजाधुना ॥१२७॥ तत्रैव कुरु कैंकर्य्यं रंगेशस्य यथासुखम् ॥
न प्रत्यूहस्तु भवतः कदाचिदपि विद्यते ॥१२८ ॥ तमेवमुक्त्वा भगवां-
स्तत्रैवांतर्दधे हरिः ॥ प्रहृष्टः परकालोथ तेनानुज्ञापितस्तदा ॥१२९॥

श्रीरामनगरं प्राप प्रत्यूषसमये तदा ॥ प्रणम्यापूपरंगेशं शयानं शेषभोगिनि ॥ १३० ॥ तदपूपप्रसादं च भक्त्या सत्कृत्य सत्वरम् ॥ जगाम सहसा रंगं संतुष्टः स परांतकः ॥१३१॥ शतशश्छेदयित्वाशु तां बौद्धप्रतिमां तदा॥ कनिष्ठिकां विना तत्र सर्वं निरवशेषयत् ॥ श्रीरंगेशस्य कैंकर्य्यं वेदांतिन्स परांतकः ॥ १३२ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे परकालेन बौद्धप्रतिमाहरणं नाम शततमोऽध्यायः ॥१००॥

---

## एकोत्तरशततमोऽध्यायः ।

परं प्रहृष्टस्तद्वाक्यं श्रुत्वास्मद्यतिरादरात् ॥ भट्टार्य्यं प्रणिपत्योर्व्यां भूयः पप्रच्छ तां कथाम् ॥ १ ॥ बौद्धदेवेप्यपहृते रंगिकैंकर्य्यहेतवे ॥ ततः क्रोधवशात्क्रुद्धाः किमकुर्वत सौगताः ॥ २ ॥ श्रुत्वा माधवदासस्य वचस्तद्भट्टदेशिकः ॥ वेदांतिनेऽखिलां तस्मै कथामकथयत्तदा ॥ ३ ॥ तस्यां रात्र्यां व्यतीतायामर्चकः सहसोत्थितः ॥४॥ कृतनित्यक्रियः सम्यग् बौद्धदेवालयं ययौ ॥ बिलद्वारात्समागत्य सोंतःसोपानवर्त्मना ॥ यत्तच्छिखरमारुह्य तत्कबंधं ददर्श सः ॥५॥ भतोयं विस्मितस्तेन प्रतिमाभावतस्तदा ॥ दुःखितोखिलबंधुभ्यस्तेभ्यस्तत्सम्यगब्रवीत् ॥ ६ ॥ प्रतिमाहरणं श्रुत्वा सर्वे विस्मितमानसाः॥ बौद्धालयं प्रविश्याशु तत्कबंधं विलोक्य च ॥७॥ विस्मयं परमं जग्मुस्तदभावान्महाव्यथाम् ॥ तच्चोरहरणार्थाय निर्ययुर्दंडधारिणः ॥ ८ ॥ समादिष्टास्ततश्चाराश्चतुराः ककुभो दश ॥ प्रतस्थिरे ततः केचित्सौगतेंद्रेण चोदिताः ॥ ९ ॥ तदा पश्चिममार्गेण ज्ञातचोराश्रयोनघ ॥ सम्यगन्वेषयंतोत्र सौगतास्तत्रतत्र ते ॥१०॥ निशीथे ह्यगमन्सर्वे तच्छ्रीकृष्णकुटीपुरम् ॥ स कर्षकः समालोक्य प्रमाणं कलिजित्कृतम् ॥ ११ ॥ विस्मितो दुःखितोत्यंतं विवेश स्वगृहं तदा ॥ क्षेत्रापहरणाज्जातचिंताव्याकुलितेंद्रियः ॥ १२ ॥ कर्षको निशि शेते-

स्म ध्यायन्दामोदरं हरिम्॥ स्वप्नं विलोक्य सहसा स्वक्षेत्रपातिकारणम् ॥ १३ ॥ संप्रहृष्टोत्थितः प्रातस्तत्क्षेत्रांतिकमागमत् ॥ तदागत्यांजसा तत्र सौगताः कर्षकात्ततः॥१४॥ कलिजित्सर्ववृत्तांतं यत्तत्सम्यङ् निशम्य च ॥ बहुभिः कारणैरेतैर्निश्चित्य कलिवैरिणम् ॥ १५ ॥ बौद्धदेवापहर्त्तारं सुदृढं कृतसत्वराः ॥ तत्पंथानं समाश्रित्य ययुस्तत्पृष्ठतोनघ ॥ १६ ॥ ततः श्रीरंगनगरे तं नीलं वीक्ष्य विस्मिताः ॥ बौद्धाः संजगृहुः सर्वे कोपसंरक्तलोचनाः ॥ १७ ॥ ततोभूत्परकालस्य समरः सौगतस्य च ॥ श्रीरंगपालकस्याग्रे तावुभौ समुपागतौ ॥१८॥ चोरतापादिता सम्यक् सौगतैः कलिवैरिणि ॥ तयोर्विवादमामूलं सदस्यास्तन्निशम्य ते ॥१९॥ बौद्धेभ्यः प्रतिमां दातुं विदधुर्निश्चयं तदा॥ तदंगीकृत्य कलिजित्सदस्यानां वचः शुभम् ॥ २० ॥ दास्याम्यंगुष्ठमन्यूनं वत्सरांते न संशयः ॥ लिखित्वा पत्रिकामेवं सौगतेभ्यो ददौ किल॥२१॥ पत्रिकां तां समादाय ते नागनगरं गताः॥परकालोऽथ तत्सर्वं छेदयित्वाशु विग्रहम् ॥ २२ ॥ श्रीरंगेश्वरकैंकर्य्यं भक्त्या निरवशेषयत् ॥ अथ संवत्सरे पूर्णे सौगताः पुनरागमन् ॥ २३ ॥ श्रीरंगनगरं सर्वे प्रतिमाहरणोद्यताः ॥ कनिष्ठिकांगुलिं वस्त्रैस्तस्याः संवेष्टितां ध्रुवम् ॥ २४ ॥ स्थापयामास बौद्धाग्रे सहसा स परांतकः ॥ प्रतिमादर्शने प्रेम्णा सहसा सौगतास्तदा ॥ २५ ॥ हृतेषु वस्त्रखंडेषु तस्याः संवेष्टितेष्वलम्॥ कनिष्ठिकांगुलिस्तस्याः प्रतिमाया विलोकिता ॥ २६ ॥ कुपिताः सौगतास्तेन परकालमथाब्रुवन् ॥ एका ह्येवांगुलिस्तस्या भवताद्य प्रदर्शिता ॥ २७ ॥ मदीयां प्रतिमां शीघ्रं देहि तेपहृतां तदा ॥ तद्बौद्धवचनं श्रुत्वा परकालोब्रवीत्तदा ॥२८॥ कनिष्ठिकांगुलेस्तस्या न्यूनता नास्ति वै यथा ॥ तथैवांगुलिमात्रं वो दास्यामीति मयोदितम् ॥ २९ ॥ पत्रिकार्थक्रमेणैव दत्ता चैवांगुलिर्मया ॥ तस्यैव न्यूनता न स्यत्तथाद्याशु विचार्य्यताम् ॥ ३० ॥ पत्रिकार्थं तदा बुद्ध्वा सौगता मूढबुद्धयः ॥ वृथा

विरोधं विदधुस्तत्सार्द्धं कलिवैरिणा ॥ ३१ ॥ रंगाधिकारिणः सर्वे तद्विरोधनिवारणे ॥ न समर्था भवंति स्म कलिजिद्बौद्धयोस्तदा ॥ ॥ ३२ ॥ न्यायात्कलिजितं जेतुमशक्ताः सौगतास्तदा ॥ यत्नेन भूयसादाय चोलराजांतिकं ययुः ॥ ३३ ॥ व्यवहारं तयोर्ज्ञात्वा चोलभूपस्तदाधिपः ॥ पत्रिकार्थं च संप्रेक्ष्य तं नीलं स रहोब्रवीत् ॥ ३४ ॥ कलिजित्सर्वधर्मज्ञ मा धर्मविमुखो भव ॥ बौद्धानां भवता धर्मप्रतिमापहृता किल ॥ ३५ ॥ न परांतक तत्रार्थे संशयो विद्यते किल ॥ तदा दुर्बुद्धयो बौद्धा जगृहुः पत्रिकामिमाम् ॥ ३६ ॥ भवंतं व्यवहारेण जेतुं शक्तिर्न विद्यते ॥ प्रतिमां दयया देहि सौगतेभ्यो हिरण्मयीम् ॥३७॥ भूपस्य तद्वचः श्रुत्वा परकालस्तमब्रवीत् ॥ बौद्धविध्वंसनं कार्य्यं भवता पृथिवीपते ॥३८॥ बौद्धा वेदविरुद्धाद्धि धर्मात्त्याज्याः सुदूरतः ॥ अतो हि दंडयास्ते मूढा राजन्नास्त्यत्र संशयः ॥ ३९ ॥ श्रीरंगेश्वरकैंकर्य्यसात्कृता प्रतिमैव सा ॥ भूयस्त्वापादनीयं मे तदर्थं तन्महद्धनम् ॥ ४० ॥ तस्माद्विधेहि चोलेंद्र कांदिशीकानिमाञ्जवात् ॥ तदंगीकृत्य वचनं परकालस्य संमतम् ॥ ४१ ॥ सौगतांस्तान्समाहूय भूयस्तत्पत्रिकास्थितम् ॥ अर्थं बुद्ध्वाथ चोलेंद्रः सदस्यैवाक्यमब्रवीत् ॥ ४२ ॥ धर्मं न वच्मि भवतां पत्रिकैव प्रवक्ष्यति ॥ सदस्याः पत्रिकाभावे धर्मं वक्ष्यंति वै किल ॥ ४३ ॥ इत्येवं तद्वचः श्रुत्वा सौगताः क्षीणतेजसः ॥ कनिष्ठिकांगुलीमात्रं समादाय ययुस्तदा ॥ ॥ ४४ ॥ संतुष्टः परकालोथ स तदा जितसौगतः ॥ विवेश रंगनगरं रंगिकैंकर्यकारणात् ॥ ४५ ॥ प्राकारं विदधत्यार्यै तुर्यं रंगे परांतके ॥ मध्ये सद्माभवत्तस्य भक्तांघ्रिरजसोनघ ॥ ४६ ॥ गण्यंते पांसवो भूमेर्गण्यंते दिवि तारकाः ॥ न गण्यंते विधात्रापि ब्रह्मसंस्थापने फलम् ॥४७॥ अर्थं हृदि विधायैवं स नीलस्तस्यः सद्मनः ॥ अविरोधं तदा भक्त्या प्राकारं विदधे तदा ॥ ४८ ॥ परकालाभिध-

स्तत्र मण्डपोद्यापि दृश्यते ॥ ईशान्यां चन्द्रसरसः श्रीरंगे सुमहांस्ततः ॥ ४९ ॥ महाभागवतानां तु विरोधो न भवेद्यथा ॥ तथा भगवतत-स्तस्य कैंकर्य्यं विदधे सदा ॥ ५० ॥ एवं श्रीरंगराजस्य कैंकर्य्यम-खिलं महत् ॥ विधाय कृतकृत्योथ मुमोद स परांतकः ॥ ५१ ॥ शिल्पिनः परकालं ते वेतनार्थमपीडयन् ॥ प्रदातुकामः सर्वेभ्यः शिल्पिभ्यः परमं पदम् ॥ ५२ ॥ ततः सञ्चिन्त्य भगवान् परकालो-ऽब्रवीत् स तान् ॥ श्वेताद्रौ पूर्वमेवात्र निक्षिप्तं सुमहद्धनम् ॥ ५३ ॥ तत्रागताश्चेदास्यामि भवतां वेतनं हि तत् ॥ तदंगीकृत्य वचनं परका-लस्य शिल्पिनः ॥ ५४ ॥ ययुस्तेनाथ ते सर्वे गंतुं श्वेताचलं प्रति ॥ अथासौ नाविकान्सर्वान्समाहूय परांतकः ॥५५॥ जिघांसुः शिल्पि-कारांस्ताञ्जगाद वचनं तदा ॥ हन्मि कारूंस्तदर्थं मे सहायं कर्तुमर्हथ ॥ ५६ ॥ यथा मज्जंति ते सर्वे कावेर्याः सलिले तदा ॥ कार्य्यं तद्वो प्रमादेन दास्यामि बहुलं धनम् ॥ ५७ ॥ एतत्कार्य्यं महापापहेतुकं नावमन्यथ ॥ पुरा भगवतैवोक्तं सूक्ष्मधर्ममनुत्तमम् ॥ ५८ ॥ मन्नि-मित्तमिदं पापमपि पुण्याय कल्पते ॥ मामनादृत्य पुण्यं वा अपि पापाय कल्पते॥५९॥ इत्यूचिवान् स ते सर्वे नाविका धनकांक्षिणः ॥ तथा कुर्म इति प्रोचुर्नीलस्तुष्टोथ तेन च ॥ ६० ॥ शिल्पिकारांस्तदा-सर्वान्समादायांजसा ततः ॥ नीलः श्वेताचलं प्राप नावा तीर्त्वा मरुद्वृधाम् ॥ ६१ ॥ प्रणम्य भक्त्या देवेशं श्वेताद्रौ पद्मलोचनम् ॥ तीर्थं प्रसादं स्वीकृत्य दापयित्वार्चकैस्तदा ॥ ६२ ॥ सर्वेभ्यः शिल्पकारे-भ्यस्तत्सर्वं कृपया तदा ॥ श्रीरंगेश्वरकैंकर्य्यवेतनं यदनुत्तमम् ॥६३॥ सम्यक्तेभ्यो धनं दत्त्वा तदनंतमनूपमम् ॥ भूयः श्रीरंगनगरं तानादायां-जसा ययौ ॥६४॥ शिल्पिकारांस्तदा सर्वान् नावमारोप्य यत्नतः॥पारं मरुद्वृधानद्याः प्रातुकामोभवन्महान्॥६५॥पूर्णां शिल्पिसमूहेन नावं ते नाविकास्तदा ॥ मज्जयामासुरुदकप्रवाहे सरितः शुभे ॥६६॥ अथ केन प्रकारेण परकालश्च नाविकैः ॥ तीरं दक्षिणमासाद्य कावेर्य्या रंगधा-

मनि ॥ ६७ ॥ तद्बंधुभ्योखिलं वृत्तं प्राहिणोद्द्रुतमंजसा ॥ वागुराभि-
र्विशोध्याशु कारूनुद्धृत्य तान्मृतान् ॥६८॥ स तेषामग्निसंस्कारं कर्तु-
कामो महायशाः ॥ पादप्रमाण मेदिन्याः क्रीत्वा निष्केण सत्तमः ॥
॥६९॥रंगेशात्परकालोथ भूमिं जग्राह सत्वरम् ॥ तद्वृत्तांत्तं समाकर्ण्य
कावेर्यां नौनिमज्जनम् ॥ ७० ॥ दुःखिताः सहसागत्य ज्ञातयस्ते तदं-
तिकम् ॥ परकालकृतं ज्ञात्वा सहसा तमपीडयन् ॥७१॥ ततः संपी-
डितो धीमांस्तदा तत्प्रेतबंधुभिः ॥ तानुवाच महाप्राज्ञो नीलो मधुरया
गिरा ॥ ७२ ॥ सर्वं कालकृतं ह्येतत्कालादन्यन्न विद्यते ॥ न कालः
परिहर्तव्यो ब्रह्माद्यैरपि दैवतैः ॥ ७३ ॥ येन वा जायते जंतुस्तस्मिन्नेव
प्रलीयते ॥ ये चैवमेतज्जानंति ते प्राज्ञा भुवि पंडिताः॥७४॥नाहं कार-
णमेतस्य कार्य्यस्यैतद्विचार्य्यताम् ॥ एवमुक्तास्ततस्तेन सर्वे ते शि-
ल्पिबांधवाः ॥ ७५ ॥ दातव्यं यद्धनं विद्वन्नस्माकं वेतनोचितम् ॥
दीयतां न्यायमार्गेण परकाल महामते ॥ ७६ ॥ इति तैरुक्तमार्गेण
किंचित्संजातविस्मयः॥पूर्वमेव मया दत्तं यद्देयं वेतनं धनम् ॥ ७७ ॥
श्वेतद्वीप इति क्षेत्रे पद्मलोचनसाक्षिकम् ॥ संशयो यदि युष्माकमस्मि-
न्नर्थे प्रजायते ॥ ७८ ॥ परासुभिः शिल्पिभिस्तैर्वाचयिष्यामि सांप्र-
तम् ॥ सत्यं लोके यदि भवेत्तेन सर्वं प्रकाश्यते ॥७९॥ तस्य तद्वचनं
श्रुत्वा ते सर्वे शिल्पिबांधवाः ॥ तथैव क्रियतां शीघ्रमुदर्कफलमुत्तमम्
॥ ८० ॥ इत्युक्ता शिल्पकारास्ते परासूनां यथाविधि ॥ चक्रुर्वै चा-
ग्निसंस्कारं सर्वं तत्र सबांधवाः ॥ ८१ ॥ चतुष्कविस्ततः स्नात्वा ध्या-
त्वा मनसि रंगिणम् ॥ ऊर्द्ध्वबाहुर्विष्णुपदं पश्यन्पंचत्वमीयुषः ॥८२॥
आजुहाव स ताञ्छिल्पिन्मुक्तान्संत्यक्तकर्मणः ॥ तदा तेन समाहूताः
कृतांजलिपुटाश्च ते ॥ ८३ ॥ नभस्तले विमानस्थाः सर्वेषामेव पश्य-
ताम्॥ ऊचुः कृतार्थाः कलिहन् भवतः कृपयाधुना ॥८४॥ अनादिमा-
यसंसारान्मुक्ता मोक्षपदं गताः ॥ इति विज्ञाप्य ते सर्वे स्वबंधुनवलो-

क्य च ॥ ८५ ॥ सर्वेषां शृण्वतां वाक्यं जगदुर्मधुराक्षरम् ॥ किमेतेन रसज्ञेन कलहः क्रियतेधुना ॥ ८६ ॥ यद्देयं वेतनार्थं नो धनं तत्कालिवैरिणा ॥ सहस्राधिकसंख्यातं दत्तं तेन महात्मना ॥ ८७ ॥ न चैतत्सदृशो लोके हरिकैंकर्य्यकारिणाम् ॥ असौ भागवतश्रेष्ठो हरिभक्तिपरायणः ॥ ८८ ॥ सेव्यतां सम्यगेवायं यदि यूयं सुखेच्छवः ॥ इत्युक्त्वा सहसा प्राप्तास्ते सर्वे परमं पदम् ॥ ८९ ॥ तदद्भुततमं दृष्ट्वा श्रीरंगपुरवासिनः ॥ संजातविस्मयास्सर्वे मिलितास्तत्र संघशः ॥ ९० ॥ पूजयामासुरत्यंतं परकालं महामुनिम् ॥ मेनिरे शुद्धमनसं नीलं भागवतोत्तमम् ॥ ९१ ॥ यथा हताः शिल्पिनस्ते नावा नीलेन संघशः ॥ श्रीरंगस्योत्तरे भागे कावेर्य्यां पुण्यसंकुले ॥ ९२ ॥ माघस्नानं विदुरतस्तदाप्रभृति पंडिताः ॥ श्रीरंगनगरं प्राप्य पूजितो वैष्णवोत्तमैः ॥ ९३ ॥ कैंकर्य्यं रंगराजाय विदधे विहितं बहु ॥ प्राकारद्वितयं चक्रे सर्वालंकारशोभितम् ॥ ९४ ॥ सर्वोपकरणैर्युक्तं समुन्नतकवाटकम् ॥ गोपुराणि ततोकार्षीच्छृंगवंति महांति च ॥ ९५ ॥ मंडपान्सुदृढाकारान्दिव्यस्तंभोपशोभितान् ॥ विचित्रान्कल्पनाकल्पैर्नानावर्णमनोरमैः ॥ ९६ ॥ शोभमानैः सदा कांत्या रंगेशप्रीतिकारकैः ॥ चतुःशालानि रम्याणि वेदिकालंकृतानि च ॥ ९७ ॥ परकालाभिधं सम्यग्विदधे मंडपं महत् ॥ चंद्रपुष्करिणीतीरे स श्रीमान् भाति मंडपः ॥ ९८ ॥ धान्यागारं ततश्चक्रे सर्वलक्षणशोभितम् ॥ कुसूलानि विशालानि विदधे पंच बुद्धिमान् ॥ ९९ ॥ घृतकूपद्वयं सम्यग्गंभीरं चैव विस्तृतम् ॥ एवमादीनि सर्वाणि कैंकर्य्याण्यकरोत्तदा ॥ १०० ॥ श्रीरंगोत्तरभागस्य कावेर्य्या दक्षिणस्य च ॥ मध्यभू रंगराजेन विक्रीता कलिवैरिणे ॥ १०१ ॥ सा भूमिः परकालेन श्रीरंगपुरवासिनाम् ॥ आर्य्यभट्टाहृतेन्येषां निर्दिष्टा पितृकाननम् ॥ १०२ ॥ पत्रिकायां तदा तस्यां सर्वै रंगाधिकारिभिः ॥ हस्ताक्षराणि लिखितान्यार्य्यभट्टेन वैरिणा ॥ १०३ ॥

रंगवायव्यदिग्भागे कृत्वा कांचनमंडपम् ॥ वासंतस्मिन्समकरोत्प-
रकालो महायशाः ॥ १०४ ॥ परकालस्ततः कृत्यं यत्कर्तव्यं समाप्य
तत् ॥ रंगेशसन्निधिं प्राप्य प्रणम्य च पुनःपुनः ॥ १०५ ॥ वि-
ज्ञापयामास तदा कृतांजलिपुटः सुधीः ॥ भगवन्नंगनिलय विज्ञापि-
तमभूत ॥ १०६ ॥ सन्निधौ तद्धि भगवन् सर्वं निर्यापितं मया ॥
शिलारूपं तदेतन्मे न समंजसमच्युत॥१०७॥पूर्वं मया यदि भवेत्कां-
क्षितं कांचनद्युति ॥ तादृक्संभाविता श्रीमन् कृपया तव सर्वतः ॥
॥ १०८ ॥ भागधेयविहीनेन मया दुर्मेधसा विभो ॥ तथा न चिंति-
तमिति क्षुभ्यते तरसा मनः ॥ १०९ ॥ मादृशानां हि जंतूनां तादृ-
ग्भाग्यं सुदुर्लभम् ॥ एवं वदति सान्निध्ये परकाले महात्मनि ॥
॥ ११० ॥ कृपयाविष्टहृदयो रंगेशस्तमथाब्रवीत् ॥ यत्कृतं भवता
सम्यक् तत्सुवर्णमयं महत् ॥ १११ ॥ मोहैशस्त्वं वृथा विद्वन्
प्रत्ययो न भवेद्यदि ॥ दृश्यतां तच्च सर्वस्वं सादरादिति शार्ङ्गिणि ॥
॥ ११२ ॥ वदत्येवं तदापश्यत्परकालो महामुनिः ॥ सकवाटं ससो-
पानं सप्राकारं समंडपम् ॥ ११३ ॥ सर्वं हिरण्मयं दिव्यं कृपया
रंगशायिनः ॥ ततः स्वस्थमना भूत्वा संतोषेण प्रसन्नधीः ॥ ११४ ॥
उवास सुचिरं कालं श्रीरंगेश्वरसन्निधौ ॥ ११५ ॥ इति कलिजिद-
धीशः स्वोचितं नित्यकृत्यं निरुपममनुकुर्वन्सर्वमत्यादरेण ॥ प्रक-
टितहरिभक्तिर्ज्ञानवैराग्यसिंधुर्मुदमगमदुदारः स्वामिकैंकर्य्यधीरः ॥
॥ ११६ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे शिल्पकारमोक्ष-
कथनं नामैकाधिकशततमोऽध्यायः ॥ १०१ ॥

## द्व्यधिकशततमोऽध्यायः ।

अस्मद्यतिः स भट्टार्य्यं भूयः पप्रच्छ तं गुरुम् ॥ अष्टोत्तरशतेष्वत्र
दिव्यदेशेषु भूतले ॥ १ ॥ कासारयोगिप्रमुखगीतेषु च रमापतेः ॥
दिव्यदेशाः कलिजिता संस्तुताः कतिसंख्यकाः ॥ २ ॥ कियतीभिश्च

गाथाभिः को देशः समभिष्टुतः ॥ तत्सर्वं विशदं ब्रूहि शिष्याय गुरुपुंगव ॥ ३ ॥ शमंधरः कदा कुत्र शैवो नीलेन निर्जितः ॥ वादं किमर्थमभवत्तयोर्विबुधसिंहयोः ॥ ४ ॥ तत्सर्वं विशदं ब्रूहि कृपया भट्टदेशिक ॥ तस्य तद्वचनं श्रुत्वा भट्टार्य्यस्तमथाब्रवीत् ॥ ५ ॥ पुरा कदाचिद्वेदांतिन् परकालो महायशाः ॥ चरित्वा निखिलान्देशान् जितविद्वद्गणो महान् ॥ ६ ॥ त्रिविक्रमपुरं प्राप स्वेच्छया चोलमंडले ॥ त्रिविक्रमपुरप्राच्यां तत्र ब्रह्मपुरं महत् ॥ ७ ॥ महद्विराजते तत्र शैवस्थानं तथानघ ॥ तस्मिन्काले जितारातिः कश्चिच्छैवः शमंधरः ॥ ८ ॥ विद्यया विमतान्सर्वान्निर्जित्यात्र पुरेनघ ॥ स महानप्रतिद्वंद्वो जयत्यव्याहतोच्छ्रयः ॥ ९ ॥ यदृच्छया गतस्तत्र परकालस्तदानघ ॥ गच्छतः परकालस्य महाराजपथे तदा ॥ १० ॥ महाकाहलिकोत्पन्नः कलिजित्कीर्तिसूचकः ॥ परवादिमनोभिदन्नश्रावि सुमहान्रवः ॥ ११ ॥ परकालः समायाति वादिमत्तेभकेसरी ॥ कविराण्मुकुटन्यस्तवामपादसरोरुहः ॥ १२ ॥ चतुष्कवीन्द्रः सकलसमयध्वांतभास्करः ॥ शमंधरच्छात्रजनास्तन्निशम्य तदा रवम् ॥ १३ ॥ केचिन्न सेहिरे दुष्टा यथा सिंहरवं द्विपाः ॥ परकालं विलोक्याशु ते तमूचुरशंकिताः ॥ १४ ॥ परकाल तवेदानीं प्रभावोयं कथं घटेत् ॥ जितविद्वद्गणे धीरे विद्यमाने शमंधरे ॥ १५ ॥ यद्यस्माकं गुरुः शास्त्रवादेन भवता जितः ॥ प्रभावोयं तदा नील संप्रत्यापद्यते तव ॥ १६ ॥ अंगीकृत्य वचस्तेषां शैवानां स चतुष्कविः ॥ जेतुं शमंधरं शीघ्रं तदंतिकमुपागमत् ॥ १७ ॥ ततस्तयोर्द्वयोश्चैव विवादः कवने ह्यभूत् ॥ भगवद्विग्रहाभावात्कवने कलिवैरिणः ॥ १८ ॥ वेदांतिन्नोदभूद्बुद्धिस्तदा सर्वार्थवेदिनः ॥ वीरपाषंडभूयिष्ठः स देशस्तेन कारितः ॥ १९ ॥ यतः शमंधरेणैवं भगवद्द्वेषिणा तदा ॥ विष्णवर्चाविग्रहस्तत्र न कुत्रापि विलोकितः ॥ २० ॥ परपाषंडभूयिष्ठे देशे तेन विचिन्वता ॥

विष्णवर्चाविग्रहं सम्यग्बहुधा कलिवैरिणा ॥ २१ ॥ यथार्कतरुमध्य-
स्थतुलसीवत्तदानघ ॥ जरठा वैष्णवी काचिद्विद्युल्लेखेव भास्वरा ॥
॥२२॥महागाढांधतमसि कालमेघेप्यदृश्यत ॥ तां प्रणम्य वचः शी-
घ्रमुवाच स परांतकः॥२३॥मातस्तवांतिकेदानीं विष्णवर्चा वर्तते यदि॥
क्षणमात्रं प्रदायाशु मह्यमादरतोनघे ॥२४॥ भूयो गृहाण मातस्त्वं तव
दास्यामि तं हरिम् ॥ अंगीकृत्य वचस्तस्य परकालस्य वैष्णवी॥२५॥
श्रीकृष्णविग्रहं तस्मै सहसा सादिशत्तदा ॥ भगवद्दर्शनाज्ज्ञातकवनः स
परांतकः ॥२६॥ तदा शमंधराभ्याशं वादार्थमगमज्जवात् ॥ शमंधरं क-
वितया निर्जित्य स परांतकः॥२७॥अशोभताप्रतिद्वंद्वः कलाभिश्चंद्रमा
इव ॥ शमंधरोपि सन्तुष्टः परकालस्य विद्यया ॥ २८ ॥ वेदांतिन्वि-
स्मितोत्यंतं व्याजहार वचः शुभम् ॥ आशु चित्रं च मधुरं विस्तारं
च चतुष्टयम् ॥ २९ ॥ नीलैतत्कविचातुर्य्यं तवैव भुवि विद्यते ॥
चतुष्कवींद्रनामैतदपूर्वं सुचिरं तव ॥ ३० ॥ न दृष्टपूर्वो लोकेस्मि-
न्वादृशः कविराण्मया॥ परकाल यथाकामं विचर त्वं निरंकुशः ॥३१॥
संश्लाघ्य बहुशश्चैवं परकालं शमंधरः ॥ पूजयित्वा यथान्यायं मुदा
प्रास्थापयत्तदा ॥ ३२ ॥ तेन संप्रेषितः सम्यक् परकालो महायशाः॥
भूयस्त्रिविक्रमपुरं संप्राप्य सहसा तदा ॥ ३३ ॥ त्रिविक्रमं प्रतिष्ठाप्य
पूर्ववत्कृष्णमव्ययम् ॥ त्रिविक्रमपुरे तत्र बहुभिर्वैष्णवोत्तमैः ॥ ३४ ॥
अभंगुरविभूतिस्तु यथा तस्य भवेत्तथा ॥ मंगलाशासनं कृत्वा स तदा
श्रीपरांतकः॥३५॥कृतकृत्यो महातेजाः परं हर्षमवाप्तवान् ॥ विष्णुस्थ-
लानां सर्वेषां स्थिरं कर्तुं निरंकुशः॥३६॥ हेमाद्रौ परिधिर्नाम विष्णु-
स्थानं विराजते ॥ तत्रत्यो भगवान्विष्णुर्महान्परिधिनायकः ॥३७॥
नीलेन दशभिः पद्यैः संस्तुतोद्यापि दृश्यते ॥ वेदांतिन्परकालोथ
तस्मान्निर्गत्य बुद्धिमान् ॥ ३८ ॥ आजगाम महातेजाः पुण्यं बदरि-
काश्रमम् ॥ नारायणं नमस्कृत्य बदरीकाननस्थितम् ॥ ३९ ॥ हरिं
विंशतिगाथाभिरस्तौषीत्स परांतकः ॥ शालग्रामं ततो गत्वा शालग्रा-

मथुराधिपम् ॥ ४० ॥ स्तोत्रयामास गाथाभिर्दशभिर्हरिमव्ययम् ॥
ततोथ नैमिषारण्यं संप्राप्य विनयोज्वलः ॥४१॥ अस्तौषीद्दशगाथा-
भिर्नैमिषे हरिमव्ययम् ॥ अयोध्यामगमद्धीमानयोध्यारघुनन्दनम्
॥४२॥ यथाशक्ति स्तुतं कृत्वा मथुरामगमत्तदा ॥ मथुरायां बालकृष्णं
नत्वा संस्तुत्य भक्तितः॥४३॥ नन्दव्रजमवाप्याथ वेदांतिन्स परांतकः॥
वृंदावने नन्दसूनुं स्तुतं समकरोद्धरिम् ॥ ४४॥ अहोबलमवापाथ वेदां-
तिन्स चतुष्कविः॥अहोबले गारुडाद्रौ हिरण्यासुरमर्दनम्॥४५॥संस्तु-
त्य दशगाथाभिर्नृसिंहममितौजसम् ॥ तस्मान्निर्गत्य सहसा वेंकटाचल-
मभ्यगात् ॥ ४६ ॥ श्रीवेंकटाचलं गत्वा तं साक्षाच्छेषरूपिणम् ॥
पर्वतारोहणं धीमानकृत्वा भगवत्परः ॥ ४७ ॥ स्नात्वाथ कापिले
तीर्थे तत्र स्थित्वा परांतकः ॥ श्रीवेंकटेश्वरं नत्वा श्रीनिवासं जगत्प-
तिम् ॥ ४८ ॥ संस्तुत्य दिव्यगाथाभिश्चत्वारिंशद्भिरादरात् ॥ तस्मा-
न्निर्गत्य सहसा वीक्षारण्यमथाविशत् ॥ ४९ ॥ वीक्षारण्ये किंगृहाख्ये
नगरे वीरराघवम् ॥ स्तुत्वा तं दशगाथाभिः कंचित्कालमुवास सः ॥
॥५०॥ कांचीपुरीमवापाथ सहसा स परांतकः ॥ स तत्राष्टभुजं स्तुत्वा
दशगाथाभिरादरात् ॥ ५१ ॥ परमेशपुरं प्राप्य वैकुंठेश्वरमव्ययम् ॥
तथैव दशगाथाभिः स्तोत्रयामास केशवम् ॥ ५२ ॥ पश्चिमे हस्ति-
शैलस्य मूले तं नृहरिं स्थितम् ॥ स्तुत्वा परांतकः श्रीमान् कांच्यां
कमललोचनम् ॥ ५३ ॥ कामासिक्यां नृसिंहं च स्तोत्रयामास भक्ति-
तः ॥ यथोक्तकारिणं नत्वा त्रिविक्रममथोन्नतम् ॥ ५४ ॥ पांडवानां
तथा दूतं स्तुतं चक्रे परांतकः ॥ एकांबरालये ज्योत्स्नाचंद्रखंडेश्वरं ह-
रिम् ॥ ५५ ॥ कामाक्षीनिलये तत्र कृष्णं चोराभिधं च तम् ॥ तथो-
रगगृहे कृष्णमुरगालयनायकम् ॥ ५६ ॥ मेघालयाभिधं विष्णुं तत्र
मेघगृहे हरिम् ॥ विष्णुं तोयगृहे कांच्यां स्तुत्वा तोयगृहाधिपम्॥५७॥
कांच्यां ग्रामगृहे विष्णुं तत्र ग्रामगृहाधिपम् ॥ एवमन्यान्हरीन्स्तु-
त्वा ययौ गृध्रसरोवरम् ॥ ५८ ॥ श्रीगृध्रसरसस्तीरे भांतं विजयराघ-

त्रम् ॥ स्तुत्वा परांतकः श्रीमान्प्रपेदे घटिकाचलम् ॥५९॥ घटिकाद्रौ नृसिंहं च स्तुत्वामृतफलाभिधम् ॥ ततः कैरविणीतीरं ययौ बृन्दावने तदा ॥ ६० ॥ तं पार्थसारथिं स्तुत्वा नृसिंहं रंगनायकम् ॥ गजेंद्रवरदं चैव राघवं स परांतकः ॥६१॥ पंचैतान्दशगाथाभिस्तोताचलमथाविशत ॥ तोताद्रौ तुंगशयनं रंगेशं स चतुष्कविः ॥६२॥ अस्तौषीद्दशगाथाभिः कल्याणनगरं ययौ ॥ कल्याणसरसि स्नात्वा वीक्ष्य कल्याणनायकम् ॥ ६३ ॥ दशगाथाभिरस्तौषीद्देवं वाराहरूपिणम् ॥ महाबलिपुरं प्राप्य पुंडरीकसरोवरे ॥ ६४ ॥ स्नात्वा विंशतिगाथाभिरस्तौषीत्स परांतकः ॥ महाबलिं बलिपुरे भूमिशायिनमीश्वरम् ॥ ६५ ॥ ततोहींद्रगिरिं प्राप्य ह्यहींद्रनगरे हरिम् ॥ दशगाथाभिरस्तौषीत्स नीलो देवनायकम् ॥ ६६ ॥ ततो गोपपुरं प्राप्य दशगाथाभिरीश्वरम् ॥ त्रिविक्रममथास्तौषीद्गोपपुर्यां तु गोपतिम् ॥ ६७ ॥ चित्रकूटं ततः प्राप्य पद्यैर्विंशतिभिस्तदा ॥ स्तुत्वा गोविंदराजं तं चोलदेशं ततो ययौ ॥ ६८ ॥ त्रिविक्रमपुरे तत्र त्रिविक्रममथोन्नतम् ॥ संस्तुत्य दशगाथाभिः परिरंभपुरं ययौ ॥ ६९ ॥ परिरंभपुरे श्रीशं श्रीसुंदरवरस्य च ॥ त्रिंशत्पद्यैः स्तुतिं कृत्वा ययौ नागपुरं ततः ॥ एकादशस्थलान्येव तत्र नागपुरे वरे ॥ ७० ॥ नंदादीप घटप्रवर्त्तकमहाकारुण्यरक्तांबरं श्रीनारायणपूरुषोत्तमपतिश्रीरत्नकूटाधिपैः ॥ वैकुंठेश्वरमाधवौ च कमलानाथं च गोपीपतिं नौम्येकादश नागपुर्य्यधिपतीन्सार्द्धं कलिध्वंसिना ॥ ७१ ॥ एवं श्लोकोक्तमार्गेण तत्र चैकादशानघ ॥ प्रत्येकं दशगाथाभिर्वेदांतिन्कलिवैरिणा ॥ ७२ ॥ संस्तुता हरयस्तत्र सर्वे दिव्यस्थलाधिपाः ॥ ततः शुक्रपुरे रामः पद्यैर्दशभिरीडितः ॥ ७३ ॥ भूतस्थानं तदा प्राप परकालो महायशाः ॥ संस्तुत्य दशगाथाभिर्भूतस्थाने तु शार्ङ्गिणम् ॥ ७४ ॥ रामं तु दृढधन्वानं संगमग्राममभ्यगात् ॥ असंगं संगम-

ग्रामे संस्तुत्य हरिमव्ययम् ॥ ७५ ॥ स सम्यग्दशगाथाभिः श्वेताचलमथाविशत् ॥ संस्तुत्य दशगाथाभिः श्वेताद्रौ पद्मलोचनम् ॥ ७६ ॥ ततः श्रीरंगनगरं संप्राप्य स परांतकः ॥ पंचाशद्भिश्च गाथाभिरस्तौषीद्रंगनायकम् ॥ ७७ ॥ ततः श्रीधामनगरं संप्राप्य स चतुष्कविः ॥ श्रीमंतं रंगनाथं च गाथाभिर्दशभिस्तथा ॥ ७८ ॥ स्तुत्वा नंदिपुरं प्राप नंदिनोथदिदृक्षया ॥ नन्दिनाथं जगन्नाथं संस्तुत्य हरिमादरात् ॥७९॥ स सम्यग्दशगाथाभिराकाशनगरं ययौ ॥ लवणाभावतातस्य चाकाशनगरे हरेः ॥ ८० ॥ त्रिंशत्पद्यैः स्तुतिं चक्रे वेदांतिन्स चतुष्कविः ॥ रथपातस्थलं प्राप देवराजदिदृक्षया ॥ ८१ ॥ संस्तुत्य दशगाथाभिश्चत्वारिंशद्भिरादरात् ॥ देवराजं ततो भेजे नीलो व्याघ्रपुरे तदा ॥ ८२ ॥ संस्तुत्य दशगाथाभिर्महाबाहुं जगत्पतिम् ॥ श्रीकृष्णमंगलक्षेत्रं प्रपेदे प्रेमपूर्वकम् ॥ ॥ ८३ ॥ संस्तुत्य दशगाथाभिस्तत्र श्रीभक्तवत्सलम् ॥ तत्रत्यैः कतिभिः पद्यैरस्तौषीद्भक्तवत्सलम् ॥८४॥ श्रीनिवासपुरेशं च ह्यस्मन्मातृपतिं हरिम् ॥ तच्छ्रीनिवासनगरं विद्यते तोंडमंडले ॥८५॥ तत्रार्द्धयोजने विद्वन्महीसारस्य चोत्तरे ॥ ततः कृष्णपुरं प्राप शौरिराजदिदृक्षया ॥ ८६ ॥ संस्तुत्य दशगाथाभिः शौरिराजं महौजसम् ॥ चतुष्कविरवापाथ ततः कृष्णकुटीपुरम् ॥ ८७ ॥ संस्तुत्य दशगाथाभिर्दामोदरमरिंदमम् ॥ तन्नागपत्तनं प्राप सुंदरारण्यकानने ॥ ८८ ॥ स्तुत्वा सुंदरराजं तं पद्यैर्दशभिरादरात् ॥ ततोवशिष्टान्निखिलान् दिव्यदेशान् प्रणम्य च ॥ ८९ ॥ एकया गाथया द्वाभ्यां स्तुत्वा तिसृभिरेव च ॥ परकालो महातेजाः कृतार्थोभूत्तदानघ ॥ ९० ॥ शिरःशंखपुरं चैव तथेंदुनगरं महत् ॥ आदित्यनगरं चैव श्रीमत्कृष्णकपिस्थलम् ॥ ९१ ॥ नृसिंहतंजानगरं खंडनग्राममेव च ॥ निचुलानगरं चैव श्रीखंडनपुरं महत् ॥ ९२ ॥ अथ प्रतस्थे कालिजित्पांडयमंडल-

मंजसा ॥ अत्रापि दर्भशयनं पुल्लग्रामे पुरातनम् ॥ ९३ ॥ शयानं दर्भशय्यायां राघवं चामितौजसम् ॥ स्तुत्वा विंशतिभिः पद्यैर्जगन्नाथं पुरातनम् ॥ ९४ ॥ कुरंगनगरं लेभे चतुष्कविशिखामणिः ॥ स्तुत्वा विंशतिभिः पद्यैः पूर्णं उत्तुंगविग्रहम् ॥ ९५ ॥ केरले दक्षिणपुरं सहसैवाभ्यगात्तदा ॥ संस्तुत्य दशगाथाभिस्तिष्ठंतं हरिमव्ययम् ॥ ९६ ॥ चतुष्कविरथापाथ स भूयः पांड्यमंडलम् ॥ स्तुत्वा सुंदरबाहुं तं वानाचलपतिं हरिम् ॥ ९७ ॥ भक्त्या विंशतिगाथाभिः स गोष्ठीनगरं ययौ ॥ गोष्ठीपुरे गोष्ठपतिं सौम्यनारायणाभिधम् ॥ ९८ ॥ अस्तौषीद्दशगाथाभिर्नृसिंहद्वयशोभितम् ॥ शीतोद्यानं मोहुरं च तथा सत्यमहीधरम् ॥९९॥ स्थलानि त्रीणि ह्यस्तौषीत्कलिजित्पांड्यमंडले ॥ गाथाभिः सप्तभिः सम्यग्यः प्रबंधो विराजते ॥ १०० ॥ तं शार्ङ्गपाणिविषयं विदधेसौ परांतकः ॥ एवं हि परकालेन संस्तुता दिव्यभूमयः ॥ १०१ ॥ विष्णोस्तत्रैव वेदांतिन्नेकपंचाशदीरिताः ॥ अल्पेन संस्तुता विष्णोर्द्वात्रिंशद्दिव्यभूमयः ॥ १०२ ॥ अतश्चाशीतिस्थानानि स्तुतानि कलिवैरिणा ॥ विशदं शृणु वक्ष्ये तान् षट् पांड्ये केरले त्रयः ॥ १०३ ॥ देशाश्चैकोनचत्वारः श्रीहरेश्चोलमंडले ॥ मध्यदेशे द्वयं चैव त्रयोविंशतिरीरिताः ॥ १०४ ॥ तुंडीरमंडले विष्णोर्दिव्यदेशा दशोत्तरे ॥ कलिघ्नेनैव वेदांतिस्ते सर्वे समभिष्टुताः ॥ १०५ ॥ दिव्यप्रबंधा वेदांतिन् सप्तैव कलिजित्कृताः ॥ त्रिशतं चैव साहस्रं चतुःषष्टिः प्रकीर्तिताः ॥ १०६ ॥ तेषु दिव्यप्रबंधेषु गाथा विबुधसत्तम ॥ तैः प्रबंधैर्वितत्योर्व्यां तत्त्वार्थं सम्यगेव हि ॥ १०७ ॥ सर्वाधिकारं कृपया दिव्यद्राविडभाषया ॥ भक्त्या भगवतस्तस्य तथा भागवतस्य च ॥१०८॥ कृत्वा कैंकर्यमव्यग्रं स सम्यग्विविधं बहु ॥ मंगलाशासनं कृत्वा सर्वदिव्यस्थलानि च ॥ १०९ ॥ रूढमूलं प्रतिष्ठाप्य विष्णुधर्ममनुत्तमम् ॥ भूम्यामव्याहतं सम्यग्यावदाचन्द्रतारकम् ॥ ११० ॥ इत्येवं कृपया नीलो जगत्सर्वमपालयत ॥ भूम्यां पं-

चोरत्तशतं नीत्वाब्दानां चतुष्कविः॥१११॥ कुरंगनगरं प्राप्य श्रीरंगे-
श्वरशासनात् ॥ तत्रैव विष्णुसालोक्यमगमत्स परांतकः ॥११२॥ अ-
र्चावतारा बहवो नीलस्यैवाभवंस्ततः॥ विष्णुस्थानेषु सर्वेषु वैष्णवानां
गृहेषु च ॥ ११३ ॥ परिरंभपुरे तत्र महता वैभवेन सः ॥ जयत्यव्या-
हतोच्छ्रायो ह्यद्यापि परिदृश्यते ॥ ११४ ॥ अत्रैव रंगे वेदांतिन्महद्भिः
द्भिः सकलोत्सवैः॥ संदृश्यते किलाद्यापि परकालो महायशाः॥११५॥
यद्गृहे वर्त्तते नित्यं परकालो महायशाः ॥ कलिदोषाः पलायंते सिंहं
दृष्ट्वा यथा मृगाः ॥११६॥ चर्मखड्गधरे वीरे ह्यास्थिते कलिवैरिणि ॥
नीले तस्य गृहे नित्यं वर्त्तते क्वापि किं भयम् ॥ ११७ ॥ कलिजि-
त्पूजनं नित्यं ये कुर्वंति नरोत्तमाः ॥ सर्वे ते पुण्यकर्माणो महाभाग-
ताः स्मृताः ॥ ११८ ॥ कार्त्तिके मासि दिवसे कृत्तिकातारकान्विते ॥
महाभिषेकं विधिवद्यः कृत्वा कलिवैरिणे ॥ ११९ ॥ नैवेद्यं षड्रसोपेतं
ततः सम्यङ्निवेद्य च ॥ वैष्णवान्ब्राह्मणान्भक्त्या द्राविडाम्नायपारगान्
॥१२०॥ भोजयेत्स नरो मुक्तो विष्णुलोके महीयते॥कार्त्तिक्यां कृत्ति-
कर्क्षे च यत्तत्कलिजितः शुभम् ॥१२१॥तद्द्राविडप्रबंधस्य समाप्तिदि-
वसं विदुः ॥ तस्मिन्दिने कृतं भक्त्या तदीयाराधनं महत्॥१२२॥सम्य-
क्तत्कोटिगुणितमिति प्राहुर्मनीषिणः॥ कार्तिके कृत्तिकर्क्षे तु समारभ्य
समंततः ॥ १२३ ॥ अवैष्णवस्स वेदांतिन प्रबन्धं नोच्चरेद्ध्रुवम् ॥ दि-
व्यदेशेषु सर्वेषु श्रीरंगादिस्थलेषु च॥१२४॥वैष्णवावश्यकतमः श्रीमा-
नध्ययनोत्सवः ॥ कश्चिन्महान्महाभाग योविंशतिदिनावधि॥१२५॥
प्रबंधाध्ययनं तत्र कर्त्तव्यमिति निर्णयः ॥ कृतो हि पूर्वगुरुभिः श्रीरंगे-
श्वरशासनात् ॥ १२६ ॥ न चैवान्यत्र कर्त्तव्यं प्रबंधाध्ययनं तथा ॥
गृहार्चनं हरेस्तेषु सन्निधौ वासरेषु च ॥ १२७ ॥ स तद्वचनमाकर्ण्य
वेदान्ती तमथाब्रवीत् ॥ प्रबंधाध्ययने तत्र को दोषः समुदाहृतः
॥१२८॥ तस्य सर्वाधिकारस्य किमर्थं विधिरीरितः ॥ तत्त्वमाख्याहि

भगवञ्छिष्याय करुणार्णव ॥ १२९ ॥ अवधार्य्याथ मद्वाक्यंस्त-
द्वाक्यं तमथाब्रवीत् ॥ उपक्रमोत्सर्जनौ च वेदस्य भवतां यथा॥१३०॥
तथा द्राविडवेदस्य तावुभौ समुदीरितौ ॥ श्रावण्यां प्रौष्ठपद्यां वा
उपाकृत्य यथाविधि ॥ १३१ ॥ युक्तश्छंदांस्यधीयीत मासान् विप्रो-
र्धपञ्चमान् ॥ इत्युक्तेन प्रकारेण वेदोपक्रम ईरितः ॥ १३२ ॥ तत्पौ-
षस्य पौर्णमास्यामुत्सर्जनविधिः स्मृतः ॥ मकरे हस्तनक्षत्रे उपक्रम-
विधिः स्मृतः ॥ १३३॥ कार्त्तिक्यां कृत्तिकायां तु तथैवोत्सर्जनं
कृतम् ॥ चतुष्टयसहस्रस्य प्रबंधस्य महात्मभिः ॥ १३४ ॥ पुरा
रंगेश्वरः श्रीमान् दिव्यसूरीन्विलोक्य च ॥ शठारिप्रमुखान्सर्वान्
व्याजहार वचः शुभम् ॥ १३५ ॥ नीलनक्षत्रमारभ्य यावदध्ययनो-
त्सवः ॥ तावत्प्रबंधपठनं न कुरुध्वं मदाज्ञया ॥ १३६ ॥ प्रबंधाध्य-
यनेनाद्य युष्मत्कंठास्तु सूरयः ॥ क्लिष्टा जातास्ततो धृत्वा तैलं
कंठेषु सादरम् ॥१३७॥ तावत्तूष्णीं हि वर्त्तध्वं मद्वचानैकपरायणाः॥
धनुर्मासे सिते पक्षे प्रथमायामुपक्रमः ॥ १३८ ॥ कृष्णपक्षे तु
पञ्चम्यामुपसंहार उच्यते ॥ तस्यैवाध्ययनाख्यस्य चोत्सवस्य ममा-
नघाः ॥ १३९ ॥ एवमाज्ञापितास्तेन हरिणा नित्यसूरयः ॥ निवृत्त-
द्राविडाम्नायपारायणरतास्तथा ॥ १४० ॥ ते सर्वे तैलसंसिक्तकण्ठा-
स्तूष्णीं समास्थिताः ॥ श्रीकृष्णो गोपिकास्त्रीभिर्यथा श्रीयमुनातटे
॥ १४१ ॥ हेमंते प्रथमे मासि सम्यगभ्यर्च्चितो यथा ॥ धनुर्मासे
रंगराजो गोदयाभ्यर्च्चितस्तथा ॥१४२॥ नित्यमैकैकया दिव्यगाथया
हरिमव्ययम्॥ स्तुत्वा संपूजयामास गोदा नियतमानसा ॥ १४३ ॥
एवं नित्यं धनुर्मासे पद्यैस्त्रिंशद्भिरादरात् ॥ त्रिंशद्दिनेषु संपूज्य भगवंतं
श्रियः पतिम् ॥ १४४ ॥ मनोरथफलं प्राप्य मुमुदे रंगिणा सह ॥
गोदास्तुतिं पठेत्तस्माद्धनुर्मासि विशेषतः ॥१४५॥ अतः प्रबन्धपठनं
श्रीमदध्ययनोत्सवे॥ गोदास्तवस्याध्ययनं धनुर्मास्यरुणोदये॥१४६॥

इदं हि पूर्वगुरुभिर्निर्णीतं हरिशासनात् ॥ मर्यादातिक्रमं कृत्वा यो वानध्ययने दिने ॥ १४७ ॥ पठेत्प्रबन्धं मूढात्मा स गच्छेन्नरकं ध्रुवम् ॥ पूर्वैराचरितं धर्मं सत्यं मत्वा तु यो नरः ॥ १४८ ॥ तन्मार्गवर्ती शुद्धात्मा स गच्छेद्वैष्णवं पदम् ॥ एवं ये वैष्णवं धर्मं विदंति मनुजा भुवि ॥ १४९ ॥ ते सर्वे पापनिर्मुक्ता विष्णोर्लोके वसंति हि ॥ १५० ॥ श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे शमंधरजयो नाम द्व्यधिकशततमोऽध्यायः ॥१०२॥

---

## त्र्यधिकशततमोऽध्यायः ।

नत्वा माधवदासोथ भट्टार्य्यं भक्तिपूर्वकम् ॥ शठकोपस्य चरितं पप्रच्छ प्रीतिपूर्वकम् ॥ १ ॥ कासारयोगिप्रमुखसूरीणां चरितानि च ॥ त्वत्तः श्रुतानि भगवन् सम्यग्विस्तरतो मया ॥२॥ शठकोपस्य चरितं श्रोतुं कौतूहलं हि मे ॥ तद्ब्रूहि विशदं स्वामिन्कृपया शिष्यवत्सल ॥ ३ ॥ तदंगीकृत्य वचनं तदा वेदांतिनो गुरुः ॥ शठकोपस्य चरितं प्रवक्तुमुपचक्रमे ॥४॥ बकुलाभरणं वंदे जगदाभरणं मुनिम् ॥ यः श्रुतेरुत्तरं भागं चक्रे द्राविडभाषया ॥ ५ ॥ बकुलालंकृतं श्रीमच्छठकोपपदद्वयम् ॥ अस्मत्कुलधनं भोग्यमस्तु मे मूर्ध्नि भूषणम्॥६॥ इति प्रणम्य भट्टार्य्यः कथामकथयत्तदा ॥ वेदांतिनेऽखिलां तस्मै शठकोपस्य विस्तृताम् ॥ ७ ॥ एते चावयवाः सर्वे सरोयोग्यादयोनघ ॥ शठकोपस्य वेदांतिस्तस्यावयविनः किल ॥ ८ ॥ तच्चारित्रं महत्पुण्यं विचित्रं कल्मषापहम् ॥ शृण्वतां वदतां चैव भक्तिज्ञानविवर्द्धनम् ॥९॥ दक्षिणे चोलदेशस्य पांड्यदेशो महानभूत् ॥ विश्रुतः सर्वदेशेषु सर्वसस्यसमृद्धिमान् ॥१०॥ ताम्रपर्णी नदी पुण्या वर्तते यत्र विश्रुता ॥ गंगा च यमुना चैव तथा गोदा सरस्वती॥११॥ कावेरी नर्मदा सिंधुस्ताम्रपर्णी सरिद्वरा ॥ तदुत्कृष्टा ताम्रपर्णी सर्वासां सरितां मुने ॥ १२ ॥ अष्टादशस्थलैर्दिव्यैः प्रबंधप्रतिपादितैः ॥

अन्यैरनेकैरधिकः पांड्यदेशो विराजते ॥ १३ ॥ अस्ति पूर्वपयोराशेः
काचित्पश्चिमरोधसि ॥ मंडले पांड्यभूपस्य नगरी कुरुकाह्वया ॥
॥१४॥ कौरवेण नरेंद्रेण द्वापरे परिपालिता॥ तदाख्यया या विख्याता
ताम्रपर्णीसरित्तटे ॥ १५ ॥ आद्यो यत्र प्रपन्नार्तिवैद्यो विष्णुः पुरोद-
भूत् ॥ वेद्यो वेदशिखाविद्भिः श्रीद्योतितभुजांतरः ॥१६॥ तत्रासीत्पा-
दजातेषु कश्चिद्भागवताग्रणीः ॥ श्रीमद्विभूतिनाथेंद्रः सीमातीतगु-
णोज्वलः ॥ १७ ॥ तस्य धर्मधनुर्नाम तनयः समजायत ॥ साद्धं
कलिबलोत्सन्नधर्मोद्धरणकर्मणा ॥ १८ ॥ चक्रपाणिस्ततो जातश्चक्र-
पाणिपरायणः ॥ सत्पात्रसात्कृतस्वीयसमस्तधनसंचयः ॥ १९ ॥ अ-
जायत ततस्तस्माच्चक्रपाणेस्सुतोच्युतः ॥ नाम यत्प्राप चोदामरत्न-
धामेति भूतले ॥ २० ॥ सुमतिं सुषुवे सोपि सुतं पाटललोचनम् ॥
सुकुमारं यशःसम्यक्सुरभीकृतदिङ्मुखम् ॥ २१ ॥ पुत्रं प्रासूत
फूत्कारिं पुण्यैः पाटललोचनः॥ फौत्कारिस्तस्य संजज्ञे पुत्रः कारिरिति
श्रुतः ॥ २२ ॥ भूतिनाथेंद्रमारभ्य कार्य्यंतं ये मयोदिताः ॥ सप्तैव ते
महाभागा भगवद्भक्तिपारगाः ॥ २३ ॥ तन्मध्ये सुमहातेजाः कारि
सर्वगुणोत्तरः ॥ अवर्द्धत महाप्राज्ञो विष्णुभक्तिपरायणः ॥ २४ ॥ सं-
जातयौवनः श्रीमान् पित्रोरानंदवर्द्धनः ॥ यथा दशरथः पूर्वं प्रजारं-
जनतत्परः ॥ २५ ॥ तेजस्वी मतिमान् धीरो स्वकुलोचितधर्मवान् ॥
संतुष्टः स गुणैस्तस्य पिता फूत्कारिनामकः ॥ २६ ॥ विवाहार्थं तदा
शीघ्रं कारयेत्नमथाकरोत् ॥ केरले दिव्यदेशा हि चतुर्दश तदानघ
॥ २७ ॥ तत्रासीत्पारिशाराख्यं दिव्यं विष्णुस्थलं महत् ॥ फूत्कारिः
कारिमादाय तत्पुरं प्रविवेश सः ॥ २८ ॥ स्वतुल्यवंशसंपद्भिर्विष्णु-
भक्त्या विराजते ॥ वंशे कश्चिद्बभूवार्य्यः पादजो वैष्णवोत्तमः॥२९॥
जज्ञे तस्य सुता कांचिद्वैष्णवी नाथनायिका ॥ फूत्कारिर्वरयामास
विवाहर्थं सुतस्य ताम् ॥३०॥ अंगीकृत्याथ वेदांतिन् स तस्य भग-

त्परः ॥ संतुष्टो लोकविदितं महता वैभवेन च ॥ ३१ ॥ कारिनाम्ने ददौ कन्यां वरायोदकपूर्वकम् ॥ सर्वालंकारसहितामात्मजां नाथनायिकाम् ॥ ३२ ॥ कृतोद्वाहेन पुत्रेण स्नुषया सहितस्तदा ॥ फूत्कारिः प्रययौ श्रीमान्कुरुकानगरं प्रति ॥ ३३ ॥ पुराधिपत्वात्फूत्कारेः सहसालंकृता पुरी ॥ पौरैः प्रत्युद्गतो दूरं महता वैभवेन सः ॥ ३४ ॥ सपुत्रः सस्नुषः शीघ्रं विवेश कुरुकापुरीम् ॥ पताकाध्वजिनीं रम्यां तूर्यघोषनिनादिताम् ॥ ३५ ॥ सिक्तराजपथां रम्यां प्रकीर्णकुसुमोत्कराम् ॥ पौरैः प्रत्युद्गतो दूरं द्विजैश्च पुरवासिभिः ॥ ३६ ॥ एवमुक्तप्रकारेण श्रीरामः सीतया सह ॥ ततः कतिपयाहस्सु गतेषु तदनंतरम् ॥३७॥ भार्य्यया सहितः श्रीमान्परिशारपुरं ययौ ॥ कारिः कारुण्यहृदयः प्रार्थितः श्वशुरेण सः ॥ ३८ ॥ परिशारपुरे तत्र श्रीमति श्वशुरालये ॥ कंचित्कालं स्थितः श्रीमान् भार्य्यया सह सादरम् ॥ ॥ ३९ ॥ भूयः स्वनगरीं रम्यां श्वशुरप्रेषितो ययौ ॥ कुरंगनगरीं तत्र मार्गे पश्यन्महायशाः ॥ ४० ॥ कारिः कुरंगनगरीं संप्राप्य सह भार्यया ॥ भक्त्या कुरंगपूर्णस्य श्रीहरेः पादपद्मयोः ॥ ४१ ॥ प्रणम्य प्रार्थयामास पुत्रार्थं पूर्णमुत्तमम् ॥ पूर्णस्तत्प्रार्थनां सम्यक् तस्यांगीकृत्य संमतम् ॥ ४२ ॥ वरप्रदानं विदधे तदार्चकमुखेन सः ॥ पुत्रत्वं तु गमिष्यामि ह्यहमेव तवाधुना ॥ ४३ ॥ हरेः पूर्णस्य वचनं संप्रहृष्टो निशम्य तत् ॥ भार्य्यया सहितः श्रीमान् भक्त्या तस्थौ कृतांजलिः ॥ ४४ ॥ तीर्थं प्रसादं मालां च तुलस्याः प्रददौ मुदा ॥ सकलत्राय सहसा कारिनाम्ने श्रियः पतिः ॥४५॥ स्वीकृत्य भक्त्या तत्सर्वं सभार्य्यः कारिरात्मवान् ॥ संप्रहृष्टो ह्यनुज्ञातः पूर्णेन सहसा तदा ॥ ४६ ॥ कुरुकानगरं प्राप्य ह्यादिनाथं प्रणम्य च ॥ सर्वधर्मपरस्तत्र न्यवसत्सुखमादरात् ॥ ४७ ॥ भर्त्तुः शुश्रूषणपरा भगवद्भक्तिभासुरा ॥ श्यामा वामालका पुत्रकामा सा समजायत ॥ ४८ ॥ सा कदाचित्कुरंगेशं पथि पुत्रमयाचत ॥ आदिदेश कुरंगेशः सेनन्यां

तत्र जन्मनि ॥ ४९ ॥ गर्भमाधत्त कालेन सा चिरेण तलोदरी ॥ पतंगमिव दिक् प्राची देवकीव यदूद्वहम् ॥ ५० ॥ शठकोपावतारस्य शृणु तत्कालनिर्णयम् ॥ ततो वक्ष्ये प्रमाथ्यब्दे चादौ कलियुगस्य च ॥ ५१ ॥ एकमासे गते तत्र त्रयोदशदिनोत्तरे ॥ वैशाखे शुक्लपक्षे च चतुर्दश्यां भृगोर्दिने ॥ ५२ ॥ विशाखायां च वेदांतिल्लँग्ने कर्कटके शुभे ॥ कुरुंगनगरीपूर्णवरदानेन योगिराट् ॥ ५३ ॥ संजज्ञे नाथनायक्यां कारेः सैन्याधिपांशतः ॥ यथादित्योदभूत्प्राच्यां शठकोपो महामतिः ॥ ॥ ५४ ॥ अस्यावतारश्लोकाश्च गीयंते बहवो भुवि ॥ ५५ ॥ राधे कलितनैराध्ये वैशाखे काव्यवासरे ॥ लग्ने कर्कटकेसूत तनयं नाथनायिका ॥ ५६ ॥ आदौ कलेर्हि कुरुकापुरि पांड्यदेशे वैशाखमासि मघवानलभेंशजातम् ॥ सेनापतेः पदजकारिगृहेवतीर्णं श्रीशास्पदं शठरिपुं शरणं प्रपद्यते ॥ ५७ ॥ वैशाखे तु विशाखायां कुरुकापुरि कारिजम् ॥ पांड्यदेशे कलेरादौ शठारिं शैन्यपं भजे ॥ ५८ ॥ तस्य वर्षातपादीनां वारणाय महात्मनः ॥ पूर्वमेवात्र वेदांतिन् कुरुकानगरीवरे॥५९॥ चिंचारूपेण फणिराडुदभूदीशशासनात् ॥ असूत तनयं तस्मिन्मुहूर्ते नाथनायिका ॥ ६० ॥ निर्निद्रस्तितिंणीरूपशेषस्तन्नगरे ह्यभूत् ॥ श्रीदिव्यसूरिचरिते श्लोकोयं श्रूयते महान् ॥ अवतारं च मधुरकवेर्वक्ष्यामि तं शृणु ॥६१॥ हस्तस्थतालद्वितयं प्रपद्ये शठारिवाग्व्यासमुदारकीर्तिम् ॥ माधुर्यसंश्लिष्टकवित्वयुक्तं महत्त्वसंभावितबुद्धितत्त्वम् ॥ ६२ ॥ एवं प्रणम्य भट्टार्य्यः कथामकथयत्तदा ॥ कुरुकानगरस्याथ प्राग्भागे क्रोशमात्रत ॥ ६३ ॥ श्रीमत्कोलूरिति स्थानं पांड्यमंडलमंडनम् ॥ श्रीसखः शेषपर्य्यंके शेते यत्र परः पुमान् ॥ ६४ ॥ तत्र पुर्य्यां महान् सामशाखाध्यायी द्विजोत्तमः ॥ कश्चित्पूर्वशिखो विद्वान् नारायणपरायणः॥६५॥द्वापरे चाष्टलक्षेषु सहस्रेषु च षष्टिषु॥ संवत्सरेष्वतीतेषु विद्वत्कातिपयेषु च॥६६॥

विक्रमाब्दे चैत्रमासे शुक्लपक्षे च चैत्रभे ॥ नारायणाभिधानस्य पुत्रो जज्ञे गणांशजः ॥ ६७ ॥ बकुलाभरणोदग्रभास्करोदयकारणः ॥ अरुणोदयवत् पूर्वं कविर्मधुरसंज्ञकः ॥६८॥ चैत्रमासे शुभे चित्राताराकायामजायत ॥ श्रीदिव्यसूरिचरिते श्लोकोयं श्रूयते महान् ॥ ६९ ॥ सामशाखाश्रुते विप्रकुले पूर्वशिखावति ॥ जातस्य तस्य मधुरकवेस्तच्छास्त्रमार्गतः ॥ ७० ॥ जातकर्मादिसंस्कारांस्तत्तत्कालोचिताञ्छुभान् ॥ कारयामास जनको विधिना ब्राह्मणैः सह ॥ ७१ ॥ कृतोपनयनः पित्रा कविर्मधुरसंज्ञकः ॥ जग्राह सकला विद्याश्चतुर्दश गुरोर्मुखात् ॥ ७२ ॥ अंगानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ॥ पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ ७३ ॥ अधीतवेदवेदांगो महावैराग्यवारिधिः ॥ तीर्थयात्रापरो धीमान्दिव्यदेशान्ययौ कविः ॥ ७४ ॥ अयोध्या मथुरा माया काशी कांची ह्यवंतिका ॥ पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः ॥ ७५ ॥ इत्यादिनिखिलान्देशांश्चरित्वा भक्तिभावतः ॥ अष्टांगयोगनिरतस्तस्थौ बदरिकाश्रमे ॥ ॥ ७६ ॥ गर्भस्थ एव शठजिद्विष्वक्सेनकृपावशात् ॥ प्रह्लादवत्स संप्राप्तसर्वार्थः समजायत ॥ ७७ ॥ संपूर्णज्ञानवाञ्जज्ञे स सूर्य इव निर्मलः ॥ कल्यात्मकं विलोक्येदं जातमात्रेण तज्जगत् ॥ ७८ ॥ निमील्य नेत्रे निश्चितस्तस्थौ स भगवत्परः ॥ मलमूत्रादिरहितं रोदनादिविवर्जितम् ॥७९॥ सर्वावयवसम्पत्ति दृढांगं दिव्यतेजसम् ॥ भगवत्पादसन्न्यस्तसर्वभारं निरंतरम् ॥ ८० ॥ तत्पादांभोरुहध्यानरसास्वादैकधारकम् ॥ पुत्रं विलोक्य जनकः कारिर्विस्मितमानसः ॥ ८१ ॥ सुतरां विस्मिता चासीज्जननी नाथनायिका ॥ जाताशौचे गते तत्र यथाशास्त्रं सुतस्य तौ ॥ ८२ ॥ तन्मातापितरौ पुत्रमादाय विगतस्पृहौ ॥ प्रापतुः कुरुकानाथसान्निधिं भगवत्परौ ॥ ८३ ॥ शंखतीर्थसमीपे तु ताम्रायाः दक्षिणे तटे ॥ सुस्थितं पुंडरीकाक्षं शंखचक्रधरं

हरिम् ॥ ८४ ॥ वरदाभयहस्तं च धरया रमया सह ॥ नवनीरदनी-
लाभं पीतवाससमच्युतम् ॥ ८५ ॥ आदिनाथं प्रणम्याथ कुरुकायां
रमासखम् ॥ सन्निधौ तस्य देवस्य तं बालं भक्तिपूर्वकम् ॥ ८६ ॥
निक्षिप्य हेमदोलायां चिंचामूले महौजसम् ॥ चक्रतुर्नामकरणं मार
इत्यस्य विश्रुतम् ॥ ८७ ॥ आत्मजप्रतिपत्तिं तां विहाय पितरौ सुते ॥
विधाय तस्मिन्भगवत्प्रतिपत्तिं विशेषतः ॥८८॥ प्रणम्य जग्मतुर्वेश्म
निराशौ स्वीयमंजसा॥सुज्ञानघनपूर्णोसौ तिंतिणीमूलमाश्रितः॥८९॥
आबालषोडशाब्दं च मूकभावं समास्थितः ॥ अंधवन्मूकवच्चायं
स्थाणुवद्वर्त्तते सुतः ॥ ९० ॥ सन्तोषः कोपि संप्राप्तो गताः षोडशव-
त्सराः ॥ पुत्रजन्मोत्सवोऽस्माकं वृथासीत्किल वै बत ॥ ९१ ॥ कुरं-
गनगरीपूर्णौ दत्तवानीदृशं फलम् ॥ इति व्याकुलचित्तौ तौ तत्प्रभा-
वमजानतः ॥ ९२ ॥ सम्यक् शठारिर्भगवत्पदाब्जाविन्यस्तसर्वात्म-
भरो महात्मा ॥ नित्यं तदग्रे स सुखं तदंघ्रिध्यानामृतास्वादपरोऽ-
वतस्थे ॥ ९३ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे शठकोपाव-
तारकथनं नाम त्र्युत्तरशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः ।

तास्मिन्कालेथ वेदांतिस्तस्माद्बदरिकाश्रमात् ॥ अयोध्यामग-
मद्धीमान्कविर्मधुरसंज्ञकः ॥ १ ॥ स्नात्वाथ सरयूनद्यां वेदांतिन्
भगवत्परः ॥ संसेव्य सीतासहितमयोध्यारघुनन्दनम् ॥ २ ॥ कश्चि-
त्कालमुवासात्र नित्यवासरतः सदा ॥ कदाचिद्रात्रिवेलायां जलशं-
कार्थमुत्थितः ॥ ३ ॥ मधुरः कविरायांतो दक्षिणाभिमुखो बहिः ॥
दक्षिणस्यां दिशि तदा दिव्यमप्राकृतं महः ॥ ४ ॥ विलोक्य विस्मि-
तोत्यंतं किमेतदिति मोहितः ॥ दह्यते वाग्निना ग्रामो नगरं वाथ वा
महत्॥५॥दावानलोयमथ वा तदित्येवं व्यचिंतयत्॥तदा सुष्वाप वेदां-
तिन्कविर्मधुरसंज्ञकः ॥६॥ द्वित्रेषु दिवसेष्वेवं विलोक्यात्यंतविस्मितः ॥

अप्राकृतं दिव्यतेजस्तदमन्यत बुद्धिमान् ॥७॥ जिज्ञासुरथ तत्तेजः स तस्मान्निर्ययौ जवात् ॥ आसायमास्थितः सम्यग्ग्रामे कस्मिंश्च वर्त्मनि ॥ ८ ॥ प्रतस्थे तत्परीक्षार्थं दक्षिणाभिमुखो निशि ॥ अरुणोदय-पर्य्यंतं गत्वाध्वानमकल्मषः ॥ ९ ॥ रात्रावेव मुहुः पश्यंस्तत्तेजः सुमहाद्भुतम् ॥ मार्गे यत्स्थानमगमत्तत्रासायमथावसत ॥ १० ॥ साकेतनगरादेवं निर्गत्य मधुरः कविः ॥ दृष्ट्वाखिलान्दिव्यदेशान्दक्षिणस्यां दिशि स्थितान् ॥ ११ ॥ आससादाथ सहसा रंगक्षेत्रमनुत्तमम् ॥ तस्यापि दक्षिणे भागे तत्तेजः समदृश्यत ॥ १२ ॥ स च तस्माद्विनिर्गत्य कुरुकानगरं ययौ ॥ कुरुकापुरपर्य्यंतं तत्तेजः समदृश्यत ॥ १३ ॥ तस्मादन्यत्र कुत्रापि नैवादृश्यत तन्महः ॥ दृष्टतेजस्ततोत्रैव वर्तते तत्सुनिश्चयम् ॥ १४ ॥ इति निश्चित्य सुदृढं मतिमान्मधुरः कविः ॥ तत्तेजस्तत्र सहसा तस्थौ सम्यग्गवेषयन् ॥ ॥ १५ ॥ एवं विचिन्वतस्तस्य चिंचामूले महामुनिः ॥ कवेरलक्ष्यतायोयं भानुवच्छठजित्तदा ॥ १६ ॥ पद्मासनोपविष्टं परपदयुगुले निविष्टचैतन्यम् ॥ परतत्त्वबोधमुद्रं परमाचार्य्यं परांकुशं वंदे ॥१७॥ इत्येवं तिंतिणीमूलमाश्रितं श्रीपरांकुशम् ॥ विलोक्य विस्मयाविष्टो स तदा मधुरः कविः ॥ १८ ॥ अप्राकृतमिदं तेजो दृष्टं यन्महदद्भुतम् ॥ तदेवायमितीवाशु निश्चित्य हृदि तेजसा ॥ १९ ॥ दिव्येन तस्य वेदांतिन्समीपमगमत्तदा ॥ मौनेन महता युक्तं मुकुलीकृतलोचनम् ॥ ॥ २० ॥ विलोक्य विस्मयाविष्टो शठारिं मधुरः कविः ॥ अंधो वा यदि वा मूक इत्येवं शंकितस्तदा ॥ २१ ॥ पाषाणं तत्परीक्षार्थं तदग्रेपातयद्दृढम् ॥ उन्मील्य नेत्रे सहसा श्रुत्वा तस्य महारवम् ॥ ॥ २२ ॥ पुरःस्थितं च पाषाणमद्राक्षीच्छठजित्तदा ॥ नैवांधोऽयमिति ज्ञात्वा संतुष्टो मधुरः कविः ॥ २३ ॥ द्वितीयशोधनार्थाय महद्वाक्यमुवाच सः ॥ प्रकृतेरुदरे जीवो यदि जातस्तदानघ ॥ २४ ॥

किं भक्षयन्वा कुत्रार्य वर्तेते स पुमान् गुरो ॥ तस्य तद्वचनं श्रुत्वा शठकोपस्तमब्रवीत् ॥ २५ ॥ तद्वस्तु भक्षयन्संम्यग्जीवस्तत्रैव वर्तेते ॥ निशम्य तद्वचः सम्यक संतुष्टो मधुरः कविः ॥ २६ ॥ बकुलाभरणं ज्ञात्वा तं सर्वज्ञशिखामणिम् ॥ साष्टांगवंदनं सम्यग्विधाय परभक्तितः ॥ २७ ॥ अशिश्रियन्महात्मानं शठारिं मधुरः कविः ॥ कृतार्थः स तदा तेन वेदांतिन्वैष्णवोत्तमः ॥ २८ ॥ गुरुपादांबुजं ध्यायन् गुरोर्नाम सदा जपन् ॥ कुर्वन्भक्त्यानिशं सम्यक्छुश्रूषां मधुरः कविः ॥ ॥ २९ ॥ अतिष्ठदनिशं सम्यक् तत्रैव गुरुसन्निधौ ॥ तस्मिन्काले शठारातेः प्रत्यक्षमगमद्धरिः ॥ ३० ॥ आदिदेवो जगन्नाथो वासुदेवो जगत्पतिः ॥ चतुर्भुजः श्यामलांगो परमव्योम्नि तिष्ठति ॥ ३१ ॥ वैकुंठनाथो भगवान्स एव जगतां पतिः ॥ वैनतेयं समारुह्य श्रीभूनीलादिशोभितः ॥ ३२ ॥ स्वरूपरूपनिखिलगुणैश्वर्यादिशोभितः ॥ सम्यग्युगपदेवास्य सर्वं साक्षात्कृतं मुनेः ॥ ३३ ॥ यन्महद्भगवद्रूपं तत्कल्याणगुणादिकम् ॥ अनुभूयासकृत्सम्यक् तत्सर्वं शठजित्तदा ॥ ३४ ॥ ब्रह्मानंदार्णवे मग्नो किंचिदन्यं न वेद सः ॥ यद्दिव्यात्मस्वरूपं च विष्णोर्भगवतस्तदा ॥ ३५ ॥ रूपप्रकाशकं तस्य दिव्यमंगलविग्रहम् ॥ भक्तिध्येयान्दिव्यगुणान् बुभुजे निखिलांश्च तान् ॥ ॥ ३६ ॥ ब्रह्मानुभवसंजातप्रमोदा न ममुस्तदा ॥ सुमहांतोथ वेदांतिन्बकुलाभरणोदरे ॥ ३७ ॥ निर्ययुः शठजिद्वक्त्रात्त एवार्थास्ततोऽनघ ॥ चतुःप्रबंधरूपेण वेदा इव चतुर्मुखात् ॥ ३८ ॥ ततश्चतुर्णां वेदानां सारार्थं सम्यगेव हि ॥ उद्धृत्य विदधे सम्यक् प्रबंधाश्चतुरः क्रमात् ॥ ३९ ॥ ऋग्वेदार्थं समुद्धृत्य प्रबंधं विदधे तदा ॥ श्रीवृत्ताख्यं शठारातिः शतगाथाविराजितम ॥ ४० ॥ यजुर्वेदार्थमादाय चक्रे द्राविडभाषया ॥ अशिर्य्याख्यं प्रबंधं च सप्तगाथाविराजितम् ॥ ॥ ४१ ॥ अथाथर्वागमार्थेन तं महांतादिनामकम् ॥ प्रबंधं लोकरक्षार्थं

शठारिरकरोन्महान् ॥ ४२ ॥ तत्र प्रकीर्तिता गाथास्ताः सप्ताशीति-
संख्यकाः ॥ सामवेदार्थसारेण प्रबंधश्चरमो महान् ॥ ४३ ॥ सहस्र-
गीतिनामानं सर्वलोकहिताय च ॥ विधाय कारितनुजः सर्वं जगद-
पालयत् ॥ ४४ ॥ गाथाः सहस्रं द्विशततमाश्चात्र प्रकीर्तिताः ॥ प्रबं-
धे चरमे तत्र सम्यगर्थोयमीरितः ॥ ४५ ॥ प्राप्यस्य ब्रह्मणो रूपं
प्राप्तुश्च प्रत्यगात्मनः ॥ प्राप्त्युपायं फलं प्राप्तेस्तथा प्राप्तिविरोधि च
॥ ४६ ॥ इत्यर्थपंचकं ज्ञानं तत्रैवं समुदाहृतम् ॥ निखिलागम-
वेदांतशास्त्रसारतमं शुभम् ॥ ४७ ॥ द्वयात्परतरं नास्ति मंत्रो
वेदेष्वपि द्विज ॥ इत्येतद्द्वयमंत्रार्थं वेदसारतमांशकम् ॥ ४८ ॥ विश-
दं लोकरक्षार्थं तद्द्वयं सम्यगूचिवान् ॥ सहस्रगीतिकरणकालेषु नि-
खिलाः सुराः ॥ ४९ ॥ शठकोपांतिकं जग्मू रंगेशादिस्थलाधिपाः ॥
शठारिदिव्यस्तोत्रैकपात्रतां लब्धुमिच्छवः ॥ ५० ॥ उत्कर्षता जग-
त्यस्मिन्यथैव महती भवेत् ॥ चिंचामूलनिवासाय शठकोपाय च-
क्रिणः ॥ ५१ ॥ सुखप्रदानं विदधुस्ते सर्वे विष्णुमूर्तयः ॥ महांतं
शठकोपस्य श्रुत्वा वैभवमादरात् ॥ ५२ ॥ द्रष्टुकामास्तदाजग्मुर्वैकुं-
ठान्नित्यसूरयः ॥ अन्ये च निखिला देवाः श्वेतद्वीपनिवासिनः ॥ ५३ ॥
शठारिर्वर्तते यत्र कुरुकानगरीं तदा ॥ दृष्ट्वा समागतान्सर्वान् प्रहृ-
ष्टस्तान्दिवौकसः ॥ ५४ ॥ मंगलाशासनं कृत्वा श्रीवैष्णवसमृ-
द्धये ॥ शठारिवैभवं दृष्ट्वा संतुष्टाः सकलाः सुराः ॥ ५५ ॥ संप्राप्त-
मंगलास्तस्मात्स्वलोकान्संप्रपेदिरे ॥ अष्टोत्तरशतस्थानस्थितानां
परमात्मनाम् ॥ ५६ ॥ श्रीरंगेशादयो देवा द्वात्रिंशत्तत्र चास्थिताः ॥
विशेषानुग्रहप्राप्त्यै कारिसूनोर्महात्मनः ॥ ५७ ॥ पृथगेकैकशः सर्वे
प्रत्यक्षमगमन्मुने ॥ दिव्यदेशाधिपतयो द्वात्रिंशद्विष्णुमूर्तयः ॥ ५८ ॥
वानाद्रिः पांड्यकटके वर्तते पर्वतोत्तमः ॥ भगवान्सुंदरभुजस्तत्रास्ते
लोकरक्षकः ॥ ५९ ॥ प्रसन्नोभूच्छठारातेः प्रथमं कृपयानघ ॥

त्रिंशद्गाथाभिरस्तौषीच्छठारिर्भगवत्परः ॥ ६० ॥ वृषभाद्रौ महापुण्ये परमस्वामिसंज्ञकः ॥ ततो विंशतिगाथाभिः संस्तुतो वेंकटेश्वरः ॥ ६१ ॥ तुंडीरमंडले कश्चिद्वर्तते घटिकाचलः ॥ नृसिंहो वर्तते तत्र देवोमृतफलाभिधः ॥ ६२ ॥ प्रत्यक्षमगमत्तत्र संस्तुतस्तदनंतरम् ॥ दशगाथाभिरस्तौषीत्कुरुकायां रमासखम् ॥ ६३ ॥ कुरंगनगरीपूर्णो गाथाभिर्दशभिः स्तुतः ॥ वानाचलाधिपो देवो भगवान्देवनायकः ॥ ६४ ॥ संस्तुतो दशगाथाभिर्वेदांतिञ्छठवैरिणा ॥ कुंभकोणाधिपो देवो ह्यपर्याप्तामृताभिधः ॥ ६५ ॥ अभिष्टुतः शार्ङ्गपाणिर्गाथाभिर्दशभिस्तदा ॥ केरले दक्षिणपुरे तिष्ठंतं हरिमव्ययम् ॥ ६६ ॥ स्तुतं चकार दशभिर्गाथाभिः शठजित्तदा ॥ दशगाथाभिरस्तौषीद्वलाढ्यं भ्रमरस्थले ॥ ६७ ॥ लवणाभावताताख्यश्चाकाशनगरे हरिः ॥ संस्तुतो दशगाथाभिर्वेदांतिश्चोलमंडले ॥ ६८ ॥ धन्विक्षेत्राधिपो देवो पद्माक्षो भगवान्हरिः ॥ श्रीमंगलपुराधीशो भगवान्देवनायकः ॥ ६९ ॥ तावुभौ दशगाथाभिः संस्तुतौ पांड्यमंडले ॥ कुरंगनगरप्राच्यां वर्त्तते क्रोशमात्रतः ॥ ७० ॥ तेजःपुरं तत्र शेते फणिशायी महानिधिः ॥ स हरिर्दशगाथाभिर्वेदांतिन्समभिष्टुतः ॥ ७१ ॥ अस्तौषीद्दशगाथाभिः शठजिद्रंगनायकम् ॥ श्रीरंगनगरे प्राच्यां श्रीरामनगरे हरिः ॥ ७२ ॥ अपूपरंगनाथस्तु गाथाभिर्दशभिः स्तुतः ॥ केरले दिव्यदेशस्तु तिरुवारन्विलाभिधः ॥ ७३ ॥ तत्रत्यो भगवान् विष्णुर्दशगाथाभिरीडितः ॥ पांड्ये बृहत्तटाके तु चोरनाट्याभिधो हरिः ॥ ७४ ॥ गाथाभिर्दशभिः कृष्णो वेदांतिन्समभिष्टुतः ॥ वेदांतिन्केरले देशे परिशारपुराधिपः ॥ ७५ ॥ मायाविनामकः कृष्णो दशगाथाभिरीडितः ॥ अच्युतः क्षुद्रनद्यां तु दशगाथाभिरीडितः ॥ ७६ ॥ भगवान् राजगोपालः श्रीसौरभपुराधिपः ॥ वेदांतिन्दशभिस्तत्र गाथाभिः समभिष्टुतः ॥ ७७ ॥

तत्रादिनाथो भगवान्विष्णुर्व्याघ्रपुराधिपः ॥ सन्नुतो दशगाथाभिर्वेदांतिञ्छठवैरिणा ॥ ७८ ॥ पांड्ये चिंचाकुटिर्नाम विष्णुस्थानं विराजते ॥ तत्रत्यो भगवान्विष्णुः शेषशायी जगत्पतिः ॥ ७९ ॥ संस्तुतो दशगाथाभिर्वेदांतिञ्छठवैरिणा ॥ श्रीवैकुंठमिति ख्यातं तत्र विष्णुस्थलं महत् ॥ ८० ॥ तत्रैवान्यत्स्थलं चापि श्रीमद्वरगुणाभिधम्॥वैकुंठनाथो भगवांस्तिष्ठन्विष्णुः श्रियः पतिः॥८१॥ श्रीमद्वरगुणो नाथो भगवान्विजयासनः॥ एकया गाथया तत्र तावुभौ समभिष्टुतौ ॥ ८२ ॥ केरले कार्करं नाम स्थलं मूलिकलाभिधम्॥ तिरुनावायिनामैकं त्रीण्येतानि स्थलानि च ॥ ८३ ॥ प्रत्येकं दशगाथाभिः स्तुतानि शठवैरिणा ॥ शौरिराजस्तु भगवाञ्छ्रीमत्कृष्णपुरे हरिः ॥ ८४ ॥ गाथाभिर्दशभिश्चोलकटके समभिष्टुतः ॥ मौहूरे कालमेघाख्यो भगवान्विष्णुरव्ययः ॥ ८५ ॥ गाथाभिर्दशभिश्चैव सन्नुतः पांड्यमंडले ॥ अनंतशयने विष्णुः पद्मनाभो जगत्पतिः ॥ ८६ ॥ केरले दशगाथाभिर्भगवान्समभिष्टुतः ॥ आद्यनंतपुरे श्रीमाञ्छयानः केशवाभिधः ॥ ८७ ॥ पुराणो दशगाथाभिः सन्नुतः केरलेनघ॥ तत्रत्यो भगवान्विष्णुर्दशगाथाभिरीडितः ॥८८॥ एवं हि संस्तुतास्तत्र द्वात्रिंशत्स्थलनायकाः ॥ कृष्णस्य गव्यचौर्योक्ते रागाद्रामावतारतः ॥ ८९ ॥ सौंदर्य्येणास्य सोमुह्यन्मासानष्टादश त्रिधा ॥ वेदांतिन्संस्तुताश्चैवं हरयः शठवैरिणा ॥ ९० ॥ संतुष्टास्तेन ते सर्वे स्वस्थलानि प्रपेदिरे ॥ अस्मिन्नर्थे हि विख्याताः श्लोकाश्च बहवो भुवि ॥ ९१ ॥ पांड्ये द्वादश केरले भगवतः षट् सप्त चैवादराच्चोले पंच च तोंडमंडलवरे चैकं तथैवोत्तरे ॥ एकं कारिसुतेन तेन महता चिंचानिवासेन वै द्वात्रिंशत्समभिष्टुताः शठजिता श्रीदिव्यदेशा हरेः॥९२॥ तुंडीरे घटिकाचलो भगवतः शेषाचलश्चोत्तरे चोले कृष्णपुरं च रंगनगरं श्रीकुंभकोणस्थलम् ॥ श्रीमद्व्योमपुरं महेंद्रनगरं श्रीकारिं

पुत्रस्तुतांस्तानेव प्रतिवासरं स्मरति यः श्रीमान्स भूयान्नरः ॥ ९३ ॥ व्रातादिर्वनशैलमोहरपुरे वैकुंठतेजःपुरे श्रीनामाख्यपुरं च धन्विनगरं श्रीमंगलाख्यं पुरम् ॥ श्रीमद्भूरिसरोवरं वरगुणं चिंचाकुटीरं महद्विष्णोः श्रीकुरुकापुरी शठजिता पांड्ये स्तुता द्वादश ॥ ९४ ॥ तेन स्तुतानि स्थानानि केरले तु त्रयोदश ॥ भगवद्विषयान् ग्रंथान्विधाय चतुरः क्रमात् ॥ ९५॥ सम्यङ् मधुरकव्यादिसज्जनायोपदिश्य तान् ॥ लोकसंरक्षणार्थाय कृतकृत्यो महायशाः ॥ ९६ ॥ पंचत्रिंशदवन्यां तु सुखेनाब्दान्व्यवस्थितः ॥ दर्शनं परभक्तिः स्यात्परज्ञानं च संगमः ॥ ॥९७॥ पुनर्विश्लेषभीरुत्वं परमा भक्तिरुच्यते ॥ एतादृशीभिः परमभक्तिभिश्च परादिभिः ॥ ९८ ॥ अतिष्ठदेवमनिशं शठारातिर्महायशाः ॥ पद्मासनस्थो भगवांश्चिंचामूले दिवानिशम् ॥९९॥ मलमूत्रादिरहितः क्षुत्पिपासाविवर्जितः ॥ हरिपादांबुजध्यानरसास्वादैकधारकः ॥१००॥ आपंचत्रिंशदब्दं च सुखेनैकेन वर्त्मना ॥ संपूज्यमानो विबुधैः कारिसूनुर्महायशाः ॥ १०१ ॥ पित्रोरानंदमतुलं विधायानेककर्मणा ॥ आचंद्रार्कं प्रतिष्ठाप्य स्ववंशं जगतीतले ॥ १०२ ॥ वैकुंठनगरं प्राप सहसा नित्यसूरिभिः ॥ तत्रैव तिंतिणीमूले पूर्ववत्कुरुकापुरे ॥ १०३ ॥ पद्मासनस्थो भगवानद्यापि परिदृश्यते ॥ प्रपन्नजनकूटस्थः कारिसूनुर्महायशाः ॥ १०४ ॥ वेदांतिञ्छठकोपस्य प्रभावमतिमानुषम् ॥ शृण्वतां पठतां वापि स्मरतां नमतामपि ॥ १०५ ॥ सर्वाभीष्टानि शठजित्कृपयैव ददाति हि ॥ श्रीवैष्णवमतं सम्यगनेनैव प्रकाशितम् ॥ १०६ ॥ श्रीवैष्णवमतस्यास्य मुख्योयं शठजित्ततः ॥ श्रीमच्छठारिकैंकर्य्यं दृष्टादृष्टफलप्रदम् ॥१०७॥ अतः शठारिभक्तानां किं न साध्यं जगत्त्रये ॥ वेदांतिञ्छठजिद्भक्तः स एव मधुरः कविः ॥को वा जगति योगींद्रं तं विना गुरुभक्तिमान् ॥ १०८ ॥ भूत्वा कारिगृहेऽथ षोडशसमा मौनेन चिंचांतिके स्थित्वा वेदचतुष्टयार्थमखिलं

सारं समुद्धृत्य च ॥ कृत्वा लोकहिताय तेन चतुरो दिव्यप्रबंधान्परा-
न्भक्त्या श्रीहरिभूमयः शठजिता द्वात्रिंशदेव स्तुताः ॥ १०९ ॥
शिष्यायाथ तथोपदिश्य कवये लोकावनार्थं भरं तस्मै तान्मधु-
राय वेदसदृशान्मोक्षैकहेतून्परान् ॥ पंचत्रिंशदुदारकीर्त्तिरवनौ स्थि-
त्वा च वै वत्सरान्भेजे विष्णुपदं निरंतरसुखं श्रीकारिसूनुर्महान्
॥ ११० ॥ एतत्कारिसुतस्य दिव्यचरितं ज्ञानैकसंवर्द्धकं श्रोतॄणाम-
घनाशनं भवहरं संपत्करं सर्वदा ॥ ये शृण्वंति पठंति सौम्यहृदया धी-
राः परं मानवास्तेषां श्रीशठकोप एव सततं श्रेयः परं यच्छति॥१११॥
इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे श्रीशठकोपस्य श्रीरंगेशादि-
प्रत्यक्षदर्शनं नाम चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## पञ्चाधिकशततमोऽध्यायः ।

ततो माधवदासाख्यो भट्टार्य्यमिदमब्रवीत् ॥ किं कैंकर्यं शठारा-
तेश्चकार मधुरः कविः ॥ १ ॥ श्रोतुमिच्छामि भट्टार्य्य यत्तन्मे ब्रूहि
विस्तरात् ॥ तदंगीकृत्य भट्टार्यो वेदांतिनमथाब्रवीत् ॥ २ ॥ ततः
प्राथमिकः शिष्यः शठारेर्मधुरः कविः ॥ प्रपन्नजनकूटस्थः स्वाचा-
र्य्यस्य महात्मनः ॥ ३ ॥ प्रबंधमखिलं दिव्यप्रभावमकरोत्तदा ॥
पंचमोपायनिष्ठानां मुमुक्षूणां महात्मनाम् ॥ ४ ॥ उपकारो महानासी-
त्प्रबंधश्चरमो हि सः॥ततोर्चाविग्रहं सम्यक्कारयित्वागुरोस्तदा॥५॥यथा-
शास्त्रं प्रतिष्ठाप्य कुरुकानगरे गुरुम् ॥ तत्रैव तिंतिणीमूले विस्तृते दि-
व्यमण्डपे ॥ ६ ॥ महोत्सवांश्च सकलानुत्सवान्कारयंस्तदा ॥ गुरुं
प्रकाशयन् धीमानतिष्ठत्सयथासुखम् ॥ ७ ॥ कुरुकानगरे सम्य-
गश्रावि सुमहान् रवः ॥ महाकाहलिकोत्पन्नः शठजित्कीर्तिसूचकः
॥ ८ ॥ कारिमारस्समायाति कुरुकानगरीश्वरः ॥ सहस्रगीतिदेवश्च
समायाति परांकुशः ॥ ९ ॥ द्राविडाम्नायकृत्स्वामी कविकण्ठीरव-
स्त्विति ॥ एवं बहुविधं तत्र देशे शठजितो यशः ॥ १० ॥ सर्वत्र

तेन मधुरकविना संप्रकाशितम् ॥ तस्मिन्काले कविः कश्चित्कंबनामा महायशाः ॥ ११ ॥ बभूव द्राविडश्रेष्ठः कविकंठीरवो महान् ॥ मधुरायां पांड्यदेशे कवीनां त्रिशतेन च ॥ १२ ॥ अवर्तत जितारातिस्स- कम्बाख्यः प्रकीर्तितः ॥ तस्य शिष्याः समाकर्ण्य तच्छठारातिवैभवम् ॥ १३ ॥ काहलीं रुरुधुः शीघ्रं तां गर्वादसहिष्णवः ॥ तद्वृत्तांतं समाकर्ण्य विस्मितो मधुरः कविः ॥ १४ ॥ कंबप्रेष्यान्समाहूय वाक्यमेतदुवाच ह ॥ किमर्थमागता यूयं तस्माद्देशादिहानघाः ॥ १५ ॥ केन संप्रेषिताश्चैव कारणं वदताशु मे ॥ युष्माभिर्लोकनाथस्य शठारातेर्महात्मनः ॥ १६ ॥ अपराधोऽधुना वत्साः किमर्थं विहितो महान् ॥ तस्य तद्वचनं श्रुत्वा कंबशिष्यास्तमब्रुवन् ॥ १७ ॥ कंबो नाम महातेजाः कविराड् वर्ततेनघः ॥ तस्यासंस्त्रिशतं शिष्या महात्मानः कवीश्वराः ॥ १८ ॥ किरीटधारिणः सर्वे विद्वत्सिंहासनाधिपाः ॥ विद्वन्मुकुटसद्रत्ननीराजितपदांबुजाः ॥ १९ ॥ सर्वद्राविडशास्त्राब्धिपारगो यो महीतले ॥ तस्य प्रेष्या वयं देशांश्चरंतो निखिलान्सदा ॥ २० ॥ शासनादधुना देशमिमं प्राप्ता द्विजर्षभ ॥ द्राविडाम्नायदेवोयं परांकुश इतीव च ॥ २१ ॥ अश्रावि काहलीनादो ह्यद्यास्माभिः पुरेऽत्र हि ॥ विद्यमाने कविश्रेष्ठे कंबेऽस्माकं गुरूत्तमे ॥ २२ ॥ द्राविडाम्नायदेवत्वमन्येषां कथमर्हति ॥ निर्जित्य कवनेनैव कंबं कविमहीपतिम् ॥ २३ ॥ आरोहेच्छंखपीठं तस्यैवार्हति तद्यशः ॥ तदंगीकृत्य वचनं तेषां स मधुरः कविः ॥ २४ ॥ कंबप्रेष्यान्समालोक्य व्याजहार वचः शुभम् ॥ युष्माभिर्यद्वचः प्रोक्तं तत्सत्यं साधुसंमतम् ॥ २५ ॥ शठारिरस्मदाचार्यो न च कुत्रापि गच्छति ॥ दिव्यसूक्तिं शठारातेः पत्रिकायां विलिख्य च ॥ २६ ॥ प्रदास्याम्यद्य युष्माकं तामादाय तदंतिकम् ॥ गत्वा कंबाय वृत्तांतं सम्यग् ब्रूतेदमद्य नः ॥ २७ ॥ शंखपीठं यदि वहेच्छठजित्पत्रिकापि या ॥ विद्यते किल तत्कीर्तिः शठारेर्लोकविश्रुता ॥ २८ ॥

द्राविडाम्नायदेवत्वसूचिका नान्यथा भवेत् ॥ इत्येवं निर्णयं कृत्वा प्रददौ पत्रिकां तदा ॥ २९ ॥ तामादायांजसा सर्वे शिष्याः कंबांतिकं ययुः ॥ तद्वृत्तांतं निवेद्याथ ददुः कंबाय पत्रिकाम् ॥ ३० ॥ वेदांतिन्पांड्यदेशे तु मधुरानगरे वरे ॥ शंखपीठमिति ख्यातं विद्वत्पीठं महद्वरम् ॥३१॥ यदस्ति तत्समाक्रांतं कवीनां त्रिशतेन च ॥ जितविद्वद्गणं धीरं तं पीठं वहति ध्रुवम्॥३२॥ अन्यं प्रपातयेच्छीघ्रं विद्यापीठं न संशयः ॥ पीठे तस्मिंस्तदा कंबः शठजित्सूक्तिपत्रिकाम् ॥ ३३ ॥ वेदांतिन्द्राविडकवित्रिशतेन विराजिते ॥ मध्ये संस्थापयामास कविराजो महायशाः ॥ ३४ ॥ तत्पीठं पातयित्वाशु कवीनां त्रिशतं तदा ॥ शिरसा धारयामास सहसा पत्रिकां कविः ॥ ३५ ॥ कुरुकानगरं प्राप्य कंबः शठजितं तदा ॥ भक्त्या प्रणम्य तं चिंचातरोर्मूले समास्थितम् ॥ ॥३६॥ कारिसूनुं महात्मानं द्राविडाम्नायदैवतम् ॥ शठारिविषया गाथाः काश्चित्कृत्वा तदादरात् ॥ ३७ ॥ विदधे सहसा धीमानपराधक्षमापणम् ॥ कवीनां त्रिशतं सम्यक्तत्तथैव तदादरात्॥३८॥शठारिविषया गाथा बह्वीः सम्यक्पृथक्पृथक् ॥ चकार सहसा भक्त्या ह्यपराधक्षमापणम् ॥ ३९ ॥ गुरुं प्रकाशयेद्धीमानिति शास्त्रोक्तमार्गतः ॥ शठजिद्वैभवं लोके महत्तल्लोकविश्रुतम् ॥ ४० ॥ सम्यक् प्रकाशयन्भक्त्या सर्वत्र मधुरः कविः ॥ लोकसंरक्षणं कुर्वन्कांचित्कालं महायशाः ॥ ४१ ॥ कुरुकायामुवासार्यो वर्द्धयन् विष्णुदर्शनम् ॥ शठारिप्रमुखैर्दिव्यैर्योगिभिस्तत्त्वदर्शिभिः ॥४२॥ कृतं मुख्यतमं दिव्यं प्रबंधं मोक्षकारणम् ॥ नारायणपरं सर्वमाद्यं सारतमं विदुः ॥ ४३ ॥ शुद्धसत्त्वमयं भक्त्या शुद्धसत्त्ववतो गुरोः ॥ एवं प्रबंधमभ्यस्य वेदांतिन्निखिला जनाः ॥४४॥ सम्यग्विज्ञाततत्त्वार्था नारायणपरायणाः॥ निर्मुक्तमायासंसारा ययुर्विष्णोः परं पदम् ॥ ४५ ॥ महोपकारो लोकानां कृतोयं दिव्यसूरिभिः ॥ मुमुक्षवोभवन्सर्वे स्त्रियः शूद्रास्तथेतरे॥४६॥

सर्ववेदांतसारार्थान्समुद्धृत्याखिलान् परान् ॥ अगस्त्यभाषा-
रूपेण द्राविडेन कृताः पुरा ॥ ४७ ॥ सर्वलोकोपकाराय प्रबंधा
दिव्यसूरिभिः ॥ तस्मात्प्रबंधात्संजातसम्यग्ज्ञानास्तदाभवन् ॥४८॥
मुमुक्षवोऽखिलाः शीघ्रं मनुजा वीतकल्मषाः ॥ अतो द्राविडवेदांतं
सम्यग्ज्ञानैकसाधनम् ॥ ४९ ॥ ज्ञानं विना न कस्यापि मोक्षो
भवति वै किल ॥ तस्माद्द्राविडवेदांतपठनं मोक्षहेतवे ॥ ५० ॥
विद्वन्नवश्यं कर्तव्यं मुमुक्षोर्वैष्णवस्य हि ॥ ५१ ॥ न शब्दशास्त्राभिर-
तस्य मोक्षो न चैव रम्यावसथप्रियस्य ॥ न भोजनाच्छादनतत्परस्य
न लोकवृत्तग्रहणे रतस्य ॥ ५२ ॥ एकांतशीलस्य दृढव्रतस्य पंचेंद्रि-
यप्रीतिनिवर्त्तकस्य ॥ अध्यात्मविद्यारतमानसस्य मोक्षो ध्रुवो नित्य-
महिंसकस्य ॥ ५३ ॥ शमदमनियतात्मा सर्वभूतानुकंपी विषयसुख-
विरक्तो ज्ञानतृप्तः प्रशांतः ॥ अनियतनियतात्मा नैव हृष्टो न रुष्टः
प्रवासित इव गेहे वर्तते यः स मुक्तः ॥ ५४ ॥ वेदांतिन्दशभिर्दि-
व्यैः सूरिभिर्लोकरक्षणम् ॥ एवं कृतं बहुविधं शठकोपादिभिर्भुवि
॥ ५५ ॥ अनादिसिद्धं बहुभिरेतद्वैष्णवदर्शनम् ॥ ततो जगत्यां मधु-
रकविना वर्द्धितं मुने ॥ ५६ ॥ केनचित्कारणेनाथ एतद्वैष्णवदर्श-
नम् ॥ कंचित्कालं तु वेदांतिन्नप्रकाशमिव स्थितम् ॥ ५७ ॥ ततः
श्रीनाथमुनिना सम्यगेव प्रकाशितम् ॥ शठकोपस्य शिष्येण तदि-
दं विष्णुदर्शनम् ॥ ५८ ॥ श्रीनाथमुनिशिष्येण तत्पद्माक्षेण रक्षि-
तम् ॥ ततः पद्माक्षशिष्येण राममिश्रेण रक्षितम् ॥ ५९ ॥ एत-
द्वैष्णवसिद्धांतं वेदांतिन्देशिकाज्ञया ॥ यामुनार्य्ये ततः सम्यक्
षण्मासाननुसृत्य च ॥ ६० ॥ राममिश्रो यामुनाय मतमेतददौ
किल ॥ तेनैव यामुनार्य्येण तदेतद्विस्तृतं क्वचित् ॥ ६१ ॥
यामुनाचार्य्यशिष्यैश्च महापूर्णादिभिर्महान् ॥ अयं वैष्णवसिद्धांतो
यतींद्राय समर्पितः ॥ ६२ ॥ ततः शेषावतारेण यतींद्रेण महात्मना ॥

चतुःसमुद्रपर्य्यंतं भूम्यां सर्वत्र चानघ ॥ ६३ ॥ अयं वैष्णवसिद्धांतो रूढमूलः प्रकाशितः ॥ यतींद्रानुग्रहादेव गोविंदार्य्यात्समागतम् ॥ ६४ ॥ रामानुजार्य्यसिद्धांतं मत्तस्त्वं प्राप्तवान् किल ॥ त्वया चैव भविष्यद्भिर्गुरुभिः प्रचरिष्यति ॥ ६५ ॥ अयं रामानुजाचार्य्यसिद्धांतः सकलावनौ ॥ दृढश्चाव्याहतः सम्यगाकल्पं च न संशयः ॥ ॥ ६६ ॥ श्रीदिव्यसूरिचरितं यत्पृष्टं भवतानघ ॥ तत्सर्वं सम्यगेवोक्तं मया गुरुकटाक्षतः ॥ किमन्यच्छ्रोतुकामोसि तद्ब्रवीमि महामते ॥ ॥ ६७ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे शठजिद्दिव्यसूक्तिपत्रिकाकंबशंखपीठाधिरोहणं नाम पंचाधिकशततमोऽध्यायः॥१०५॥

## षडधिकशततमोऽध्यायः ।

अस्मद्यतिः प्रणम्याथ भट्टार्य्यं भक्तिपूर्वकम् ॥ पूर्वाचार्य्यकथां पुण्यां परिपप्रच्छ देशिकम् ॥ १ ॥ को वा नाथमुनिस्स्वामिन्कुत्रत्यः कस्य चात्मजः ॥ दिव्यप्रबंधा लोकेस्मिन्नप्रकाशा यतोऽभवन् ॥ २ ॥ कथं प्रकाशिता नाथमुनिना तेखिलाः पुनः ॥ अवतारं शठारातिः कल्यादौ कृतवान्किल ॥ ३ ॥ त्रिसहस्रे गतेऽब्दानां तत्र नाथमुनिः स्मृतः ॥ अवतारं हि मेदिन्यां कृतवानिति मे श्रुतम् ॥ ४ ॥ तयोर्बभूव भटार्य्य गुरुशिष्यक्रमः कथम् ॥ विशदं ब्रूहि मे विद्वन्सर्वज्ञ निखिलं हि तत् ॥ ५ ॥ श्रुत्वा माधवदासस्य वचः परमसंमतम् ॥ तस्मै हृष्टस्तदाख्यानं भट्टार्य्यः सम्यगब्रवीत् ॥ ६ ॥ तुंडीरचोलयोर्मध्ये मध्यदेश इति स्मृतः ॥ वीरनारायणं नाम तत्रासीन्नगरं महत ॥ ७ ॥ कश्चिदीश्वरभट्टाख्यस्तत्रासीद्ब्राह्मणोत्तमः॥ द्विशते च त्रिसाहस्रे चतुर्विंशतिकायुते ॥ ८ ॥ कलौ युगे गतेब्दानां शोभकृन्नामके ततः ॥ संवत्सरे ज्येष्ठमासे राकायां मित्रभे बुधे ॥ ९ ॥ अंशेन गजवक्त्रस्य विष्वक्सेनस्य मंत्रिणः ॥ जातो नाथमुनिस्तस्य विप्रस्य सुमहायशाः ॥ १० ॥ स तु नाथमुनिः श्रीमान् सर्वशास्त्रविशारदः ॥ तेजस्वी

ज्ञानसंपन्नो विष्णुभक्तिपरायणः ॥ ११ ॥ दिगंतकीर्तिर्वेदांतिन् बभूव ब्राह्मणोत्तमः ॥ तस्येश्वरमुनिर्नाम पुत्रोऽभूल्लोकविश्रुतः ॥ १२ ॥ स च नाथमुनिः श्रीमान् वेदांतिन्भगवत्परः ॥ राजगोपालदेवस्य वीर नारायणे पुरे ॥ १३ ॥ कैंकर्य्याण्यनिशं कुर्वन्भक्त्या सर्वाणि चानघ ॥ पितृपुत्रादिसहितो बहुकालमतिष्ठत ॥ १४ ॥ तस्य नाथमुनेः सम्यक् कुटुंबेन सहादरात् ॥ संद्रष्टुं दिव्यदेशान्हि मतिरासीन्महामतेः ॥ १५ ॥ ततः कदाचिद्देवस्य सन्निधिं समुपेत्य सः ॥ नत्वा श्रीराजगोपालं कृतांजलिरभाषत ॥ १६ ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम्॥ धर्मसंस्थापनार्थाय संभवामि युगेयुगे॥१७॥ इत्युक्तरीत्या भवता ह्यवताराः पुरा कृताः ॥ उत्तरे दिव्यदेशेषु येषु श्रीमथुरादिषु ॥ १८ ॥ इच्छामि सेवितुं सर्वान्मह्यमाज्ञा प्रदीयताम् ॥ भगवान् राजगोपालस्तस्यांगीकृत्य तद्वचः ॥ १९ ॥ अनुज्ञां प्रददौ तद्वत्स तदा नाथयोगिने ॥ अनुज्ञातस्ततस्तेन सकुटुंबो महायशाः ॥ ॥ २० ॥ प्रतस्थे नाथयोगींद्रस्तदोदीचीं दिशं प्रति ॥ महावराहं श्रीमुष्णे नित्यपुष्करणीतटे ॥ २१ ॥ वसंतं संप्रणम्याशु ततो गोपपुरं ययौ ॥ स्नात्वाथ वामने तीर्थे नत्वा तत्र त्रिविक्रमम् ॥ २२ ॥ सकुटुंबो महातेजाः प्रतस्थे घटिकाचलम् ॥ नत्वामृतफलं तत्र नृसिंहं घटिकाचले ॥ २३ ॥ तुंडीरमंडले तत्र दिव्यदेशान्प्रणम्य तान् ॥ सर्वान् क्रमेण सद्भक्त्या तथोदीचीं दिशं ययौ ॥ २४ ॥ उत्तरे प्रथमं नत्वा वेंकटाद्रौ रमासखम् ॥ अहोबले गारुडाद्रौ हिरण्यासुरमर्दनम्॥ ॥ २५ ॥ विट्ठलं पांडुरंगे तु श्रीकूर्मे कूर्मनायकम् ॥ मथुरायां बालकृष्णं मायायां मधुसूदनम् ॥ २६ ॥ गोवर्द्धने गोपवेषं भवघ्ने पद्मलोचनम् ॥ गोमंतपर्वते शौरिं हरिद्वारे जगत्पतिम् ॥ २७ ॥ गंगासागरके विष्णुं चित्रकूटे तु राघवम् ॥ वृंदावने नंदसूनुं गोविंदं कालियह्रदे ॥ २८ ॥ नारायणं बदर्य्याख्ये नैमिषे हरिमव्ययम् ॥ शालग्रा-

सं हरिक्षेत्रे ह्ययोध्यायां रघूद्वहम् ॥ २९ ॥ एवमादिस्थलान्यत्र चोत्तरे विश्रुतानि च ॥ सर्वाणि संप्रणम्याशु यमुनातीरमभ्यगात् ॥ ॥ ३० ॥ यमुनां चातिगंभीरां नानावर्तसमाकुलाम ॥ दृष्ट्वा प्रहृष्टस्तत्तीरे ग्रामं गोवर्द्धनाभिधम् ॥ ३१ ॥ संप्राप्य तत्र देवेशं वसंतं कृष्णमद्भुतम् ॥ प्रणम्य सुतरां हृष्टः स बभूव महायशाः ॥ ३२ ॥ हृद्यत्वात्तस्य देशस्य सौंदर्य्यातिशयाद्धरेः॥तत्र गोवर्द्धनग्रामे नित्यवासमथाकरोत् ॥ ३३॥गोवर्द्धनग्रामपतेर्विष्णोः कैंकर्यमन्वहम्॥कुर्वन्नाथमुनिस्तत्र कंचित्कालमुवास सः॥३४॥ ततः श्रीराजगोपालो वीरनारायणाधिपः ॥ तस्य नाथमुनेः स्वप्ने प्रसन्नः कृपया तदा ॥ ३५ ॥ वीरनारायणपुरमायाहीत्यभ्यभाषत ॥ ततः स्वप्नात्समुत्थाय विस्मितो नाथयोगिराट् ॥ ३६ ॥ पित्रा पुत्रेण चालोच्य गत्वा श्रीकृष्णसन्निधिम् ॥ प्रणम्य स्वप्नवृत्तांतं निवेद्य हरये तदा ॥ ३७ ॥ तेनानुज्ञापितो धीमान्वीरनारायणं ययौ ॥ कृष्णप्रसादपाथेयः सकुटुंबो महायशाः ॥ ३८ ॥ काशीमार्गेण वेदांतिञ्जगन्नाथमवाप सः ॥ सप्तसप्तसु लोकेषु लोकालोके चराचरे ॥ ३९ ॥ नास्तिनास्ति समं क्षेत्रमुत्तमं पुरुषोत्तमात्॥ एतादृशप्रभावं तं संप्राप्य पुरुषोत्तमम् ॥४०॥ जगन्नाथं तत्र नत्वा ययौ सिंहाचलं ततः॥अहो वीर्यमहो शौर्यमहो बाहुपराक्रः॥ ॥ ४१ ॥ नारसिंहमहं वन्दे ह्यहोबिलमहोबलम् ॥ इत्येवं संप्रणम्यार्यो नारसिंहं महायशाः ॥ ४२ ॥ आससादाथ सहसा श्रीवेंकटगिरिं ततः ॥ मायावी परमानंदस्त्यक्त्वा वैकुंठमुत्तमम् ॥ ४३ ॥ स्वामिपुष्करिणीतीरे रमया सह मोदते ॥ इत्येवं वेंकटगिरौ वसंतं तं रमासखम् ॥ ४४ ॥ प्रणम्य नाथयोगींद्रो घटिकाचलमभ्यगात् ॥ तत्रामृतफलं नत्वा नृसिंहं घटिकाचले ॥ ४५ ॥ ततो निर्गत्य स श्रीमानगाद्गृध्रसरोवरम् ॥ तत्राभिवाद्य वेदांतिन् भक्त्या श्रीयोगिराडयम् ॥ ४६ ॥ श्रीगृध्रसरसस्तीरे भांतं विजयराघवम् ॥ ततः

कांचीमवापाथ सेवार्थं वरदस्य च ॥ ४७ ॥ नगरीणां च सर्वासां
पुरी कांची गरीयसी ॥ गिरिणां चैव सर्वेषां श्रेष्ठो हस्तिगिरिः स्मृतः॥
॥ ४८ ॥ वेगवत्युत्तरे तीरे पुण्यकोटचां हरिः स्वयम् ॥ वरदः सर्वभू-
तानामद्यापि परिदृश्यते ॥ ४९ ॥ एवं प्रणम्य वरदं हस्त्यद्रौ नाथयो-
गिराट् ॥ तत्र स्थितान्दिव्यदेशान्वीक्षारण्यमथाविशत् ॥ ५० ॥
वीक्षारण्ये ततो नत्वा शयानं वीरराघवम् ॥ श्रीनिवासपुरं प्राप वर्ण-
पुष्करणीतटे ॥ ५१ ॥ तामस्मन्मातरं लक्ष्मीं नत्वा श्रीभक्तवत्स-
लाम् ॥ महीसारपुरं प्राप भक्तिसारदिदृक्षया ॥ ५२ ॥ जगन्नाथं तत्र
नत्वा मंगवल्लीमनोहरम् ॥ भक्तिसारं च सद्भक्त्या गजस्थलमवाप
सः ॥ ५३ ॥ तत्र कैरविणीतीरे वसंतं पार्थसारथिम् ॥ रंगेशं राघवं
चैव गजार्तिघ्नं हरिं तदा ॥ ५४ ॥ लक्ष्मीनृसिंहं संसेव्य महदाख्य-
मनुत्तमम् ॥ मयूरनगरं प्राप तस्मात्कैरवणीतटात् ॥ ५५॥ यत्रावतारं
विदधे महदाख्यो महायशाः ॥ विलोक्य विस्मितोऽत्यंतं मह्वांतं
लतिकाह्रदम् ॥ ५६ ॥ तं कूपं नाथयोगींद्रस्तत्तोयमपिबत्तदा ॥
मंगलशासनं कृत्वा मयूरपुरकेशवम् ॥ ५७ ॥ तोयाद्रिमगमच्छ्रीमा-
न्वेदांतिन्नाथयोगिराट् ॥ तोयाद्रौ तुंगशयनं रंगेशं संप्रणम्य च॥ ५८॥
आससादाथ सहसा कल्याणनगरं महत् ॥ कल्याणसरसि स्नात्वा
नित्यकल्याणनायकम् ॥ ५९॥ देवीं कोमलवल्लीं च वराहस्वामिनं
हरिम् ॥ नत्वा जगाम सहसा महाबलिपुरं प्रति ॥ ६० ॥ तत्र स्नात्वा
महापुण्ये पुण्डरीकसरोवरे ॥ महाबलिं बलिपुरे विष्णुं भूतलशायिनम्
॥ ६१ ॥ भूदेवीं संप्रणम्याशु चाहींद्रपुरमाविशत् ॥ अहींद्रे देवदेवेशं
नत्वा तार्क्ष्यनदीतटे ॥ ६२ ॥ चित्रकूटमवापाथ शुक्लनद्यास्तु दक्षिणे॥
कृत्वावगाहनं तत्र पुंडरीकसरोवरे ॥ ६३ ॥ गोविंदराजं संसेव्य
सोगमत्परमां मुदम् ॥ चोलदेशमवापाथ सहसा नाथयोगिराट्॥६४॥
चोलदेशस्थितान्सर्वान्दिव्यदेशान्प्रणम्य च ॥ प्रहर्षमतुलं लेभे वेदां-

तिन्नाथयोगिराट् ॥ ६५ ॥ रंगरंगमिति ब्रूयात् क्षुतप्रस्खलनादिषु ॥ ब्रह्मलोकमवाप्नोति सद्यः पापक्षयान्नरः ॥ ६६ ॥ एतादृशप्रभावं तं रंगेशं संप्रणम्य च ॥ कुंभकोणमवापाथ सकुटुंबो महायशाः ॥६७॥ यो नरः कुंभकोणेऽस्मिन् क्षणार्द्धमपि तिष्ठति ॥ करस्थं तस्य कैवल्यं किमुतान्या विभूतयः ॥ ६८ ॥ एवं प्रभावसहिते कुंभकोणे दिनत्रयम् ॥ स्थित्वा प्रणम्य देवेशं शार्ङ्गपाणिं जगत्पतिम् ॥ ६९ ॥ वीरनारायणपुरं सहसैवागमत्तदा ॥ प्रणम्य राजगोपालमनुभूयास्य विग्रहम् ॥ ७० ॥ कृतांजलिपुटस्तस्थौ वेदांतिन्नाथयोगिराट् ॥ प्रसन्नो राजगोपालो भगवान्नाथयोगिने ॥ ७१ ॥ तीर्थं प्रसादं मालां च दापयित्वार्चकैस्तदा ॥ आनयित्वाखिलान् शीघ्रं तत्रत्यान्वैष्णवान् हरिः ॥ ७२ ॥ व्याजहार शुभं वाक्यं कृपया भक्तवत्सलः ॥ स नाथमुनये सम्यग्धनधान्यादिकान्बहून् ॥ ७३ ॥ दत्त्वाशु तमिमं नाथं पूजयध्वं ममाज्ञया ॥ इत्यादिष्टा जनाः सर्वे हरिणा पुरवासिनः ॥ ७४ ॥ तत्रैव नित्यवासाय यथापूर्वमकल्पयन् ॥ वीरनारायणपुरे वेदांतिन्नाथयोगिनः ॥ ७५ ॥ कैंकर्य्यं पूर्ववत्कुर्वन् गोपालस्य श्रियः पतेः ॥ तत्रैव नाथयोगींद्रः स श्रीमान्समतिष्ठत॥७६॥ वेदशास्त्राणि शिष्येभ्यः सम्यक्च चोपदिशन्मुहुः ॥ विद्यागोष्ठ्या युतः श्रीमान् कंचित्कालमुवास सः ॥ ७७ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे नाथमुनितीर्थयात्रावर्णनं नाम षडधिकशततमोऽध्यायः ॥ १०६ ॥

## सप्ताधिकशततमोऽध्यायः ।

ततः श्रीवैष्णवास्तत्र प्रतीच्याः केचिदागताः॥प्रणम्य राजगोपालसन्निधौ भक्तिसंयुताः ॥ १ ॥ श्रीशार्ङ्गपाणिविषया दश गाथा महत्तराः ॥ सम्यग्विज्ञापयामासुः कारिमारकृतास्तदा॥२॥ सम्यङ् नाथमुनिः श्रुत्वा तदा हृद्यममुं स्तवम् ॥ प्रहृष्टो वैष्णवाञ्छीघ्रमिदं वचनमब्रवीत् ॥ ३ ॥ एष प्रबन्धो विबुधा भाति हृद्यतमो महान् ॥

सम्यक् पारायणं सर्वप्रबन्धस्य विधीयताम् ॥ ४॥ ते नाथयोगिवचनं श्रुत्वेदं वैष्णवास्तदा ॥ वेदांतिन्देशिकश्रेष्ठमिदं वचनमब्रुवन् ॥ ५ ॥ एतावन्मात्रमस्माभिर्गृहीतं स्तोत्रमेव हि ॥ सांतप्रबंधवाह्लोके न कश्चिदिह विद्यते ॥ ६ ॥ तत्पुस्तकं वा कुत्रापि न चास्माभिर्विलोकितम् ॥ स तेषां तद्वचः श्रुत्वा नाथयोगी महायशाः ॥ ७ ॥ सम्यक् तीर्थप्रसादांश्च वैष्णवेभ्यो ददौ मुदा ॥ ततः सञ्चिंतयामास स मुनिनाथपूर्वकः ॥ ८ ॥ सहस्रे तु दशेत्यत्र तदिदं समुदीरितम् ॥ किं वा दशकमेताद्धि शतके समुदीरितम् ॥ ९ ॥ तस्माद्विशोध्य ताः सर्वा ग्रहीतव्याः प्रयत्नतः॥श्रीशार्ङ्गपाणिविषयः प्रबंधोयं महांस्ततः॥१०॥ तस्मात्तमद्य सहसा संग्रहीष्ये द्विजोत्तमात् ॥ इति संचिंत्य वेदांतिन् मतिमान्नाथयोगिराट् ॥११॥तं प्रबंधं महाभक्त्या तस्मात्संगृह्य योगिराट्॥कुंभकोणं ततो गत्वा तस्मादष्टांगयोगतः ॥१२॥प्रत्यक्षविषयं सम्यग्विदधे शार्ङ्गिणं हरिम्॥योगेनाराधितः सम्यगपर्याप्तामृताभिधः॥१३॥ प्रसन्नः प्राह वेदांतिन् नाथार्य्यं योगिपुंगवम् ॥ ताम्रपर्णीसरित्तीरे कुरुकानगरे वरे ॥ १४ ॥ मद्भक्तः शठकोपाख्यो वर्त्तते दिव्ययोगिराट् ॥ सहस्रगीतिस्तेनैषा कृता शठजितानघ ॥ १५ ॥ तत्र गत्वा गृहाणेमां तस्माच्छठजितोऽनघ ॥ निशम्य भगवद्वाक्यं नाथयोगी प्रणम्य तम् ॥ १६ ॥ तेन संप्रेषितः शीघ्रं कुरुकानगरं ययौ ॥ आदिनाथं प्रणम्याथ कुरुकायां रमासखम् ॥ १७ ॥ चिंचामूले शठारातिं तं च तत्र ददर्श सः ॥ शिष्यं महांतं मधुरकविं तत्र तदानघ ॥ १८ ॥ श्रीपरांकुशदासाख्यं गुरुभक्तिपरायणम् ॥ स तं प्रणम्य वेदांतिन् व्याजहार वचः शुभम् ॥ १९ ॥ को वास्ति किं पुरे चात्र शठजित्सूक्तिपाठकः ॥ तत्सूक्तिपुस्तकं चापि विद्यते चेद्वदाधुना ॥ २० ॥ श्रीपरांकुशदासोऽथ तद्वचः प्रतिगृह्य सः ॥ तन्नाथमुनिमुद्दिश्य स जगाद वचः शुभम् ॥ २१ ॥ कारिमारकृता दिव्यप्रबं-

याः पूर्वमेव हि ॥ तत्पुस्तकं तत्पठनः कोपि नास्त्यधुना महान्
॥ २२ ॥ तत्कारणं प्रवक्ष्यामि श्रूयतामवधानतः ॥ पुरा शठारि-
र्भगवाँल्लोकसंरक्षणाय च ॥ २३ ॥ वेदसारतमानर्थान्समुद्धृत्य प्रय-
ततः ॥ दिव्यप्रबंधांश्चतुरश्चक्रे द्राविडभाषया ॥ २४ ॥ सारांशभूत-
स्तत्रापि प्रबंधश्चरमो महान् ॥ सद्यो मोक्षप्रदः सर्वशास्त्रसारतमोऽ-
नघ ॥ २५ ॥ दिव्यः सहस्रगीत्याख्यः पापिनामपि मुक्तिदः ॥ तं
प्रबंधं शठारातिः कृत्वा मोक्षैककारणम् ॥ २६ ॥ मधुरायोपदि-
श्याशु कवये कृपया तदा ॥ जगाम योगिराण्नाथ तद्विष्णोः परमं
पदम् ॥ २७ ॥ सहस्रगीत्यध्ययनात्सर्वे निर्धूतकल्मषाः ॥ मुक्तिं
गतास्तत्समाप्तिदशायामेव सत्वरम् ॥ २८ ॥ नैतदध्ययनं तेन जने-
नाकारि केनचित् ॥ अतोऽपि द्राविडाम्नायपठनं भुवि दुर्लभम्
॥ २९ ॥ तस्य द्राविडवेदस्य संप्राप्तं दुर्यशस्ततः ॥ प्रबंधो मारक
इति केचित्प्राहुर्जना यतः ॥ ३० ॥ केचिन्मूढतमास्तत्र दुर्मंत्रं विद-
धुस्ततः ॥ यदि तत्पुस्तकं लोके वर्तेते निखिला जनाः ॥ ३१ ॥
अज्ञानेन पठित्वाशु मरणं यांति निश्चयम् ॥ तत्पुस्तकं नदीपूरे नि-
क्षेप्तव्यं ततो ध्रुवम् ॥ ३२ ॥एवं विधाय दुर्मंत्रं केचिन्मूढतमा जनाः॥
तत्सूक्तिमात्रं संगृह्य पत्राणि निखिलानि वै ॥ ३३ ॥ ताम्रपर्णीनदी-
पूरे पातयामासुरग्रतः ॥ तत्रैकपत्रं सहसा प्रवाहाभिमुखं ययौ
॥ ३४ ॥ श्रीशार्ङ्गपाणिविषयं दशपद्यैकशोभितम् ॥ प्रत्युद्गतं प्रवा-
हस्य पत्रं दृष्ट्वातिविस्मिताः ॥ ३५ ॥ कश्चिदर्थो महानस्तीत्येव-
मित्यादृता जनाः॥ तामेव जगृहुः सर्वे पत्रिकां विबुधर्षभाः ॥ ३६ ॥
अतः सहस्रगीत्यां हि दशगाथा हि ता भुवि ॥ शठारिकृपयैवाथ गुरुर्मे
मधुरः कविः ॥ ३७ ॥ शठकोपस्य कैंकर्य्यं विधायानुत्तमं महत् ॥
संप्रकाश्य स्वगुरवे भूम्यां सर्वत्र विश्रुतम् ॥ ३८ ॥ बहुकालांत
प्रपि तद्विष्णोः परमंपदम् ॥ शठारिविषयः कश्चित्पद्यैकादशशो-

भितः ॥ ३९ ॥ स प्रबंधो हि मधुरकविनाकारि विश्रुतः ॥ तस्मा-
त्कवेर्मम प्राप्तः स प्रबंधो गुरोर्महान् ॥ ४० ॥ मत्तो गृहीत्वा नाथार्य
तं प्रबंधं महत्तरम् ॥ भक्त्या द्वादशसाहस्रसंख्यया पठतस्तव ॥४१॥
शठारातिर्ध्रुवं शीघ्रं सुप्रसन्नो भविष्यति ॥ यदि प्रसन्नः शठजित्प्रबं-
धाः सकलास्तव ॥ ४२ ॥ संप्राप्ता एव नाथार्य्य संशयोत्र न विद्यते॥
तदंगीकृत्य वचनं प्रबंधं प्रतिगृह्य तम् ॥ ४३ ॥ दीर्घप्रणामैर्बहुभिः
शठारातिं प्रणम्य च ॥ तस्याभिमुखमासीनो वेदांतिन्नाथयोगिराट्
॥ ४४ ॥ भक्त्या द्वादशसाहस्रवारं तच्च जजाप सः ॥ लक्ष्मीपुरुष-
कारेण प्रसन्नो नाथयोगिनः ॥ ४५ ॥ कारिसूनुः कृपासिंधुर्बभूव
शठजिन्महान् ॥ आस्तिको धर्मशीलश्च शीलवान्वैष्णवः शुचिः
॥ ४६ ॥ गंभीरश्चतुरो धीरः शिष्य इत्यभिधीयते ॥ इत्यादिगुण-
युक्ताय धीमते नाथयोगिने ॥ ४७ ॥ जगाद निखिलानर्थान्यथा वा-
गशरीरिणी ॥ सहस्रगीतिप्रमुखान्प्रबंधाञ्छठजित्तदा ॥ ४८ ॥ दिव्यं
चक्षुर्यथा कृष्णः पार्थाय कृपया ददौ ॥ तथैव नाथमुनये दिव्यनेत्रं
प्रदाय च ॥ ४९ ॥ तत्त्वत्रयं तथा सम्यग्रहस्यत्रितयं तथा ॥
इति श्रीविष्णुसिद्धांतं योगमष्टांगमादरात् ॥ ५० ॥ सम्यग्भविष्यदा-
चार्यविग्रहं निखिलं च तत् ॥ सहस्रगीतिपठनं ये कुर्वंति महात्मकाः॥
॥५१॥ देहावसाने मोक्षो हि तेषामिति विनिर्णयः॥विधाय सर्वमेवाशु
स तस्मै प्रददौ मुदा ॥ ५२ ॥ एवं नाथमुनेः शीघ्रं शठारेर्दिव्ययोगि-
नः ॥ तदा सर्वार्थसंप्राप्तिः कृतार्थः संप्रहर्षितः ॥ ५३ ॥ संसेवयन्नादि-
नाथं बकुलाभरणं च तम् ॥ कुरुकायां महाभक्त्या कंचित्कालमति-
ष्ठत ॥ ५४ ॥ माधवः संप्रहृष्टोथ भट्टार्य्यमिदमब्रवीत् ॥ अशरीरगिरा
प्राह शठारिर्निखिलं किल ॥ ५५ ॥ तमर्चाविग्रहं तस्मै परोक्षं दत्तवान्
कथम् ॥ को वा भविष्यदाचार्य्यविग्रहः कीदृशः स्मृतः ॥ ५६ ॥
विशदं ब्रूहि मे विद्वंस्तत्सर्वं कृपया गुरो ॥ तदंगीकृत्य वचनं भट्टार्य्य-

स्तमथाब्रवीत् ॥ ५७ ॥ वेदांतिञ्छृणु वक्ष्यामि निगृह्येंद्रियवाजिनः ॥ अतिगोप्यमिमं विद्वन्मन्नाथाख्यमनुत्तमम् ॥५८॥ ततः संप्राप्तसर्वार्थः कृतार्थः प्रणिपत्य तम् ॥ एवं विज्ञापनं चक्रे शठारिं नाथयोगिराट् ॥ ५९ ॥ स्वामिन्सहस्रगीत्यां तु ह्यवतारादिसूचकः ॥ महतः कस्यचिच्चात्र पद्यं किञ्चित्समीरितम् ॥ ६० ॥ तस्यार्थं कृपया ब्रूहि करुणाकर मेऽधुना ॥ तदंगीकृत्य वचनं शठजिन्नाथयोगिनः ॥६१॥ स्वयं भविष्यदाचार्यविग्रहाकारवांस्तदा ॥ कस्यचिच्छिल्पिनः स्वप्ने प्रसन्नः प्राह तं गुरुः॥६२॥शिल्पिन्ननेन रूपेण कृत्वार्चाविग्रहं परम्॥मत्सन्निधौ मामकाय देहि श्रीनाथयोगिने॥६३॥ततः स्वप्नात्समुत्थाय शिल्पी विस्मितमानसः॥तथैव विग्रहं कृत्वा प्रददौ नाथयोगिने ॥६४॥ ततः स नाथयोगींद्रः पद्माक्षाय ददौ तदा ॥ पद्माक्षो राममिश्राय तमर्चाविग्रहं ददौ ॥ ६५ ॥ राममिश्रो यामुनाय श्रीरंगेष्वदिशत्स तम् ॥ आदिशत्सोपि तं देवं गोष्ठीपूर्णाय यामुनः ॥ ६६ ॥ गोष्ठीपूर्णस्य दुहिता काचिदासीन्महामतिः ॥ देवकीश्रीरिति ख्याता भक्तिज्ञानस्वरूपिणी ॥ ६७ ॥ तं देवमदिशत्तस्मै पिता दुहितृवत्सलः ॥ मंत्रं गृह्णति योगींद्रे गोष्ठीपूर्णाद्गुरोस्तदा॥ ६८ ॥ रामानुजार्यै सहसा नादृश्यत स विग्रहः ॥ एवं गुह्यतमो ह्यर्थो मयैव रहसि श्रुतः ॥ ६९ ॥ अतोयं लक्ष्मणाचार्य्यः साक्षाद्विष्णुर्न संशयः ॥ तत्संबंधबलेनैव सर्वेषां परमं पदम् ॥७०॥ पोलिहेत्यस्य पद्यस्य स्पष्टार्थो यतिपुंगवः ॥ उदभूत्तेन सर्वेषां मुक्तिदाता स एव हि ॥ ७१ ॥ यतो भविष्यदाचार्य्यविग्रहो यतिपुंगवे॥ लीनमासीत्ततस्तस्माद्गुरोः कोऽन्योधिऽको भुवि ॥७२॥ नाथार्यादिगुरूणां च श्रीशठार्यादियोगिनाम् ॥ तत्संबंधबलेनैव मोक्षोन्येषां च निश्चितः ॥ ७३ ॥ पुरा भगवता प्रोक्तं हारीतं प्रति चानघ ॥ ब्रह्मन्कलियुगे प्राप्ते धर्मे नष्टे श्रुतेरिति ॥७४॥ मद्भक्तः सर्वधर्मज्ञस्तव गोत्रसमुद्भवः ॥ शारीरिकमहाभाष्यग्रंथकर्त्ता जितेंद्रियः ॥ ७५ ॥

तस्य संबंधिनः शिष्याः सुराणामपि दुर्गमम् ॥ मामवाप्यैव ते सर्वे गमिष्यंति परां गतिम् ॥ ७६ ॥ पुरांतिवासिनः केचिद्यतींद्रस्यांतरंगिणः ॥ निपीड्य चरणौ गाढमिदं वचनमब्रुवन् ॥ ७७ ॥ यतिराज दयासिंधो शृणु विज्ञापनं गुरो ॥ यादवाचलमाहात्म्ये श्लोकोऽयं विद्यते किल ॥७८॥ अनंतः प्रथमं रूपं द्वितीयं लक्ष्मणस्तथा ॥ तृतीयो बलरामश्च कलौ कश्चिद्भविष्यति ॥ ७९ ॥ कश्चिच्छब्दस्य भगवन्नैजमर्थं वदाशु नः ॥ बहुभिः प्रार्थितः शिष्यैर्यतींद्रः स रहोऽब्रवीत् ॥ ८० ॥ अहमेवेति तस्यार्थः कलौ रामनुजः स्मृतः ॥ ॥ अतो रामानुजं भूम्यां लोकरक्षणहेतवे ॥ ८१ ॥ अवतीर्णं विजानीहि ह्यनंतं सर्वमुक्तिदम् ॥ भट्टार्य्यवचसा तेन संतुष्टश्छिन्नसंशयः ॥ ८२ ॥ अस्मद्यातिः पुनः प्राह वचनं गुरुपुंगवम् ॥ ततः संप्राप्तसर्वार्थो नाथयोगी महायशाः ॥ ८३ ॥ किं चकार गुरुश्रेष्ठ तद्वृत्तांतं वदाशु मे ॥ तस्य तद्वचनं श्रुत्वा भट्टार्य्यस्तमथाब्रवीत् ॥ ८४ ॥ वेदांतिन्नाथयोगींद्रः प्राप्तसर्वार्थसंचयः ॥ शठारिसैवैकरतस्तत्प्रबंधमनुत्तमम् ॥ ८५ ॥ पठंस्तत्सन्निधौ भक्त्या तत्कैंकर्य्यपरोऽनिशम् ॥ तत्र विस्मृतगोपालः कंचित्कालमुवास सः ॥ ८६ ॥ स तदा राजगोपालः स्वप्ने नाथस्य योगिनः॥प्रसन्नः प्राह वेदांतिन्सर्वलोकहितं वचः ॥८७॥शीघ्रं मत्पुरमायाहि गुरुणाज्ञापितोऽधुना ॥ शमादिगुणवद्भ्यश्च वैष्णवेभ्यः प्रदाय तान् ॥८८॥दिव्यप्रबंधान्सकललोकसंरक्षणं कुरु ॥ ततस्तत्सर्ववृत्तांतं सन्निधौ गुरुदेवयोः ॥८९॥विज्ञाप्य ताभ्यां नाथार्य्यः स तदाज्ञापितो महान् ॥ श्रीकुंभकोणनगरमवाप सुमहायशाः ॥ ९० ॥ अपर्याप्तामृतं तत्र शार्ङ्गपाणिं ननाम सः ॥ लीनाः प्रबंधा येनोर्व्यां सर्वे ते पुनरुद्धृताः ॥ ९१ ॥ संप्रहृष्टोथ नाथार्य्यः श्रीहरेः शार्ङ्गिणोनघ ॥ दिव्यसूर्याभिधां तस्य संतुष्टः प्रददौ ततः ॥ ९२ ॥ अपर्याप्तामृतार्याख्यं तं वदंति बुधास्ततः ॥ ततोऽगमत्पुरं शीघ्रं वीरनारायणाभिधम् ॥ ९३॥

प्रणम्य राजगोपालं भक्त्या तत्सान्निधौ तदा ॥ विज्ञाप्य तच्च सकलं ते नानुज्ञापितो गुरुः ॥ ९४ ॥ श्रीवैष्णवेभ्यः सर्वेभ्यस्तान्सर्वान् द्राविडागमान् ॥ कृपयैवोपदिश्याशु जगत्सर्वमपालयत् ॥ ९५ ॥ आचिंतयत्ततो धीमान् वेदांतिन्नाथयोगिराट् ॥ शठकोपोंजसा मह्यं प्रबंधान्प्रददौ किल ॥९६॥ तन्निष्क्रयार्थं लोकेस्मिन्मया शिष्येण विस्तृतम्॥ तत्प्रबंधप्रवचनं कर्त्तव्यं सम्यगेव हि ॥९७॥ इति संचिंत्य वेदांतिन्मतिमान्नाथयोगिराट् ॥ भागिनेयद्वयेनाथ प्राक्पश्चात्पुरवासिना॥९८॥ देवगानयुतं सम्यक्तं प्रबंधमकारयत्॥यथोदात्तानुदात्तादिसर्वान्भेदाननेकधा ॥९९॥ वेदव्यासस्तु भगवान्सम्यग्वेदेष्वकल्पयत् ॥ तथा द्राविडवेदेपि कल्पयित्वा स्वरांश्च सः ॥ १०० ॥ प्रबंधं देवगानेन जगावग्रे श्रियः पतेः ॥ ततः संशिक्षितौ तेन मातुलेन महात्मना॥१०१॥ तौ भागिनेयौ मधुरस्वरौ श्रीवैष्णवोत्तमौ ॥ प्रबंधं देवगानेन राजगोपालसन्निधौ ॥ १०२ ॥ अगायेतामहोरात्रमुत्सवादिषु चादरात् ॥ यथा रामायणं सम्यक् पुरा कुशलवाविव ॥ १०३ ॥ ततःप्रभृति वेदांतिञ्छ्रीरंगेश्वरसन्निधौ ॥ नित्यमव्याहतं सम्यक्छ्रीनाथमुनिशासनात ॥ १०४ ॥ तदेव गानमद्यापि श्रूयते चोत्तमं महत ॥ एवं स नाथयोगींद्रो वेदांतिन् रंगिशासनात् ॥ १०५ ॥ संलीनं सम्यगुद्धृत्य तं प्रबंधं महत्तरम् ॥ शिष्येभ्यो बोधयन्सम्यक् सर्वेभ्यः सकलावनौ ॥ गुरुं प्रकाशयन्सम्यगुवास सुमहायशाः ॥ १०६ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे नाथमुनेर्भविष्यदाचार्य्यविग्रहप्राप्तिर्नाम सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥

## अष्टोत्तरशततमोऽध्यायः ।

अथ वारांगना काचिद्देवगानविशारदा ॥ मर्त्यगानैकनिपुणा काचिदन्या बभूव ह ॥ १ ॥विद्यावैदग्ध्यहेतोस्ते स्पर्द्धमाने स्त्रियौ तदा ॥ जग्मतुश्चोलभूपालसन्निधिं जयकांक्षया ॥ २ ॥ तयोर्वृत्तांतमाकर्ण्य चोलराजो महीपतिः ॥ आनयामास विबुधांस्तत्परीक्षैकहेतुना ॥ ३ ॥

राजाज्ञया बुधाः सर्वे नानादेशनिवासिनः ॥ क्रिमिकंठस्य चोलस्य नगरं जग्मुरंजसा ॥ ४ ॥ तदा राजसभास्थाने विद्वत्संघविराजिते ॥ अगायेतां क्षितीशस्य शासनाद्वारयोषितौ ॥ ५ ॥ देवगानवती सम्यग्देवगानं जगौतदा ॥ मर्त्यगानवती सम्यङ् मत्यगानं ज गौतथा ॥६॥ मर्त्यगानेन मनुजाः संतुष्टाश्च तथा नृपः ॥ सम्मानं बहुशश्चक्रे तस्यै वारस्त्रिये तदा ॥ ७ ॥ ते तदाज्ञातदोषेण देवगानस्य मानवाः ॥ तस्यामनादरं चक्रुरंगनायां नृपादयः ॥ ८ ॥ ततोऽवमानिता तेन भूपेन निखिलैर्जनैः ॥ प्रज्ञावती तदा चैवं वारस्त्री समचिंतयत् ॥९॥ देवगानमिदं देवा जानंत्येव न मानवाः ॥ गानं तदेतत्कर्त्तव्यं देवतासन्निधौ किल ॥ १० ॥ इत्येवं सम्यगालोच्य सा वारवनिता तदा ॥ चचार निखिलान्दिव्यदेशान्भक्त्या श्रियः पतेः ॥ ११ ॥ वीरनारायणपुरं ततो गत्वांगना तदा ॥ जगौ सम्यग्देवगानं राजगोपालसन्निधौ ॥१२॥ तदेतत्सम्यगाकर्ण्य देवगानविशारदः ॥ श्रीनाथयोगी संतुष्टः स तस्यै वारयोषिते ॥ १३ ॥ तीर्थं प्रसादं मालां च परिपट्टं ददौ तदा ॥ प्रणम्य नाथयोगींद्रं सा वारवनिता तदा ॥ १४ ॥ चोलराजांतिकं गत्वा वचनं चेदमब्रवीत् ॥ वीरनारायणपुरे देवगानविशारदः ॥ धीमान्नाथमुनिर्नाम वर्त्तते वैष्णवोत्तमः ॥ १५ ॥ स एव वेत्ति चोलेंद्र देवगानं ममाधुना ॥ तदंगीकृत्य वचनं चोलेंद्रो वारयोषितः ॥ १६ ॥ आनयामास चोलेंद्रः संमानेन महौजसम् ॥ तेन राज्ञा समाहूतो राजांतिकमुपागतः ॥ १७ ॥ राज्ञा प्रत्युद्गतो दूराद्भक्त्या संपूजितस्तथा ॥ वेदांतिन्नाथयोगींद्रो राजगोष्ठीं विवेश सः ॥ १८ ॥ तदा राजा समाहूय ते चोभे वारयोषितौ ॥ नाथार्य्यसन्निधावाज्ञामदिशद्गीतकर्मणि ॥ १९ ॥ मर्त्यगानं देवगानं तद्वयं समवर्त्तत ॥ मर्त्यगानेन मनुजाः पूर्ववद्धर्षमाययुः ॥ ॥२०॥एक एव स नाथार्यो देवगानान्मुदं ययौ ॥ चोलेन्द्रो मतिमा-

नाथमुनिमेवं वचोऽब्रवीत् ॥ २१ ॥ ज्ञातुं महादेवगीतेरुपायं ब्रूहि नः स्फुटम् ॥ तदंगीकृत्य वचनं नाथार्यो भूपमब्रवीत् ॥ २२ ॥ शृणु राजन्प्रवक्ष्यामि देवगानस्य लक्षणम् ॥ सलक्षणं देवगानं यो वा वेत्ति महीतले ॥२३॥ सतालनादश्रवणाद्वेत्ति तालप्रमाणकम् ॥ इत्युक्तं तद्वचः श्रुत्वा तदानीमेव भूपतिः ॥ २४ ॥ चत्वारिंशोत्तरं तालत्रितयं चानयत्ततः ॥ आनीयाथ स नाथार्यसन्निधौ विस्मयान्वितः ॥ २५ ॥ शृण्वतां चैव सर्वेषां प्रत्येकं चोलभूपतिः ॥ वादयित्वाशु तत्तालप्रमाणं तत्सभांतरे ॥ २६ ॥ जिज्ञासुस्तत्र नाथार्यं भूमिपालस्तमब्रवीत् ॥ निनदः कांश्यतालानां श्रुतः खलु मुने त्वया ॥ २७ ॥ प्रमाणमुच्यतां नाथमुने सम्यगितीरितम् ॥ राजवाक्यं ततः श्रुत्वा यज्ज्ञातं तेन भूभृता ॥ २८ ॥ तावदेव मुनिः प्राह राजा तुष्टोऽभवत्तदा ॥ यत्तालनादश्रवणाद्यदुक्तं यत्प्रमाणतः ॥ २९ ॥ तत्प्रमाणेन तुलया तद्विशोध्य स भूमिपः ॥ तस्य न्यूनाधिकाभावात्संप्रहृष्टः स तं तदा ॥ ३० ॥ महाश्चर्य्ययुतो नाथपादकंजं प्रणम्य च ॥ धनं बहुविधं सम्यगर्प्पयामास भक्तितः ॥ ३१ ॥ निराकृतशिवब्रह्मवैभवो नाथयोगिराट् ॥ निःस्पृहस्तद्धनं सर्वं निराकृत्य महायशाः ॥ ३२ ॥ मास्तु राजधनं मेऽद्य चेति सम्यगुवाच ह ॥ कृत्वाशिषं नृपे प्रीत्या वीरनारायणं ययौ॥३३॥ नाथयोगिप्रसादेन देवगानविशारदा ॥ राजप्रसादसंपन्ना सा संतुष्टाभवत्तदा ॥ ३४ ॥ पूर्ववद्राजगोपालदेवस्यानिशमादरात् ॥ कैंकर्य्यं विदधत्सम्यगतिष्ठत्स हि योगिराट् ॥३५॥ महांतमधिकं वीक्ष्य प्रभावं नाथयोगिनः ॥ संजातभक्तिभावास्तं जनाः सम्यक् समाहिताः ॥ ॥३६॥ तस्यांतेवासिनो धीरास्तत्रैकादश विश्रुताः ॥ पद्माक्षः कुरुकानाथः प्राक्पश्चात्पुरवासिनौ ॥ ३७ ॥ भागिनेयौ महाभागौ देवगानविशारदौ ॥ श्रीकृष्णलक्ष्मीनाथार्य्यप्रमुखा ये महौजसः ॥ ३८ ॥ पद्माक्षप्रमुखेभ्योऽथ शिष्येभ्यो निखिलास्तदा ॥ दर्शनार्थीस्तदा

सम्यक् प्रददौ नाथयोगिराट् ॥ ३९ ॥ अहो द्वयस्य माहात्म्यमहो वीर्यमहोबलम् ॥ मंत्ररत्नं शुभकरं वेदसारं सनातनम् ॥ ४० ॥ एवं सुश्लाघितं सम्यग्द्वयार्थं मोक्षहेतुकम् ॥ सहस्रगीतिप्रमुखान्सकलद्राविडागमान् ॥ ४१ ॥ सर्वाणि वेदशास्त्राणि वेदांगानि च सादरम् ॥ उपदिश्याशु शिष्येभ्यः श्रीनाथमुनिपुंगवः ॥ ४२ ॥ तस्थावष्टांगयोगेन कंचित्कालं दृढव्रतः ॥ निवृत्तयोगो वेदांतिस्ततः श्रीनाथयोगिराट् ॥ ४३ ॥ शास्त्रं तन्न्यायतत्त्वाख्यं तथा पुरुषनिर्णयम् ॥ धीमान्योगरहस्यं च त्रीण्येतान्यकरोत्तदा ॥ ४४ ॥ उपदिश्याशु शिष्येभ्यस्तानि शास्त्राणि देशिकः ॥ स भूयोष्टांगयोगेन कंचित्कालं व्यतिष्ठत ॥ ४५ ॥ योगास्थितस्य नाथस्य श्रुत्वा वैभवमद्भुतम् ॥ द्रष्टुकामश्चोलभूपो वीरनारायणं ययौ ॥ ४६ ॥ प्रणम्य राजगोपालं योगारूढं च तं मुनिम् ॥ राजा श्रीनाथमालोक्य जाताश्चर्यो बभूव ह ॥ ४७ ॥ भक्त्या संसेव्य तं राजा प्रतस्थे नगरं तदा ॥ श्रीकृष्णं तं नृपं मत्वा गोपस्त्रीभिर्विराजितम् ॥ ४८ ॥ आगंगानगरं योगी भक्तिभावात्प्रदुद्रुवे ॥ निवृत्तयोगं नृपतेः पश्चाद्धावंतमंजसा ॥ ४९ ॥ श्रीनाथयोगिनं शिष्या वीक्ष्य विस्मितचेतसः ॥ पंकजाक्षादयो वेगात्ते संप्राप्य तदंतिकम् ॥ ५० ॥ बाहुभिः परिरभ्याशु वचनं चेदमब्रुवन् ॥ किंनिमित्तं भवान्स्वामिन्नाथार्य्य परिधावसि ॥ ५१ ॥ ब्रूहि तत्कारणं शीघ्रमस्माकं गुरुपुंगव ॥ स तद्वचनमाकर्ण्य जातस्मृतिरभाषत ॥ ५२ ॥ श्रीकृष्णो गोपिकास्त्रीभिस्तदा स्थित्वा मदंतिके ॥ किमप्युक्त्वा महद्वाक्यं वर्त्मनैवामुनाधुना ॥ ५३ ॥ प्रयात इव मे भाति तस्मात्तं द्रष्टुमागतः ॥ पद्मनेत्रप्रभृतयस्तच्छ्रुत्वा निखिला जनाः ॥ ५४ ॥ तद्भक्तिपारवश्येन विस्मयं परमं ययुः ॥ भूयस्ततो नाथयोगी कंचित्कालं महामनाः ॥ ५५ ॥ नीत्वाष्टांगेन योगेन पद्माक्षमवलोक्य तम् ॥ कुरुकाधिनाथनामानं शिष्यं वाचमथाब्रवीत ॥ ५६ ॥ अष्टांगयोगं दा-

स्यामि गृहाणाशु महामते ॥ स तु तस्मै ददौ शीघ्रं योगमष्टांगमुत्तमम् ॥ ५७ ॥ शीघ्रं पद्माक्षमाहूय तमेवं वाक्यमब्रवीत् ॥ त्वमद्यैवमिमं योगं गृहाणाद्यमनुत्तमम् ॥ ५८ ॥ स गुरोर्वाक्यमाकर्ण्य पद्माक्षस्तमभाषत ॥ विद्यमाने शवे गेहे कल्याणं मे कथं भवेत् ॥ ५९ ॥ स्वामिन् देहावसाने तु ग्रहीष्ये योगमुत्तमम् ॥ तदंगीकृत्य वचनं पुनराह तमादरात् ॥ ६० ॥ तथाप्यद्य गृहाणेमां महतीं शठजित्कृतिम् ॥ इत्युक्त्वा पद्मनेत्राय नाथार्य्यः कृपया तदा ॥ ६१ ॥ सहस्रगीतिप्रसुखप्रबंधार्थान्विशेषतः ॥ दर्शनार्थांस्ततः सर्वानुपदिश्य यथाविधि ॥ ६२ ॥ दृष्ट्वेश्वरमुनिं पुत्रमिदं वचनमब्रवीत् ॥ तेजस्वी ज्ञानसंपन्नो महान्कश्चिन्महायशाः ॥ ६३ ॥ तव पुत्रो महातेजाः संभविष्यति पुत्रक ॥ यामुनाचार्य्यनामाथ तस्य त्वं कुरु विश्रुतम् ॥ ६४ ॥ शिष्यद्वयं समालोक्य भूयो वचनमब्रवीत् ॥ मया भवद्भ्यामधुना दर्शनार्थाः प्रदर्शिताः ॥६५॥ येये योगरहस्यार्था विशेषार्था महत्तराः ॥ सर्वार्थांस्तांस्तदा तस्मै मम पौत्राय सादरम् ॥ ६६ ॥ यामुनायोपदिश्याशु ह्याज्ञया मे च तं शिशुम् ॥ दर्शनस्थापकं धीरं कुरुतं भगवत्परम् ॥६७॥ इत्यादिश्याथ वेदांतिन् कृतकृत्यः स योगिराट् ॥ योगारूढमतिर्भूयः कांचित्कालमतिष्ठत ॥६८॥ अथ चोलनृपो भूयस्तं देशमगमत्तदा ॥ मृगयारसिको भूत्वा सबलः शबराकृतिः ॥ ६९ ॥ चरित्वाथ मृगान् हत्वा कानने तत्रतत्र च ॥ प्रत्याहृत्य स भूपालः स्वां पुरीमभ्यगात्तदा ॥ ७० ॥ ततो नाथार्य्यदुहिता पितरं गृहमागतम् ॥ निवृत्तयोगं संवीक्ष्य वचनं चेदमब्रवीत् ॥ ७१ ॥ तताधुना राजपुत्रौ महाभागौ महौजसौ ॥ चन्द्रवर्णाबरलसत्कमनीयशिखंडकौ ॥ ७२ ॥ धनुर्बाणधरौ कट्यां बद्धखड्गौ महाबलौ ॥ पुंडरीकविशालाक्षौ पूर्णचन्द्रनिभाननौ ॥ ७३ ॥ सुकुमारतनू हृद्यौ द्रष्टॄणां नयनोत्सवौ ॥ लावण्यसीम्ना भूपालसुतया दिव्यकांतया ॥ ७४ ॥ शाखा-

मृगेण महता सहितौ सादरौ च तौ ॥ प्रविश्यास्मद्गृहं शीघ्रं मामेवं वाक्यमूचतुः ॥ ७५ ॥ बालेऽत्र जनकः कुत्र तव श्रीनाथयोगिराट् ॥ इत्येवं त्वां समन्वेष्य प्रेम्णा सुमहता तदा ॥ ७६ ॥ अमुनैव पथाद्यैव ययतुस्तावुभौ नृपौ॥तच्छ्रुत्वा दुहितुर्वाक्यं प्रहृष्टोभूत्तदा मुनिः॥७७॥ अग्रतः प्रययौ रामो मध्ये सीता सुमध्यमा ॥ पृष्ठतस्तु धनुष्पाणिर्लक्ष्मणोनुजगाम ह ॥ ७८ ॥ श्लोकार्थं हृदि निक्षिप्य मत्वैवं चतुरः स तान् ॥ संतुष्टो द्रष्टुकामोऽथ तं मार्गमनुसृत्य च ॥ ७९ ॥ मार्गागतजनान् सर्वान्पर्यपृच्छत्समंततः ॥ युष्माभिः किं न दृष्टौ वा सुकुमारौ नृपात्मजौ ॥ ८० ॥ सुकुमारी राजपुत्री मार्गे चात्र बृहत्कपिः ॥ न दृष्टौ राजपुत्रौ च राजपुत्री च वानरः ॥८१॥ इति यत्पथिकैरुक्तं तन्निशम्य सुदुःखितः ॥ तेषां संदर्शनात्यंतप्रेम्णा परवशस्तदा ॥८२॥ सम्यग्गवेषयंस्तत्र ग्रामेषु नगरेषु च ॥ तौ राजपुत्रौ नाथार्यः काननेषु च सादरम् ॥ ८३ ॥ चचार लग्नहृदयस्तेषां संदर्शने तदा ॥ तेषामलभमानोथ दर्शनं सुमहात्मनाम् ॥ ८४ ॥ कुत्रापि भूतले योगी कथंचिदपि यत्नतः ॥ वैकुंठेपि च तान्द्रष्टुं यतेयमिति वांछया ॥८५॥ तेनैव हेतुना योगी महाप्रस्थानमभ्यगात् ॥ परमं वैष्णवं लोकं नित्यानंदसुखाह्वयम् ॥ ८६ ॥ तत्र संवाहिनीं दिव्यां विरजां देवसंभवाम् ॥ सर्वे हिरण्मयास्तत्र सर्वे वेदमयाः शुभाः ॥८७॥ अप्राकृतमया नित्या पुनरावृत्तिवर्जिताः ॥ एकांतिनो सदा ब्रह्मध्यानिनो योगिनश्च ये ॥ ८८ ॥ तेषां तत्परमं स्थानं यद्वै पश्यंति सूरयः ॥ तत्पदं प्राप सहसा वैष्णवं नाथयोगिराट् ॥ ८९ ॥ पद्माक्षप्रमुखाः सर्वे श्रुत्वा नाथार्य्यवर्त्मना ॥ विचिन्वंतो गता दूरमपश्यन्नाथविग्रहम् ॥ ९० ॥ चरमं विग्रहं दृष्ट्वा स्वगुरोर्नाथयोगिनः ॥ पद्मनेत्रादयः सर्वे बभूवुर्भृशदुःखिताः ॥ ९१ ॥ तस्येश्वरमुनिः पुत्रो वियोगेत्यंतदुःखितः ॥ पद्मनेत्रादिसहितः पितुः श्रीनाथयोगिनः ॥ ९२ ॥ ब्रह्ममेधेन विधिना संस्कारमक-

रोत्तदा ॥ पुंडरीकाक्षसहितो नाथसूनुस्तदानघ ॥ ९३ ॥ वीरनाराय-
णपुरं संप्राप्य सहसा पितुः ॥ कर्माण्यध्ययनांतानि सर्वाणि विविधा-
नि च ॥ ९४ ॥ विदधे वैष्णवैः सार्द्धं पद्मनेत्रादिभिर्महान् ॥ अथेश्वर-
मुनिं धीरा गुरुपुत्रमतोषयन् ॥ ९५ ॥ पद्मनेत्रादयः सर्वे बांधवा वस्त्र-
भूषणैः ॥ स तैः संपूजितः सम्यग्वीरनारायणे पुरे ॥ तथेश्वरमुनिः श्री-
मानुवास स महायशाः ॥ ९६ ॥ इति प्रपन्नामृते भट्टार्य्यवेदांतिसं-
वादे नाथमुनिचरमदशावर्णनं नामाष्टाधिकशततमोऽध्यायः ॥१०८॥

## नवाधिकशततमोऽध्यायः ।

श्रीनाथयोगिनः शिष्यास्तस्यैकादश विश्रुताः ॥ तत्रापि भुवि वि-
ख्याताः पंचैव विबुधर्षभाः ॥ १ ॥ पद्माक्षस्तत्र मतिमान्वर्द्धयन्विष्णु-
दर्शनम् ॥ उवास तत्र वेदांतिन्सम्यक् स ब्रह्मचारिभिः ॥ २ ॥ अष्टां-
गयोगनिरतः कुरुकानाथयोगिराट् ॥ वीरनारायणपुरे तत्र तस्थौ महाय-
शाः॥३॥ तौ भागिनेयौ नाथस्य प्राक्पश्चात्पुरवासिनौ ॥ देवगानेन
रंगेशं श्रीरंगे शेषशायिनम् ॥ ४ ॥ तोषयंतौ महाभक्त्या तस्थतुर्दे-
शिकाज्ञया ॥ श्रीकृष्णलक्ष्मीनाथार्यो महात्मा दृढभक्तिमान् ॥ ५ ॥
स्वव्यापारं विसृज्याशु श्ववृत्तिमुपलभ्य च ॥ पश्यतां सर्वभूतानां
सशरीरोऽभ्यगाद्दिवम् ॥ ६ ॥ एवमुक्ते तु भट्टार्य्ये वेदांती विस्मया-
न्वितः ॥ भूम्यां प्रणम्य भट्टार्य्यं कृतांजलिरभाषत ॥ ७ ॥ श्रीकृ-
ष्णलक्ष्मीनाथार्य्यः कुत्रत्यः स कथं गुरो ॥ स्वव्यापारं परित्यज्य
श्ववृत्तिमुपलभ्य च ॥ ८ ॥ केन मार्गेण वैकुंठं सशरीरोऽगमत्क-
थम् ॥ विशदं ब्रूहि सर्वज्ञ श्रोतुं कौतूहलं हि मे ॥ ९ ॥ तदंगीकृत्य
वचनं भट्टार्य्यस्तमथाब्रवीत् ॥ श्रीकृष्णलक्ष्मीनाथार्य्यमाहात्म्यं शृणु
वक्ष्यते ॥ १० ॥ शृण्वतां सर्वपापघ्नं भक्तिज्ञानविवर्द्धनम् ॥ अत्यद्भु-
ततमं ह्येतदद्वितीयं च भूतले ॥११॥ तद्दिव्यसूरिचरितादधिकं दृढभ-
क्तिदम् ॥ श्रीहरेराज्ञया भूम्यां वैकुंठान्नित्यसूरयः ॥ १२ ॥ शठको-

पादिरूपेण ह्यवतीर्णा यथा दश ॥ तथैवायं महातेजाः कृष्णलक्ष्मीशनामकः ॥ १३ ॥ समस्तलोकरक्षार्थं दशभिर्दिव्यसूरिभिः ॥ प्रपत्तिधर्म एवात्र प्रबंधेषु प्रकाशितः ॥ १४ ॥ श्रीकृष्णलक्ष्मीनाथेन स एवार्थो भुवः स्थले ॥ तदनुष्ठानपर्यंतमनेनैव प्रकाशितः ॥ १५ ॥ तदेव संप्रवक्ष्यामि समाहितमनाः शृणु ॥ हरिणाज्ञापितः सम्यङ् नित्यसूरिः परात्परः ॥१६॥ श्रीकृष्णमंगलक्षेत्रे कस्मिंश्चिद्दिव्यवेश्मनि ॥ ज्येष्ठमासे कृष्णपक्षे श्रवणर्क्षे महायशाः ॥ १७ ॥ श्रीकृष्णलक्ष्मीनाथार्य्यः संजज्ञे ब्राह्मणोत्तमः॥कृतोपनयनः पित्रा ब्रह्मचर्य्यपरायणः ॥१८॥ जग्राह निखिलान्वेदान् साक्षिमात्राद्गुरोर्मुखात् ॥ प्रातः स्नातस्ततः सम्यक्छास्त्रदृष्टेन कर्मणा ॥१९॥ विवाहं विधिवच्चक्रे स्वतुल्यद्विजवेश्मनि ॥ भार्यया सहितः श्रीमान्वैदिकाचारतत्परः॥२०॥बभूव ब्राह्मणश्रेष्ठः पंचयज्ञपरायणः ॥ वेदवेदांगसंपन्नः सर्वशास्त्रविशारदः ॥ २१ ॥ सदाचारसमायुक्तः सर्वसज्जनपूजकः ॥ श्रीनाथमुनिना तेन कृतसंस्कारपंचकः ॥ २२ ॥ श्रीवैष्णववरो धीमानशोभत महायशाः॥ श्रीनाथमुनिशिष्याणां सुप्रसिद्धोऽभवत्तदा ॥ २३ ॥ अधीताखिलवेदान्तो भक्तिसार इवानघ ॥ वेदार्थनिर्णये जातो वक्ता वाचस्पतिर्यथा ॥२४॥ प्रह्लाद इव चात्यंतभक्तिमाञ्जन्मवैष्णवः ॥ नामसंकीर्तनरतो भगवान्नारदो यथा ॥ २५ ॥ वैराग्यज्ञानभक्त्यादिसद्गुणैकमहार्णवः ॥ द्राविडाम्नायनिरतो यथा नाथमुनिर्महान् ॥ २६ ॥ पंचमोपायनिष्ठायां स यथा मधुरः कविः ॥ वेदान्तद्वयसारज्ञो महाभागवतोत्तमः ॥ २७ ॥ निर्ममो निरहंकारो भगवद्ध्यानतत्परः ॥ श्रीनाथमुनिना तेन गुरुणाज्ञापितस्तदा ॥ २८ ॥ श्रीकृष्णमंगलक्षेत्रं सम्यगभ्येत्य सादरम् ॥ श्रीकृष्णतुलसीदामकैंकर्य्यनिरतः सदा ॥ २९ ॥ भक्तांघ्रिरेणुवद्भट्टनाथवत्परकालवत् ॥ सततं भगवद्दास्यरसपानरतोऽभवत ॥ ३० ॥ श्रीकृष्णमंगलक्षेत्रे सुगंधतुलसीवनम् ॥ विधाय नित्यं

तुलसीं पुष्पमालाश्च भक्तितः ॥ ३१ ॥ भक्तवत्सलदेवाय कृष्णमंगलवासिने ॥ समर्प्पयंस्तदा तस्थौ कृष्णलक्ष्मीशनायकः ॥ ३२ ॥ सन्तोषमगमत्तेन भगवान् भक्तवत्सलः ॥ निर्व्याजेनैव तस्याशु कैंकर्य्येण महात्मनः ॥ ३३ ॥ ततः कदाचिद्देवेशो भगवान् भक्तवत्सलः ॥ कल्यात्मकं जगद्वीक्ष्य कृपयैवमचिंतयत् ॥ ३४ ॥ भक्तवत्सलनामेदं नाममात्रेण विश्रुतम् ॥ नैवार्थतो हरेरस्य मामित्यज्ञा वदंत्यलम् ॥ ३५ ॥ लोकसंरक्षणं कार्यमतोद्यैव ध्रुवं मया ॥ हेतुमात्रं विधायाहमर्ज्जुनं कृष्णजन्मनि ॥ ३६ ॥ गीतायां चरमश्लोको जनेभ्यः संप्रकाशितः ॥ नैवानुष्ठानपर्य्यंतं स त्वर्थः संप्रकाशितः ॥ ३७ ॥ तैरेव लोकरक्षार्थं शठकोपादिसूरिभिः ॥ चरमश्लोकतत्त्वार्थस्तावन्मात्रं प्रकाशितः ॥ ३८ ॥ अद्यानुष्ठानपर्यंतमनेनैव महात्मनः ॥ कारितव्यं प्रयत्नेन सम्यग्लोकहिताय वै ॥ ३९ ॥ एतेनैवाखिला लोकाः सुदृढप्रत्यया मयि ॥ निर्मुक्तमायासंसारा मामुपैष्यंति निश्चयम् ॥ ४० ॥ एवं निश्चितसंकल्पो भगवान् भक्तवत्सलः ॥ श्रीकृष्णलक्ष्मीनाथार्य्यैं दयावान्समतिष्ठत ॥ ४१ ॥ ततः कदाचिद्वृषलौ सश्वानौ खड्गधारिणौ ॥ उपानद्गूढपादौ च तत्र कौचित्समागतौ ॥ ४२ ॥ भक्तवत्सलदेवस्य श्रुत्वा माहात्म्यमद्भुतम् ॥ संजातभक्तिभावौ तौ संसेवितुमपीषतुः ॥ ४३ ॥ पादरक्षे विमुच्याशु तद्वहिः सत्वरं तयोः ॥ श्वानद्वयं विनिक्षिप्य रक्षार्थं निश्चलौ तदा ॥ ४४ ॥ तौ स्नातौ संप्रविश्याशु भक्तवत्सलसन्निधिम् ॥ संसेव्यांजलिहस्तौ तौ भक्त्या श्रीभक्तवत्सलम् ॥४५॥ प्रदक्षिणक्रमेणैव गत्वा श्रीसन्निधिं ततः ॥ नत्वाभिषेकवल्लीं च तत्रत्यानखिलान् सुरान् ॥४६॥ प्रदक्षिणक्रमेणैव तावुभौ बहिरागतौ ॥ तत्रांतरे तयोरासीत्कलहः सारमेययोः ॥४७॥ अन्योपानद्ग्रहेणैव तयोरन्योन्यमद्भुतम् ॥ स्वभाववैरिणोस्तत्र स्वामिकार्यैकवर्तिनोः ॥ ४८ ॥ तद्युद्धदर्शनौत्सुक्याज्जनसंघो महानभूत् ॥ तौ तदा तत्र चागत्याहवं तत्स्वामिनौ महत् ॥ ४९ ॥

दृष्ट्वा शुनोस्तदा तस्मिन् क्षणमात्रं ह्यवस्थितौ ॥ श्वानौ तुल्यबलौ तत्र द्रष्टुर्विस्मयकारिणौ ॥ ॥ ५० ॥ अयुद्ध्येतां तदा वीरौ महारवसमन्वितौ ॥ एकेन ताडितः संख्ये तत्रान्यः सारमेयकः ॥ ५१ ॥ सुतरामुद्वमन् रक्तं क्षीणप्राणोऽभवत्तदा ॥ क्षीणप्राणं विलोक्याशु तत्स्वामी श्वानमातुरम् ॥ ५२ ॥ ततः स्वभक्तवात्सल्याद्धठा त्खड्गं प्रगृह्य च ॥ शिरश्चिच्छेद तस्याग्रवर्तिनस्तच्छुनो रुषा॥ ५३ ॥ तत्स्वामी पतितं दृष्ट्वा श्वानं खड्गहतं भुवि ॥ रुषा खड्गं प्रगृह्याशु प्रलयाग्निरिव ज्वलन् ॥ ५४ ॥ तं सारमेयहंतारं संग्रामायाभिदुद्रुवे ॥ अभूत्तयोश्च संग्रामोऽत्यन्तं वै रोमहर्षणः ॥ ५५ ॥ सुंदोपसुंदन्यायेन तावुभौ निहतौ रणे ॥ तत्रांतरे समादाय संपूर्णां पुष्पदामभिः ॥५६॥ श्रीकृष्णलक्ष्मीनाथार्य्यः स भक्त्या पुष्पपेटिकाम् ॥ भक्तवत्सलदेवाय विष्णवे सम्यगर्पितुम् ॥ ५७ ॥ कृतत्वरः समागच्छन् भक्तवत्सलसन्निधिम् ॥ तत्र कोलाहलरवं शुश्राव स तमद्भुतम् ॥ ५८ ॥ सम्यगेव स तद्वृत्तं ज्ञात्वा सर्वं सहेतुकम् ॥ विस्मितश्चिंतयामास तयोर्वात्सल्यमद्भुतम् ॥ ५९ ॥ एतौ क्षुद्रसमाचारौ सेवावृत्त्युपजीविनौ ॥ स्वभक्तश्वानवात्सल्यात्क्षणेन निहतौ रणे ॥ ६० ॥ क्षुद्रयोरेतयोर्भक्तवात्सल्यं महदद्भुतम् ॥ तत्प्रवक्तुं कथं केन शक्यते ह्यतिमानुषम् ॥ ६१ ॥ प्रत्यक्षेण मया दृष्टस्तयोरेतादृशो गुणः ॥ धर्माधर्मविचारादिशून्ययोः क्षुद्रकर्मणोः ॥ ६२॥ निर्व्याजबंधोः सर्वज्ञमूर्तेः सर्वजगत्पतेः ॥ अपारकरुणासिंधोर्धर्माधर्मविचारिणः ॥ ६३ ॥ विष्णोर्भगवतस्तस्य जगन्मातुर्जगत्पितुः ॥ लक्ष्मीभर्तुर्हि वात्सल्ये किं वक्तव्यं मयाधुना ॥ ॥६४॥ रक्षिष्यति न वा भक्तामिति यन्मे विचारणा ॥ किमर्थं भगवान् शीघ्रं रक्षिष्यति न संशयः ॥ ६५ ॥ इत्येवं मनसा सम्यङ् निश्चित्य भगवत्परः ॥ श्रीकृष्णलक्ष्मीनाथार्य्यः श्रीपतौ भक्तवत्सले ॥ ६६ ॥ श्रीमान्न्यस्तभरः शीघ्रं स्वकायानं विसृज्य तम् ॥ अनुष्ठानक्रियाः

सर्वां दूरतः परिहृत्य च ॥ ६७ ॥ ततः श्ववृत्तिमास्थाय चतुष्प-
दचरोभवत् ॥ प्रातर्ग्रामाद्बहिर्गत्वा कृतदेहविशोधनः ॥ ६८ ॥
स्नातस्तटाके कस्मिंश्चित्पशुवच्च दिगंबरः ॥ जानुपाणिचरो वेगाद्भ-
क्तवत्सलसान्निधौ ॥६९॥ मूले बकुलवृक्षस्य धृतमौनः समास्थितः ॥
भक्तवत्सलदेवस्य कृपया यत्समागतम् ॥ ७० ॥ भुक्त्वान्नं निश्चलः
सम्यग् दृढमौनो व्यतिष्ठत ॥ वेदांतिन्नथ तत्रत्या जनाः केचिद्विलो-
क्य तम् ॥ ७१ ॥ श्रीकृष्णलक्ष्मीनाथार्य्यमवोचन्निभृतं वचः ॥ अयं
श्रीवैष्णवो धीमान्वैदिकाचारतत्परः ॥ ७२ ॥ केनचित्कर्म-
शेषेण भ्रांतोभूत् किल वै बत ॥ इत्यज्ञास्तदभिप्रायमजानंतो
महाद्भुतम् ॥ ७३ ॥ ऊचुः परस्परं केचित्प्रारब्धं तन्महत्किल ॥
असाध्यमीश्वरेणापि दुर्जयं तद्विनाशितुम् ॥ ७४ ॥ कर्मैव
बलवल्लोके चेश्वरः किं करिष्यति ॥ एतादृशस्य महतः संप्राप्तं वीत-
रागिणः ॥ ७५ ॥ प्रारब्धकर्मणैवेदं भ्रांतिकार्य्यमभूत्किल ॥ तस्मा-
त्कर्मैव बलवदीश्वरादपि निश्चितम् ॥ ७६ ॥ कर्मणा जायते जंतुः
कर्मणैव विवर्द्धते ॥ सुखं दुःखं च मरणं जंतोः कर्मैव दास्यति
॥ ७७ ॥ तस्मात्कर्मैव बलवत् कर्मणा निबिडं जगत् ॥ दैवं कुला-
लवल्लोके वर्त्तते हेतुमात्रतः ॥ ७८ ॥ ईश्वरः साक्षिमात्रं तु जंतोर्धुम-
णिदीपवत् ॥ केचिदूचुस्तदात्रैर श्ववृत्तिं तस्य वीक्ष्य च ॥ ७९ ॥
ज्ञानेनैवायमधुना महात्मा भगवत्परः ॥ निर्भयो निर्भरस्तस्थौ सम्य-
ङ्न्यस्तभरो हरौ ॥ ८० ॥ न काचिन्न्यूनता तस्य कदाचिदपि
विद्यते ॥ भक्तवत्सल एवैतं रक्षिष्यति न संशयः ॥ ८१ ॥ इत्यूचु-
र्विबुधाः केचित्तं विलोक्य तथाविधम् ॥ तस्यैवांतिकमागत्य तदा के-
चिज्जना मुने ॥ ८२ ॥ तेन संभाषणार्थाय ददृशुस्तं दृढव्रतम् ॥
मौनेन महता युक्तमकंपं गिरिसन्निभम् ॥ ८३ ॥ भक्तवत्सलपादा-
ब्जन्यस्तभारं सुनिर्भरम् ॥ निर्व्यापारं महोत्साहं निरस्ताखिलकल्म-

षम् ॥ ८४ ॥ श्रीकृष्णलक्ष्मीनाथार्य्यं वीक्ष्य विस्मितचेतसः ॥
भीत्या पलायिताः केचित् केचिन्नत्वाथ भक्तितः ॥ ८५ ॥ एतद्वृत्तांत-
माकर्ण्यं नानादेशनिवासिनः ॥ श्रीकृष्णमंगलक्षेत्रं गत्वा दृष्ट्वाथ
तादृशम् ॥ ८६ ॥ श्रीकृष्णलक्ष्मीनाथार्य्यं विस्मयं परमं ययुः ॥ एवं
दिनेषु कतिषु गतेष्वत्र महात्मनः ॥ ८७ ॥ मोक्षदाने मतिं चक्रे
भगवान् भक्तवत्सलः ॥ मोक्षप्रदानदिवसपूर्वस्मिन्वासरे निशि ॥ ८८ ॥
आबालवृद्धप्रभृतिजनानां भक्तवत्सलः ॥ तत्रत्यानां हि सर्वेषां स्वप्ने
सम्यङ् न्यवेदयत् ॥ ८९ ॥ श्रीकृष्णलक्ष्मीनाथाय मद्भक्ताय महा-
त्मने ॥ दातास्मि श्वो दिने मोक्षो सर्वेषां पश्यतां ध्रुवम् ॥ ९० ॥
संतुष्टाः सर्व एवैते तेन वाक्येन विस्मिताः ॥ आबालवृद्धवनिता
भक्तवत्सलसन्निधिम् ॥ ९१ ॥ तत्कालं वीक्षमाणास्ते तस्थुस्तत्रैक-
मानसाः ॥ श्रीकृष्णलक्ष्मीनाथार्य्यं स्वप्ने श्रीभक्तवत्सलः ॥ ९२ ॥
तत्तथैवाब्रवीत्तस्य वेदांतिन्कृपया तदा ॥ तस्यां रात्र्यां व्यतीतायां
कृष्णलक्ष्मीशनामकः ॥ ९३ ॥ प्रातर्ग्रामाद्बहिर्गत्वा कृतदेहविशो-
धनः ॥ कृतावगाहनस्तत्र पूर्ववत्स जलाशये ॥ ९४ ॥ जानुपाणि-
चरः शीघ्रमाययौ हरिसन्निधिम् ॥ प्रदक्षिणाक्रमेणैव गत्वा देवस्य
सन्निधिम् ॥ ९५ ॥ बलिपीठांतिकं प्राप्य प्रथमावरणं ययौ ॥
प्रथमावरणं प्राप्य कृत्वा तत्र प्रदक्षिणाम् ॥ ९६ ॥ श्रीमंडपं
प्रविश्याशु प्रणम्य द्वारपालकौ ॥ भक्तवत्सलपादाब्जसमीपमग-
मत्तदा ॥ ९७ ॥ तदद्भुतं द्रष्टुकामाः सर्वे तत्पृष्ठतो ययुः ॥ सर्वेषां
पश्यतां तत्र विस्मितं विपुलेक्षणैः ॥ ९८ ॥ यदनिर्वचनीयं तत्तेजो
विद्युद्गणोपमम् ॥ अलक्ष्यत तदा तत्र नालक्ष्यत स वैष्णवः ॥ ९९ ॥
तदद्भुततमं दृष्ट्वा सर्वे विस्मितमानसाः ॥ भक्तवत्सलदेवेथ दृढभक्ति-
समन्विताः ॥ १०० ॥ विमुक्तमायासंसारा बभूवुर्वैष्णवोत्तमाः ॥
मोक्षं प्रत्यक्षतो दत्त्वा तस्मै भक्ताय सत्वरम् ॥ १०१ ॥ श्रीकृष्ण-

लक्ष्मीनाथाय भगवान्भक्तवत्सलः ॥ कलिदोषसमाक्रांतं सर्वं जगद-
पालयत् ॥ १०२ ॥ भक्तवत्सलवात्सल्यं लोकेभ्यः सूचयन्निव ॥
श्रीमान् बकुलवृक्षस्यच्छायायां दिव्यमंडपे ॥ १०३ ॥ श्रीकृष्णल-
क्ष्मीनाथार्यो नित्योत्सवमहोत्सवैः ॥ सहितस्सर्वभूतानामद्यापि परि-
दृश्यते ॥ १०४ ॥ श्रीकृष्णलक्ष्मीनाथार्य्यचरितं यदनुत्तमम् ॥ यः
शृणोति नरो भक्त्या सर्वपापैः प्रमुच्यते ॥ १०५ ॥ इति श्रीप्रपन्ना-
मृते भट्टार्य्यवेदांतिसंवादे श्रीकृष्णनाथार्यमोक्षप्रदानं नाम नवाधिक-
शततमोऽध्यायः ॥ १०९ ॥

---

## दशाधिकशततमोऽध्यायः ।

ततो माधवदासाख्यो भट्टार्य्यमिदमब्रवीत् ॥ कियत्कालं नाथ-
योगी पृथिव्यामवसद्गुरो ॥ १ ॥ अथ श्रीपुंडरीकाक्षो वर्द्धयन्विष्णु-
दर्शनम् ॥ उवास कुत्र नगरे कियत्कालं स देशिकः ॥ २ ॥ तत्सर्वं
ब्रूहि तत्त्वेन मह्यं शिष्याय देशिक ॥ स तद्वचनमाकर्ण्य भट्टार्य्य-
स्तमथाब्रवीत् ॥ ३ ॥ त्रिशतं त्रिंशदधिकं वत्सराणां च भूतले ॥
उवास नाथयोगींद्रो वर्द्धयन्विष्णुदर्शनम् ॥ ४ ॥ धात्वब्दे माघमासे
तु शुक्लपक्षे तु योगिराट् ॥ एकादश्यामवापाथ तद्विष्णोः परमं पदम्
॥ ५ ॥ अथ श्रीपुंडरीकाक्षः श्रीरंगे गुरुशासनात् ॥ नित्यवासपर-
स्तस्थौ वर्द्धयन्विष्णुदर्शनम् ॥ ६ ॥ अवतारस्थलं तस्य श्रूयतां
तन्मयोच्यते ॥ रंगवायव्यदिग्भागे क्रोशत्रयविदूरतः ॥ ७ ॥ वर्त्तते
महितक्षेत्रे तत्र श्वेतगिरिर्महान् ॥ पद्माक्षो भगवांस्तत्र वर्तते दिव्यसुं-
दरः ॥ ८ ॥ भट्टेशपरकालाभ्यां संस्तुतः स हरिस्तदा ॥ तत्रावतारं
विदधे विष्वक्सेनांशतो महान् ॥ ९ ॥ चैत्रमासे पूर्णिमायां पद्माक्ष-
श्चाथ चित्रभे ॥ स नाथमुनिमाश्रित्य वीरनारायणे पुरे ॥ १० ॥
तत्सन्निधौ स्थितो धीमान् कंचित्कालं गुरुप्रियः ॥ अथ नाथार्य्य-
वाक्येन श्रीरंगं प्राप्य सत्वरम् ॥ ११ ॥ कंचित्कालमुवासार्यो वर्द्ध-

यन्विष्णुदर्शनम् ॥ कुरुकानाथयोगींद्रः पांड्यदेशे महायशाः ॥१२॥
कुरुकायां पौषमासे विशाखायां तदाजनि॥वीरनारायणं प्राप्य स
द्विजोथ महायशाः॥१३॥पुंडरीकाक्षकृपया नाथं संश्रित्य योगिनम् ॥
श्रीवैष्णवोभवत्तेन कृतसंस्कारपंचकः ॥ १४ ॥ संप्राप्ताष्टांगयोगोथ
गुरोः श्रीनाथयोगिनः ॥ गुरुशुश्रूषणरतः कुरुकानाथयोगिराट् ॥
॥१५॥ वीरनारायणपुरे कंचित्कालं न्युवास ह ॥ यत्र स्थानेथ योगीं-
द्रो नाथार्य्यः सोत्यजत्तनुम् ॥ १६ ॥ तत्रैवाष्टांगयोगेन कुरुकानाथ-
योगिराट् ॥ आदेहपतनं भक्त्या ध्यायन्गुरुपदांबुजम् ॥१७॥ स स-
प्तत्यधिकं तत्र वत्सराणां शतं स्थितः ॥ चोलदेशेथ कावेरीतीरे पुण्य-
तमे शुभे ॥ १८ ॥ श्रीरंगनगराभ्याशे मणक्कालाख्यविश्रुतम् ॥ बभूव
नगरं पुण्यं विद्वज्जनविभूषितम् ॥ १९ ॥ सौगंधकुल्यानगरे कस्मिं-
श्चिद्द्विजवेश्मनि ॥ विरोधिवत्सरे माघे मासे वै शुक्लपक्षके ॥ २० ॥
चतुर्दश्यां मघायां च संजज्ञे सौम्यवासरे ॥ अंशेन कुमुदाक्षस्य राम-
मिश्रो महायशाः ॥२१॥ स राममिश्रो वेदांतिन्महात्मा भगवत्परः ॥
अशिश्रियन्महाभक्त्या पुंडरीकाक्षमुत्तमम् ॥ २२ ॥ लवणाभावताता-
ख्यो गोमठान्वयभूषणः॥अशिश्रियन्महाभक्त्या पद्माक्षं ब्राह्मणोत्तमम्
॥२३॥ पंच प्राप्तास्ततः शिष्याः पद्माक्षस्याभवन्गुरोः॥ तन्मध्ये सु-
महातेजा गुरुभक्तिपरायणः ॥ २४ ॥ श्रीराममिश्रो वेदांतिन्कैंकर्य्या-
ण्यनिशं गुरोः ॥ सर्वाणि कुर्वन्सद्भक्त्या द्वादशाब्दान्व्यतिष्ठत ॥२५॥
आंडालाख्याथ पद्माक्षभार्या गुरुपरायणा ॥ जगाम वैष्णवं लोकं म-
हता पुण्यकर्मणा ॥ २६ ॥ गुरुगेहे ततो धीमान् कैंकर्य्याण्यखिलानि
च ॥ कुर्वन्सर्वंधुरं सम्यगुवास गुरुभक्तिमान् ॥ २७ ॥ पद्माक्षस्याभव-
त्तत्र वेदांतिन्पुत्रिकाद्वयम् ॥ सहोदरीमिव प्रेम्णा पुपोष महतैव तत् ॥
॥२८॥ततः कदाचिदाचार्य्यपुत्रिकाद्वयमादरात्॥तटाकतीरमनयत्स्ना-
नार्थं गुरुभक्तिमान् ॥ २९ ॥ कृतस्नानं समादाय गुरुगेहमथाययौ ॥

तत्र पंकाकुला काचित्कुल्या मार्गे बभूव ह ॥ ३० ॥ अतो न चैच्छ-
त्तद्गंतुं तन्मार्गे पुत्रिकाद्वयम् ॥ तूष्णीं स्थितमगत्वाथ तद्विलोक्य गुरु-
प्रियः ॥३१॥ गुरुपुत्रीद्वयं सम्यङ् निक्षिप्य स्वभुजद्वये ॥ तीर्त्वा पंका-
कुलां कुल्यां प्रेम्णा गुरुगृहं ययौ ॥ ३२ ॥ तत्संश्रुत्य स पद्माक्षो य-
यौ तद्विस्मयं महत् ॥ संतुष्टः स तदा धीमान् कृपया विबुधर्षभः ॥
॥३३॥ सम्यक् स्वपादपद्माभ्यामलंकृत्य स तच्छिरः ॥ राममिश्राय
शिष्याय सर्वार्थान्प्रददौ मुदा ॥३४॥ अतीतानागतं ज्ञानमात्मतत्त्व-
प्रकाशनम् ॥ सर्ववेदार्थविज्ञानं सर्वशास्त्रार्थदर्शनम् ॥ ३५ ॥ मानसं
वाचिकं पापं कायिकं च त्रयीकृतम् ॥ द्वयस्मरणमात्रेण नाशयंति
सुनिश्चयम् ॥ ३६ ॥ तत्प्रभावं प्रशस्याथ द्वयं च प्रददौ तदा ॥ पंचो-
त्तरशतं नीत्वा वत्सराणां ततो भुवि ॥ ३७ ॥ गुरुर्वैकुंठगमने चकार
मतिमान्मतिम् ॥ ततस्स्वचरमे काले पद्माक्षो रामनामकम्
॥ ३८ ॥ शिष्यं विलोक्य संतुष्टो व्याजहार वचः शुभम् ॥
त्वमेव वर्द्धयल्लोके सम्यग्वैष्णवदर्शनम् ॥ ३९ ॥ सब्रह्मचारिभिः
सैर्वैर्वैष्णवैश्च निवत्स्यसि ॥ यामुनार्य्योभिधः कश्चिद्भविष्यत्या-
त्मजो महान् ॥ ४० ॥ तस्येश्वरमुनेरेवं गुरुणा प्रेमभाषितम् ॥
तस्मै पौत्राय मे देहि दर्शनार्थान्मयोदितान् ॥ ४१ ॥ तस्मादवश्यं
कर्तव्यं मयैतद्गुरुशासनम् ॥ मत्कालेस्मद्गुरोः पौत्रो न जज्ञे किल
सांप्रतम् ॥ ४२ ॥ तस्मादितः परमपि महान्कश्चिद्भविष्यति ॥ न
वृथा जायते वाणी कदाचिदपि मे गुरोः ॥ ४३ ॥ श्रीनाथयोगिपौ-
त्राय कृत्वा यामुननाम च ॥ दर्शनार्थांस्ततः सर्वान् दत्त्वा तमनुसृत्य
च ॥ ४४ ॥ दर्शनस्थापकं धीरं विधेहि गुरुशासनात् ॥ कैंकर्य्यमेत-
च्चरमकालेस्मद्गुरुभाषितम् ॥ ४५ ॥ मया तथैव चरमकाले सम्यगुदी-
रितम् ॥ आचार्य्यपरमाचार्य्यकैंकर्य्यं यदनुत्तमम् ॥ ४६ ॥ तस्माद-
वश्यं कर्तव्यं भवतः साधुसंमतम् ॥ इति निर्दिश्य पद्माक्षो राममिश्राय
वै हृदम् ॥ ४७ ॥ निश्चलं कृतकृत्योथ नाथपादांबुजद्वयम् ॥ ध्याय-

न्कृतार्थौ वैकुंठं जगाम सहसा तदा ॥ ४८ ॥ गुरोः संतापमगमन्वि-
योगमसहिष्णवः॥ राममिश्रादयः सर्वे पद्माक्षस्य महात्मनः ॥ ४९ ॥
ब्रह्ममेधेन विधिना राममिश्रो गुरोस्तदा ॥ कर्तव्यानि च कर्माणि
चकार विधिना तदा ॥५०॥ ततः श्रीवैष्णवैः सर्वैर्वैदिकाचारतत्परैः ॥
सब्रह्मचारिभिः सार्द्धं वर्द्धयन् विष्णुदर्शनम् ॥ ५१ ॥ उवास तत्र वेदां-
तिन्राममिश्रो महायशाः ॥ ५२ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांति-
संवादे पुंडरीकाक्षावतारकथनं नाम दशाधिकशततमोऽध्यायः॥११०॥

## एकादशाधिकशततमोऽध्यायः ।

लक्ष्म्याख्यो वैष्णवः कश्चिच्छ्रीमान्वंगिपुराधिपः ॥ अशिश्रियद्रा-
ममिश्रं प्रथमं भक्तिपूर्वकम् ॥ १ ॥ ततः श्रीवैष्णवाः पंच राममिश्रम-
शिश्रियन् ॥ वेदांतिन् राममिश्रोथ दर्शनार्थान्निरंतरम् ॥ २ ॥ सम्यक्
चोपदिशंस्तस्थौ शिष्येभ्यः कृपया तदा ॥ एवं स सर्वशास्त्रज्ञो महा-
त्मा भगवत्परः ॥ ३ ॥ नित्यमव्याहतं सम्यग्वर्द्धयन्विष्णुदर्शनम् ॥
चिंतयन्नीश्वरमुनेः पुत्रोत्पत्तिं कृतादरः ॥ ४ ॥ आस्तेथ रंगे स्वगुरोरा-
ज्ञया कतिचित्समाः ॥ तथा नाथात्मजः श्रीमानीश्वराख्यो मुनिर्महान्
॥ ५ ॥ वीरनारायणपुरे स तस्मिन् पितृवेश्मनि ॥ समतीतेथ कस्मि-
श्चित्काले पुण्यतमे शुभे ॥ ६ ॥ धात्वब्दे कर्कटे मासि पौर्णमास्यां
भृगोर्दिने ॥ मित्रभे रंगनायक्यां श्रीसिंहासनभागतः ॥ ७ ॥ मतिमा-
नीश्वरमुनेर्जज्ञे कश्चित्सुतो महान् ॥ तत्पुत्रजननं श्रुत्वा राममिश्रः
प्रहर्षितः ॥ ८ ॥ वीरनारायणपुरं प्राप्य पुण्यं विलोक्य तम् ॥ प्रहर्ष-
मतुलं लेभे दिव्यलक्षणलक्षितम् ॥ ९ ॥ जातकर्मण्यलाभे तु विष्णो-
श्चक्रस्य धारणम् ॥ चौलोपनयने चापि तन्मंत्राध्ययनेपि वा ॥ १० ॥
विधिना वैष्णवं चक्रं धारयेद्द्विजसत्तमः ॥ इत्युक्तेन प्रकारेण राम-
मिश्रो महामतिः ॥ ११ ॥ ईश्वराख्येन मुनिना वेदांतिन्दिव्यतेजसा ॥
कारयित्वा जातकर्म शिशोस्तस्य यथाविधि ॥ १२ ॥ द्वादशेऽहनि

पुत्रस्य नामकर्माकरोत्तदा ॥ वैष्णवैश्चैव सूक्तैश्च कुर्यात्संमार्जनं शिशोः ॥ १३ ॥ तस्य दक्षिणकर्णे तु जपेदष्टाक्षरद्वयम् ॥ मूर्ध्नि हस्तं विनिक्षिप्य जपेच्च द्वादशाक्षरम् ॥ १४ ॥ नाम कुर्य्यात्ततः पश्चाद्वैष्णवं पापनाशनम् ॥ एवं शास्त्रोक्तमार्गेण श्रीनाथमुनिशासनात् ॥ १५ ॥ स पित्रा कारयामास राममिश्रः शिशोस्तदा ॥ यामुनार्योभिधा तस्य नाथपौत्रस्य विश्रुतम् ॥ १६ ॥ ततोन्नप्राशनादीनि कर्माणि विविधानि च ॥ तत्तत्काले यथाशास्त्रं यामुनस्याकरोत्तदा ॥ १७ ॥ कृतोपनयनः पित्रा यामुनार्य्यः कुशाग्रधीः ॥ जग्राह निखिलान्वेदान्साक्षिमात्राद्गुरोर्मुखात् ॥ १८ ॥ तच्चित्रं यामुनार्य्यस्य यद्वेदाध्ययनं महत् ॥ सकृच्छ्रवणमात्रेण जग्राह निखिलं हि तत् ॥ १९ ॥ यामुनार्य्यमुपाध्यायः समाहूयेदमब्रवीत् ॥ आगमाध्ययनार्थाय किमर्थं नागतो भवान् ॥ ॥ २० ॥ उपाध्यायवचः श्रुत्वा यामुनो वाक्यमब्रवीत् ॥ पूर्वेद्युर्भवता स्वामिन् यो वेदः समुदीरितः ॥ २१ ॥ स एवास्मिन्दिनेप्यार्य उच्यते किल पूर्ववत् ॥ नागतोभवमेतेन किमर्थं पिष्टपेषणम् ॥ २२ ॥ तत्तस्य वचनं श्रुत्वा गुरुः परमविस्मितः ॥ तत्सर्वं संप्रवीक्ष्याशु स बालं परिषस्वजे ॥ २३ ॥ वेदांतिन्यामुनाचार्य्यः स एवं गुरुसन्निधौ ॥ पदक्रमजटावर्णक्रमादिसहितान्महान् ॥ २४ ॥ जग्राह निखिलान्वेदान्बालः सिंहासनांशजः ॥ यामुनार्योंथ वेदांतिन्वेदांगानि षडादरात् ॥ २५ ॥ अधीतवेदवेदांगं पुत्रमालोक्य संमतम् ॥ संप्रहृष्टोऽथ जनकः शास्त्रज्ञं कर्तुमुद्यतः ॥ २६ ॥ अथांजसा महाभाष्यं भट्टस्याग्रे विपश्चितः ॥ पठन्सर्वाणि शास्त्राणि तस्थौ यामुनदेशिकः ॥ २७ ॥ ततश्चोलमहीपालपुरोधा विबुधर्षभः ॥ अक्कियाळ्वानिति ख्यातः कश्चिदासीत्तदा महान् ॥ २८ ॥ निर्जित्य शास्त्रवादेन सर्वानेव विपश्चितः ॥ स पुरोधा महाविद्वानद्वितीयो व्यरोचत ॥ २९ ॥ ततः पराजिताः सर्वे बुधा राजपुरोधसे ॥ प्रत्यब्दं दशबंधं च ह्यर्पयंत-

स्समास्थिताः ॥३०॥ ततस्तद्दशबंधार्थं भटा राजपुरोधसः ॥ अपी-
डयन्महाभाष्यभट्टं तस्याप्रदानतः ॥ ३१ ॥ प्रव्याकुलांतःकरणं
द्रव्याभावात्प्रपीडितः ॥ इत्येवं यामुनार्य्येण स पृष्टः सादरं तदा ॥
॥३२॥ यन्महाभाष्यभट्टाख्यकृत्यं राजपुरोधसः ॥तत्सर्वं यामुनार्याय
प्रोवाच विशदं तदा॥३३॥तत्तदाकर्ण्य कुपितो यामुनार्य्यो निरंकुशः॥
तान् राजदूतान्निर्भर्त्स्य श्लोकमेकं लिलेख सः॥३४॥ नवयं कवयस्तु
केवलं न वयं केवलतंत्रपारगाः ॥ अपि तु प्रतिवादिभीकरप्रकटाटो-
पविपाटनक्षमाः ॥ ३५ ॥ श्लोकमेवं लिखित्वाशु पत्रिकायां सुनिश्च-
लः ॥ भटैस्तैरेव तां धीमान् पत्रिकां श्लोकसंयुताम् ॥ ३६ ॥ समीपं
प्रेषयामास तस्य राजपुरोधसः ॥ बालेन प्रेषितां तेन पत्रिकां वीक्ष्य
विस्मितः ॥ ३७ ॥ श्लोकं पठित्वा तं शीघ्रं समुद्विग्नमनास्तदा ॥ स
पुरोधा नृपायाथ तद्वृत्तांतं न्यवेदयत् ॥ ३८ ॥ चोलराजमहाभाष्य-
भट्टशिष्यार्भकोऽधुना ॥ त्वच्छासनं विनिर्भर्त्स्य कश्चिद्द्वादशवार्षिकः
॥ ३९ ॥ उद्दामवृत्तिर्गर्वेण वर्तते गणयन्न माम् ॥ तमानीयांजसाद्यैव
युक्तदंडं विधेह्यलम्॥ ४० ॥ पुरोहितवचः श्रुत्वा तद्वृत्तांतं विचार्य
च ॥ स तं ज्ञात्वाथ विबुधं यामुनानयने तदा ॥ ४१ ॥ आदिदेश
तदामात्यांश्चोलेंद्रो विबुधप्रियः ॥ धीमाननादराह्वानं यन्महीशकृतं हि
तत् ॥४२॥ अनादृत्य नृपाभ्याशं नागमद्यामुनस्तदा॥तदनादरवृत्तांतं
स निशम्य महीपतिः॥४३॥यामुनस्य महाप्राज्ञो मनस्येवमचिंतयत्॥ न
सामान्यजनस्त्वेष महाविबुधसत्तमः॥४४॥महता वैभवेनैव ह्यानेतव्यो
मयाधुना॥ इति संचिन्त्य मतिमान् भूपतिर्विबुधप्रियः॥४५॥शिबिकां
प्रेषयामास यामुनाचार्यसन्निधौ ॥ ततः स शिबिकारूढो यामुनार्य्यो
महायशाः ॥ ४६ ॥ राजद्वारं समासाद्य राज्ञा संपूजितस्तदा ॥ तदा
राजसभास्थाने विद्वद्गोष्ठीं विवेश सः ॥ ४७ ॥ यामुनार्य्यागमं श्रुत्वा
तदा राजपुरोहितः ॥ राजस्थानं विवेशाशु महाविबुधभूषणैः ॥४८॥

तमागतं विलोक्याशु यामुनो निपुणस्तदा ॥ तं जेतुकामं विबुधं श्लोकमेकमकल्पयत् ॥ ४९ ॥ आशैलादद्रिकन्याचरणकिसलयन्यासधन्योपकंठादा रक्षोनीतसीतामुखकमलसमुल्लासहेतोश्च सेतोः ॥ आ च प्राच्यप्रतीच्यक्षितिधरयुगलादर्कचन्द्रावतंसान्मीमांसाशास्त्रयुग्मश्रमविमलमना मृग्यतां मादृशोऽन्यः ॥ ५० ॥ श्लोकमेवं लिखित्वाशु पत्रिकायां विचक्षणः ॥ विद्वद्राजसभास्थाने पत्रिकां तां ववंध सः ॥ ५१ ॥ पत्रावलंबनं दृष्ट्वा हृष्टो राजपुरोहितः ॥ तत्प्रभावमजानंस्तं जेतुं विबुधसत्तमम् ॥५२॥ इयेष शास्त्रवादेन दुष्टबुद्धिप्रचोदितः॥ अक्रियायेति गर्वेण तदा राजपुरोहितः ॥ ५३ ॥ वादार्थमागतस्तत्र महाविबुधभूषणैः ॥ तमागतं विलोक्याशु यामुनो निपुणस्तदा॥५४॥ दृष्ट्वा च राजवदनं व्याजहार वचः शुभम् ॥ जयापजयवक्तॄणां मध्यस्थानां महात्मनाम् ॥ ५५ ॥ विपश्चितां त्वया शीघ्रमाह्वानं क्रियतां नृप ॥ अंगीकृत्य वचस्तस्य स तथैवाकरोन्नृपः ॥ ५६ ॥ राजाज्ञयांजसा तत्र बुधाः सर्वे समागताः ॥ येये पराजिताः पूर्वं तेन राजपुरोधसा ॥ ५७ ॥ यामुनाचार्य्यवृत्तांतं श्रुत्वा तत्सर्वमंजसा ॥ प्रहृष्टचेतसः सर्वे तेते तत्र समागताः ॥ ५८ ॥ राज्ञो राजमहिष्याश्च वादस्तत्राभवत्तदा ॥ को जेष्यत्येतयोः को वा पराजयमवाप्स्यति ॥ ५९ ॥ राजाब्रवीत्तदैवं हि पुरोधास्तु विजेष्यते ॥ राजपत्न्यब्रवीदेवं बाल एव विजेष्यते ॥ ६० ॥ तन्निशम्याथ चोलेंद्रो महिषीं वाक्यमब्रवीत् ॥ मत्पुरोहित एवैष निश्चयं जयमाप्स्यति ॥ ६१ ॥ वेदांतिश्चोलभूपाले वदत्येवं कृतादरे ॥ प्रतिज्ञामकरोत्तीव्रां चोलपत्नी दृढव्रता ॥ ६२ ॥ बालोऽयं यामुनाचार्य्यो यदि वादे पराजितः ॥ आषण्मासं भविष्यामि तव दासी न संशयः ॥ ६३ ॥ वेदांतिश्चोलराजेन प्रतिज्ञातमिदं तदा ॥ पुरोहितो यदि जितो बालकेनाधुनाबले ॥ ६४ ॥ अर्द्धराज्यं मया तुभ्यं दीयते नात्र संशयः ॥ कृतप्रतिज्ञावन्योन्यमि-

त्येतौ राजदंपती ॥ ६५ ॥ विद्वत्सदो ह्यविशतां सर्वविद्वज्जनावृतम् ॥
ज्ञातुं तयोर्विबुधयोस्तौ जयापजयौ तदा ॥ ६६ ॥ राज्ञो निषेदुः स-
दासि बुधाः सर्वे यथोचितम् ॥ महता वैभवेनैव तदा चोलपुरोहितः ॥
॥ ६७ ॥ विपश्चिद्गणसंयुक्तो विद्वद्गोष्ठीं विवेश सः ॥ अथ राज्ञा स-
माहूतो यामुनार्योऽर्भको महान् ॥ ६८ ॥ समासदत्सभां शीघ्रमेक ए-
वानघात्मवान् ॥ नृपः समागतान्सर्वान्यथोचितमपूजयत् ॥ ६९ ॥
राज्ञा संपूजिताः सर्वे विबुधा विबुधर्षभ ॥ राज्ञः सभायामुचितेष्वासने-
षु समास्थिताः ॥ ७० ॥ तदा राजाज्ञया विद्वांश्चोलराजपुरोहितः ॥
यामुनार्यं महात्मानमिदं वचनमब्रवीत् ॥ ७१ ॥ विद्वानपि भवान्बा-
लः शास्त्रवादक्षमो न ते ॥ यदि त्रीण्येव वाक्यानि ह्युच्यंते लोकवेद-
योः ॥ ७२ ॥ निषिध्यंते मया तानि त्वदुक्तवचनान्यलम् ॥ अथ
वा त्रीणि वाक्यानि ह्युच्यंते यानि वै मया ॥ ७३ ॥ संदुष्यंतां त्वया
तानि मतिस्ते विद्यते यदि ॥ पराजितस्य शिरसि ताडनं क्रियते त-
तः ॥ ७४ ॥ निर्णीतमेवं वेदांतिंस्तेन राजपुरोधसा ॥ सर्वेषां राजसद-
सि शृण्वतां च विपश्चिताम् ॥ ७५ ॥ तस्य तद्वचनं श्रुत्वा नीतिज्ञ-
शमवारिधिः ॥ संप्रहृष्टो यामुनार्य्यः पुरोहितमथाब्रवीत् ॥ ७६ ॥
त्रीणि लौकिकवाक्यानि वक्ष्यंतेऽद्य मया बुधः ॥ तानि राजसभास्था-
ने खंडितानि यदि त्वया ॥ ७७ ॥ भवतो मम चात्राथ शास्त्रवादो
भविष्यति ॥ संतुष्टाः सर्व एवैते तद्वाक्येन सभासदः ॥ ७८ ॥ अ-
नुज्ञातो नृपेणाथ सभासद्भिश्च सादरम् ॥ पुरोहितं समुद्वीक्ष्य बालो
द्वादशवार्षिकः ॥ ७९ ॥ त्रीणि लौकिकवाक्यानि व्याजहार स्फुटं
तदा ॥ अवंध्या किल ते माता विद्वन् राजपुरोहित ॥ ८० ॥ एष राजा
सार्वभौमो राजपत्नी पतिव्रता ॥ वाक्यत्रयं निशम्याथ लज्जितोऽभू-
न्निरुत्तरः ॥ ८१ ॥ सर्वे राजसभास्थाने तूष्णींभूता नतान-
नाः ॥ अथाब्रवीद्वचो भूयो यामुनस्तं पुरोहितम् ॥ ८२ ॥ व-

क्ष्यामि वैदिकगिरश्चोत्तमाधममध्यमाः ॥ सर्वशास्त्रस्थिताः सर्वा विबुधेंद्रादिसंमताः ॥ ८३ ॥ त्रिभिर्वा पंचभिर्वापि सप्तभिर्वाद्य मद्गिराम् ॥ दत्त्वा सदुत्तरं विद्वन्नत्रत्यबुधसंमतम् ॥ ८४ ॥ मामर्भकं यदि भवाञ्जित्वा चात्र विजेष्यते ॥ यथोचितमिदं चिह्नं भवतो विजयो ध्रुवः ॥ ८५ ॥ इत्युक्त्वा वैदिकगिरः प्रोवाच विशदं तदा ॥ अशक्तश्चोत्तरं दातुं तेषां तद्वचसां तदा ॥ ८६ ॥ ह्रिया नताननः सम्यक् तदा तूष्णीं समास्थितः ॥ यामुनार्यो विलोक्याशु तदा राजपुरोधसम् ॥ ८७ ॥विषण्णवदनं दीनमिदं वचनमब्रवीत् ॥ निर्णीतं पूर्वमेवात्र भवतैव सभास्थले ॥ ८८ ॥ पराजितस्य शिरसि कर्तव्यमिति ताडनम् ॥ पुरोहितत्वान्नृपतेर्वृद्धत्वात्स भवान् द्विजः ॥ ८९ ॥ महाराजाश्रितत्वाच्च ताडनं तव मस्तके ॥ यच्चावमानजनकं न मया क्रियते ध्रुवम् ॥९०॥ इतः परं हि भवतो विद्वच्चिह्नानि भूसुर ॥ पराजितस्योचितानि न चैतानि महांति ते ॥ ९१ ॥ इति तद्वचनं श्रुत्वा यामुनार्यस्य पण्डिताः॥ अवतारं तदा मत्वा विष्णोर्लोकैकमंगलम् ॥ ९२ ॥ पूजार्हं पूजयामासुर्यामुनार्यं विपश्चितम् ॥ तत्रत्या विबुधाः सर्वे ब्राह्मणा राजशासनात् ॥ ९३ ॥ प्रतिष्ठाप्य महाभक्त्या बालं ब्रह्मरथे तदा ॥ यामुनार्य्यं महात्मानं जितराजपुरोधसम् ॥ ९४ ॥ पूजार्हं पूजयामासुर्ब्रह्माणमृषयो यथा ॥ संप्रहृष्टाथ सहसा राजपत्नी मनस्विनी ॥ ९५ ॥ यामुनार्य्यं महात्मानं बालकं भगवत्परम् ॥ सर्वशास्त्रार्थनिपुणं सर्वविद्वच्छिरोमणिम्॥९६॥ अस्मद्रक्षागत स्वामिन्निति प्रेम्णा वचः शुभम् ॥ वदंती सम्यगुद्धृत्य बाहुभ्यां परिषस्वजे ॥ ९७ ॥ रक्षागतगुरुर्नाम तेनाभूत्प्रथितं भुवि॥ वेदांतिन्यामुनार्य्यस्य सर्वलोकैकमंगलम् ॥ ९८ ॥ अर्द्धराज्यं ददौ राजा यामुनाय विपश्चिते ॥ विवादसमये दत्तं भार्यया चोदितस्तदा ॥ ९९ ॥ यामुनार्योऽथ वेदांतिस्तद्राज्यं प्राप्य पुष्कलम् ॥ पितृभ्यां

संप्रहृष्टाभ्यां सहितः स्वपुरे तदा ॥१००॥ उवास पूजितः सर्वैर्विबुधै-
र्वृत्रहा यथा ॥ अधीतवेदवेदांगं सर्वशास्त्रविशारदम् ॥ १०१ ॥
संप्राप्तराज्यं सर्वज्ञं जितराजपुरोहितम् ॥ पुत्रमालोक्य संतुष्टः
पिता यामुनदेशिकम् ॥ १०२ ॥ तथेश्वरमुनिः श्रीमान्महता वैभवेन
च ॥ विवाहं विधिना सम्यक् सर्वलोकैकविश्रुतम् ॥ १०३ ॥ कारया-
मास पुत्रस्य यामुनस्य महौजसः ॥ द्वितीयाश्रममाश्रित्य यामुनः
सर्वधर्मवित् ॥ १०४ ॥ पितृशुश्रूषणं कुर्वन्कंचित्कालमवर्तत ॥ स
जगामेश्वरमुनिस्ततो वैकुंठमुत्तमम् ॥ १०५ ॥ वेदांतिन्भगवद्भक्तः
स्वार्जितेनैव कर्मणा ॥ यामुनार्यः पितुस्तस्य ब्रह्ममेधविधानतः ॥
॥ १०६ ॥ कृत्वा संस्कारमव्यग्रो विधिना शास्त्रवित्तमः ॥ कर्माण्य-
ध्ययनांतानि चक्रे श्रीवैष्णवैः सह ॥ १०७ ॥ वेदांतिन्यामुनार्योथ
बंधुभिः कृतमंगलः ॥ १०८ ॥ कंचित्कालं महातेजाः सुखेनैवाव-
तिष्ठत ॥ पुत्रद्वयं तदा जज्ञे यामुनार्यस्य विश्रुतम् ॥ १०९ ॥ वररं-
गाभिधो ज्येष्ठो शोट्टपूर्णोपरस्तयोः ॥ चकार सर्वसंस्कारान्महता वैभ-
वेन सः ॥११०॥ सर्वसंपत्समायुक्तो सर्वबंधुसमन्वितः ॥ कलत्रापत्य-
सहितः सर्वभोगसमन्वितः ॥ १११ ॥ भुंजानो राजभोगांश्च
धर्मतः पालयन्प्रजाः ॥ राजभोगैकनिरतः सुखं तस्थौ महायशाः ॥
वेदांतिन्यामुनाचार्यो महेंद्र इव संततम् ॥ ११२ ॥ इति श्रीप्रपन्नामृते
भट्टार्य्यवेदांतिसंवादे यामुनाचार्य्यविजयो नामैकादशाधिकशततमोऽ-
ध्यायः ॥ १११ ॥

## द्वादशाधिकशततमोऽध्यायः ॥

तच्छ्रुत्वा राममिश्रोथ संप्रहृष्टो महायशाः ॥ द्रष्टुकामो यामुनार्यं
तदंतिकमुपागतः ॥ १ ॥ सप्तकक्षासमाकीर्णं तद्राजभवनं महत् ॥
गजवाजिरथैः सम्यक्छूरैश्च परिरक्षितम् ॥ २ ॥ दर्शनार्थं यामुनस्य
दशदिग्भ्यः समागतैः ॥ राजाधिराजैर्बहुभिस्तैश्च सर्वैर्निषेवितम् ॥३॥

महेंद्रभवनप्रख्यं यामुनस्योत्तमं गृहम् ॥ विलोक्य विस्मितोऽत्यंतं प्रहृष्टः सुमहामतिः ॥ ४ ॥ ममाद्य दुर्घटमिदं यामुनार्य्यस्य दर्शनम् ॥ इति मत्वाथ वेदांतिस्तस्य पाकगृहं ययौ ॥ ५ ॥ पाचकं शनकैस्सम्यक् स्ववशीकृत्य तं द्विजम् ॥ तस्येष्टशाकं पप्रच्छ यामुनस्य किमित्यलम् ॥ ६ ॥ अलर्कशाकं ज्ञात्वाथ स तस्येष्टतमं ततः ॥ संतुष्टोऽनुदिनं तस्मै सुदिशन्सुखमास्थितः ॥ ७ ॥ एष षण्मासपर्य्यंतं यामुनस्यादिशत्तदा ॥ अलर्कशाकं वेदांतिस्तद्वशीकरणेच्छया ॥ ॥ ८ ॥ प्रव्याकुलांतःकरणस्तदा किंचिदाचिंतयत् ॥ विष्णुदर्शननिर्वाहं तं कुरुष्वेति यामुनम् ॥९॥ गुरुणोक्तमलंघ्यं मे तन्महां गुरुशासनम् ॥ अधुना यामुनस्त्वेष राजभोगसमन्वितः ॥ १० ॥ तिरस्कृतेंद्रविभवो राजराजो व दृश्यते ॥ तस्य संदर्शनं मेद्य तन्महद्घटते कथम् ॥ ११ ॥ अलर्कं यन्मया दत्तमाषण्मासं निरंतरम् ॥ किमर्थं नीयते तेन कोऽयं कस्मादिहागतः ॥ १२ ॥ इत्येवं यामुनार्य्येण न कदाचिद्विचारितम् ॥ चतुष्टयदिनं तूष्णीं स्थितश्चेत्तदनंतरम् ॥१३॥ कालोचितं करिष्यामीत्येवमालोच्य सत्तमः ॥ रंगेशं शरणं प्राप्य तस्य विज्ञानसिद्धये ॥ १४ ॥ गुरुपादांबुजे ध्यायन् राममिश्रोवसत्तदा ॥ चतुष्टयदिनं तूष्णीं स्थितः पंचमवासरे ॥ १५ ॥ अलर्कशाकमादाय राममिश्रः स पूर्ववत् ॥ वेदांतिन्यामुनाचार्य्यपाकशालां समाविशत् ॥ ॥ १६ ॥ राममिश्रंतदा दृष्ट्वा पाचको वाक्यमब्रवीत् ॥ आचतुर्दिवसेभ्यः प्राग्यामुनार्य्यप्रियं महत् ॥१७॥ किमर्थं न त्वयानीतं शाकमालर्कमुत्तमम् ॥ कोपं नित्यं करोत्येष यामुनार्यस्तु मां प्रति ॥ ॥ १८ ॥ स पाचकवचः श्रुत्वा राममिश्रोऽब्रवीत्तदा ॥ राजाज्ञा किं तवैतन्मे दत्तं स्वच्छंदतो मया ॥ १९ ॥ राजप्रेष्यो न चैवाहं देशिकाज्ञापरायणः ॥ इत्युक्त्वा पाचकायाथ तच्छाकमदिशत्तदा ॥ २० ॥ वेदांतिन् यामुनाचार्यो भोजनावसरे तदा ॥ अलर्कशाकमालोक्य तं

पाचकमथाब्रवीत् ॥ २१ ॥ केनानीतमिदं शाकं पाचकास्मिन्
दिने प्रियम् ॥ तदंगीकृत्य वचनं यामुनं पाचकोऽब्रवीत् ॥ २२ ॥
षष्ठमासात्समारभ्य वृद्धः कश्चिद्द्विजोत्तमः ॥ अलर्कशाकमादाय
नित्यं भक्त्या प्रयच्छति ॥ २३ ॥ युष्मात्प्रियतमं ज्ञात्वा निरपेक्षः
कृतादरः ॥ न दत्तं तेन तन्मध्ये ह्येतद्दिनचतुष्टयम् ॥ २४ ॥ अस्मि-
न्दिने पुनस्तेन समानीतमिदं तव ॥ राहित्यादस्य शाकस्य शिक्षितो
भवताऽधुना ॥ २५ ॥ अत्रागतं विलोक्याहं वैष्णवं वाक्यमब्रवम् ॥
आचतुर्दिवसं वृद्ध अस्मत्स्वामिप्रियः शुभः ॥ २६ ॥ किमर्थं न
त्वयानीतः शाकमालर्कमुत्तमम् ॥ अस्मत्प्रभुर्हि मय्येव महाकोपं
करोत्यलम् ॥ २७ ॥ इत्येवमुक्तो मामाह वृद्धः श्रीवैष्णवोऽनघः ॥
राजप्रेष्यो न चैवाहं देशिकाज्ञापरायणः ॥ २८ ॥ धीर राजाज्ञया
शाकं दास्यामीति न चिंतय ॥ स्वच्छंदतः प्रदास्यामि मनसे रोचते
यदि ॥ २९ ॥ इत्युक्त्वा वैष्णवोऽलर्कमदिशन्मह्यमादरात् ॥ वृद्धः
स वैष्णवः स्वामिन्न निरपेक्षो महामतिः ॥ ३० ॥ आदावाकांक्षते
प्रेम्णा दुर्लभं तव दर्शनम् ॥ तच्छ्रुत्वा वचनं तस्य यामुनोऽत्यंतवि-
स्मितः ॥ ३१ ॥ वृद्धं समानय क्षिप्रमिति पाचकमब्रवीत् ॥ तस्यां
रात्र्यां व्यतीतायां कृतनित्यक्रियो महान् ॥ ३२ ॥ अलर्कशाकमा-
दाय पूर्ववत्तत्र चागतः ॥ तमागतं समालोक्य राममिश्रं स पाचकः ॥
॥ ३३ ॥ स वृद्धस्त्वागत इति यामुनाय न्यवेदयत् ॥ संतुष्टस्तद्वचः
श्रुत्वा ह्यानीयांतःपुरं तदा ॥ ३४ ॥ राममिश्रं महात्मानं कुमुदाक्षां-
शसंभवम् ॥ प्रत्युद्गम्य प्रहृष्टात्मा नत्वा तत्पादपद्मयोः ॥ ३५ ॥
अर्घ्यपाद्यादिभिः सम्यग्राममिश्रं यथोचितम् ॥ पूजार्हं पूजयित्वार्य्यं
प्रांजलिर्वाक्यमब्रवीत् ॥ ३६ ॥ अपेक्षितं हि भवतो धनं वा क्षेत्रमेव
वा ॥ यद्यदिच्छसि विप्रेंद्र ग्रामं वा तद्ददामि ते ॥ ३७ ॥
वरं वरय तत्सर्वं नात्र कार्या विचारणा ॥ राममिश्रो यामुनस्य वचः
श्रुत्वा मुदान्वितः ॥ ३८ ॥ मंदस्मितमुखः श्रीमानिदं वचनमब्रवीत् ॥

मास्तु युष्मद्धनं वत्स युष्मत्क्षेत्रं च मेनघ ॥ ३९ ॥ युष्मत्पूर्वैर्यामु-
नार्य्य यद्यत्संपादितं धनम् ॥ त्वदर्थं सांप्रतं सम्यग्मद्वशे स्थापितं
महत् ॥ ४० ॥ प्रदर्शयितुकामोऽहं तवांतिकमुपागतः ॥ यावत्ते
तद्धनप्राप्तिस्तावद्युष्मद्गृहं प्रति ॥ ४१ ॥ गमनागमने मेद्य निःशंकं
शासनं कुरु ॥ प्रतिगृह्य स तद्वाक्यं यामुनो वैष्णवप्रियः ॥ ४२ ॥
द्वारपालान् समाहूय तत्तथैवाकरोत्तदा ॥ राममिश्रोथ संतुष्टो यामुना-
र्येण पूजितः ॥ ४३ ॥ निर्गत्य राजभवनादभ्यगात्स्वनिकेतनम् ॥
ततः कृताह्निकः कल्ये राममिश्रो महामतिः ॥ ४४ ॥ आदाय भगव-
द्गीतां यामुनार्यांतिकं ययौ ॥ तं दृष्ट्वा सहसोत्थाय यामुनार्य्यः प्रण-
म्य च ॥ ४५ ॥ रत्नसिंहासनारूढं कृत्वा सम्यगपूजयत् ॥ वेदांति-
न्यामुनार्योथ राममिश्रं महौजसम् ॥ ४६ ॥ विलोक्य प्रांजलिर्भूत्वा
पप्रच्छेदमनुत्तमम् ॥ किमिदं पुस्तकवरं युष्मत्पाणौ प्रकाशते ॥४७॥
ब्रूहि मे विशदं विद्वन्वृत्तांतं तस्य सादरम्॥तस्य तद्वचनं श्रुत्वा स संतुष्टोऽ
ब्रवीत्तदा॥४८॥ एषा श्रीभगवद्गीता सर्वतत्त्वार्थमंजरी ॥ अर्जुनाय पुरा
विद्वन्साक्षात्कृष्णेन भाषिता ॥ ४९ ॥ वेदेषु पौरुषं सूक्तं पुराणेषु च
वैष्णवम् ॥ भारते भगवद्गीता धर्मशास्त्रेषु मानवम् ॥ ५० ॥ अतो हि
भगवद्गीता मुख्यत्वात्समुदाहृता ॥ निशम्य यामुनार्योथ भक्तिमांस्तद्व-
चः शुभम्॥५१॥ तद्गीताश्रवणेत्यंतं स संजातरुचिर्महान्॥ बहुशः प्रा-
र्थयामास राममिश्रं महामतिः ॥ ५२ ॥ तेन संप्रार्थितो धीमान् राम-
मिश्रो रहोऽब्रवीत् ॥ तां गीतां संप्रवक्ष्यामि शृणु चादरतोऽनघ॥५३॥
वेदांतिन् राममिश्रोथ स्ववशीकृत्य यामुनम् ॥ सम्यगष्टादशाध्यायी-
मष्टादशदिनैस्तदा ॥ ५४ ॥ स तस्मै यामुनार्याय रहस्यैवमबोधयत्॥
ज्ञानं भक्तिश्च वैराग्यं तस्य संववृधे ततः ॥ ५५ ॥ शुक्लपक्षे चंद्रमसः
कला इव दिनेदिने ॥ राममिश्रं प्रणम्योर्व्यां यामुनो वाक्यमब्रवीत् ॥
॥५६॥राममिश्र महाविद्वन् गीतार्थः सम्यगीरितः ॥ निर्हेतुककृपावेशा-
न्मह्यमज्ञानिने त्वया ॥ ५७ ॥ तेन संजातवैराग्यः कृतार्थोहं न सं-

शयः ॥ केनोपायेन भगवान्मम साक्षाद्भविष्यति ॥ ५८ ॥ तमुपायं हि सर्वज्ञ ब्रूहि शिष्याय मे गुरो॥तदंगीकृत्य वचनं यामुनस्य गुरूत्तमः ॥५९॥आचार्य्यपरमाचार्यशासनान्निश्चलस्तदा॥ शिष्याय यामुनार्याय देशिकाधीनवृत्तये ॥ ६० ॥ राममिश्रोथ चरमश्लोकार्थं प्रददौ रहः ॥ चरमश्लोकतत्त्वार्थज्ञानेनैवोदभूत्तदा ॥ ६१ ॥ यामुनस्यारुचिस्तस्य संसारे महती मुनेः ॥ स तं निवृत्तसंसाररुचिं संवीक्ष्य यामुनम्॥६२॥ पैतामहं निधिं तेद्य दर्शयामीति सादरम् ॥ तमादायांजसा विद्वान् महात्मा रंगमभ्यगात् ॥ ६३ ॥ न च ज्ञानस्य संकोचं न चैव यमगोचरम् ॥ तस्माद्रंगं महापुण्यं को न सेवेत बुद्धिमान् ॥ ६४ ॥ रंगक्षेत्रं समासाद्य महदीदृशवैभवम् ॥ विगाह्य तत्र कावेर्य्यां राममिश्रः सयामुनः ॥ ६५ ॥ रंगेशं संप्रणम्याशु यामुनं वाक्यमब्रवीत् ॥ अयमेव हि रंगेशो भगवान्निधिरव्ययः ॥ ६६ ॥ पुरानुभूतो भवतः पूर्वैर्यामुनदेशिक ॥ तेन प्रदर्शितं रंगनायकं जगतीपतिम् ॥ ६७ ॥ विलोक्य महता प्रेम्णा यामुनार्य्यः प्रहर्षितः ॥ आपादमस्तकं सम्यग्रंगेशं सोनुभूय च ॥ तत्प्रेमपारवश्येन वासं तत्राकरोत्तदा ॥ ६८ ॥ क्षेत्राणि मित्राणि धनानि नाथ पुत्राश्च दाराः पशवो गृहाणि ॥त्वत्पादपद्मप्रवणानुवृत्तेर्भवंति सर्वे प्रतिकूलरूपाः ॥६९॥ स चैवमात्मनो रीत्या सर्वं संत्यज्य दूरतः ॥ संन्यासं विदधे सम्यग्यामुनार्य्यो महायशाः ॥ ७० ॥ वैराग्यज्ञानभक्त्यादिसद्गुणैकमहार्णवम् ॥ श्रीरंगेश्वरकैंकर्य्यं कुर्वंतो भक्तितोनिशम् ॥ ७१ ॥ रक्षागताभिधं धीरं यामुनार्य्यं महौजसम् ॥ सिंहासनांशसंभूतं नारायणमुनिं यथा॥७२॥ अशिश्रियन्महाभक्त्या जनाः सर्वे द्विजर्षभाः ॥ महापूर्णादयो धीरा देशिका विबुधर्षभाः ॥ ७३ ॥ स तैः समेतो भगवत्पराग्र्यैः श्रीवैष्णवैर्यामुनदेशिकेंद्रः ॥ श्रीराममिश्रानुमतैकचित्तः श्रीरंगआस्तेऽखिललोकरक्षः ॥ ७४ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे यामुनार्यसीतोपदेशो नाम द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

# त्रयोदशाधिकशततमोऽध्यायः ।

धीमान्माधवदासोथ भट्टार्य्यं भगवत्परम् ॥ पप्रच्छ भक्तिसंयुक्तो महापूर्णादिवैभवम् ॥ १ ॥ कुत्रत्याः कीदृशाः स्वामिन्महापूर्णादयोनघ ॥ अंशेन केषां गुरवो ह्यवतीर्णा भुवः स्थले ॥ २ ॥ मह्यमाख्याहि तत्त्वेन तेषां तद्वैभवं महत् ॥ कस्याधीनं ततो राज्यं तद्भूत्तन्महद्गुरो ॥ ३ ॥ राजपत्नी किमकरोत्तद्वृत्तान्तं निशम्य सा ॥ एतत्सर्वं च मे ब्रूहि शिष्याय कृपयानघ ॥ ४ ॥ अस्मद्यतेर्वचः सम्यगंगीकृत्य कृतादरः ॥ तत्सर्वं विशदं सम्यग्व्याख्यातुमुपचक्रमे ॥ ५ ॥ कासारादिसमस्तयोगिनिकरैः श्रीगोदया संस्तुतो रंगे श्रीमति भोगिशेषशयने स्वर्णापगामध्यगे ॥ यः शेते निखिलस्थलाधिवसतामाद्यो हरीणां प्रभुः स श्रेयः परमं ददातु जगतां श्रीरंगराजः सदा ॥ ॥६॥ अत्र श्रीरंगनगरे श्रीबृहच्चरणान्वये ॥ भारद्वाजाख्यसद्गोत्रे यजुःशाखासमुज्ज्वले ॥ ७ ॥ कुमुदांशेन संजज्ञे महापूर्णो महायशाः ॥ वेदवेदांगसंपन्नः सर्वशास्त्रविशारदः ॥ ८ ॥ पुत्रो बभूव पूर्णस्य पुंडरीकाक्षनामवान् ॥ अत्तुलायीति विख्याता दुहिता तस्य चानघ॥९॥स तद्दृष्ट्वा यामुनार्य्यवैभवं लोकविश्रुतम्॥ अशिश्रियन्महापूर्णो यामुनार्य्यं गुरूत्तमम् ॥ १० ॥ गुरुः स तत्र कृपया महापूर्णस्य यामुनः ॥ श्रीपरांकुशदासाख्यं दास्यनामादिशत्तदा ॥११॥ श्रीभक्तांघ्रिरजोतिरिक्तमुनिभिः कासारयोग्यादिभिर्योगींद्रैर्नवभिश्च साधु भगवान्यः सन्नुतो गोदया ॥ श्रीमद्वेंकटभूधरोत्तमशिरःस्थाने जगद्विश्रुतस्तिष्ठन्नाश्रितवत्सलो दिशतु नः श्रीवेंकटेशः श्रियम् ॥ १२ ॥ मायावी परमानंदस्त्यक्त्वा वैकुंठमुत्तमम्॥स्वामिपुष्करिणीतीरे रमया सह मोदते॥१३॥ वेंकटाद्रिसमं स्थानं ब्रह्मांडे नास्ति किंचन ॥ वेंकटेशसमो देवो न भूतो न भविष्यति ॥ १४ ॥ एतादृशप्रभावाख्ये सुवर्णमुखरीतटे ॥ उदीच्यां वेंकटगिरौ संजज्ञे सुमुखांशतः ॥ १५ ॥ चैत्रस्वात्यां वेंक-

टेशवरदानेन वैष्णवः ॥ भूरिश्रीशैलपूर्णाख्यो महात्मा भगवत्परः
॥ १६ ॥ श्रीवेंकटेशकैंकर्य्यनिरतोऽभूत्सदा गुरुः ॥ देहि मे तात
पानीयमिति प्राह यमीश्वरः ॥ १७ ॥ वेंकटेशस्ततस्तस्य ताताचार्या-
भिधाभवत् ॥ ततो महान्यामुनार्य्यं सोप्येवं तमशिश्रियत् ॥ १८ ॥
ततो गोष्ठीपुरं नाम विश्रुतं पांड्यमंडले ॥ भगवान्राजते तत्र सौम्य-
नारायणाभिधः ॥ भट्टेशपरकालाभ्यां संस्तुतो जगदीश्वरः ॥ १९ ॥
श्रीभट्टेशचतुष्कवींद्रकृतिभिर्यः संनुतो भासते तीरे शुद्धसरोवरस्य
स हरिः पुण्ये विमानेऽद्भुते ॥ अष्टांगे च महासिताख्यरमया यः संनु-
तो भासते श्रीगोष्ठीपुरनायको दिशतु नः श्रेयः परं संततम् ॥ २० ॥
तत्र वैशाखरोहिण्यां पुंडरीकांशतोऽजनि ॥ गोष्ठीपूर्णो महातेजा
विद्वद्गोष्ठीविशारदः ॥ २१ ॥ स च तं यामुनाचार्य्यमशिश्रियदरिं-
दमः ॥ तत्रैव पांड्यदेशेस्ति काचिच्छ्रीमधुरा पुरी ॥ २२ ॥ तस्याः
समीपे विख्यातो वृषभाद्रिर्विराजते ॥ भगवान्सुंदरभुजः पंचभिर्दि-
व्यसूरिभिः॥संस्तुतोऽव्याहतैश्वर्यो ह्यद्यापि परिदृश्यते ॥ २३ ॥ श्री-
मच्छठारिकुलशेखरभट्टनाथैः श्रीगोदया च भगवान्कलिवैरिणा च ॥
यः संनुतो वनगिरौ कृतनित्यवासः श्रीशः स मामवतु सुंदरबाहुरेषः
॥ २४ ॥ श्रीसुंदराचले चात्र श्रीमाञ्छ्रीवामनांशतः ॥ कुंभमासे
मघायां तु जज्ञे मालाधरो महान् ॥ २५ ॥ वेदवेदांगसंपन्नो महात्मा
भगवत्परः ॥ नित्यकैंकर्यनिरतस्तस्थौ सुंदरबाहवे ॥ २६ ॥ सोपि
तद्यामुनाचार्य्यमाहात्म्यं तन्निशम्य च ॥ वृषभाद्रिं विहायाशु श्रीरंगं
प्राप्य बुद्धिमान् ॥ २७ ॥ यामुनार्य्यं समाश्रित्य तत्रैव न्यवसत्सु-
खम् ॥ बभूव मारणेराख्यं नगरं पांड्यमंडले ॥ २८ ॥ तत्र श्रीमा-
रणेनंबिनामाभूद्वैष्णवोत्तमः ॥ चतुर्थवर्णो ह्याश्लेषानक्षत्रे मासि कर्कटे
॥ २९ ॥ ज्ञानभक्त्यादिजलधिर्महात्मा देशिकप्रियः ॥ स तु श्रीरंग-
मासाद्य श्रुत्वा यामुनवैभवम् ॥ ३० ॥ शिष्यत्वमगमत्तस्य यामुन-

स्य महामतिः ॥ नित्यकैंकर्य्येनिरतो गुरोर्नित्यमतंद्रितः ॥ ३१ ॥
अथाकरोन्नित्यन्नासं तत्रैव गुरुसन्निधौ ॥ वेदांतिन्मारणेनैंबिनाम्नि
शिष्ये महात्मनि ॥ ३२ ॥ सुतरां यामुनाचार्यः कृपावान्समतिष्ठत॥
तुंडीरमंडले पूर्वसिंधोः पश्चिमरोधसि ॥ ३३ ॥भात्येकयोजने काचि-
त्महीसारपुरी श्रुता ॥ यत्रावतारं विदधे भक्तिसारो महायशाः॥३४॥
तस्याः पुरो महाभाग पश्चिमे क्रोशमात्रतः ॥ बभूव नगरी काचि-
न्नाम्ना श्रीपुष्पमल्लिका ॥ ३५ ॥ नित्यपुष्पवती यत्र राजते मल्लिका
यतः ॥ पूनमल्लीति यामेव वदंत्याधुनिका जनाः ॥ ३६ ॥ सा पुष्प-
मल्लिका नाम नगरी विश्रुता भुवि ॥ सर्वसस्यसमायुक्ता पुष्पारामा-
तिशोभिता ॥ ३७ ॥ माघमासे तत्र पुण्या नक्षत्रे मृगशीर्षके ॥ चतु-
र्थवर्णे संजज्ञे शबर्य्यंशेन वैष्णवः ॥ ३८ ॥ कांचीपूर्ण इति ख्यातः
कमलापतिनंदनः ॥ कश्चिन्महान्महाभाग महाभागवतोत्तमः ॥३९॥
कृताधिवासस्तत्रैव पूनमल्लीपुरे महान् ॥ नित्यं वरदराजाय कैंकर्य्यं
कर्तुमुद्यतः॥ ४० ॥ पुष्पारामं विधायाशु सुमहानंदनोपमम् ॥ भक्त्या
मनोहराः कृत्वा महतीः पुष्पमालिकाः ॥ ४१ ॥ नित्यं हस्तिगिरिं
गत्वा वरदायार्पयन् स्थितः ॥ आसूरिकेशवार्य्येण तस्य मैत्री तदाभ-
वत् ॥ ४२ ॥ निर्गत्य स्वपुरात्प्रातर्मध्याह्ने वारणाचलम् ॥ संप्राप्य
वरदायाथ मालिकास्ताः समर्प्य च ॥ ४३ ॥ रात्रौ श्रीभूतनगरे ततः
केशवसद्मनि ॥ उषित्वा सहसोत्थाय काले हरिपरायणः ॥ ४४ ॥
भूयः संप्राप्य वेदांतिन्पूनमल्लीपुरं तदा ॥ श्रमेण महता चापि
कांचीपूर्णो निरंतरम् ॥ ४५ ॥ देवराजाय कैंकर्य्यमकरोद्बहुव-
त्सरान् ॥ ततः कदाचिद्वरदः कांचीपूर्णं विलोक्य तम् ॥ ४६ ॥ मंद-
स्मितमुखः प्राह कृपया भक्तवत्सलः ॥ परितुष्टोऽस्मि तेनैव कैंक-
र्य्येण तवाधुना ॥ ४७ ॥ कुरु मत्सन्निधावेव कैंकर्यं हि निरंतरम् ॥
उशीरनिर्मितेनैव प्रकीर्णेन महानघ ॥ ४८ ॥ धातुरुत्तरवेद्यां तु

संजातस्यानलात्मनः ॥ तदंगीकृत्य वचनं कांचीपूर्णो जगत्पतेः॥४९॥
तथैव कुर्वन्कैंकर्य्यं तत्रैव सुखमास्थितः ॥ माहात्म्यं. यामुनार्य्यस्य
कांचीपूर्णो निशम्य तत् ॥ ५० ॥ संतुष्टो देवराजेन ह्यनुज्ञातः सुस-
त्वरम् ॥ श्रीरंगनगरं प्राप्य यामुनार्य्यमशिश्रियत ॥ ५१ ॥ स लब्ध-
मंत्रमंत्राथौं यामुनार्य्याद्विचक्षणः ॥ श्रीरंगनगरात्कांचीं संप्राप्य
गुरुशासनात् ॥ ५२ ॥ कैंकर्य्यं पूर्ववत्कुर्वन्वरदाय समास्थितः ॥
एवं श्रीयामुनाचार्य्यः शिष्याणां प्रेमपूर्वकम् ॥ ५३ ॥ विधाय पञ्चसं-
स्कारान्यथाशास्त्रं यतीश्वरः ॥ श्रीराममिश्रकृपया वर्द्धयन्विष्णुदर्शनम्
॥ ५४ ॥ कंचित्कालमुवासात्र श्रीरंगे लोकरक्षकः ॥ श्रीराममिश्रा-
गमनं यामुनार्य्यगृहं प्रति ॥ ५५ ॥ अलर्कशाकदानं च ह्याषण्मासं
निरंतरम् ॥ यामुनार्य्यस्य रहसि श्रीगीतार्थप्रबोधनम् ॥ ५६ ॥
संत्यागः सर्वराज्यस्य महानिशि विनिर्गमः ॥ श्रीरंगनगरप्राप्तिः
संन्यासं यामुनस्य च ॥ ५७ ॥ इत्येवं सकलं सम्यक् चारेभ्यश्चो-
लभूपतिः ॥ निशम्य सत्वरं भक्त्या सदारः सपुरोहितः ॥ ५८ ॥
विद्वत्प्रियः स वेदांतिन्नत्याश्चर्य्यमवाप ह ॥ ततः श्रीरंगनगरं संप्राप्य
स महीपतिः ॥ ५९ ॥ सकलत्रो महाभक्त्या यामुनार्य्यपदाब्जयोः॥
प्रणम्य प्रार्थयामास पंचसंस्कारकर्मणि ॥६०॥ राज्ञा च राजपत्न्या
च तेन राजपुरोधसा ॥ संप्रार्थितो यामुनार्य्यो वेदांतिन्बहुशस्तदा
॥ ६१ ॥ स तेषां पंचसंस्कारांश्चकार विधिना गुरुः ॥ तस्मै नाम
ददौ श्रीमांस्तदा राजपुरोधसे ॥ ६२ ॥ श्रीनाथमुनिदासाख्यं मंगलं
लोकविश्रुतम् ॥ राज्ञे श्रीरंगचोलेंद्र इति नाम ददौ महत् ॥ ६३ ॥
श्रीरंगनायकी नाम राजपत्न्याः शुभान्वितम् ॥ संप्रार्थितः सदारेण
राज्ञा यामुनदेशिकः ॥ ६४ ॥ तदर्द्धराज्यं वेदांतिन्ननुभूतं पुरा महत् ॥
श्रीरंगेश्वरकैंकर्य्यसात्कृतं विदधे तदा॥६५॥तदर्द्धराज्यं वेदांतिन् क्रिमि-
कंठांतमेव हि ॥ श्रीरंगश्रीकैंकर्य्ये तत्सर्वं समपद्यत ॥ ६६ ॥तद्वृत्तांत

निशम्याशु यामुनार्यसुतद्वयम् ॥ यामुनार्य्यं समाश्रित्य श्रीरंगे न्यवसत्सुखम् ॥ ६७ ॥ वेदांतिन्यामुनाचार्य्यः श्रीरंगे शिष्यसंवृतः ॥ कैंकर्य्यं रंगिणःकुर्वन्नव्याहतमतंद्रितः॥६८॥श्रीराममिश्रकृपया वर्द्धयन् विष्णुदर्शनम् ॥ अवर्त्तत जितारातिः श्रीरंगे सुमहायशाः ॥ ६९ ॥ अशिश्रियञ्जनाः सर्वे यामुनार्यं यतीश्वरम् ॥ तच्छ्रुत्वा वैभवं तस्य सुमहल्लोकविश्रुतम् ॥ ७० ॥ एकविंशतिशिष्यास्तु प्रधानास्तस्य विश्रुताः ॥ अन्ये च बहवः सन्ति तस्यांतेवासिनो भुवि ॥ ७१ ॥ तं दृष्ट्वा यामुनाचार्य्यं राममिश्रो महौजसम् ॥ संप्रहृष्टो रहस्तस्मै सर्वार्थानुपदिश्य च ॥ ७२॥ देशिकानुज्ञया सम्यग्व्याजहार वचोऽर्थदम्॥ कुरुकानाथनामास्ति कश्चिद्देशिकपुंगवः ॥ ७३ ॥ अष्टांगयोगनिरतः शिष्यः श्रीनाथयोगिनः ॥ तत्रैवाष्टांगयोगस्तु निक्षिप्तो नाथयोगिना ॥७४॥ युष्मदर्थं करुणया कुरुकानाथनामनि ॥ तस्य योगरहस्यं तु तद्गृहाणांजसा तदा॥७५॥राममिश्रस्य वचनं स निशम्याथ योगिनः॥ एवं विज्ञापनं चक्रे कृतांजलिपुटस्तदा ॥ ७६ ॥ सर्वार्थवेदिनस्तस्य भवतो देशिकप्रिय ॥ अष्टांगयोगं योगार्ह न संप्राप्तं इमं कुतः ॥७७॥ स तद्वचनमाकर्ण्य गुरुः शिष्यमथाब्रवीत् ॥ युष्मत्पितामहो नाथयोगींद्रो मद्गुरुं तदा ॥ ७८ ॥ पुंडरीकाक्षमाहूय वाक्यमेतदुवाच ह ॥ अष्टांगयोगं दास्यामि पद्माक्षाद्य गृहाण भोः ॥ ७९ ॥ तन्निशम्य वचस्तस्य तदास्मद्गुरुरब्रवीत् ॥ विद्यमाने शवे स्वामिन्कल्याणं मे कथं भवेत् ॥८०॥ देहि देहावसाने मे तदा तद्योगमुत्तमम्॥तदंगीकृत्य वचनं तदा युष्मत्पितामहः ॥ ८१ ॥ त्वदर्थं दर्शनार्थांश्च सर्वान्निक्षिप्य मद्गुरौ॥कुरुकानाथयोगींद्रे योगं निक्षिप्तवान् हि तम् ॥८२॥केनचित्कारणेनाथ मृगयन् रामलक्ष्मणौ॥वैदेहीं हनुमंतं च नगरेषु वनेषु च॥८३॥ कुत्राप्यलभमानोथ तेषां संदर्शनं भुवि ॥ महाप्रस्थानमासाद्य स तत्रैवागमत्पदम् ॥ ८४ ॥ तद्विष्णोः परमं पदं सदा पश्यंति सूरयः ॥ अतो ह्यस्मद्गुरोर्योगप्राप्तिर्नाभून्महामते ॥ ८५ ॥ अष्टांगयोगसंप्राप्ति-

नं चैवाभून्ममाप्यतः॥त्वमप्यद्यांतिकं गत्वा कुरुकानाथयोगिनः॥८६॥
सम्यग्गृहाण सहसा योगमष्टांगमुत्तमम् ॥ राममिश्रः स वेदांति-
ञ्छीरंगे देशिकाज्ञया ॥ ८७॥ श्रीमहाविष्णुसिद्धांतनिर्वोढारं विधाय
तम् ॥ तेनैवाव्याहतं सगं सम्यक् स जगतीतले ॥ ८८ ॥ कारयन्या-
मुनार्य्येण तत्सिद्धांतप्रवर्द्धनम् ॥ कंचित्कालमुवासार्य्यः कृतकृत्यो
महायशाः ॥ ८९ ॥ पंचोत्तरशतं नीत्वा वत्सराणां भुवः स्थले ॥ वि-
ष्णुदर्शननिर्वाहं यामुनार्य्यं विधाय च ॥ ९० ॥ कृतदेशिककैंकर्य्यः
कृतार्थो जरठो महान् ॥ राममिश्रोऽथ वैकुंठगमने विदधे मतिम् ॥
॥९१॥ ततः स्वचरमे काले राममिश्रः कृतादरः ॥ यामुनार्य्यं समा-
हूय वचनं चेदमब्रवीत् ॥ ९२॥ भवतो नाथमुनिना संबंधद्वयमस्ति
हि ॥ अस्माकं प्रापकप्राप्ये नाथयोगिपदांबुजे ॥ ९३ ॥ इति ध्रुवं
विनिश्चित्य स तत्र त्वं कृतादरः ॥ सनिर्भरो वसात्रैव वर्द्धयन्विष्णु-
दर्शनम् ॥ ९४ ॥ भवादृशं महात्मानं विष्णुदर्शनवर्द्धनम् ॥ संपाद्य
पुरुषं कंचित्स्थापय त्वं मते ध्रुवम ॥९५॥ वर्द्धयन् दर्शनं लोके सर्व-
त्रैतदनुत्तमम ॥ प्रख्यातवैभवः श्रीमाञ्जितारातिर्महायशाः ॥ ९६ ॥
बहुकालं सुखेनात्र वस यामुनदेशिक ॥ इत्येवमाशिषः कृत्वा यामुना-
र्याय सादरम् ॥ ९७ ॥ राममिश्रः परं ध्यायन् पद्मनेत्रपदद्वयम् ॥ स
जगामांजसा श्रीमांस्तद्विष्णोः परमं पदम् ॥ ९८ ॥ शिष्याः प्रशि-
ष्यास्ते सर्वे वैष्णवा यामुनादयः ॥ वियोगे राममिश्रस्य विषण्णा ह्य-
भवन्परम् ॥ ९९ ॥ ते सर्वे ब्रह्ममेधेन संस्कारं चक्रिरे तदा ॥ राममि-
श्रस्य वेदांतिन्यथाशास्त्रं यथाविधि ॥१००॥ समारभ्याथ ते सम्यक्
श्रीचूर्णपरिपालनम्॥सर्वमध्ययनांतं च तस्य कर्माचरंस्तदा ॥१०१॥
ततो महान्यामुनदेशिकेंद्रः श्रीरंगपुर्य्यां श्रितशिष्यसंघः ॥ दिगंतकी-
र्तिः सुतरां विरेजे श्रीनाथयोगींद्र इवामलात्मा ॥ १०२ ॥ इति श्री-
प्रपन्नामृते भट्टार्य्यवेदांतिसंवादे यामुनार्यमहापूर्णादिगुरुवैभवो नाम
त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

# चतुर्दशाधिकशततमोऽध्यायः ।

असहिष्णुस्तदाचार्य्यविश्लेषं यामुनस्ततः ॥ महापूर्णादिभिः शिष्यैः
सर्वैः श्रीरंगवासिभिः॥१॥ सहितो रंगनगरान्निर्गत्य सुमहायशाः ॥
तत्राजगाम सहसा योगाभ्यासाभिलाषया॥२॥कुरुकानाथयोगींद्रो यत्र
योगेन वर्तते॥योगविघ्नो न कर्तव्य इति ज्ञात्वा महामतिः ॥ ३ ॥ नि-
क्षिप्य दूरतःसर्वानेक एवात्र चागतः॥योगारूढं महात्मानं कुरुकानाथ-
मुत्तमम् ॥४॥ विलोक्य विस्मितोत्यंतं संतुष्टो यामुनस्तदा ॥ कुडचां-
तरस्थो निश्चेष्टः पश्यंतूष्णीं समास्थितः ॥५॥ पश्चाद्भागं विलोक्याशु
योगरूढोऽब्रवीत्तदा ॥ श्रीनाथवंश्यः को वात्र किं वाद्य सुसमागतः
॥ ६ ॥ यामुनस्तद्वचः श्रुत्वा समभ्येत्य तदंतिकम् ॥ स्वामिंस्त्वद्दा-
सभूतोऽहं यामुनो ह्यागतोऽभवम् ॥ ७ ॥ इत्युक्ता संप्रणम्याशु भ-
क्त्या तत्पादपद्मयोः ॥कृतांजलिपुटः सम्यगिदं वचनमब्रवीत् ॥ ८ ॥
कुडचांतरस्थितं मां त्वं कथं वै ज्ञातवानसि ॥ कुरुकानाथ मे ब्रूहि
कृपया कारणं महत् ॥९॥ तदंगीकृत्य वचनं योगींद्रस्तमभाषत ॥ सं-
क्रीडमानो भगवाननिशं रमया सह ॥ १० ॥ संत्यज्यानुत्तमं शी-
घ्रं तत्पयोधरपीडनम् ॥ अदत्त्वा सुखदानं च लक्ष्म्याः सर्वेश्वरोऽधुना
॥ ११ ॥ आलंब्य मद्भुजं सम्यग् द्वित्रिवारं स उन्मुखः॥ एतत्कुडच-
बहिर्भागमपश्यत्सादरं मुहुः ॥ १२ ॥ अतोऽहमब्रवं कोद्य कुलजो-
ऽस्त समागतः ॥ तन्निशम्याथ वेदांतिन् विस्मयं परमं गतः ॥ १३ ॥
कुरुकानाथपादाब्जे संप्रणम्याब्रवीत्तदा ॥ बहुशः प्रार्थयामास तं यो-
गं देहि मेऽधुना ॥ १४ ॥ तेन संप्रार्थितो योगी यामुनेन महात्मना॥
अस्मद्देहावसानेऽहं योगं दास्यामि ते ध्रुवम् ॥ १५ ॥ तत्कालनि-
र्णयं सम्यग्यामुनायादिशत्तदा ॥ धनुर्मासे यामुनार्य्य गुरुपुष्यसमा-
गमे ॥ १६ ॥ तत्राभिजिन्मुहूर्तं तु मच्छरीरावधिः स्फुटम् ॥ तत्पूर्व-
दिवसे चात्र ह्यागंतव्यं त्वया ध्रुवम् ॥ १७ ॥ इत्युक्ता पत्रिकां तस्मै

ददौ तत्कालसूचिकाम्॥ वेदांतिन्यामुनाचार्य्यस्तामादायाथ पत्रिकाम् ॥१८॥ तेन संप्रेषितः शीघ्रं श्रीरंगं प्रविवेश सः॥ततः कदाचिच्छ्रीरंगे महानध्ययनोत्सवः ॥ १९ ॥ बभूव रंगराजस्य सर्वलोकमहोत्सवः ॥ वररंगाभिधस्तत्र यामुनाचार्य्यनंदनः ॥२०॥ देवगानेन रंगेशसन्निधौ शठजित्कृताम् ॥सम्यक् सहस्रगीतिं तामगायत्स मनोहराम्॥ २१ ॥ अभिनीय विशेषेण ह्यनंतपुरवैभवम् ॥ श्रवणानंददं श्रीमान् स तत्रागायदद्भुतम् ॥ २२ ॥ तेनैव यामुनार्यस्य संजाता महती मतिः॥ दैवयोगात्तदा तूर्णमनंतपुरदर्शनम् ॥ २३ ॥अनंतशयनं प्राप्य यामुनार्य्यः कृतत्वरः ॥ नत्वा द्वारैस्त्रिभिः सम्यक् पद्मनाभमनंतके॥२४॥ शिष्यसंघसमेतः सन्कंचित्कालमवर्त्तत ॥ ततः श्रीरंगनगरे कश्चित्तेवारिनामकः ॥ २५ ॥ शिष्यो बभूव वेदांतिन्यामुनार्य्यस्य विश्रुतः ॥ मुखपादे तु वैवर्ण्यं शिष्यस्य समजायत ॥२६॥ गुरुभक्तस्य तस्याथ गुरुविश्लेषतस्तदा ॥ तद्विलोक्याथ पप्रच्छुर्वैष्णवं केचिदादरात्॥२७॥ कयाभिलाषया देहविकारोयं तवागतः ॥ तेवारिनाथस्तच्छ्रुत्वा तेभ्यः प्रोवाच तत्त्वतः ॥ २८ ॥ गुरोर्विश्लेषतस्तस्य ममायमधुनागतः ॥ तच्छ्रुत्वा विस्मिताः सर्वे शीघ्रं यामुनसन्निधिम् ॥ २९ ॥ तदा प्रस्थापयामासुस्तं शिष्यं देशिकप्रियम् ॥ तेवारिनाथः श्रीरंगान्निर्गत्याप्तजनैः सह ॥ ३० ॥ झटित्यनंतशयनसमीपमगमत्तदा ॥ निर्गत्यानंतनगराच्छ्रीरंगनगरं प्रति ॥ ३१ ॥ स क्रोशत्रयमध्वानं तस्याभिमुखमाययौ ॥ तेवारिनाथः सहसा दृष्ट्वा यामुनदेशिकम् ॥ ३२ ॥ साष्टांगवंदनं चक्रे भक्त्या तत्पादपद्मयोः ॥ स दृष्ट्वा कुपितः प्राह तमुल्लंघितशासनम् ॥ ३३ ॥ श्रीरामस्य स्वतंत्रत्वाच्छूरत्वाच्च विशेषतः ॥ तस्य प्रशासने तस्थौ भरतो भ्रातृवत्सलः ॥ ३४ ॥ अहं त्वशूरः सुतरामस्वतंत्रो यतोऽभवम् ॥ तस्मान्मच्छासनमयमुल्लंघ्यात्र समागतः ॥ ३५ ॥ स गुरोर्वचनं श्रुत्वा सहसा साध्वसं ययौ ॥ स्वरू-

पहानिः संजाता महातिति ममाधुना ॥ ३६ ॥ तदा तस्यानुगाः सर्वे सम्यग्यामुनयोगिने ॥ तस्मै विज्ञापयामासुस्तद्वृत्तं गुरवेखिलम् ॥ ॥ ३७ ॥ तद्वाक्यश्रवणेनैव हृष्टो यामुनदेशिकः ॥ स्वपादपद्मयोः शिष्यं सम्यङ्न्यस्तभरं स्थितम् ॥३८॥ स तमुद्धृत्य बाहुभ्यां सादरं परिरभ्य च ॥ कृपया लालयन्प्राह गिरा मधुरया तदा ॥ ३९ ॥ अस्याविदूरे सुमहद्भात्यनंतपुरं हरेः ॥ तत्र गत्वा पद्मनाभं नत्वागच्छात्र सांप्रतम्॥४०॥तच्छ्रुत्वा वचनं तस्य स शिष्यः प्राह तं गुरुम् ॥अनंतशयनं मेद्य स्वतः प्रत्युद्गतं गुरो॥४१॥अस्य देशस्य गमने किमर्थं हि वृथाश्रमः॥तच्छ्रुत्वा संप्रहृष्टोथ महान्यामुनदेशिकः ॥ ४२ ॥ अधिकारिविशेषोयं सुमहानित्यमन्यत ॥ गुणेन तेन महता तस्यांतेवासिनस्तदा ॥ ४३ ॥ अवाप परमानंदं महात्मा शिष्यवत्सलः ॥ तदेव परमं स्थानमिति शिष्यस्य निश्चयः ॥ ४४ ॥ देशिको वर्तते यत्र महात्मा शिष्यवत्सलः ॥४५॥ येनैव गुरुणा यस्मै न्यासविद्या प्रदीयते ॥तस्य वैकुंठदुग्धाब्धिद्वारकाः सर्व एव सः ॥ ४६ ॥ तत्रत्यानखिलशुभान्हि दिव्यदेशान्नत्वा श्रीशुभमधुरामवाप धीरः ॥ वैखायामथ कृतमज्जनो महात्मा तस्यास्तत्परमतटे जजाप मंत्रम् ॥४७॥ हृद्यं हि तीरे तदवेक्ष्य तस्य चैकांतयोगस्य निकुंजवृंदम् ॥ योगीश्वराणां निजवासभूमिमवाप चार्य्यः स च यामुनार्य्यः ॥ ४८ ॥ संपश्यतस्तस्य रहः प्रदेशं वैखापगायास्तटसीम्नि हृद्यम् ॥ वैराग्यसिंधोरपि यामुनस्य योगाभिलाषः सुमहान्बभूव ॥ ४९ ॥स पत्रिकां पुरा दत्तां कुरुकानाथयोगिना ॥ अष्टांगयोगमाकांक्षंस्तामपश्यत्कृतादरः ॥ ५० ॥ तदायं वासरस्तेन निर्णीतस्स च वासरः ॥ तत्र तत्क्षेत्रयोगेन ह्येकत्वं तावुभौ गतौ॥५१॥ततस्सन्तापमगमद्यामुनार्य्यस्तदा भृशम् ॥ शिष्यान्विलोक्य सहसा व्याजहार वचः शुभम्॥५२॥ निर्णीतो दिवसः पूर्वं कुरुकानाथयोगिना॥सोस्मिन्दिने समायातः किं करिष्यामि वैष्णवाः ॥५३॥

वीरनारायणपुरं बहुयोजनदूरतः ॥ वर्त्तते नगरस्यास्य ह्यद्यैवास्ति स वासरः ॥५४॥ कथं हि शक्यते गंतुं तत्र तद्वाञ्छया मया ॥ यद्यास्ति सांप्रतं मेद्य श्रीरामस्येव पुष्पकम् ॥ ५५ ॥ अधुनैव मया सम्यक् तत्र गंतुं हि शक्यते ॥ महाविद्वानपीत्येवं विचिंत्य बहुशस्तदा ॥ ५६ ॥ अष्टांगयोगराहित्याद्विषादमगमद्बहु ॥ समाश्वस्तोऽथ बहुशः शिष्यैर्वेदांतवेदिभिः ॥ ५७ ॥ ततः श्रीयामुनाचार्य्यः श्रीरंगनगरं तदा ॥ संप्राप्य शिष्यसंघेन रंगेशं संप्रणम्य च ॥मठं प्रविश्य तत्रैव सुखं तस्थौ महायशाः ॥ ५८ ॥ वेदान्तिन् यामुनाचार्यः सर्वत्र जगतीतले ॥ महापूर्णादिभिः शिष्यैर्वर्द्धयन्विष्णुदर्शनम् ॥५९॥ कुत्राप्यव्याहतमिदं जगदेकबुधाग्रणीः ॥ बहुकालं सुखेनैव तस्थौ रंगे महायशाः ॥ ६० ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे यामुनाचार्यानंतशयनादिदिव्यदेशसंचारकथनं नाम चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

## पञ्चदशाधिकशततमोऽध्यायः ।

श्रीरंगपुर्य्यां श्रितशिष्यसंघः श्रीयामुनार्य्यः प्रथितप्रभावः ॥ अव्याहतंविष्णुमतं जगत्यां प्रवर्त्तयामास जितारिवर्गः ॥ १ ॥ शिष्या महांतो विबुधाग्रगण्याः श्रीभूरिपूर्णप्रमुखा द्विजेंद्राः ॥ सर्वे स्थिता यामुनदेशिकस्य प्रशासने तस्य बभूवुरार्याः ॥ २ ॥ सहस्रगीतिं शिष्येभ्यो यामुनार्यः प्रबोधयन् ॥ सर्वदा मानयंस्तस्थौ शठारेर्दिव्यवैभवम् ॥ ३ ॥ सहस्रगीत्यां वेदांतिन् कदाचिद्बुधसत्तमः ॥ पोलिहेत्यस्य पद्यस्य व्याख्यानसमये तदा ॥ ४ ॥ ध्यात्वा मुहूर्तं निश्चेष्टः स महात्मा व्यचिंतयत् ॥ प्रतिपाद्योयमत्रार्थः को वा भवितुमर्हति ॥५॥गतो वा वर्तते सोयं संभविष्यति वा महान् ॥ मृषा न जायते वाणी कदाचिच्छठवैरिणः ॥ ६ ॥ एवं चिंतयतस्तस्य ज्ञात्वाभिप्रायमुत्तमम् ॥ उचुर्विचक्षणाः शिष्या यामुनं दीर्घदर्शिनम् ॥ ७ ॥ भगव-

न्यायमुनाचार्य्यं किमर्थं चिंत्यते त्वया ॥ तत्पद्यार्थो महान्युष्मदवतार-
स्य सूचकः ॥ ८ ॥ निश्चयं स भवान्साक्षाद्विष्णुर्लोकगुरुर्यतः ॥ तैरे-
वमुक्तस्तान्प्राह शिष्यान् यामुनदेशिकः ॥ ९ ॥ अयमर्थो महान्दि-
व्यमहापुरुषसूचकः ॥ अर्थो महानहं क्षुद्रो न भविष्यामि तादृशः
॥ १० ॥न पूर्वदेशिकपरो ह्यर्थोऽयं न च मत्परः॥ भविष्यति महान्क-
श्चित्सर्वलोकैकदेशिकः ॥ ११ ॥ तेनेदं वैष्णवमतं भविष्यत्यतिविस्तृ-
तम् ॥ सत्यं वच्मि बुधश्रेष्ठाः संशयोऽत्र न विद्यते ॥ १२ ॥ इत्युक्त्वा
सोऽनिशं तस्य जन्माकांक्षन्कृतादरः॥अस्मद्दर्शननिर्वोढा को वा लोके
भविष्यति ॥ १३ ॥ लोकैकदेशिकः श्रीमान् मम कालादनंतरम् ॥
इति संचिंतयन्नित्यं पोलिहार्थं च सादरम् ॥ १४ ॥ तं हारीतस्मृता-
वर्थं स्मृत्वा भूयो महत्तरम् ॥ यादवाचलमाहात्म्ये श्लोकार्थं चाखिलं
च तम्॥ १५ ॥ध्रुवं कश्चिन्महाञ्छीघ्रं भूम्यामवतारिष्यति ॥ स महा-
न्मम काले वा भविता मदनंतरम्॥ १६ ॥ इति संचिंतयन्नास्ते रंगे
यामुनदेशिकः॥यामुनार्य्यकृपालब्धवेदांतद्वयपारगः॥ १७॥ भूरिश्रीशै-
लपूर्णार्य्यः स महान्वेंकटाचले॥वेंकटेशस्य कैंकर्य्यं कुर्वन्ननुदिनं स्थितः
॥१८॥पुत्रद्वयं हि भगिनीद्वयं हि दुहितृद्वयम्॥तस्य श्रीशैलपूर्णस्य बभू-
व भुवि विश्रुतम् ॥ १९ ॥लक्ष्मीभूम्यंशजं तत्र बभूव भगिनीद्वयम् ॥
ज्येष्ठा कांतिमती तत्र विश्रुता सा रमांशजा ॥२०॥ हारीतस्याभव-
द्भार्या तस्य केशवयज्वनः ॥ नारायणांशजातस्य श्रीभूतपुरवासिनः
॥ २१ ॥ भूम्यंशजा द्युतिमती द्वितीया तत्र सुंदरी ॥ पद्मलोचनभट्ट-
स्य भार्यासीन्महतस्तदा ॥ २२ ॥ नारायणांशजातस्य भारद्वाजस्य
सत्तम ॥ धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥ २३ ॥ यदायदा हि
धर्मस्य ग्लानिर्भवति भारत ॥ अभ्युत्थानमधर्मस्य तदात्मानं
सृजाम्यहम् ॥ २४ ॥ इत्युक्तरीत्या वेदांतिन् भूयो रामादयस्तदा ॥
चत्वारो लोकरक्षार्थं भूम्यां संजज्ञिरेऽनघ ॥ २५ ॥ श्रीरामो
भगवान्पूर्वं तत्र ज्येष्ठोऽभवद्यथा ॥ तथैवाभूत्कलियुगे श्रीमाल्लँ-

क्ष्मणदेशिकः ॥ २६ ॥ शालिवाहशकाब्दानां तत्राष्टत्रिंशदुत्तरे ॥ गते नवशते श्रीमान्यतिराजोजनिं क्षितौ ॥ २७ ॥ अनंतः प्रथमं रूपं द्वितीयं लक्ष्मणस्तथा ॥ तृतीयं बलरामश्च कलौ कश्चिद्भविष्यति ॥ ॥२८॥ यादवाचलमाहात्म्ये श्लोकोयं विद्यते किल ॥ ब्रह्मन् कलियुगे प्राप्ते धर्मे नष्टे श्रुतीरिते ॥२९॥ मद्भक्तः सर्वधर्मज्ञस्तव गोत्रसमुद्भवः॥ शारीरकमहाभाष्यग्रंथकर्त्ता जितेंद्रियः ॥ ३० ॥ तस्य संबंधिनः शिष्याः सुराणामपि दुर्गमम् ॥ मामप्राप्यैव ते सर्वे गमिष्यंति परां गतिम् ॥ ३१ ॥ एवं भगवतैवोक्तं तं हारीतस्मृतावपि ॥ अविरोधेन वेदांतिन्नेतयोरुभयोस्तदा ॥ ३२ ॥ हारीतगोत्र एवात्र तादृशः समजायत ॥ शेषो रामानुजो भूत्वा जगत्संरक्षणाय च ॥ ३३ ॥ अयोध्यावासिनामेषां लोकं सांतानिकं पुरा ॥ प्रददौ कृपया रामस्तेषामपि परं पदम् ॥ ३४ ॥ प्रदातुकामः स तदा वेदांतिन् कूरराडभूत् ॥ भक्त्या भरतशत्रुघ्नौ तत्कैंकर्य्यपरायणौ ॥ ३५ ॥ वाधूलवंशतिलकौ तावभूतां ततस्तदा ॥ चैत्रमासे शुक्लपक्षे पंचम्यामथ कर्कटे ॥ ३६ ॥ लग्ने श्रीलक्ष्मणांशेन ह्यार्द्रायां गुरुवासरे ॥ आसूरिकेशवाचार्य्यात्कांतिमत्यामजायत ॥३७॥ रामानुजो महातेजा भगवान्देशिकोत्तमः ॥ वैशाखे तु विशाखायां वैनतेयांशतो महान् ॥ ३८ ॥ गोविंदः पद्मनेत्रार्य्याद्द्युतिमत्यामजायत ॥ मकरे हस्तनक्षत्रे ततो रामांशतो जनि ॥३९॥ श्रीमाननंतभट्टार्य्यान्महादेव्यां महायशाः ॥ कूरेशोऽस्मत्पिता सर्वविबुधाग्रेसरोऽनघ ॥४०॥ माघमासे पुनर्वस्वां दशम्यां भरतांशतः ॥ लक्ष्मीजनन्यां संजज्ञे वाधूलानंतदीक्षितात् ॥ ४१ ॥ धीमान्दाशरथिर्नाम श्रीवाधूलकुलाग्रणीः ॥ कंदाडनाथनामाथ तस्य दाशरथेरभूत् ॥ ४२ ॥ शत्रुघ्नांशेन सुमहान्पुत्रो लोकविलक्षणः ॥ श्रीरामानुजदासाख्य इतिनामास्य चाभवत ॥ ४३ ॥ तदेव जन्मनक्षत्रं तस्य माघपुनर्वसुः ॥ एवं संजज्ञिरे केचिन्महांतो नित्यसूरयः ॥४४॥ रामानुजसहायार्थं नानादेशेषु देशिकाः॥ यथा रामसहायार्थं देवगंधर्व-

किन्नराः ॥ ४५ ॥ अवतीर्णाः पुरा भूम्यां हरयः कामरूपिणः ॥ श्रीरामस्य सहायार्थं दशग्रीववधोद्यमे ॥ ४६ ॥ द्विसप्ततिः प्रवाहाश्च हरीणामभवन्यथा ॥ रामानुजसहायार्थं कलिसंहरणोद्यमे ॥४७॥ तदंतेवासिनश्चासंश्चतुःसप्ततिदेशिकाः ॥ कूरेश्वरादयः सर्वे महांतो भगवत्पराः ॥ ४८ ॥ सम्यग्ववृधिरे भूम्यामुद्यद्भास्करसन्निभाः ॥ ततो रामानुजः श्रीमाँल्लीलामानुषविग्रहः ॥ ४९ ॥ वेदान्सलक्षणान्सर्वानधीत्य पितृसन्निधौ ॥ स शास्त्राणि पठंस्तस्थौ कांच्यां यादवसन्निधौ ॥ ५० ॥ इति श्रीप्रपन्नामृते भट्टाचार्य्यादिसर्वावतारकथनं नाम पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ।

श्रीरंगे यामुनाचार्य्यः स तदा देशिकोत्तमः ॥ शठकोपकृतेरर्थं सवेदानुभवन् स्थितः ॥ १ ॥ राजव्रणं महत्तस्य यामुनस्याभवत्तदा ॥ तेन संपीडितो धीमान्समाः काश्चित्समास्थितः ॥ २ ॥ ततः कदाचिद्वेदांतिन्यामुनो दीर्घदर्शनः ॥ लोकं वितिमिरं दृष्ट्वा जातधर्मरतिं कलौ ॥ ३ ॥ संतुष्टस्तेन तज्जन्म ज्ञात्वैवानुत्तमं महत् ॥ स तस्यान्वेषणार्थाय दूतान्संप्राहिणोत्तदा ॥४॥ हारीतगोत्रजननं ब्रह्मराक्षसमोचनम् ॥ गंगास्नानच्छलेनैव विंध्याटव्यां विसर्जनम् ॥५॥ यद्देवराजप्रत्यक्षं बहुदूरागमं क्षणात् ॥ याचित्वा तद्दत्ततोयपानं श्रीभगवत्कृतम् ॥६॥ कांचीपूर्णेन सख्यं च यत्तत्सर्वसमानुषम् ॥ माहात्म्यं लक्ष्मणार्य्यस्य चारैः श्रुत्वा प्रहर्षितः ॥ ७ ॥ वेदांतिन्यामुनाचार्यो द्रष्टुकामस्तदांजसा ॥ संप्रतस्थे महात्मानं रंगात्कांचीपुरं प्रति ॥८॥ कांचीं संप्राप्य वरदं यामुनार्य्यः प्रणम्य च ॥ कांचीपूर्णात्ततो ज्ञात्वा लक्ष्मणार्यं महौजसम् ॥ ९ ॥ सम्यग्विलोक्य संस्तुष्टस्तेन संभाषणे महान् ॥ सार्द्धं रामानुजार्य्येण चकार मतिमान्मतिम् ॥ १० ॥ सर्वांतरात्मा वरदस्तयोः संभाषणं तदा ॥ भूम्यां यथैव न भवेत्स तथैवाकरोज्जवात् ॥ ११ ॥

यस्य प्रसादकलया बधिरः शृणोति पंगुः प्रधावति जवेन च वक्ति मूकः॥ अंधः प्रपश्यति सुतं लभते च बंध्या तं देवमेव वरदं शरणं गतोऽस्मि ॥ १२ ॥ श्लोकमेवं स विज्ञाप्य तस्य विज्ञानसिद्धये ॥ संप्रार्थ्य वरदं शीघ्रं निर्गत्य करुणाकरः ॥ १३ ॥ कांचीपुरादवाप्य रंगं यामुनदेशिकः॥ रामानुजं विधेहीति शीघ्रं विष्णुमताधिपम् ॥ १४ ॥ स्तोत्ररत्नं विधायाशु वरदं प्रति सादरम् ॥ रामानुजार्य्यवृत्तांतं शृण्वन् रंगे समास्थितः ॥ १५ ॥ स्तोत्ररत्नं चतुःश्लोकीं वेदप्रामाण्यमेव च ॥ सिद्धित्रयं च वेदांतिन् श्रीगीतासंग्रहं महान् ॥१६॥ यामुनो लोकरक्षार्थमकरोद्ग्रंथपंचकम् ॥ एवं निवसतस्तस्य यामुनस्य महात्मनः ॥ १७ ॥ पंचविंशतिसंयुक्तं वत्सराणां शतं गतम् ॥ त्यक्ताभिलाषो मेदिन्यां यातुकामः परं पदम् ॥ १८ ॥ शिष्यान्विलोक्य तान्सर्वान्व्याजहार वचः शुभम् ॥ रामानुजो मतस्यास्य निर्वोढा नात्र संशयः ॥ १९ ॥ उपदिश्याशु सर्वार्थान्यूयं तस्मै महात्मने ॥ मतप्रवर्त्तकं धीरं महांतं कुरुतादरात् ॥ २० ॥ इत्युक्त्वा निखिलानर्थान्स तेभ्यश्चोपदिश्य तान् ॥ धीमंतं मारनेर्नेबिं विलोक्येदं वचोऽब्रवीत् ॥ २१ ॥ राजव्रणं गृहाणेदं बहुशः प्रार्थितं त्वया ॥ भोगैकनाश्यं प्रारब्धं महतामपि दुर्जयम् ॥ २२ ॥ मयानुभूतं यच्चेतद्बहुकालं महद्व्रणम् ॥ अल्पकालमिदं रोगं भुंक्ष्व त्वमपि सादरम् ॥२३॥ इत्युक्त्वा तद्व्रणं तस्मै दत्त्वा भक्ताय सादरम् ॥ तस्य संरक्षणे सम्यङ् महापूर्णं निधाय तम् ॥२४॥ कृतकृत्यो लक्ष्मणार्य्यसंभाषणरतस्तदा ॥ शृण्वन्स तस्य वृत्तांतं श्रीरंगे सुखमास्थितः ॥ ॥२५॥ कांचीपुरे यादवं तं कांतिमत्यात्मसंभवः॥ विसृज्याथ महाप्राज्ञः कांचीपूर्णेन संगतः॥२६॥ तन्नियोगेन हरये वारणाचलवासिने॥ घटेनांबु समादाय शालकूपात्स भक्तितः ॥ २७ ॥ नित्यं समर्पयन्नास्ते धीमान् रामानुजो मुनिः ॥ चौरैः कदाचिदित्येवं तद्वृत्तांतं निशम्य सः ॥ २८ ॥

महापूर्णं समाहूय यामुनो वाक्यमब्रवीत् ॥ पूर्णाचार्य्यं महाप्राज्ञ शृणु त्वं वचनं मम॥२९॥कांचीं पुरीं समासाद्य लक्ष्मणार्य्यस्य सन्निधौ॥मयाकृतमिदं स्तोत्रं त्वं वाचय मदाज्ञया ॥३०॥ स तत्राभिमुखः शीघ्रं भविष्यति न संशयः ॥ येन केनाप्युपायेन तमिहानय शीघ्रतः ॥ ॥ ३१ ॥ गुरोर्वाक्यं ततः श्रुत्वा तेनानुज्ञापितस्तदा ॥ पूर्णाचार्यो महाप्राज्ञः पुरीं कांचीं ययौ जवात् ॥ ३२ ॥ श्रीहस्तिशैलमारुह्य नत्वा श्रीवरदं हरिम् ॥ तत्सन्निधौ यामुनेन कृतं स्तोत्रमणिं परम् ॥ ॥ ३३ ॥ विज्ञाप्य भक्तितो विद्वन्वरदस्य जगत्पतेः ॥ तत्तीर्थं शठकोपं च गृहीत्वा भक्तिसंयुतः ॥ ३४ ॥ रामानुजस्य वृत्तांतं जनाज्ज्ञात्वा मुदान्वितः ॥ तत्पंथानं समाश्रित्य तस्थौ स्तोत्रमणिं पठन् ॥ ॥ ३५ ॥ तदा रामानुजो धीमान् स्वर्णकुंभेन तज्जलम् ॥ आदाय गच्छंस्तन्मार्गे पूर्णार्यपठितं परम् ॥ स्तोत्ररत्ने श्लोकमेकमशृणोत्सादरं तदा ॥ ३६ ॥ स्वाभाविकानवधिकातिशयेशितृत्वं नारायण त्वयि न मृष्यति वैदिकः कः ॥ ब्रह्मा शिवः शतमखः परमस्वराडित्येतेपि यस्य महिमार्णवविप्रुषस्ते ॥ ३७ ॥ तच्छ्लोकश्रवणेनैव मतिमान्संप्रहर्षितः ॥ पूर्णार्यं संप्रणम्याशु तं पप्रच्छ कृतीश्वरम् ॥ ३८ ॥ तेन पृष्टः स पूर्णार्यः सम्यग्लक्ष्मणयोगिने ॥ यामुनाचार्यवृत्तांतं सर्वं तस्मै न्यवेदयत् ॥ ३९ ॥ अतिप्रेम्णा निशम्याशु तद्वृत्तांतं प्रहर्षितः ॥ द्रष्टुकामो यामुनार्य्यं प्रतस्थे तत्क्षणाज्जवात् ॥४०॥ पूर्णार्य्यसहितः श्रीमाञ्छ्रीरंगं प्रति सादरम् ॥ तदा रंगेश्वरो धीरो मनस्येवमचिंतयत् ॥ ४१ ॥ रामानुजो यामुनश्च मिलितौ यद्युभावपि ॥ लीलाविभूतिरस्माकं तदा नष्टा भविष्यति ॥ ४२ ॥ तदार्चकमुखेनाह रंगेशो यामुनं प्रति ॥ गच्छाद्यैव यतिश्रेष्ठ दत्तं ते परमं पदम् ॥ ॥ ४३ ॥ तेनैवमुक्तो हरिणा रामानुजदिदृक्षया ॥ रंगेश्वरं प्रणम्याह यामुनः सहसा हरिम् ॥ ४४ ॥ रंगेशानंतरं मुक्तिं गच्छामि दिवसा-

ष्टकात् ॥ इति विज्ञाप्य योगींद्रस्तदा तद्दर्शनोत्सुकः ॥ ४५ ॥ अनवाप्य मनोभीष्टं स्वचार्यांघ्रिमुपेयिवान् ॥ ततो रामानुजः श्रीमान्पूर्णार्य्येण सहान्वितः ॥ ४६ ॥ तत्र गत्वा तथाभूतमपश्यद्दीनचेतनः ॥ तस्य रूपं लक्षणानि दृष्ट्वा वाक्यमभाषत ॥ ४७ ॥ संभाषणे यामुनेन नास्ति प्राप्तिर्ममाधुना ॥ क्षुद्रस्य महतां संगे यथा प्राप्तिर्न विद्यते ॥ ॥४८॥ मयैतस्य तु सांगत्यं लभ्यते चेन्महात्मनः ॥ अस्मिँल्लोके निवसतां जनानां वैष्णवोत्तमाः ॥ ४९ ॥ गंतुं हरेः पदं तत्र सेवितुं हरिमव्ययम् ॥ तत्सौधानामहं कृत्वा सोपानानि निरंतरम् ॥ ५० ॥ तन्मार्गेण जनान्सर्वान्प्रापयिष्यामि तत्पदम् ॥ तस्मिन्नर्थे न संदेहः सत्यं वच्मि द्विजोत्तमाः ॥५१॥ एवं वदति वेदांतिल्लँक्ष्मणार्ये महात्मनि॥आकुंचितमभूत्तस्य सहसा चांगुलित्रयम् ॥५२॥ मनोरथत्रयावाप्तिर्यतो नैवाभत्पुरा॥मनोरथत्रयं मेऽद्य पूरयिष्यत्ययं ध्रुवम्॥ इत्येवं निश्चितहृदा यामुनेन महात्मना ॥ आकुञ्चितं ततस्तेन सहसैवाङ्गुलित्रयम् ॥) तिस्रोंगुलीः समालोक्य ताः समाकुंचितास्तदा ॥ सम्यग्ज्ञात्वा ततस्तस्य तदभिप्रायमुत्तमम् ॥ ५३ ॥ शारीरकमहाभाष्यग्रंथनिर्माणमेव च ॥ पराशरस्य व्यासस्य ऋणनिर्मोचनं तथा ॥५४॥ दिव्यद्राविडवेदस्य सम्यक्प्रवचनं भुवि ॥ एतत्त्रयं करिष्यामीत्येवं वैष्णवसंन्निधौ॥ ५५ ॥ दृढप्रतिज्ञां सहसा कृत्वा लक्ष्मणदेशिकः ॥ आकुंचितं यामुनस्य मोचयित्वांगुलित्रयम् ॥ ५६ ॥ रंगेश्वरमदृष्ट्वैव वेदांतिस्तेन हेतुना ॥ तस्मात्कवेरजातीरात्तदा कांचीं विवेश सः॥५७॥ ज्ञात्वा षडर्थान्वरदात्कांचीपूर्णमुखात्तदा ॥ अशिश्रियन्महापूर्णं प्रथमं प्रेमपूर्वकम् ॥ ५८ ॥ स गुरुभ्योथ पंचभ्यः सर्वार्थान्प्राप्य सादरम् ॥ विरेजे लक्ष्मणाचार्यः कलाभिरिव चंद्रमाः ॥ ५९ श्रीभाष्यं कर्त्तुकामोथ कूरेशेन समन्वितः ॥ गत्वाशु शारदापीठं वृत्तिं बोधायनस्य च ॥ ६० ॥ अवलोक्याशु तेनैव श्रीरंगं प्राप्य हर्षितः ॥ समस्तेतरसिद्धां-

तन्निराकरणपूर्वकम्॥६१॥वेदांतदीपं वेदांतसारं वेदार्थसंग्रहम् ॥श्रीभाष्यं लोकविदितं विधाय बुधसंमतम् ॥६२॥ गीताभाष्यं च सुमहत्कृत्वा गद्यत्रयं महत्॥गत्वा दश दिशः सम्यक् कृत्वा दिग्विजयं परम् ॥६३॥ स्वनाम्ना संप्रतिष्ठाप्य चैतद्वैष्णवदर्शनम् ॥ रामानुजार्य्यसिद्धान्त इत्येवं सकलावनौ ॥ ६४ ॥ तस्य संरक्षणे सम्यक् प्रतिष्ठाप्य बुधर्षभान् ॥ वेदांतद्वयसंपन्नांश्चतुःसप्ततिदेशिकान् ॥ ६५ ॥ स विंशत्युत्तरशतं वत्सराणां भुवः स्थले ॥ अव्याहतगतिः सम्यग्यथाकामं विहृत्य च ॥ ६६ ॥ स्थानत्रये प्रतिष्ठाप्य यत्स्वार्चाविग्रहत्रयम् ॥ भूतपूर्व्यां विशेषेण यत्तेजोऽनुत्तमं महत ॥ ६७ ॥ स्वयं विधाय तत्सर्वं तत्रार्चाविग्रहे परे ॥ आचंद्रार्कमयं श्रीमान् मदर्चाविग्रहो भुवि ॥ ६८ ॥ लोकसंरक्षणं सम्यक् करिष्यति न संशयः ॥ इति निश्चित्य योगींद्रः कृतकृत्यो महायशाः ॥ ६९ ॥ अत्रैव रंगनगरे वैकुंठेशदिदृक्षया ॥ वैकुंठमगमच्छेषो लीलामानुषविग्रहः ॥ ७० ॥ माघशुद्धदशम्यां तु मध्याह्ने मन्दवासरे ॥ भोगिराजः स्वभोगीशभावं संप्राप सादरम् ॥ ७१ ॥ यतींद्रसूनुः कुरुकेशनामा कर्माखिलं तस्य यदेव युक्तम् ॥ चकार लोकोत्तरमार्य्यजुष्टो जगद्गुरोर्लक्ष्मणदेशिकस्य ॥ ७२ ॥ कूरेशपुत्रं मामेव रंगनाथो जगत्पतिः ॥ पुत्रस्वीकारमकरोत्पीतहारिद्रशंबरः ॥ ७३ ॥ भूरिश्रीशैलपूर्णार्य्यतनयं कुरुकेश्वरम् ॥ पुत्रस्वीकारमकरोल्लक्ष्मणार्य्यो जगद्गुरुः ॥ ७४ ॥ यतीशः पुत्रवात्सल्याद्व्यादिदेश महामतिम् ॥ सहस्रगीतिव्याख्यानकरणे कुरुकेश्वरम् ॥ ७५ ॥ विष्णुचित्ताय वेदान्तद्वयं हि कुरुकेश्वरः ॥ प्रददौ कृपया तस्मै श्रीशैलकुलभूषणः ॥ यतींद्रशासनाद्धीमान्गोविंदार्य्यो महायशाः ॥ ७६ ॥ दर्शनार्थांस्ततः सर्वान्प्रददौ मह्यमादरात् ॥ यतींद्रशासनात्सर्वे दर्शनार्था मया त्वयि॥७७॥ निक्षिप्ताः किल चैवैते सांप्रतं बुधसत्तमे ॥ कुर्वन् दर्शननिर्वाहं श्रीरंगेऽत्र सुखं वस ॥ ८७ ॥

यतींद्रशासनात्पूर्वं कुरुकेशेन धीमता ॥ षड्भिः सहस्रैर्वेदांतिन्त्रं-
थैर्लोकहितैषिणा ॥ ७९ ॥ सहस्रगीतेर्व्याख्यानमकार्यैतदनुत्तमम् ॥
त्वमद्य नवसाहस्रग्रंथसंख्यायुतं कुरु ॥ ८० ॥ सहस्रगीतेर्व्या-
ख्यानं सर्वलोकोपकारकम् ॥ एतेन परमो मोदः शठजिद्यतिराजयोः
॥ ८१ ॥ भविष्यति ततोऽस्माकं पुरुषार्थतमो हितः ॥ मन्नाथात्कु-
रुनाथाच्च गोविंदार्यान्महात्मनः ॥ ८२ ॥ यद्दिव्यसूरिचरितं पूर्वार्य-
चरितं च तत् ॥ सम्यक् श्रुतं मया प्रोक्तं तत्सर्वं भवतेधुना ॥ ८३ ॥
एतत्पुण्यतमं हृद्यं चरित्रं पापनाशनम् ॥ शृण्वतां पठतां चैव भक्ति-
ज्ञानविवर्द्धनम् ॥८४॥ आयुरारोग्यदं नित्यमरिषड्वर्गनाशनम् ॥ वैरा-
ग्यहेतुभूतं च प्रपन्नामृतमुत्तमम् ॥ ८५ ॥ ये पठंति सदा भक्त्या तेषां
मुक्तिः करे स्थिता ॥ अमृतं यत्प्रपन्नानां तत्प्रपन्नामृतं विदुः ॥ ८६ ॥
एतत्पुरातनं पुण्यं यः प्रपन्नामृतं पठेत् ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके
महीयते ॥ ८७ ॥ लक्ष्मीनाथसमारंभां नाथयामुनमध्यमाम् ॥
अस्मदाचार्य्यपर्य्यंतामेतां गुरुपरंपराम् ॥ ८८ ॥ योऽभिजानाति
वेदांतिन् स एव भुवि वैष्णवः ॥ सम्बन्धज्ञानहीनस्य वैष्णवत्वं कथं
भवेत् ॥ ८९ ॥ अतो ह्येतन्महाभक्त्या तत्प्रपन्नामृतं पठेत् ॥ प्रपन्ना-
मृतविज्ञानात्संबन्धज्ञानवान्भवेत् ॥९०॥ संबन्धज्ञानवाँल्लोके वैष्णवः
स भविष्यति ॥ अतो हि वैष्णवो धीमान्विष्णुलोकं स विंदति ॥९१॥
पूर्वार्य्यचरितं पुण्यं भक्तिज्ञानविवर्द्धनम् ॥ ये शृण्वंति सदा भक्त्या
तेषां वासस्त्रिविष्टपे ॥ ९२ ॥ अस्मद्यतिस्स भट्टार्य्याच्छ्रुत्वाख्यान-
मनुत्तमम् ॥ सर्वार्थसिद्धिदं नित्यं यत्प्रपन्नामृतं महत् ॥ ९३ ॥ सन्तु-
ष्टस्तं परिक्रम्य प्रणम्य प्रेमपूर्वकम् ॥ विधिवत्पूजयामास भट्टार्य्यं
गुरुपुंगवम् ॥ ९४ ॥ कथांते षड्रसोपेतैरन्नैर्बहुविधैस्तदा ॥ ब्राह्मणा-
न्भोजयामास वैष्णवान्वेदपारगान् ॥ ९५ ॥ श्रीपादतीर्थं स्वीकृत्य
वैष्णवानां महात्मनाम् ॥ गुरोश्चास्मद्यतिः सम्यक् पूतात्मा प्रत्यनन्द-
त ॥ ९६ ॥ प्रपन्नरत्ने प्रथितप्रभावे भट्टारकोस्मद्यतिनामधेये ॥ हृद्यं

प्रपन्नामृतमेतदाद्यं दत्त्वा परं हर्षमवाप धीरः ॥ ९७ ॥ संवादभूतं सकलार्थसारं भट्टार्य्यवेदांतिविपश्चितोर्यैः ॥ यत्तत्प्रपन्नामृतमादरेण पठंति ते भागवता भवेयुः ॥ ९८ ॥ दिव्यप्रबन्धपठनात्सकला जनौघाः संत्यक्तपापनिवहाः परिशुद्धचित्ताः॥ उत्तीर्णघोरभववारिधयो महान्तो वैकुंठलोकनिरतास्सकला भवेयुः ॥ ९९ ॥ चित्रं चरित्रं परमं पवित्रं श्रीमद्गुरूणां सकलार्थसारम् ॥ पठंति शृण्वंत्यपि ये च भक्त्या ते विष्णुलोके निवसंति सत्यम् ॥ १०० ॥ गोविंदपादसरसीरुहषट्पदाय रामानुजार्य्यकरुणामृतवर्द्धिताय ॥ कूरेशवंशतिलकाय महात्मकाय श्रीभट्टदेशिकवराय नमोनमस्ते ॥ १०१ ॥ इति श्रीप्रपन्नामृते भट्टार्य्यवेदांतिसंवादे श्रीरामानुजार्य्यादिदिव्यचरितकथनं नाम षोडशोधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ।

भट्टार्यानंतरं धीमान्वेदान्ती शास्त्रवित्तमः ॥ श्रीवैष्णवमतोद्धर्ता बभूव जगतीतले ॥ १ ॥ शठकोपकृतेर्भाष्यं विधाय विशदं तदा ॥ कृपया नवसाहस्रग्रंथसंख्यायुतं महत् ॥ २ ॥ लेखकान्वेषणे धीमान्यतमानो व्यतिष्ठत ॥ नंबूरिवरदः कश्चिन्निचुलापुरवासकः ॥ ३ ॥ लेखकाग्रेसरो धीमान्द्विजवर्यो महानभूत् ॥ ततो जनमुखाच्छ्रुत्वा तं लेखकवरं द्विजम् ॥ ४ ॥ तमाहूयाथ सहसा वेदान्ती वाक्यमब्रवीत् ॥ अक्षराणि लिखत्वद्य पत्रिकायां महामते ॥ ५ ॥ इति तस्य करे शीघ्रं पत्रिकामदिशत्तदा ॥ तदा वरदराजाख्यः स लेखकवरो द्विजः ॥ ६ ॥ अक्षराणि लिलेखाशु पत्रिकायां स्फुटानि हि ॥ अक्षराणि स्फुटान्यार्यैः संदेहरहितानि सः ॥ ७ ॥ विलोक्य वरदं हृष्टः प्रोवाच वचनं तदा ॥ सम्यक्स्थितान्यक्षराणि त्वं त्ववैष्णवलक्षणः ॥ ८ ॥ त्वया विलेखितुं युक्तं कथं महदिदं भवेत् ॥ तस्य तद्वचनं श्रुत्वा वरदः प्राह तं प्रति ॥ ॥९॥ स्वशिष्यं मां विधायाशु रक्ष त्वं करुणाकर ॥ तेन वाक्येन सं-

तुष्टो वेदान्ती करुणार्णवः ॥ १० ॥ चकार पञ्चसंस्कारान्वरदस्य म-
हात्मनः ॥ तं ग्रंथमुपदिश्यास्मै तदा नवसहस्रकम् ॥ ११ ॥ तानि
पत्राणि दत्त्वा तं प्रेषयामास सत्वरम् ॥ वरदो वैष्णवो भूत्वा तं ग्रंथं
प्रतिगृह्य सः ॥ १२ ॥ ययौ स्वकीयनगरं श्रीरंगान्निचुलापुरम् ॥ नि-
चुलारंगयोर्मध्ये कावेरी या समास्थिता ॥ १३ ॥ सैवाच्छोदा मनुष्याणां
दुस्तरा सुतरामभूत् ॥ तानि व्याख्यानपत्राणि संपुटीकृत्य सत्वरम् ॥
॥ १४ ॥ स्वमस्तके दृढं बद्ध्वा कावेर्यां प्रविवेश सः ॥ कुर्वतस्तस्य बा-
हुभ्यां नदीसन्तरणं जवात् ॥ १५ ॥ तत्रोपरिप्रवाहेण शिरस्थं तत्प-
पात ह ॥ महता दैवयोगेन स कूलं प्राप्य सत्वरम् ॥ १६ ॥ ततश्चिं-
तापरो भूत्वा मुहूर्तं ध्यानमास्थितः ॥ ततोऽभिध्यायतस्तस्य गुरुपादां-
बुजं महत् ॥ १७ ॥ हस्तामलकवत्सर्वं वाल्मीकेरभवद्यथा ॥ पूर्वोक्त-
रानुरोधेन लिखित्वार्थान्विशेषतः ॥ १८ ॥ तत्पुस्तकं समादाय स
सम्यग्गुरवेऽर्पयत् ॥ वेदान्ती तान्विलोक्यार्थान्स्वयुक्तेरधिकान्बहुमान्
॥ १९ ॥ तं प्राह विस्मयाविष्टः प्राञ्जलिं भीतमानसम् ॥ अनुक्तार्था
मया ग्रन्थे लिखिता अत्र ते त्वया ॥ २० ॥ कारणं ब्रूहि मे वत्स महा-
र्थास्सन्ति भूरिशः ॥ तदा वरदराजस्तं वेदान्तिनमकल्मषम् ॥ २१ ॥
सर्वं विज्ञापयामास वृत्तान्तं विशदं महान् ॥ निशम्य सर्ववृत्तान्तं वर-
दस्य महात्मनः ॥ २२ ॥ हर्षेण महता युक्तस्तस्मिन्कृत्वा महादयाम् ॥
अस्मत्पुत्राभिधानं च वरदस्याकरोद्गुरुः ॥ २३ ॥ शठकोपावतारं
तं मत्वा मोदमवाप सः ॥ ततोऽस्मत्पुत्रनामास्य सुप्रसिद्धमभूद्भुवि ॥
२४ ॥ वेदान्तिना गुणवता वरदस्य महामतेः ॥ वेदान्ती पूर्णकृपया
वरदार्याय धीमते ॥ २५ ॥ श्रीभाष्यादिमहाग्रन्थान्स सर्वद्राविडाग-
मान् ॥ सर्वानन्यांश्चोपदिश्य यावत्तत्त्वार्थसंचयम् ॥ २६ ॥ कलि-
जिदासनामास्य विदधे विशदं भुवि ॥ अथ नंबिळ्ळनामार्यः स वेदान्ति-
पदाश्रयः ॥ श्रीवैष्णवमतोद्धर्ता बभूव जगतीतले ॥ २७ ॥ नंबिळ्ळ-

नामाखिलतत्त्ववेदी वेदान्तिनो लब्धमहार्थसंघः ॥ श्रीरंगपुर्यां बहुशि-
ष्यसंघैर्यथा विरेजे यतिसार्वभौमः ॥ २८ ॥ कलिजित्सर्वशिष्येभ्य-
स्सकलद्राविडागमान्॥श्रीभाष्यादिमहाग्रन्थान्कृपया निस्स्पृहोऽवदत्
॥२९॥ उदक्प्रतोलीकृष्णश्च ततः कृष्णसमाह्वयः ॥ कलिजित्सर्वशि-
ष्याणां प्रधानौ तौ बभूवतुः॥३०॥गोष्ठी कलिजितस्तस्य गोष्ठी श्रीरंग-
भूपतेः ॥ बभूव तुल्या विभवैस्सर्वैः श्रीरंगसंभवैः ॥ ३१ ॥ तं यान्त-
मनुयांति स्म शिष्यसंघास्सहस्रशः ॥ तथा कलिजितं धीरं राजानं
सैनिका यथा ॥ ३२ ॥ मध्यप्रतोलीभट्टार्यः कश्चित्कूराधिपान्वयः ॥
न सेहे वैभवं दृष्ट्वा तन्महत्कलिवैरिणः ॥ ३३ ॥ तदा श्रीरंगनगरे क
स्मैचिद्भूभृते सदा ॥ रामायणार्थं भट्टार्यस्सभायां बोधयन्स्थितः ॥
॥३४॥ स कदाचित्तमादाय जिय्यराख्यं महामतिम् ॥ शिष्यं कलि-
जितस्तस्य सभां राज्ञः समासदत् ॥ ३५ ॥ राजाऽकरोत्तदा शंकां
काञ्चिद्रामायणे महान् ॥ तं मध्यवीथीभट्टार्यं सर्वविद्वत्सभांतरे ॥३६॥
स तदा पक्षिराजस्य रामो दशरथात्मजः ॥ जटायुषो मोक्षपदं
प्रददौ केन हेतुना ॥३७॥ ब्रूहि तत्कारणं विद्वन्नित्युक्त्वा स तदा नृपः॥
कार्यांतरप्रविष्टोऽभून्मुहूर्तं स पराङ्मुखः ॥ ३८ ॥ स राज्ञा शङ्कि-
तस्तेन सभायां भट्टदेशिकः ॥ तदा तस्योत्तरं वक्तुमशक्तः समचिंतयत
॥ ३९ ॥ ततः कलिजितः शिष्यं जिय्यराख्यं महामतिम ॥ स भट्ट-
देशिको धीमान्विनयावनतोऽब्रवीत् ॥ ४० ॥ युष्मन्नंविळ्ळसद्गोष्ठ्यां
नंविळ्ळाख्यो महामतिः॥शंकायास्तेन चोक्तायाः किमप्युत्तरमब्रवीत
॥ ४१ ॥ तदुत्तरं श्रोत्रपथं संप्राप्तं भवतो यदि ॥ ब्रूहि मे विशदं
विद्वन्कृपया सहसाऽधुना ॥ ४२ ॥ तदंगीकृत्य विशदमब्रवीत्स बु-
धाग्रणीः ॥ सत्येन लोकाञ्जयति दीनान्दानेन राघवः ॥ ४३ ॥ गुरू-
ञ्छुश्रूषया वीरो धनुषा युधि शात्रवान् ॥ तच्छ्रुत्वा संप्रहृष्टोथ भट्टार्यो
नृपमब्रवीत् ॥ ४४ ॥ श्रीरामः प्रददौ मोक्षं सत्येनैव जटायुषः ॥ स-

दुत्तरं वचः श्रुत्वा संतुष्टः स महीपतिः ॥ ४५ ॥ भट्टार्याय बहु द्रव्यं प्रददौ प्रेमपूर्वकम् ॥ स तद्द्रव्यं समादाय तेन राज्ञा यदर्पितम् ॥ ४६ ॥ कलिजित्सान्निधिं गत्वा भट्टार्यस्तं प्रणम्य च ॥ भक्त्या समर्पयामास तत्सर्वं कलिवैरिणे ॥ ४७ ॥ तद्धनं स विलोक्याशु कलिजिद्भट्टदेशिकम् ॥ व्याजहार शुभं वाक्यं विस्मयाविष्टमानसः ॥ ४८ ॥ कुतः प्राप्तं महदिदं राजद्रव्यं ममाग्रतः ॥ तद्वदाशु द्विजश्रेष्ठ मह्यं शुश्रूषवेऽधुना ॥ ४९ ॥ निशम्य वाक्यं कलिवैरिणोदितं भट्टारकः प्राह कृताञ्जलिस्तदा ॥ तद्वैभवेनैव महार्थसञ्चयस्संप्राप्त एतत्सकलो महामते ॥ ५० ॥ निशम्य वाक्यं स च विस्मितो महान्नंबिळ्ळनामा तमुवाच सत्वरम् ॥ तदद्य मे ब्रूहि यदस्य वैभवं प्रकाशितं राजमहासभान्तरे ॥ ५१ ॥ प्रतिगृह्य वचस्तस्य भट्टार्यः कलिवैरिणः ॥ वृत्तान्तमेतत्सकलं विज्ञाप्य विनयान्वितः ॥ ५२ ॥ विज्ञापयामास तदा स्वापराधान्सहस्रशः ॥ देशिकेन्द्र जगद्वंद्य सर्वज्ञ करुणार्णव ॥ ५३ ॥ नमोनमोऽखिलाधार नमस्ते समदर्शन ॥ अनार्योऽहमधर्मिष्ठो ह्यसूयातत्परः शठः ॥ ५४ ॥ गुरुद्रोहकरः क्रूरो गमिष्याम्यद्य कां गतिम् ॥ निर्णीतं सर्वपापानां प्रायश्चित्तं मनीषिभिः ॥५५॥ ब्रह्मवेद्यवमानस्य निष्कृतिर्न कदाचन ॥ जगदार्यस्य भवतो लोकेऽप्रतिमवैभवम् ॥ ५६ ॥ दृष्ट्वाऽसहिष्णुरभवं भास्करं कौशिको यथा ॥ पुरा भगवता प्रोक्तं सर्वलोकहितैषिणा ॥ ५७ ॥ मदीयानपचारांश्च क्षमिष्येहं कदाचन ॥ अस्मद्भक्तापराधांस्तु न क्षमेहं कदाचन ॥ ५८ ॥ अहं तु विबुधश्रेष्ठ वैष्णवाग्रेसरे त्वयि ॥ कृतवानस्मि सुतरामपचारं जगद्गुरो ॥ ५९ ॥ तं क्षम्यतां गुरुश्रेष्ठ दीनं मां रक्ष सुव्रत ॥ तदुपश्रुत्य वचनं भट्टार्यात्कलिजिद्गुरुः ॥ ६० ॥ अंगीकृत्य स तद्द्रव्यं कृपया तं तदाब्रवीत् ॥ कूरेशपौत्रस्सभवान्महात्मा शास्त्रवित्तमः ॥ ६१ ॥ श्रीपराशरभट्टस्य पुत्रो लोकोत्तरस्ततः ॥ न्यूनता विद्यते का वा भवतोस्य महा-

त्मनः ॥ ६२ ॥ अतः कूरेशवंश्यानां श्रीरंगेशपुरोधसाम् ॥ सर्वेषां न्यूनता विद्वन्न कदाचिद्भविष्यति ॥ ६३ ॥ ततो द्राविडवेदान्तं भट्टार्याय विपश्चिते ॥ उपदिश्याशु कृपया शिष्यं रक्षितवान्गुरुः ॥६४॥ मध्यप्रतोलीभट्टार्यः स महात्मा कुशाग्रधीः ॥ तावतोऽर्थान्समादाय यावन्तोर्था गुरोः श्रुताः ॥ ६५ ॥ ग्रन्थं चकार सुमहाभारतग्रन्थसंख्यया ॥ स तं ग्रन्थं समादाय निधाय गुरुसंनिधौ ॥ ६६ ॥ संप्रहृष्टमना भूत्वा तस्थौ प्रांजलिरग्रतः ॥ सम्यग्विलोक्य तं सर्वं कलिजिच्छास्त्रवित्तमः ॥ ६७ ॥ स तं तद्ग्रंथकर्तारं भट्टार्यमिदमब्रवीत् ॥ उक्तमात्रं मया तावदिदानीं लिखितं त्वया ॥ ६८ ॥ लेखितुं नैव शक्नोषि किल मे मनसि स्थितम् ॥ देशिकाज्ञाविरहितं यत्कार्यं भुवि विद्यते ॥ ६९ ॥ न तु तद्गच्छति ख्यातिं न चांगीक्रियते बुधैः ॥ मामनादृत्य सहसा मम चैवाज्ञया विना ॥ ७० ॥ यः कृतो सुमहान्ग्रंन्थो भारतग्रन्थसङ्ख्यया ॥भट्टार्य सोऽयं लोकेस्मिन्नैव शिष्येषु वर्तताम् ॥ ७१ ॥ इत्युक्त्वा ग्रन्थमादाय पातयामास दुर्लभम् ॥ ततोऽनुमत्या भट्टार्यस्सगुरोः कलिवैरिणः ॥ ७२ ॥ तत्त्वपूर्वं विवरणं चक्रेष्टाक्षरदीपिकाम् ॥ तद्द्वयं लोकविख्यातं बभूव गुरुसंमतम् ॥ ७३ ॥ मध्यप्रतोलीनिलयो महात्मा भट्टारकः कूरकुलाग्रगण्यः ॥ आचार्यसेवैकरतो हि धीमानुवास नित्यं कलिवैरिणोग्रे ॥ ७४ ॥ इति श्रीप्रपन्नामृते नंबिळ्ळाख्यकलिजिद्भट्टार्यसंवादो नाम सप्तदशाऽधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ।

ततो दाशरथेस्तस्य श्रीवाधूलकुलाग्रणीः ॥ पुत्रो बभूव सुमहान्रामानुज इति स्मृतः॥ १ ॥भूतपुर्यां भाष्यकारं यः प्रत्यष्ठापयत्पुरा॥ वारणाद्रीशनामाभूत्तस्य पुत्रो महायशाः ॥ २ ॥ वाधूलो वैभवं तस्य सुमहत्कलिवैरिणः ॥ दृष्ट्वाऽसहिष्णुः श्रीरंगे परितेपे दिवानिशम् ॥३॥

कदाचित्तं विलोक्याथ तोळप्पाख्यस्स देशिकः ॥ महान्तमसहिष्णुस्संश्चक्रे परिभवं तदा ॥ ४ ॥ ताडितो बहुधा तेनच्छिन्नयज्ञोपवीतकः ॥ प्रमार्जितोर्ध्वपुण्ड्रोपि कलिजिच्छमवारिधिः ॥ ५ ॥ न किंचिदपि विद्वेषं चक्रे तं प्रति वैष्णवम् ॥ वारणाद्रीशभार्याथ कलिजित्पादसंश्रया ॥ ६ ॥ आचार्यावमतिं श्रुत्वा भीता भर्तृकृतां तदा ॥ दुःखेन महताविष्टा चिंतयामास वैष्णवी ॥ ७ ॥ ब्रह्मवेद्यवमानस्य निष्कृतिर्नं कदाचन ॥ गुरुद्रोहकरस्यैतत्फलं नरक एव हि ॥ ८ ॥ पूजनाद्विष्णुभक्तानां पुरुषार्थोऽस्ति नेतरः ॥ तेषु विद्वेषतः किञ्चिन्नास्ति नाशकमात्मनः ॥ ९ ॥ इत्याद्यर्थशतं सम्यग्विधाय हृदि निश्चला ॥ नेच्छन्ती विदुषी तस्य मुखं पत्युर्विलोकितुम् ॥ १० ॥ क्रोधागारं प्रविश्याशु पिधायाररमञ्जसा ॥ दुःखार्णवनिमग्ना सा गुरुध्यानपरा स्थिता ॥ ११ ॥ कृतापराधो निर्वैरे स तस्मिन्कलिवैरिणि ॥ सन्तुष्टो भ्रान्तवच्छीघ्रमाससाद निजं गृहम् ॥ १२ ॥ मन्मुखाभिमुखी भार्या किमर्थं नागताधुना ॥ इति सञ्चिन्त्य सहसा खिन्नः परिजनात्तदा ॥ १३ ॥ ज्ञात्वा तत्सर्ववृत्तान्तं तद्गृहान्तिकमागतः ॥ संरक्तनयनः क्रोधाद्भार्यामाह बहिस्थितः ॥ १४ ॥ क्रोधागारेधुना मूढे भूमौ शेषे कुतोऽबले ॥ ब्रूहि तत्कारणं शीघ्रं पतिभक्तिविवर्जिते ॥ १५ ॥ सा भर्तृवचनं श्रुत्वा गृहान्तःस्थेदमब्रवीत् ॥ गुरुद्रुहोस्य भवतः कथं द्रक्ष्येऽधुनाऽननम् ॥ १६ ॥ गुरुरेव परो बंधुर्गुरुरेव परा गतिः ॥ अनादिमायासंसाराद्यस्तारयति दुस्तरात् ॥ गुरुर्ज्ञानोपदेशेन निमग्नं भवसागरे ॥ १७ ॥ गुशब्दस्त्वंधकारः स्याद्रुशब्दस्तन्निरोधकः ॥ अंधकारनिरोधित्वाद्गुरुरित्यभिधीयते ॥ १८ ॥ पतिव्रतानां स्वर्लोक इति शास्त्रस्य निर्णयः ॥ १९ ॥ तिस्रः कोट्योर्धकोटी च रोम्णाम्मर्त्यस्य वै स्मृताः ॥ तावत्कालं वसेत्स्वर्गे भर्तारं यानुयाति हि ॥ २० ॥ ज्ञानैकसाध्यो मोक्षो हीत्येवं वेदान्तनिर्णयः ॥ तज्ज्ञानं देशिकाधीनं

ततो मोक्षप्रदो गुरुः ॥ २१ ॥ एवं कर्मानुगुण्येन फलदं नात्र संशयः॥ सर्वं ज्ञानान्मोक्ष इति ब्रुवन्ति ब्रह्मवादिनः॥२२॥ अतो हि भर्तृदैवाभ्यां गुरुरेवाधिकः स्मृतः ॥ अधमो देवताभक्तो मन्त्रभक्तस्तु मध्यमः ॥ २३ ॥ उत्तमस्तु स मे भक्तो गुरुभक्त्योत्तमोत्तमः ॥ गुरुभक्तिमतां नृणां किं न साध्यं जगत्त्रये ॥ २४ ॥ तवाधीनो ह्ययं देहः पित्रा दत्तो यतः पुरा ॥ आत्मा तु देशिकाधीनो यतो मोक्षप्रदो गुरुः ॥ २५ ॥ छिन्धि भिन्धि च मे देहं यथेच्छसि तथा कुरु ॥ वैष्णवात्यपचारं च प्रविधाय सुनिर्भयः ॥ २६ ॥ निश्चलस्सर्वविदितं गृहमेवागतो भवान् ॥ पश्चात्तापोपि ते किञ्चिद्धृदि नास्त्यद्य वै किल ॥२७॥ निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा॥ततो नापैति यः सोपि यात्यधः सुकृताच्च्युतः ॥ २८ ॥ इत्युक्त्वा सर्वशास्त्रज्ञा पुराणप्रतिपादितम् ॥ तदीयवैभवं साध्वी भर्त्रे सम्यगबोधयत् ॥ २९ ॥ वारणाद्रीश्वरो विद्वान्छुभं पत्न्युदितं वचः ॥ सच्छास्त्रसंमतं श्रुत्वा ह्यनुतापमवाप्य सः ॥ ३० ॥ भार्यामाहाथ शुद्धात्मा जितासूयो महामनाः ॥ आभिजात्यमदेनैव दुस्तरेण मयाधुना ॥ ३१ ॥ जगद्गुरौ महत्यस्मिन्नपराधो महान्कृतः ॥ प्रकृतिं नैव शक्तोस्मि जेतुं बलवतीं तदा ॥ ३२ ॥ तद्दोषपरिहाराय प्रायश्चित्तं विधीयताम् ॥ तदंगीकृत्य वचनं साध्वी भर्तारमब्रवीत् ॥ ३३ ॥ तं प्रसादय तत्त्वज्ञं धर्मज्ञं नतवत्सलम् ॥ गुरुः कृतागसमपि सर्वभूतसुहृत्तमः ॥ ३४ ॥ कृताञ्जलिपुटं दीनं भक्त्यैव त्वां समागतम् ॥ रक्षिष्यति न सन्देहः साधवो दीनवत्सलाः ॥ ३५ ॥ तस्यास्तद्वचनं श्रुत्वा वारणाद्रीश्वरोऽब्रवीत् ॥ अधुना चैक एवाहं नोत्सहे गन्तुमीदृशः ॥ ३६ ॥ दिगन्तकीर्तेर्महतस्सन्निधिं कलिवैरिणः ॥ तस्य तद्वचनं श्रुत्वा सन्तुष्टा सा पतिव्रता ॥ ३७ ॥ तस्मिन्नेव क्षणे रात्रावादाय करदीपिकाम् ॥ प्रतस्थे भर्तृसहिता कलिजित्संन्निधिं तदा ॥ ३८ ॥ तेनावमानितः सोपि कलिजित्सम-

चिंतयत् ॥ नैष सामान्यपुरुषो वारणाद्रीश्वरो महान् ॥ ३९ ॥ तस्य
दाशरथेः पौत्रः पुत्रो रामानुजस्य च ॥ सर्वशास्त्रार्थतत्त्वज्ञः कन्दाडकु-
लभूषणः ॥४०॥ अपराधं महान्कश्चिद्दासभूतेधुनामयि ॥ अविचार्यैव
मे शिक्षामीदृशीं न करोति हि ॥ ४१ ॥ उपवीतोर्ध्वपुण्ड्राणि येनैवा-
पादितानि मे ॥ तेनैवापहृतान्यद्य वारणाद्रीश्वरेण वै ॥ ४२ ॥ गत्वा
तत्सन्निधिं शीघ्रमपराधक्षमापणम् ॥ गुरुं संप्रार्थ्य कर्तव्यं मयाद्यैवं
कृतागसा ॥ ४३ ॥ उपवीतोर्ध्वपुण्ड्राणि दत्तानि कृपया यदि ॥
आचार्यशासनात्तानि ध्रियन्ते भक्तितस्ततः ॥४४॥ एवं सञ्चिन्त्य कलि-
जिन्महात्मा शास्त्रवित्तमः ॥एकवस्त्रधरो रात्रौ विनीतस्तद्गृहं प्रति॥४५॥
गत्वा बहिर्वितर्द्यां तु तस्थौ तद्दर्शनोत्सुकः ॥ एकवस्त्रधरं दीनमाकु-
ञ्चिततनुं मुनिम् ॥ ४६ ॥ गृहद्वारि शयानं तं महान्तं कलिवैरिणम् ॥
वारणाद्रीश्वरो दृष्ट्वा कोऽयमित्यभ्यभाषत ॥ ४७ ॥ निशम्य तद्वचः
सम्यक्तं दृष्ट्वा प्रणिपत्य च ॥ विनीतः प्राञ्जलिः सम्यक्छनैर्वाक्यम-
थाब्रवीत् ॥ ४८ ॥ त्वद्दासभूतं मां स्वामिञ्जानीहि कलिवैरिणम् ॥
तन्निशम्य तदा प्राह स तं वाधूलजस्तदा ॥ ४९ ॥ कृतापराधस्या-
द्यैव सांप्रतं मे गृहान्तरे ॥ किमागतोऽसि मौर्ख्येण देहत्यागेच्छया
किल ॥ ५० ॥ गिरं तिग्मतरां श्रुत्वा तेनोक्तां भीतिसंयुतः ॥ भूयः
प्रणम्य सहसा कृताञ्जलिरभाषत ॥ ५१ ॥ त्वद्दासं क्रूरहृदयं मां न
चिन्तय देशिक ॥ शपे त्वत्पादपद्माभ्यां सत्यं वच्मि मदागमम् ॥
॥ ५२ ॥ भवान्दाशरथेः पौत्रः सर्वशास्त्रविशारदः ॥ श्रीरामानुज-
सिद्धान्तनिर्वोढा वैष्णवोत्तमः ॥ ५३ ॥ विचार्य दासभूतेस्मिन्कश्चि-
द्दोषं महत्तरम् ॥ ममाद्यैतादृशीं शिक्षां त्वमित्थं कृतवानसि ॥ ५४ ॥
सन्तोष एव तस्मान्मेऽन्यथा किंचिन्न विद्यते ॥ उपवीतोर्ध्वपुण्ड्रादि-
धारणेऽनुमतिं गुरो ॥ ५५ ॥ त्वत्तः संप्राप्तुकामोहं तवान्तिकमुपा-
गतः ॥ गृहान्तःसंप्रवेशाय भीतोत्रैव स्थितोभवम् ॥ ५६ ॥ निशम्य
तद्वचस्तस्य निस्तुलं कलिवैरिणः ॥ भीतोथ लज्जितोत्यन्तं विनीतो

विस्मयान्वितः ॥ ५७ ॥ एवं सञ्चिन्तयामास ममायं नोत्थितो गुणः॥ शुद्धसत्त्वमयैस्तस्य गुणैः कलिजितोऽनघैः ॥ ५८ ॥ सन्तुष्टो वारणाद्रीशः परिक्रम्य प्रणम्य तम् ॥ लोकार्य इति नामास्मै प्रददौ कलिवैरिणे ॥ ५९ ॥ तं गृहाभ्यंतरं नीत्वा लोकाचार्यं स वैष्णवः ॥ सर्वालंकारसहितं कृत्वा संपूज्य शास्त्रतः॥६०॥ तत्पादतीर्थं स्वीकृत्य सभार्यो जितमत्सरः ॥ विधाय सहसा धीमानपराधक्षमापणम् ॥ ॥ ६१ ॥ वैष्णव्या भार्यया सार्धं स्वस्थचित्तो मुमोद ह ॥ वारणाद्रीश्वरो धीमाँल्लोकार्यं कलिवैरिणम् ॥ ६२ ॥ शिबिकायां समारोप्य महता वैभवेन च ॥ तदा प्रस्थापयामास भेरीकाहलिकारवैः ॥ ६३ ॥ लोकार्यः स्वगृहे सम्यग्जायापत्यसमन्वितः ॥ सर्वैः संपूजितः सम्यक्पूर्ववत्सुखमास्थितः ॥ ६४ ॥ इति श्रीप्रपन्नामृते कलिजिद्वारणाद्रीशयोर्गुणागुणकथनं नामाष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

## एकोनविंशत्यधिकशततमोऽध्यायः ।

भार्याद्वयं बभूवाथ पुत्रश्च कलिवैरिणः ॥ आण्डाळाख्याऽनघा तत्र ज्येष्ठा ज्येष्ठतरा गुणैः ॥१॥ श्रीरंगनायकी नाम द्वितीया तादृशी गुणैः ॥ पुत्रो रामानुजो नाम सर्वशास्त्रविदां वरः ॥ २ ॥ सारार्थसंग्रहं चैव रहस्यत्रयमुत्तमम् ॥ तद्द्वयं लोकविख्यातं चकार सुमहायशाः ॥ ॥३॥ एवं भार्याद्वयेनाथ पुत्रेणामिततेजसा ॥ लोकार्यो रंगनगरे ह्युवासाव्याहतश्रिया ॥ ४ ॥ बभूवुर्बहवः शिष्या अस्मत्सूनोर्जगद्गुरोः ॥ कंदाडवारणाद्रीशः पौत्रो दाशरथेर्महान् ॥ ५ ॥ मध्यप्रतोलीभट्टार्यः पौत्रः कूरेश्वरस्य च ॥ कृष्णपादश्च सुमहांस्तथा कृष्णसमाह्वयः ॥ ॥ ६ ॥ माधवार्यो महातेजा ईय्युण्णिकुलभूषणः ॥ यत्पश्चात्सुंदरवरो योगी विश्रुतवैभवः ॥ ७ ॥ एवमाद्या महाभागाः शिष्याः पञ्चदशामलाः ॥ अन्ये च बहवः सन्ति तेषां सङ्ख्या न विद्यते ॥ ८ ॥ सहस्रगीतेर्व्याख्यानं विदधे कलिजिन्महत् ॥ चतुर्विंशतिसाहस्र-

गन्थसंख्यायुतं तदा ॥ ९ ॥ स पश्चात्सौम्यजामातृयोगीन्द्रः
शासनाद्गुरोः ॥ चक्रे द्वादशसाहस्रगन्थसङ्ख्यायुतं महत् ॥ १० ॥
सहस्रगीतेर्व्याख्यानं विख्यातं जगतीतले ॥ उदक्प्रतोलीनिलयः कृ-
ष्णपादो महायशाः ॥ ११ ॥ षट्त्रिंशता सहस्रैश्च ग्रन्थैर्लोकैकवि-
श्रुतः ॥ सहस्रगीतेर्व्याख्यानं विख्यातं जगतीतले ॥ १२ ॥ पुण्यं प-
वित्रममलं चक्रे देशिकशासनात् ॥ कुरुकेशश्च वेदान्ती पश्चात्सौ-
म्यवरो मुनिः ॥१३॥ कलिजित्कृष्णपादश्च पंचैते भुवि विश्रुताः ॥
सहस्रगीतेर्व्याख्यानकर्तारः शास्त्रवित्तमाः ॥ १४ ॥ व्याख्यानप-
ञ्चकं चैवं गीतेस्तस्यास्तदाभवत् ॥ कृष्णपादकृतं भाष्यं दृष्ट्वा हृष्ट-
स्तदा गुरुः ॥१५॥ तत्प्रवर्तयितुं लोके माधवायादिशत्स तत् ॥ माधव-
स्तु स्वपुत्राय पद्मनाभाय धीमते ॥१६॥ तद्भाष्यं प्रददौ प्रीत्या कृ-
ष्णपादकृतं तदा ॥ पद्मनाभः स्वशिष्याय तद्भाष्यमादिशत्तदा ॥१७॥
श्रीरामानुजदासाय चतुर्ग्रामाधिकारिणे ॥ रामानुजः स्वपुत्राय त-
द्भाष्यं प्रेमपूर्वकम् ॥ १८ ॥ प्रददौ देवराजाय चतुर्ग्रामनिवासिने ॥
ततः श्रीशैलनाथाय देवराजोऽदिशत्स तत् ॥ १९ ॥ सौम्यजामातृमु-
नये श्रीशैलेशोऽदिशत्स तत् ॥ सौम्यजमातृयोगीन्द्रः फणिराजांशसं-
भवः ॥ २० ॥ महामतिर्महातेजा जगद्विख्यातवैभवः ॥ श्रीरामानुज-
योगीन्द्रप्रमुखेभ्यो महायशाः ॥ २१ ॥ अष्टभ्यो दिग्गजेभ्यश्च तद्भा-
ष्यं कृपया तदा ॥ उपदिश्याशु सुकरं जगत्सर्वमपालयत् ॥ २२ ॥
एवं रामानुजाचार्यसिद्धान्तो लोकविश्रुतः ॥ अव्याहतश्च निस्तौल्यः
स सम्यक् संप्रवर्तितः ॥ वानाद्रियोगिप्रमुखैरष्टभिर्दिग्गजैर्भुवि ॥२३॥
इति श्रीप्रपन्नामृते भगवद्विषयसंप्रदायविवरणं नामैकोनविंशत्य-
धिकशततमोऽध्यायः ॥ ११९ ॥

## विंशत्यधिकशततमोऽध्यायः ।

एवं द्राविडवेदान्तसंप्रदायो भुवः स्थले ॥ यतीन्द्रकृपया सम्यग
[illegible] ॥ १ ॥ ततः श्रीकृष्णपादस्य पुत्रौ लोकोत्तरौ वरौ ॥

अजायेतां महाप्राज्ञौ सर्ववेदविदां वरौ ॥ २ ॥ लोकाचार्यस्तयोर्ज्येष्ठ-
स्तुलाश्रवणजो महान् ॥ श्रीकृष्णपादपुत्रस्य ज्येष्ठस्य कलिजिद्गुरुः
॥ ३ ॥ संस्कारपञ्चकं सम्यक्तस्य लोकार्यनाम च ॥ ददौ नित्यानुस-
न्धानप्रबन्धं कृपया तदा ॥ ४ ॥ कृष्णपादः स्वपुत्राय ततः कलिजि-
दाज्ञया ॥ वेदान्तद्वितयं सम्यक्प्रबन्धांश्चादिशत्तदा ॥ ५ ॥ भूयोथ
कृष्णपादस्य तस्य सूनुरजायत ॥ अभिरामवराधीशः सर्वशास्त्रविशा
रदः ॥ ६ ॥ धनुर्मासे धनिष्ठायां श्रीवत्सान्वयशेखरः ॥ तस्य नित्या-
नुसन्धानं पंचसंस्कारकर्म च ॥ ७ ॥ अभिरामवरस्याथ कलिजित्प्र-
ददौ तदा ॥ तद्व्याख्यानं प्रबंधश्च सर्वं सूनोः पिता ददौ ॥ ८ ॥ श्रु-
तप्रकाशिकां भाष्यं लोकार्यश्च यवीयसे ॥ अभिरामवरश्चैवं गुरुताता-
ग्रजार्पिताम् ॥ ९ ॥ विद्यामन्वास्य सकलां पूर्णचन्द्र इवाबभौ ॥ सो-
ऽभिरामराधीशो महात्मा शास्त्रवित्तमः ॥ १० ॥ आचार्यहृदयं नाम ग-
न्थं चक्रे महायशाः ॥ लोकाचार्यो महातेजा द्राविडाम्नायपारगः ॥
॥११॥ सर्वलोकावनार्थाय रहस्यानि बहूनि च ॥ सर्ववेदान्तसाराणि
चक्रे द्राविडभाषया ॥ १२ ॥ नीत्वा पञ्चनवत्यब्दान्वेदान्ती मुक्तिमा-
प्तवान् ॥ सुखेन नीत्वा कलिजिच्चतुर्नवतिवत्सरान् ॥ १३ ॥ जगाम
सहसा धीमांस्तद्विष्णोः परमं पदम् ॥ नीत्वा सप्तनवत्यब्दान्कृष्ण-
पादो महायशाः ॥ १४ ॥ प्रपेदे वैष्णवं धाम पुत्रे निक्षिप्य तन्म-
तम् ॥ लोकार्यः सुमहातेजाः कृष्णपादादनन्तरम् ॥ १५ ॥
दर्शनं वर्धयँल्लोके वैष्णवं बहुविश्रुतम् ॥ स महानप्रतिद्वन्द्वः श्रीरंगे
न्यवत्सुखम् ॥ १६ ॥ यतीन्द्रमाहानसिकः प्रणतार्तिहराभिधः ॥
आत्रेयो ह्यभवत्कश्चिद्घटांबुकुलजाग्रणीः ॥ १७ ॥ अस्य रामानुजो
नाम पुत्रः कश्चिद्बभूव ह ॥ तस्य रामानुजार्यस्य पद्मनाभो व्यजा-
यत ॥ १८ ॥ घटाम्बुपद्मनाभस्य पुत्रो रामानुजोऽभवत् ॥ पुत्रस्वी-
कारमकरोद्भाष्यकारो महायशाः ॥ १९ ॥ श्रीशैलपूर्णतनयं कुरुके-
शाभिधं पुरा ॥ श्रीभाष्यं विष्णुचित्ताय स ददौ कुलशेखरः ॥ २० ॥

स विष्णुचित्तो वरदविष्णवार्याय महौजसे ॥ श्रीभाष्यं लोकरक्षार्थं प्रददौ प्रेमपूर्वकम् ॥ २१ ॥ गुरोर्वरदविष्णोर्हि भाष्यं शारीरकं महत्॥ आत्रेयपद्मनाभार्यसुतो रामानुजोऽग्रहीत् ॥ २२ ॥ वेदान्तार्यो महातेजा रामानुजगुरोस्ततः ॥ जग्राहाखिलशास्त्राणि भाष्यं शारीरकं महत् ॥ २३ ॥ श्रीवेदव्यासभट्टस्य पुत्रो वाग्विजयाभिधः ॥ भट्टश्चकार विख्यातं यः क्षमाषोडशीस्तवम् ॥ २४ ॥ श्रीसुदर्शनभट्टार्यः सुनुस्तस्याभवन्महान् ॥ भाष्यं वरदविष्णवार्यात्स जग्राह सुदर्शनः ॥२५॥ धीमान्वरदविष्णवार्यः श्रीभाष्यं चातिविस्तृतम् ॥ उपन्यासं चकारार्यः शिष्याय स तदा महान् ॥ २६ ॥ श्रुतमर्थं गुरोस्तस्मात्प्रकाशमकरोद्यतः ॥ श्रुतप्रकाशिका नाम तस्याभूल्लोकविश्रुतम् ॥ २७ ॥ षट्त्रिंशद्भिः सहस्रैश्च ग्रन्थैर्लोकैकविश्रुतम् ॥ श्रुतप्रकाशिकाभाष्यं श्रीभाष्यस्य विधाय सः ॥ २८ ॥ वेदान्ताचार्यहस्ताब्जे दत्त्वा तदिदमब्रवीत् ॥ वेदान्तार्य महाभाग सम्यग्लोके प्रवर्तनम् ॥ २९ ॥ कुरुष्वास्याः कृतेर्विद्वन्मत्कृतायाः सुविश्रुतम् ॥ तदङ्गीकृत्य वेदांतदेशिकस्तत्तथाऽकरोत् ॥ ३० ॥ श्रीसुदर्शनभट्टस्य ततः कूरकुलेशितुः ॥ श्रुतप्रकाशिकाभट्टनामाभूल्लोकविश्रुतम् ॥ ३१ ॥ श्रुतप्रकाशिकाभट्टो वेदांतार्यो महायशाः॥लोकार्यश्च महातेजाः सौम्यजामातृदेशिकः ॥ ३२ ॥ तेषां शिष्याः प्रशिष्याश्च वेदांतद्वयपारगाः ॥ रामानुजार्यसिद्धांतं वर्धयन्तोऽनिशं भुवि ॥ ३३ ॥ कुर्वन्तो रंगराजस्य कैंकर्याण्यखिलानि च ॥ अवर्तन्तानिशं सर्वे श्रीरंगे वैष्णवोत्तमाः ॥ ३४ ॥ ततः कदाचिच्छ्रीरंगे रंगेशस्य जगत्पतेः ॥ महोत्सवो महानासीत्सर्वलोकमहोत्सवः ॥ ३५ ॥ विलोक्य वैष्णवानां तमसंख्यं संघमुत्तमम् ॥ सत्त्वयुक्तं च निबिडं नमन्तं रंगशायिनम् ॥ ३६ ॥ तत्रैको वैष्णवः कश्चिदवशेनावदत्तदा ॥ एते श्रीवैष्णवास्सर्वे युगपद्रंगशायिनम् ॥ ३७ ॥ यथा नमन्त्येव तथा

कदा वैकुंठनायकम् ॥ रंगराजस्तदाकर्ण्य वचनं वैष्णवस्य च ॥३८॥
अहार्चकमुखेनेति तत्तथैव भविष्यति ॥ ततः कदाचिच्छ्रीरंगे पूर्व-
वत्सुमहोत्सवः ॥ ३९ ॥ आसीत्तत्र गताः सर्वे जनास्ते पूर्ववत्तदा॥
नदीमहोत्सवे तत्र नद्यां श्रीरंगशायिनम् ॥ ४० ॥ वेदिकायां प्रति-
ष्ठाप्य लक्ष्मीक्ष्मासहितं हरिम् ॥ अभिषेकादिकार्याणि यदा चक्रु-
र्द्विजर्षभाः ॥ ४१ ॥ तत्र चारः समागम्य चाराणां कश्चिदग्रणीः ॥
लोकाचार्यं समालोक्य व्याहार वचस्तदा ॥ ४२ ॥ चतुरंगबलो-
पेतो यवनो बलवत्तरः ॥ लक्ष्यतेत्र महान्कश्चित्स कालयवनो यथा
॥४३॥ देवब्राह्मणसंबन्धान्यवनो ब्रह्मघातकः ॥ देशान्विध्वंसयामास
सर्वान्कंसो यथा पुरा॥४४॥ततो ययौ चोलदेशं लोकाचार्यं महाबलः॥
देवब्राह्मणसंपन्नं यवनो यवनैस्सह॥४५॥एतद्वृत्तान्तमाकर्ण्य लोकाचा-
र्यादयस्तदा॥महान्तोपि तदा तत्र सुतरां साध्वसं ययुः॥४६॥तद्वाक्य-
श्रवणेनैव सर्वेषां च महात्मनाम् ॥ तत्रत्यानां सुमहती चिन्ता काचिद-
जायत॥४७॥अयमुत्सवकालोस्य समाप्तिश्च न दृश्यते ॥ रङ्गं प्रत्यधुना
शीघ्रं वदंति यवनागमम् ॥ ४८ ॥ ततः संमंत्र्य सहसा लोकाचार्याद-
यस्तदा ॥ रंगेशमेव तत्प्रष्टुं महायत्नं प्रचक्रिरे॥४९॥ततः श्रीवैष्णवैः
सर्वैः श्रीरंगेश्वरसंन्निधौ ॥ गम्यतां स्थीयतां वेति निंक्षिप्तं पत्रिका-
द्वयम् ॥५०॥ भाविकार्यानुगुण्येन रंगेशः स्थितिपत्रिकाम् ॥ ददौ देव-
स्तदा तेषां सर्वज्ञस्तत्र वासिनाम् ॥५१॥ प्रतिगृह्य प्रहृष्टास्ते पत्रिकां
तामनिन्दिताम् ॥ रंगेशमेव संसेव्य ते तस्थुर्गतसाध्वसाः ॥ ५२ ॥
यानि मंगलकार्याणि कर्त्तव्यानि तदा हरेः॥सर्वाणि तानि कुर्वन्तस्त-
न्मयत्वेन ते स्थिताः ॥ ५३ ॥ लोकाचार्यस्य निकटं कश्चिच्चारः स-
मागतः ॥ अवोचत्सहसा कर्णे यवनागमनं तदा ॥ ५४ ॥ इदानीं
यवनः प्राप्तः सबलः खण्डनं पुरम् ॥ आगमिष्यत्ययं क्षुद्रो ह्यत्रैवाद्या-
शु निश्चयः ॥५५ ॥ प्रतिगृह्य वचस्तस्य सहसा निपुणस्तदा ॥ वे-

दान्तदेशिकायैव तन्निवेद्य जगद्गुरुः ॥ ५६ ॥ तच्छासनात्स रङ्गेशं समादाय सदारकम्॥ तङ्गोष्ठीपुरपन्थानमनुसृत्य ययौ तदा ॥५७॥ तद्वृत्तं शनकैः सम्यगभूत्क्लिष्टतरं ततः ॥ तेनोद्विग्नाः प्रजाः सर्वा रङ्गं विविशुरञ्जसा ॥५८॥ प्रविश्य सहसा रङ्गं दृढं बद्ध्वारराणि च ॥ वेदान्तार्यादयस्सर्वे तस्थुस्तत्र भयार्दिताः ॥ ५९ ॥ ततस्तत्राञ्जसा धीमान्महान्वेदांतदेशिकः ॥ अखण्डदीपं प्रज्वाल्य सन्निधौ रंगशायिनः ॥ ६० ॥ तद्गर्भसदनद्वारामिष्टिकाभिः पिधाय च ॥ पलायनपरस्तस्थौ सर्वैः श्रीवैष्णवैस्सह ॥ ६१ ॥ इति श्रीप्रपन्नामृते श्रीरंगवासिनां यवनबाधाप्राप्तिर्नाम विंशत्यधिकशततमोऽध्यायः ॥ १२० ॥

## एकविंशत्यधिकशततमोऽध्यायः।

यवनः खण्डनपुरात्स तदा देवकण्टकः ॥ निर्ययौ सैनिकैस्साधैं श्रीरङ्गं प्रति सत्वरम् ॥ १ ॥ यवनो यवनैस्साधंमगाच्छ्रीरंगमञ्जसा ॥ मथुरां कालयवनः कोटिभिस्तिसृभिर्यथा ॥ २ ॥ श्रीरंगवासिनस्सर्वे भयार्तास्तेन ते जनाः॥ यथैव भयमापन्ना मथुरापुरवासिनः ॥३॥ मथुरावासिनां तेषां द्वारकाप्रापणे मनः ॥ यथा चकार भगवाञ्छ्रीकृष्णो योगमायया ॥ ४ ॥ तथैव रङ्गराजोपि श्रीरंगपुरवासिनाम् ॥ चकार तेन व्याजेन वैकुण्ठप्रापणे मनः ॥ ५ ॥ तदा सुदर्शनो नाम भट्टार्यः कूरवंशजः ॥ वृद्धः समेत्य मतिमान्वेदांतार्यं महौजसम् ॥ ६ ॥ पुत्रद्वयं च रक्षेति तस्य हस्तेञ्जसा ददौ ॥ वेदान्तार्यस्स सर्वज्ञस्तत्पुत्रद्वयमञ्जसा ॥ ७ ॥ श्रुतप्रकाशिकां चैव तत्कृतिं लोकरक्षणे ॥ अंगीकृत्य ररक्षाथ रंगेशकृपया तदा ॥ ८ ॥ ततो निर्भिद्य सहसा कपाटानि दृढान्यपि ॥ विविशुः सहसा रंगं यवना बलवत्तराः ॥ ९ ॥ ब्रह्मघ्नैर्निहतास्सर्वे वैष्णवा वीतकल्मषाः ॥ तत्र स्थितास्तैर्यवनैर्विशेषमभवत्तदा ॥ १० ॥ श्रीभाष्यं वेंकटेशस्य सुदर्शनसुतद्वयम् ॥ समादायाञ्जसा धीमान्यादवाद्रिं तदा ययौ ॥ ११ ॥ लोकाचार्यसहायेन रंगेशः

पाण्ड्यमण्डलम् ॥ प्रतस्थे सहसारण्यवर्त्मना दुर्गमेन च ॥ १२ ॥
सर्वञ्च रंगिणस्तत्र चोरैरपहृतं धनम् ॥ अग्रयायी स लोकार्यस्त-
च्छ्रुत्वापि न विव्यथे ॥ १३ ॥ तत्र गत्वाञ्जसा धीमान्स्वकीयं धन-
मादरात् ॥ तस्मै चोरजनायैव प्रददौ स्वयमेव सः ॥ १४ ॥ ज्योतिष्मती-
पुरं प्राप लोकार्येण स रंगराट् ॥ रंगक्षेत्रस्य वृत्तान्तं तं सर्वं रंगिणस्तदा
॥ १५ ॥ श्रुत्वासहिष्णुर्लोकार्यः प्रपेदे परमं पदम् ॥ लोकाचार्यवियोगेन
रङ्गेशो भृशदुःखितः ॥ १६ ॥ ज्योतिष्मतीपुरं हित्वा प्रपेदे सुंदराच-
लम् ॥ कूपं स्वनाम्ना तत्रैकं विधाय च स रंगराट् ॥ १७ ॥ विहाय
पाण्ड्यकटकं केरलं देशमभ्यगात् ॥ चतुर्दश विलोक्याशु विष्णु-
स्थानानि केरले ॥ १८ ॥ सदारो रंगराट् शीघ्रं प्रपदे यादवाचलम् ॥
यादवाचलनाथेन संपत्पुत्रेण सादरम् ॥ १९ ॥ स्थित्वाथ तत्र
रंगेशः कश्चित्कालं जगत्पतिः ॥ आजगामाञ्जसा रंगी भगवान्वेंकटा-
चलम् ॥ २० ॥ पूजितः श्रीनिवासेन रंगेशो वेंकटाले ॥ निवृत्ताध्वश्र-
मस्तस्थौ कश्चित्कालं यथासुखम् ॥ २१ श्रीरंगं यवनाक्रान्तं बभूव
सुमहद्व्यथा ॥ तदा नृसिंहदेवाख्यः कश्चिद्द्राविडभूसुरः ॥ २२ ॥
अक्रूर इव कंसस्य यवनस्य बभूव सः ॥ सबलं यवनं नीत्वा सम-
याख्यपुरं प्रति ॥ २३ ॥ रङ्गाधिकारं संप्राप्य स द्विजो यवनाधि-
पात् ॥ ररक्ष रङ्गं सुमहद्धतशेषांश्च वैष्णवान् ॥ २४ ॥ हतशेषा-
स्तदा तत्र केचिद्वैष्णवपुङ्गवाः ॥ नृसिंहदेवकृपया श्रीरङ्गं विवि-
शुर्जनाः ॥ २५ ॥ जरठा ब्राह्मणी काचिल्लोकाचार्यपदाश्रया ॥ सा-
त्त्विकासहमाना सा तद्वियोगाज्जहौ तनुम् ॥ २६ ॥ तस्याः श्रीशै-
लनाथाख्यः कश्चित्पुत्रो बभूव ह ॥ स बालो मातृभगिनीगेहे वृद्धिं च
यन्स्थितः ॥ २७ ॥ ततो यौवनमासाद्य युवतीजनलोलुपः ॥ कृत्या-
कृत्ये न वेदार्यः स द्विजो मदनातुरः ॥ २८ ॥ तदा महात्मा मतिमान्दा
सः कूरकुलोद्भवः ॥ बभूव देशिकः कश्चिल्लोकाचार्यपदाश्रयः ॥ २९ ॥

स तं श्रीशैलनाथार्यं विषयार्णवपातिनम् ॥ दृष्ट्वोद्धर्तुमियेषार्यः संबंधाच्च जगद्गुरोः ॥ ३० ॥ ततः सकरुणो धीमान्दासः कूरकुलोत्तमः ॥ तस्मै श्रीशैलनाथाय निखिलद्राविडागमान् ॥ ३१ ॥ प्रोवाच लोकरक्षार्थं शिष्याय स जगद्गुरोः ॥ ततः स चरमे काले श्रीशैलेशं स देशिकः ॥ ३२ ॥ व्याजहार शुभं वाक्यं लोकानुग्रहकारणात् ॥ वर्तते कृष्णयोगींद्रः कश्चित्कृष्णकुटीपुरे ॥ ३३ ॥ सहस्रगीतेर्व्याख्यानं तस्मात्त्वं शृणु योगिनः ॥ तेनानुज्ञापितो धीमान् श्रीशैलेशस्तदन्तिकम् ॥ ३४ ॥ संप्राप्य सुमहातेजा स तं भाष्यमयाचत ॥ तात्पर्यार्थं स तच्छ्रुत्वा तस्य भाष्यस्य देशिकात् ॥३५॥ ब्रूहि शब्दार्थमित्येवं तमुवाच महामतिः ॥ स तेनोक्तस्सयोगींद्रः श्रीशैलेशं तमब्रवीत् ॥ ३६ ॥ श्रीगृध्रसरसस्तीरे शब्दार्थज्ञानवान् यतिः ॥ वर्तते गच्छ तत्रैव श्रीशैलेश महामते ॥ ३७ ॥ स तेनोक्तो वृषाद्रीशस्तच्छ्रीगृध्रसरो ययौ ॥ शब्दार्थज्ञानवान्योगी स तदा मरणं गतः ॥ ३८ ॥ विललाप भृशं तेन श्रीशैलेशः सुदुःखितः ॥ विलापकारणं ज्ञात्वा तस्य देवाधिपस्तदा ॥ ३९ ॥ श्रीशैलेशगुणैस्तुष्टः चतुर्ग्रामाधिपो गुरुः ॥ सत्पुत्र इति नामास्य प्रददौ प्रेमपूर्वकम्॥४०॥ देवराजादिगुरुभिर्यादवाचलवासिभिः ॥ भगवद्विषयार्थाय नितरां प्रार्थितस्तदा ॥ ४१ ॥ देवाधिपः समाहूतः श्रीशैलेशसमन्वितः ॥ यादवाचलमासाद्य यतिराजस्य सन्निधौ ॥४२॥ कृष्णपादकृतं भाष्यं प्रददौ प्रेमपूर्वकम्॥सत्पुत्रदेवराजादिशिष्येभ्यश्च महायशाः ॥ ४३ ॥ श्रीशैलेशस्स तद्भाष्यं श्रुत्वा देवाधिपाद्गुरोः ॥ शठारिं द्रष्टुकामोथ कुरुकानगरीं ययौ ॥ ४४ ॥ महाह्रदे निमग्नं तमुद्धृत्य शठवैरिणम् ॥ कुरुकायां प्रतिष्ठाप्य श्रीशैलेशः स पूर्ववत् ॥ ४५ ॥ वर्धयामास तं देवं विश्रुतं च महोत्सवैः ॥ अनंतशयनं प्राप्य ततश्चारामयोगिनः ॥ ४६ ॥ जग्राह सरहस्यानि महान्ति श्रीनगा-

धिपः ॥ मदत्रयविनिर्मुक्तस्तत्संबन्धबलात्तदा ॥ ४७ ॥ अशोभत महातेजा लोहस्पर्शमणेरिव ॥ संकीर्तनादिरूपेण रहस्यान्यखिलानि च ॥ ४८ ॥ विधायारामयोगीन्द्रो वैकुण्ठमगमत्तदा ॥ शिष्यकृत्यं पुत्रकृत्यं तद्द्वयं श्रीनगाधिपः ॥४९॥ विदधे विधिना सम्यक्स तस्यारामयोगिनः ॥ महापूर्णो यथा तस्य मारनेर्नंबिनः पुरा ॥ ५० ॥ ततः श्रीशैलनाथार्यः कुरुकानगरे वरे ॥ किञ्चित्कालमुवासार्यो वर्धयन्विष्णुदर्शनम् ॥ ५१ ॥ तदा रङ्गेश्वरः श्रीमाञ्छ्रीरंगगमनोन्मुखः ॥ बभूव भगवान्दृष्ट्वा कल्यात्मकमिदं जगत् ॥ ५२ ॥ इति श्रीप्रपन्नामृते श्रीरङ्गेशस्य वेंकटाचलागमनं नामैकविंशत्यधिकशततमोऽध्यायः ॥ १२१ ॥

## द्वाविंशत्यधिकशततमोऽध्यायः ।

गोवणो नाम धर्मात्मा कश्चिद्भागवतोत्तमः ॥ शशास राज्यं धर्मेण नारायणपुरे तदा ॥ १ ॥ तस्य प्रसन्नो भगवान्स्वप्ने श्रीरङ्गनायकः ॥ व्याजहार शुभं वाक्यं गोवणाख्यं महौजसम् ॥ २ ॥ हत्वा म्लेच्छबलं सर्वं स्वबलेन मदाज्ञया ॥ रङ्गस्थलं प्रापयाद्य रङ्गेशं मां महाबल ॥ ३ ॥ ततः स्वप्नात्समुत्थाय गोवणाख्यः सविस्मयः ॥ वेंकटाचलमारुह्य श्रीरंगेशं प्रणम्य च ॥ ४ ॥ तदर्चकमुखात्सर्वं ज्ञात्वा वृत्तान्तमादरात् ॥ रंगेशमग्रे संस्थाप्य लक्ष्मीक्ष्मासहितं हरिम् ॥ ॥ ५ ॥ प्रतस्थे रङ्गनगरं सुमुहूर्ते महाबलः ॥ स सञ्जीनगरं प्राप्य प्राज्ञो गोवणभूमिपः ॥ ६ ॥ यवनस्याशु निपुणैश्चारैर्ज्ञात्वा बलाबले ॥ रङ्गेशसहितं तस्मान्निर्गत्य निशि निश्चलः ॥ ७ ॥ सर्वं म्लेच्छबलं हत्वा निःशेषं समये वरे ॥ रंगेशं रंगनगरे तं प्रतिष्ठाप्य पूर्ववत् ॥ ८ ॥ तुतोष सुमहातेजा गोवणाख्यो महाबलः ॥ वेदान्तदेशिकः श्रीमाञ्छ्रीरंगं प्राप्य सादरम् ॥ ९ ॥ मंगलाशासनं कृत्वा रंगेशाय महौजसे ॥ श्रीगोवणार्यविषयं श्लोकमेकमकल्पयत् ॥ अद्यापि रंग-

प्राकारे स श्लोकः परिदृश्यते॥१०॥"आनीयानीलशृंगद्युतिरचितजग-
द्रंजनादञ्जनाद्रेश्चंजामाराध्य कश्चित्समयमथ निहत्योद्धनुष्कांस्तुरु-
ष्कान् ॥ लक्ष्मीक्ष्माभ्यामुभाभ्यां सह निजनिलये स्थापयन्रंगना-
थं सम्यक् चर्यां सपर्यां पुनरकृत यशःप्रापणो गोवणार्यः ॥
॥ ११ ॥"श्रुतप्रकाशिकाभाष्यं भगवद्विषयश्च यत् ॥ कुरुकेशकृतं
भाष्यं महान्वेदान्तदेशिकः ॥ १२ ॥ प्रवर्तयामास तदा जगत्यां भूरि
विश्रुतम् ॥ वेंकटेशस्य पुत्रोभूद्वरदार्य इति श्रुतः ॥ १३ ॥ उपदि-
श्याशु पुत्राय वेदान्तद्वयमादरात् ॥ प्रपेदे भगवद्धाम नीत्वाष्टनवतीः
समाः ॥ १४ ॥ वेदान्तदेशिको धीमाञ्जगद्विख्यातवैभवः ॥ वरदार्यो
महातेजा विश्वामित्रकुलाग्रणीः ॥ १५ ॥ वेदान्तदेशिकसुतो वेदान्त-
द्वयपारगः॥ वेदान्ताचार्यवत्ख्यातिं संप्राप्य जगतीतले ॥१६॥ वेदा-
न्तद्वितयं सम्यग्लोकसंरक्षणाय च ॥ वादिभीकरमुख्येभ्यः शिष्येभ्यः
प्रददौ तदा ॥ १७ ॥ नखाधिकशतं नीत्वा वत्सराणां भुवः स्थले ॥
जगाम स हरेर्लोकं वरदार्यो महायशाः ॥ १८ ॥ वेदान्तद्वितयं
सम्यक्प्रतिवादिभयंकरः ॥ लोके प्रवर्तयामास यावदाचन्द्रतारकम् ॥
॥ १९ ॥ ततः श्रीपाण्ड्यकटके मथुरानगरान्तिके ॥ बभूव महती
पुण्या काचित्कुंतीपुरी वरा ॥ २० ॥ तत्र धीप्रलयानाख्यो गोम-
ठान्वयभूषणः ॥ बभूव वैष्णवः कश्चिल्लोकाचार्यपदाश्रयः ॥ २१ ॥
यतीन्द्रप्रवणो नाम शेषांशेन ततोऽजनि ॥ तस्य धीप्रलया-
नस्य तुलामूले यतींद्रवत् ॥ २२ ॥ अस्यावतारश्लोकाश्च गीयंते
प्रथिता भुवि ॥ अधीतवेदवेदांगः सोभिरामवरो महान् ॥ २३ ॥
गृहस्थाश्रमसंपन्नः कञ्चित्कालं समास्थितः ॥ ततः श्रीकुरुकां
प्राप्य यतींद्रप्रवणो महान् ॥ २४ ॥ तस्य लोकार्यशिष्यस्य श्रीशैले-
शस्य सन्निधौ ॥ कृष्णपादकृतं भाष्यमधीत्य द्राविडागमान् ॥ २५ ॥
सर्वाणि च रहस्यानि कृतार्थोभूत्तदा महान् ॥ यतींद्रप्रवणस्याथ पुत्रो

रामानुजोऽभवत् ॥ २६॥ रामानुजस्य पुत्रोऽभूद्विष्णुचित्त इति श्रुतः॥ श्रीशैलेशो विधायाशु स तं दर्शनवर्धकम् ॥ २७ ॥ यतींद्रप्रवणं पश्चाज्जगाम परमं पदम् ॥ ततः श्रीरंगनगरं सोभिरामवरो ययौ ॥ २८ ॥ नत्वा रंगेश्वरं तत्र कश्चित्कालमुवास सः ॥ ततो भूतपुरीमेत्य यतिराजं प्रणम्य च ॥ २९ ॥ तस्मादनुज्ञां संप्राप्य भाष्यकारान्महायशाः ॥ काञ्चीं विवेश सहसा वरदो यत्र वर्तते ॥ ३० ॥ यतींद्रमाहानसिको यो घटाम्बुकुलाग्रणीः ॥ आत्रेयगोत्रतिलकः प्रणतार्तिहरो गुरुः ॥ ३१ ॥ तस्यान्ववाये तत्काले यो महान्कृष्णदेशिकः ॥ तदंतिकेऽग्रहीद्भाष्यं यत्तच्छारीरिकं महत् ॥ ३२ ॥ यतींद्रप्रवणः श्रीमान्वेदांतद्वयवांस्ततः ॥ आचार्यहृदयं प्राप्य यादवाचलवासिनः ॥ ३३ ॥ देवराजगुरोः सम्यक्कृतार्थोभून्महामतिः॥ ततः श्रीरंगनगरे यतींद्रप्रवणो महान् ॥ ३४ ॥ तुर्याश्रमं समाश्रित्य यथा रामानुजः पुरा ॥ वर्धयन्दर्शनं ह्येतदवर्तत महायशाः ॥ ३५ ॥ अशिश्रियंस्तदा सर्वे वैष्णवा वीतकल्मषाः ॥ मदत्रयविनिर्मुक्ताः सौम्यजामातरं मुनिम् ॥ ३६ ॥ अष्टौ बभूवुस्तन्मध्ये महांतो भुवि विश्रुताः ॥ श्रीवानाचलयोगींद्रो भट्टनाथमुनिस्तथा ॥ ३७ ॥ श्रीनिवासयतिश्चैव देवराजगुरुर्महान् ॥ महान्वाधूलवरदनारायणगुरुस्तथा ॥ ३८ ॥ वरदाचार्यसच्छिष्यः प्रतिवादिभयंकरः ॥ घटाम्बुवंशजः कश्चिद्रामानुजगुरुस्तथा ॥ ३९ ॥ घटाम्बुवंशजः कश्चित्सुताख्य इति विश्रुतः ॥ इत्येते ह्यभवन्ख्याता जगत्यामष्ट दिग्गजाः ॥ ४० ॥ कृष्णपादकृतं भाष्यं शिष्येभ्यश्चोपदिश्य तत् ॥ अपालयज्जगत्सर्वं यतींद्रप्रवणो महान् ॥ ४१ ॥ तद्भाष्यं रंगराजाय भक्त्या विज्ञाप्य देशिकः ॥ महायत्यभिधानं च तस्मात्संप्राप्तवांस्तदा ॥ ४२ ॥ ग्रंथाननेकान्छ्रुत्वार्यैः सर्वलोकावनाय सः ॥ तैः श्रीवैष्णवसिद्धांतं नित्यमव्याहतं शुभम्॥४३॥ सम्यक्प्रवर्तयह्लोके श्रीरंगे सुखमास्थितः ॥ ततोष्टदिग्गजास्सर्वे यतींद्रप्रवणाज्ञया॥४४॥

श्रीवानाचलयोगींद्रप्रमुखा देशिकोत्तमाः ॥ वेदांतद्वितयेनैव जगत्सर्वमपालयन् ॥ ४५ ॥ जनाः संरक्षितास्सर्वे तैस्तैरष्टदिग्गजैः ॥ शुद्धसत्त्वगुणोपेताः सुखेनैव समास्थिताः ॥ ४६ ॥ इति श्रीप्रपन्नामृते वेदांतार्यवरदार्ययतींद्रप्रवणाष्टदिग्गजवैभववर्णनं नाम द्वाविंशत्यधिकशततमोऽध्यायः ॥ १२२ ॥

## त्रयोविंशत्यधिकशततमोऽध्यायः ।

लोकैकदेशिकः श्रीमान्भाष्यकारो महायशाः॥पुत्रस्वीकारमकरोद्यं पुरा कुरुकेश्वरम् ॥ १ ॥ यतिराजकृपाप्राप्तवेदांतद्वितयोनघः ॥ सहस्रगीतेर्व्याख्यानं यश्चक्रे देशिकाज्ञया ॥ २ ॥ षड्भिः सहस्रैस्संयुक्तग्रन्थैराद्यमनुत्तमम् ॥ कुरुकेशस्य पुत्रोभूत्पद्मनेत्र इति श्रुतः ॥ ३ ॥ पद्मनेत्रस्य पुत्रोभूऽत्कुरुकेश्वरनामकः॥ तस्याभूत्पुण्डरीकाक्षः पुत्रो लोकोत्तरो महान् ॥ ४ ॥ पुण्डरीकस्य तस्यासीच्छ्रीनिवास इति श्रुतः ॥ श्रीनिवासस्य पुत्रोऽभून्नृसिंहार्य इति श्रुतः ॥ ५ ॥ नृसिंहार्यस्य पुत्रोऽभूद्रामानुज इवापरः ॥ तस्य रामानुजार्यस्य नृसिंहार्योऽभवत्सुतः ॥ ६ ॥ नृसिंहार्यो महातेजाः सर्वशास्त्रविशारदः ॥ एट्टूरुनामनगरं स प्राप सुमहायशाः ॥ ७ ॥ तस्मिन्नेट्टूरुनगरे कञ्चित्कालं समास्थितः ॥ तस्मिन्काले महातेजा विरूपाक्षो महाबलः ॥ ॥८॥ शशास राज्यं धर्मेण विजये नगरे नृपः ॥ दृष्ट्वासहिष्णवः सर्वे विरूपाक्षस्य वैभवम् ॥ ९ ॥ ज्ञातयो हिंसितुं यत्नं चक्रिरे बलदर्पिताः ॥ विरूपाक्षो विदित्वाथ तेषां तत्कर्म कृत्स्नशः ॥ १० ॥ देशान्तरमवस्थाय निर्गत्य नगराद्बहिः॥ गूढो रहसि कस्मिंश्चित्कञ्चित्कालं निनाय सः॥११॥ततः संपाद्य महतीं सेनां स चतुरङ्गिणीम् ॥ केनाप्यज्ञातवृत्तांतो निशीथे सबलो महान् ॥ १२ ॥ विजयं नगरं प्राप्य विरूपाक्षो नृपोत्तमः ॥ निःशेषं सर्वशत्रूणां वधं चक्रे महाबलः ॥ १३ ॥ विजयाख्ये ततस्तस्मिन्नगरे पूर्ववत्तदा ॥ राज्यं प्रशासद्वै तस्थौ सर्वलोकमहीपतिः ॥ १४ ॥ निशीथे बान्धवास्सर्वे तेन ये निहता नृपाः ॥

पिशाचभूतास्ते सर्वे पुत्रपौत्रादिका जनाः ॥ १५ ॥ तं नृपं पीडयामा-
सुर्विरूपाक्षं दिवानिशम् ॥ विसृज्य राजभवनं विरूपाक्षो महामतिः
॥१६॥ पुनरन्यद्विधायाशु राजवेश्म महाबलः ॥ राज्यं प्रशासद्वै त-
स्थौ तत्र सर्वजनैः सह ॥ १७ ॥ प्रतिरात्रं पिशाचानां तेषां कोलाह-
लो रवः ॥ प्रलापश्च महांस्तत्र श्रूयते राजवेश्मनि ॥ १८ ॥ पैशाच्य
मोचनार्थाय तेषां राज्ञां महात्मनाम् ॥ कन्यागोभूमिदानानि गृहदा-
नान्यनेकशः ॥ १९ ॥ पुण्यव्रतान्यनेकानि कृतान्यन्यानि यानि
च ॥ सा तेन मोचिता दानैर्घोरा पैशाच्यवेदना ॥ २० ॥ नृसिं-
हार्यस्तदा तस्माद्देटूरुनगरान्महान् ॥ निर्गत्य निखिलान्देशांश्चरि-
त्वा धनकांक्षया ॥ २१ ॥ असंप्राप्तधनः प्राप विजयं नगरं प्रति ॥
स राजदर्शनाकांक्षी सानुजः शास्त्रवित्तमः ॥ २२ ॥ रामायणं समा-
दाय पूर्वराजगृहं प्रति ॥ यथावज्ज्ञातवृत्तान्तो निशायां वैष्णवोत्तमः
॥ २३ ॥ सानुजः स नृसिंहार्यो रामायणसमन्वितः ॥ विवेश राजभ-
वनं पिशाचशतसंकुलम् ॥ २४ ॥ पिशाचाः सौम्यरूपेण संहृष्टास्ते-
खिलास्तदा ॥ दर्शनात्क्षीणकर्माणस्तयोर्वैष्णवमुख्ययोः ॥ २५ ॥
दृष्ट्वा तौ द्वारपालास्ते हस्तपुस्तकधारिणौ ॥ प्रणम्य मार्गं दत्त्वा ते
विनयेन समास्थिताः॥२६॥ तेन संतुष्टहृदयौ राजान्तिकमुपागतौ ॥
प्रणम्य स नृपः शीघ्रं तयोःश्रेष्ठासनं महत् ॥२७॥ कल्पयित्वा यथा-
न्यायमर्चयित्वा विशेषतः ॥ पृष्ट्वा चानामयं सम्यक्संतोषं परमं ययौ
॥२८॥कृत्वाशिषो नृसिंहार्यः सानुजः स नृपाय च॥तस्मै प्रहृष्टः सुतरां
निषसादासने तदा ॥२९॥ राज्ञा सञ्चोदितस्तेन मंत्री तावब्रवीत्तदा ॥
कौ युवां सुमहात्मानौ कस्माद्देशात्समागतौ ॥ ३० ॥ किमिदं पुस्त-
कवरं किमागमनकारणम् ॥ वदतं नोऽखिलं सर्वं श्रोतुं कौतूहलं महत्
॥ ३१ ॥ तेनोक्तं भक्तिभावेन श्रुत्वा वचनमादरात् ॥ नृसिंहार्यो महा-
प्राज्ञः स्ववृत्तान्तं निवेदितुम् ॥ ३२ ॥ तस्मै नृपाय सहसा सानुजं स-

मचोदयत्॥ भ्रात्रा सञ्चोदितस्तेन नृसिंहार्येण बुद्धिमान् ॥ ३३ ॥ रा-
ज्ञोऽभिमुखमागत्य व्याजहार वचः शुभम् ॥ श्रूयताममिधास्यामि
वृत्तान्तं चावयोस्तदा ॥ ३४ ॥ एष श्रीमान्महाप्राज्ञः श्रीशैलकुल-
भूषणः ॥ सर्वशास्त्रार्थतत्त्वज्ञः सर्वज्ञो वैष्णवोत्तमः ॥ ३५ ॥
महात्मायं नृसिंहार्यः साक्षाल्लक्ष्मीनृसिंहकः ॥ रामायणार्थतत्त्वज्ञो-
वाल्मीकिर्भगवान्यथा ॥ ३६ ॥ तस्याहमनुजो राजञ्छ्रीरंगाचार्य-
नामवान् ॥ आवामर्थपरावेतौ युष्मद्दर्शनकाङ्क्षया ॥ ३७ ॥
विजयं नगरं प्राप्य तवांतिकमुपागतौ ॥ अद्य रामायणमिदं पुस्तकं
क्षितिनायक ॥ ३८ ॥ रामाभिषेकपर्यंतमेतद्रामायणं परम् ॥ आ-
वाभ्यां शृणु तेनाशु बहुश्रेयो भविष्यति ॥ ३९ ॥ तेन वाक्येन
सन्तुष्टः स राजा मन्त्रिभिः सह ॥ पिशाचैर्मंत्रयामास तेषां राजा
महामतिः ॥ ४० ॥ श्रीवैष्णवोत्तमावेतौ महावंशसमुद्भवौ ॥ रामा-
यणार्थतत्त्वज्ञौ रामभक्तौ महौजसौ ॥ ४१ ॥ तयोस्संदर्शनादद्य
महापैशाच्यवेदना ॥ पिशाचानां निवृत्तासीदस्माकं क्षणमात्रतः
॥ ४२ ॥ क्षुत्पिपासादिभिर्नित्यं पीडितानां दुरात्मनाम् ॥ नरमांसा-
शिनां नित्यं घोरकर्मरतात्मनाम् ॥ ४३ ॥ अयमेव हि दृष्टान्तो ह्य-
स्मत्पैशाच्यमोचने ॥ तस्मादवश्यं कर्तव्यं श्रवणं तस्य विस्तरा-
त् ॥ ४४ ॥ एवं संमंत्र्य निश्चित्य स राजा भक्तिपूर्वकम् ॥
प्रणम्य बहुशो भक्त्या वचनं चेदमब्रवीत् ॥ ४५ ॥ यत्कथाश्रवणे-
नाद्य रक्षितव्यास्त्वया वयम् ॥ तत्कथां ब्रूहि नो विद्वन्नक्ष त्वं कृपया-
धुना ॥ ४६ ॥ नित्यं सायंतने यूयमत्रागत्य कथामिमाम् ॥ प्रब्रूत
याममात्रं नो भवदाराधनाय हि ॥ ४७ ॥ दिनेदिने प्रदास्यामो
दीनारद्वयमादरात्॥ एतद्वृत्तान्तलेशोपि न प्रकाश्यः कदाचन॥४८॥
प्रकाशितश्चेद्भवतां विरोधो जायते च नः॥ विशेषतः प्रदास्यामः तत्स-
माप्तिदिने धनम् ॥४९॥ नृसिंहार्यः स तच्छ्रुत्वा वचनं च यवीयसा ॥
संमंत्र्य तत्तथा चक्रे नित्यं रामकथाप्रियः ॥ ५० ॥ तदारभ्य प्रति-

दिनं रात्रौ रामायणं महत् ॥ सानुजः स नृसिंहार्यो याममात्रमबोधयत् ॥ ९१ ॥ तस्मै सपरिवाराय नृपाय नृपमन्दिरे ॥ न कश्चिदपि तद्वेद तत्रत्यो वापरस्तदा ॥ गमनागमने तत्र तयोः श्रीरामभक्तयोः ॥९२॥ इति श्रीप्रपन्नामृते यतीन्द्रज्ञानपुत्रकुरुकेशवंशप्रशंसायां विजयनगरे पिशाचेभ्यो रामायणकथोपदेशो नाम त्रयोविंशत्यधिकशततमोऽध्यायः ॥ १२३ ॥

---

## चतुर्विंशत्यधिकशततमोऽध्यायः ।

ततः कतिपयाहस्सु गतेषु तदनंतरम् ॥ तस्य रामाभिषेकस्य समयस्समवर्तत ॥ १ ॥ रामाभिषेकदिवसात्पूर्वस्मिन्वासरे तदा ॥ नृसिंहार्यो महातेजास्सानुजो निशि सत्तमः ॥ २ ॥ पिशाचनृपतिं रामभक्तं वाक्यमथाब्रवीत् ॥ रामायणकथा सर्वा भवद्भ्यः कथिता मया ॥ ३ ॥ अभिषेके तु रामस्य श्वोभाविनि नृपोत्तम ॥ महोत्सवस्तु कर्तव्यस्तस्मिन्काले जगत्पतेः ॥ ४ ॥ श्रेयांस्येतेन सर्वाणि संभविष्यंति वो ध्रुवम् ॥ तस्य तद्वचनं श्रुत्वा स राजा मंत्रिभिस्सह ॥५॥ संमंत्र्य वैष्णवश्रेष्ठमिदं वचनमब्रवीत् ॥ रामाभिषेको भगवञ्छ्वोभावी यदि सुव्रत ॥ ६ ॥ कृतार्थः सर्वपापेभ्यो मोचितोस्मि न संशयः ॥एते मत्सेवकास्सर्वे कृतार्थास्सुतरां तथा॥७॥त्वत्तो रामकथां पुण्यां दिव्यां श्रुत्वा वयं गुरो ॥ सर्वपापैर्विनिर्मुक्ता यास्यामो वैष्णवं पदम् ॥८॥अद्य रामाभिषेकस्य यत्किंचिद्द्रव्यमुत्तमम्॥दास्यामस्तद्ग्रहणार्थे नृसिंहगुरुपुंगव ॥ ९ ॥ एतेन संग्रहेणात्र तदीयाराधनं कुरु ॥ युष्मद्ग्रामे विशेषेण भविष्यति महोत्सवः ॥१०॥पट्टाभिषेको रामस्य श्वो निशायां किलोत्तमः॥दास्यामो हि धनं सर्वं वयं भूरि न संशयः॥११॥ तेन वाक्येन सन्तुष्टो नृकण्ठीरवदेशिकः ॥ आशिषः संप्रयुज्याशु तेभ्यः प्रेम्णा यवीयसा ॥ १२ ॥ स तद्धनं समादाय प्रहृष्टः सुतरां तदा ॥ स्वस्थानं प्राप्य सुष्वाप सानुजः स महामतिः ॥ १३ ॥ त-

स्यां रात्र्यां व्यतीतायां कृतपौर्वाह्णिकक्रियः ॥ अर्चायां रामचन्द्रस्य कृत्वा रामाभिषेचनम् ॥ १४ ॥ अष्टोत्तरशतैर्दिव्यैः श्रीमच्छ्रीरामनामभिः ॥ अर्चयित्वा यथान्याय्यं नैवद्यं तु समर्प्य च ॥ १५ ॥ स्वयं च बुभुजे श्रीमान्कतिभिर्वैष्णवैः समम् ॥ ततः सायंतनं तत्तत्कर्म कृत्वा यथोचितम् ॥ १६ ॥ निशायां सानुजस्तत्र विवेश सुमहायशाः ॥ ते सर्वे वैष्णवं दृष्ट्वा पिशाचास्तं मुदान्विताः ॥ १७ ॥ पूजां चक्रुर्यथापूर्वं प्रत्युत्थानाभिवादनैः ॥ भद्रासने सुखासीनो वैष्णवो वीतकल्मषः ॥ १८ ॥ पट्टाभिषेकसर्गं च कथयामास शास्त्रवित् ॥ मुखावलोकने सक्ता वाचकस्य मुदान्विताः ॥ १९ ॥ रामाभिषेकं शृण्वन्तो भक्त्या सर्वे समास्थिताः ॥ रामाभिषेकं श्रुत्वा ते हर्षनिर्भरमानसाः ॥ २० ॥ पूजां पौराणिकस्याथ चक्रुः सर्वे महात्मनः ॥ अनेकशतसाहस्रदीनारान्भूषणैस्सह ॥ २१ ॥ अमूल्यानि च रत्नानि राजभोग्यानि यानि च ॥ तानि सर्वाणि दत्त्वाशु संप्रणम्य पुनःपुनः ॥ २२ ॥ नृसिंहाचार्यवर्याय सानुजाय महात्मने ॥ बद्धांजलिपुटास्सर्वे वचनं तमथाब्रुवन् ॥ २३ ॥ भवन्तौ लोकविख्यातौ सर्वज्ञौ शास्त्रवित्तमौ ॥ अवतीर्णाविहांशेन साक्षाद्भगवतो हरेः ॥ २४ ॥ मादृशानां रक्षणार्थं पापकर्मरतात्मनाम् ॥ वयं युष्मत्कटाक्षेण विमुक्ताः कर्मबन्धनैः ॥ २५ ॥ यास्यामो ह्यधुनैवाशु तद्विष्णोः परमं पदम् ॥ अस्माकं सर्ववृत्तान्तं वक्ष्यामः श्रूयतामिदम् ॥ अस्मद्वृत्तान्तकथनं मा भयं कुरुतं युवाम् ॥ २६ ॥ विरूपाक्षस्य नृपतेस्ते सर्वे ज्ञातयो वयम् ॥ व्याजेन केनचिद्राज्ञः निशीथे राज्यकांक्षया ॥ २७ ॥ विरूपाक्षेण निहताः सुषुप्तिसमये वयम् ॥ तेन प्राप्ताः स्म पैशाच्यं सर्वे सपरिवारकाः ॥ २८ ॥ अस्मद्भयाद्विरूपाक्षो तदिदं भवनं जावत् ॥ विहाय चान्यभवनं विवेश स महीपतिः ॥ २९ ॥ अस्मदर्थमनेकानि धर्माणि विविधानि च ॥ विरूपाक्षेण भूपेन भक्त्या तेन महात्मक ॥ ३० ॥ कृतानि तेन पैशाच्यं निवृत्तं नाभवत्तदा ॥ युवाभ्यां रामभक्ताभ्यां पैशाच्यमतिदुः-

सहम् ॥ ३१ ॥ विनिवृत्तं तदस्माकं सांप्रतं घोरकर्मणाम् ॥ युष्मन्मुखाब्जनिष्यन्ददिव्यरामकथामृतैः॥३२॥परितृप्ता वयं सर्वे भवामोद्य न संशयः॥ सान्तानिकं लोकमद्य गन्तुकामा वयं स्थिताः॥३३॥ अनुज्ञां देहि नो ब्रह्मन्सर्वेषामाशु सांप्रतम् ॥ विमानवृन्दमाकाशे दृश्यते सूर्यसंनिभम् ॥ ३४ ॥ इतोऽविदूरे सान्तानलोकादद्यागतं शुभम् ॥ पिशाचेष्वित्युक्तवत्सु स गुरुस्सानुजस्तदा ॥ ३५ ॥ तेभ्यो मन्त्राक्षतान्दत्त्वा स्वाशीःकरणपूर्वकम् ॥ अनुज्ञां प्रददौ शीघ्रं तेषां मुक्त्यै कृपानिधिः ॥ ३६ ॥ ततस्तु पश्यतोस्सर्वे ते पिशाचा जवात्तयोः ॥ विहाय देहान्पैशाचान्दिव्यदेहधरास्तदा ॥ ३७ ॥ दिव्यं विमानमारुह्य सूर्याग्निसमवर्चसः ॥ सान्तानलोकं सहसा जग्मुस्सर्वे सनातनम् ॥ ३८ ॥ अद्भुतं तत्समालोक्य विस्मयं परमं गतौ ॥ तैर्दत्तं विबुधश्रेष्ठौ सर्वं संगृह्य तद्धनम् ॥ ३९ केनाप्यज्ञातवृत्तान्तौ स्वावासं प्राप्य सत्वरम् ॥ रामायणं बहुविधं श्लाघयन्तौ परस्परम् ॥४०॥ धनलाभात्सुसंतुष्टौ सुखं निद्रामवापतुः ॥ ततः स्वग्रामगमने यतमानौ महामती॥समीचीनसहायं च वीक्षमाणौ तदा स्थितौ॥४१॥ इति श्रीप्रपन्नामृते श्रीशैलनृसिंहार्याच्छ्रीरामायणश्रवणेन पिशाचानां सान्तानिकलोकप्राप्तिर्नाम चतुर्विंशत्यधिकशततमोऽध्यायः ॥१२४॥

## पञ्चविंशत्यधिकशततमोऽध्यायः ।

ततः पौरजनास्तस्य समीपगृहवासिनः ॥ केचिद्राजगृहं प्राप्य तं विरूपाक्षमब्रुवन् ॥ १ ॥ संजातं किञ्चिदाश्चर्यं पट्टणेस्मिन्नृपाद्य नः ॥ पूर्वराजगृहे राजन् पिशाचानामहर्निशम् ॥ २ ॥ श्रूयते स्म त घोराणां नित्यं कोलाहलो रवः॥ स महाञ्छ्रूयते नाद्य किमाश्चर्यं विचार्यताम् ॥ ३ ॥ पौराणां वचनं श्रुत्वा विरूपाक्षो महामतिः ॥ आश्चर्यं परमं प्राप्य तानुवाच महीपतिः ॥ ४ ॥ विमोचितमिदं तेषां पैशाच्यं केन हेतुना ॥ एतद्विमोचनार्थाय धर्माश्च बहवः कृताः ॥५॥

न तैर्विमोचितं तेषां पैशाच्यं दुर्जरं महत् ॥ इदानीं मोचितं तेषां पैशाच्यं केन हेतुना ॥ ६ ॥ सम्यग्विचारितव्यं हि चित्रमेतज्ज्वाद्धवम् ॥ इत्युक्त्वासौ विरूपाक्षः पौरैस्सह विनिर्गतः ॥ ७ ॥ पूर्वराजगृहं प्राप्य तत्पिशाचालयं तदा ॥ अद्राक्षीत्पदविन्यासं तयोः पुरुषवर्ययोः ॥८॥ विलोक्य तत्पदन्यासं विरूपाक्षोऽब्रवीद्वचः॥यौ कौ वाद्य महात्मानावागतौ सुमहत्तरौ ॥ ९ ॥ ताभ्यां विमोचितं तेषां पैशाच्यं नात्र संशयः ॥ अन्वेष्य तौ ग्रहीतव्यौ सत्वरं पुरुषर्षभौ॥१०॥ केनोपायेन तौ दृश्यौ महात्मानौ ममाधुना ॥ इति संचिंत्य राजेंद्रो विरूपाक्षो महामतिः॥११॥ मिमाय रज्जुना सम्यक्तत्पादायामविस्तृतिम्॥ सम्यग्गृहीत्वा तां रज्जुं सेनाध्यक्षमुवाच सः ॥ १२ ॥ सेनाध्यक्ष महाप्राज्ञ रज्जुमेतां गृहाण भोः ॥ एतद्रज्जुप्रमाणानि रज्जुवृंदानि सत्वरम् ॥ १३ ॥ नगरद्वारपालेभ्यः सर्वेभ्यस्तानि सैन्यप ॥ दत्त्वास्मिन्नगरे ताभी रज्जुभिस्सुमहात्मनाम्॥१४॥ गतागतानां सर्वेषां सतां चैवासतामपि ॥ प्रमाणं मातुमंत्रीणां शासनं कुरु सत्वरम् ॥ १५ ॥ तद्रज्जुमानौ यत्पादौ भवितारौ तदा ध्रुवम् ॥ तमानयस्व पुरुषं सादरं मम सन्निधिम् ॥ १६ ॥ सोंगीकृत्य वचस्तस्य सेनाध्यक्षो महामतिः ॥ आज्ञाप्रसारमकरोदहोरात्रमचञ्चलः ॥ १७ ॥ अखिलश्चैष वृत्तांतः सम्यग्विश्रावितो महान् ॥ तस्मिन्पुरवरे रात्रौ चित्रं चाखिलभूमिषु ॥ १८ ॥ तावच्चिन्तयतां श्रुत्वा स्ववृत्तांतं महामती ॥ साक्षादयं विरूपाक्षो विरूपाक्षो न संशयः ॥ १९ ॥ सुतरां वैष्णवद्वेषी तीक्ष्णदण्डो महाबलः ॥ न जानीमो गृहीत्वाऽस्मान् किं करिष्यत्ययं खलः ॥ वर्ततेऽस्मद्वशे सर्वं राजद्रव्यं महत्किल ॥२०॥ अद्यानेन पुरेस्माकमत्र स्थातुमसांप्रतम् ॥ स्वग्रामं प्रति गन्तव्यमधुनैव विधानतः ॥ २१ ॥ पूर्वद्वारेषु सर्वेषु वर्तते राजविड्वरम् ॥ अलक्ष्यमाणौ केनापि यास्यामः कथमञ्जसा ॥ २२ ॥ स एव रक्षकोऽस्माकं

श्रीरामो भगवान्हरिः॥ इति संचित्य बहुशस्तावुभौ वैष्णवौ तदा॥२३॥
संन्यस्तभारौ श्रीरामे पुरान्निर्ययतुर्निशि ॥ तौ दृष्ट्वा राजपुरुषाः पुरद्वारे
द्विजोत्तमौ ॥ २४ ॥ तया रज्ज्वाशु तत्पादौ मिमाय प्रीतिमागमन् ॥
तावेव मत्वा तौ शीघ्रं गृहीत्वा राजसेवकाः ॥ २५ ॥ विरूपाक्षाय
महते चार्पयामासुरादरात् ॥ विरूपाक्षनृपो भक्त्या दृष्ट्वा तौ स
द्विजोत्तमौ ॥ २६ ॥ प्रणिपत्य प्रसन्नात्मा वचनं चेदमब्रवीत् ॥ कौ
युवां देवशंकाशौ वेदज्ञौ वैष्णवोत्तमौ ॥ २७ ॥ किमर्थं सर्वशास्त्रज्ञौ
कस्माद्देशादिहागतौ ॥ पूर्वराजगृहं कस्मात्प्रविष्टौ प्रेतसंकुलम्
॥ २८ ॥ यत्कार्यं तत्र सञ्जातं भवदागमनान्महत् ॥ तत्सर्वं वदतं
सत्यं मा भयं भवतोर्ध्रुवम् ॥ २९ ॥ इत्युक्तस्तेन भूपेन नृसिंहगुरु-
पुंगवः ॥ संप्रहृष्टोऽब्रवीद्वाक्यं गतभीस्तं महीपतिम् ॥ ३० ॥
श्रूयतामभिधास्यामि विरूपाक्ष महीपते ॥ वृत्तान्तमेतत्सकलं पवित्रं
पापनाशनम् ॥ ३१ ॥ पुरा यमाह तातेति भगवान्वेंकटेश्वरः ॥ श्रीम-
द्रामायणस्यार्थांश्चतुर्विंशतिवर्त्मना ॥ ३२ ॥ महते भाष्यकाराय य-
तिराजाय योऽदिशत् ॥ भूरिश्रीशैलपूर्णस्य तस्य वंशे महात्मनः ॥
॥ ३३ ॥ सञ्जातोहं महाभाग सर्वलोकैकविश्रुते ॥ नृसिंहार्य इति ख्यातः
सर्वशास्त्रविशारदः॥ ३४ ॥ रामभक्तो विशेषेण नित्यं रामकथाप्रियः॥
ममानुजोयं मतिमाञ्छ्रीरंगाचार्यनामकः ॥ ३५ ॥ सर्वशास्त्रविदां
श्रेष्ठः सर्वज्ञः साधुसत्तमः ॥ अवेहि तदिदं राजञ्छ्रीरामायणपुस्तक-
म् ॥ ३६ ॥ एटूरुनगरस्थोहं दरिद्रो वेदपारगः ॥ सोहं यवीयसानेन
सहितो धनकांक्षया ॥ ३७ ॥ तदिदं नगरश्रेष्ठं विजयाख्यं समागतः ॥
कदाचिद्रात्रिवेलायामज्ञानेन महोच्छ्रयम् ॥ ३८ ॥ तद्राजभवनं दिव्यं
संप्राप्तोभवमादरात्॥तत्रत्यास्ते मया दृष्टाः पिशाचा राजसत्तम॥३९॥
राजमन्त्रिप्रधानादिरूपेण नरमूर्तयः ॥ ते सर्वे प्रीतिसंयुक्ताः पूजां च-
क्रुर्यथाविधि ॥ ४० ॥ मम तत्र प्रविष्टस्य सानुजस्य महीपते ॥ ममै-

तं सर्ववृत्तान्तं श्रुत्वा ते मन्मुखात्तदा ॥ ४१ ॥ मामवोचन्महीपाल
भक्त्या शुभतरं वचः ॥ यूयमत्र निशाकाले समागत्य दिनेदिने॥४२॥
ब्रूत रामायणं निष्कं दास्यामो भवतां ध्रुवम् ॥ एतद्वृत्तान्तलेशोपि न-
प्रकाश्यः कदाचन ॥ ४३ ॥ द्रव्यलोभान्नृपास्माभिर्यथोक्तं तत्तथा
कृतम् ॥ एवं नीतास्त्रयो मासाः श्रीरामकथया नृप ॥ ४४ ॥ पट्टाभिषे-
कसमये तैर्दत्तो द्रव्यसञ्चयः ॥ आवयोः पश्यतोस्सर्वे पिशाचास्ते नृ-
पोत्तम ॥ ४५ ॥ ततः संत्यज्य पैशाच शरीराणि जवात्तदा ॥ अनुज्ञा-
ता मया सर्वे दिव्यरूपधरास्तदा ॥ ४६ ॥ दिव्यं विमानमारूढा वि-
चित्रं मयि पश्यति ॥ सान्तानलोकमुद्दिश्य ते गता राजसत्तम
॥ ४७ ॥ इदं सत्यमिदं सत्यं मयैवोक्तं नृपोत्तम ॥ तैर्दत्तं
द्रव्यसङ्घातं पश्यैतं नृप भूषणम् ॥ ४८ ॥ इत्युक्त्वा देशिकश्रे-
ष्ठो नृसिंहार्यो महामतिः ॥ विरूपाक्षय भूपाय दर्शयामास तद्धनम् ॥
॥४९॥ विलोक्य तद्धनं सर्वमनर्घं राजभूषणम् ॥ विस्मयं परमं गत्वा
विरूपाक्षो मुमोद ह ॥५०॥ रामायणे रामभद्रे नृसिंहगुरुपुङ्गवे ॥ आ-
चार्यदैवप्रामाण्यभावं चक्रे महामतिः ॥ ५१ ॥ मन्त्रे तद्देवतायाञ्च त-
था मंत्रप्रदे गुरौ ॥त्रिषु भक्तिस्सदा कार्या सा हि प्रथमसाधनम्॥५२॥
एवं भक्तिः सुसंजाता विरूपाक्षमहीपतेः ॥ तत्रत्यानां च सर्वेषां विचि-
त्रा तन्नृणां सदा ॥५३॥ विरूपाक्षस्ततो धीमान्वीरशैवमतोऽपि सः॥
श्रीशैलवंशसम्भूतौ ज्ञात्वा तौ रामलक्ष्मणौ ॥ ५४ ॥ पुत्रमित्रकलत्रा-
दिसहितश्च सनागरः ॥ श्रीशैलवंशतिलकान्नृसिंहार्याज्जगद्गुरोः॥५५॥
पञ्चसंस्कारसंपन्नो बभूव सुमहायशाः ॥ श्रुत्वा रामायणं सर्वं नृसिं-
हार्याद्गुरूत्तमात् ॥ ५६ ॥ रामभक्तो विरूपाक्षः कृतकृत्यो मुमोद ह ॥
पट्टाभिषेकसमये नृसिंहगुरवे मुदा ॥५७॥ स्वर्णाभिषेकमकरोद्भक्त्या
पार्थिवसत्तमः॥ नृसिंहार्यस्ततस्तेन संतुष्टः सानुजस्तदा ॥५८॥ तत्रैव
राजनिकटे सदारः सुखमास्थितः ॥ श्रीवैष्णवे विरूपाक्षे प्रशासति
महीमिमाम् ॥ ५९ ॥ आसञ्छ्रीवैष्णवास्सर्वे यथा राजा तथा प्र-

जाः ॥ विरूपाक्षाभिधां मुद्रां विरूपाक्षो विहाय च ॥ ६० ॥ राजांगुलीये श्रीराममुद्रां दृढतरां व्यधात् ॥ श्रीराममुद्रा सर्वत्र तदाप्रभृति विश्रुता ॥ ६१ ॥ विरूपाक्षनृपात्पूर्वे शैवास्सर्वेभवन्नृपाः ॥ तत्पश्चाच्चाभवन्सर्वे विख्याता वैष्णवा नृपाः ॥ ६२ ॥ एवं नृसिंहगुरुराडिह सर्वलोकान्रामानुजार्यपदपंकजभृंगराजान् ॥ कुर्वन्निरंतरमनुष्ठितलोकरक्षस्तस्थौ सुखेन विजये नगरे जितारिः॥६३॥इतिश्रीप्रपन्नामृते श्रीशैलनृसिंहार्यविरूपाक्षराजसंवादे विरूपाक्षनृपाय श्रीरामायणोपदेशो नाम पंचविंशत्यधिकशततमोऽध्यायः ॥ १२५ ॥

## षड्विंशत्यधिकशततमोऽध्यायः ।

नृसिंहार्यस्य पुत्रोभूत्तातार्य इति विश्रुतः॥ श्रीशैलपूर्णनामाभूत्तातार्यस्यात्मजो महान् ॥ १ ॥ तस्याभूच्छ्रीनिवासार्यस्तस्य श्रीताददेशिकः ॥ तस्याऽभवद्वेङ्कटार्यस्तस्य सुन्दरदेशिकः ॥ पुत्रः श्रीसुंदरार्यस्य श्रीनिवासाभिधो गुरुः ॥ २ ॥ श्रीनिवासगुरोः पुत्रस्तातार्यो लोकविश्रुतः ॥ स तातदेशिकः श्रीमान्महात्मा शास्त्रवित्तमः ॥ ३ ॥ ग्रन्थं विधाय विख्यातं यः पञ्चमतभञ्जनम् ॥ विख्यातस्सर्वलोकेषु महात्मा विबुधाग्रणीः ॥ महांस्तद्विषयः श्लोको गीयते लोकविश्रुतः ॥४॥ शुकतातं त्रयीमार्गे तत्तातं तत्त्वनिर्णये ॥ तत्ताततातमाचारे ताताचार्यमहं भजे ॥५॥ श्रीरामदेवराजाख्यः कृष्णरायादनंतरम् ॥ ६ ॥ शशास राज्यं धर्मेण गुरुभक्तिपरायणः ॥ स भूपतिर्महातेजा ययौ चन्द्रगिरिं प्रति ॥७॥ गुरुं तातार्यमादाय रामरायाभिधस्तदा ॥ तस्मिन्काले महाचार्यः सर्वशास्त्रविदां वरः ॥ ८ ॥ अवर्ततात्रप्रतिद्वन्द्वो वाधूलो घटिकाचले ॥ खिलीकृतं चित्रकूटं कृमिकण्ठेन यत्पुरा ॥ ९ ॥ प्रतिष्ठापयितुं सम्यक्तदा मेने महागुरुः ॥ रामरायसहायेन महाचार्यो महायशाः ॥ १० ॥ दुर्जयानपि निर्जित्य शैवान्छा-

स्त्रविदुत्तमः ॥ स सम्यक् स्थापयामास गोविन्दं चित्रकूटके ॥ ११ ॥
गोविन्दराजो भगवान्महाचार्यः प्रतिष्ठितः ॥ महोच्छ्रायश्चित्रकूटे चा-
द्यापि परिदृश्यते ॥१२॥ शैवशास्त्रविदां श्रेष्ठो धीमानप्पय्यदीक्षितः॥
चित्रकूटे जितारातिरशोभत महायशाः ॥ १३ ॥ अद्वैतदीपिकाभिख्यं
ग्रन्थमप्पय्यदीक्षितः ॥ चकार भगवद्द्वेषी शैवधर्मरतः सदा ॥ १४ ॥
महाचार्यः स तां श्रुत्वा तस्याः प्रतिभटं तदा ॥ चण्डमारुतनामानं
विदधे ग्रन्थमुत्तमम् ॥ १५ ॥ अद्वैतदीपिकानाशस्ततोभूच्चंडमारु-
तात् ॥ प्रचण्डमारुते दीपप्रकाशः स्यात्कथं भुवि ॥ १६ ॥ विधाय
तातयाचार्यस्तत्पञ्चमतभञ्जनम् ॥ श्रीरामानुजसिद्धान्तमव्याहतमपा-
लयत् ॥ १७ ॥ महाचार्यो महातेजाः स कृत्वा चंडमारुतम् ॥
अव्याहतं यतीन्द्रस्य तं सिद्धान्तमपालयत् ॥ १८ ॥ तत्र संवर्धितं
सम्यक्छ्रीरामानुजदर्शनम् ॥ आचंद्रतारकं भूम्यामवर्धत सुविस्त-
रम् ॥ १९ ॥ तातार्यो वृषशैलेन्द्रे नित्यवासपरस्तदा ॥ कश्चित्काल-
मुवासार्यः कुर्वन्कैंकर्यमन्वहम् ॥ २० ॥ महते वेंकटेशाय शेषशैल-
निवासिने ॥ तातार्यस्याभवत्पुत्रः सुमुहूर्ते महायशाः ॥ २१ ॥ कश्चि-
दत्यन्ततेजस्वी श्रीनिवास इवापरः ॥ कुमारतातयाचार्यनामाभूत्तस्य
विश्रुतम् ॥ २२ ॥ पित्रोरानंददः श्रीमान्सर्वेषां नयनप्रियः ॥ बालो
निरामयः श्रीमानब्दत्रयमवर्तत ॥ २३ ॥ मान्द्यरोगो महानासीद्बा-
लस्यामिततेजसः ॥ तेन संपीडितो नित्यं बालस्तातार्यनन्दनः ॥
॥ २४ ॥ आमयेनैव महता प्रपेदे प्राणसंशयम् ॥ जितनिद्रो जिता-
हारः सदारस्तातदेशिकः ॥ २५ ॥ तेनैकवासरं तस्थौ सर्वबन्धुजनैः
सह ॥ अत्रान्तरे महालक्ष्मीः कृपयैवागता तदा ॥ २६ ॥
सर्वेषां पश्यतां सम्यग्जगन्मातारुणोदये ॥ अङ्कमारोप्य तं बालं
स्तन्यं दत्त्वाखिलार्थदम् ॥ २७ ॥ आपादमस्तकं तस्य लक्ष्मीः
पस्पर्श पाणिना ॥ एवं हि बालकस्याशु रक्षां कृत्वा रमा तदा ॥२८॥

अंतर्धानं गता देवी सर्वेषां पश्यतां तदा ॥ तदद्भुततमं दृष्ट्वा ते सर्वे विस्मयं गताः ॥ २९ ॥ ततः स बालो वेगेन स्तन्यपानप्रभावतः ॥ निरामयो महातेजा ववृधे बालभानुवत् ॥ ३० ॥ कुमारताताचार्यस्य तस्य त्रैलोक्यविश्रुतम् ॥ लक्ष्मीकुमारताताचार्यनामाभूत्तेन भूतले ॥ ३१ ॥ कृतोपनयनः पित्रा ब्रह्मचर्यपरायणः ॥ जग्राह चतुरो वेदान्वेदांगानि च बुद्धिमान् ॥ ३२ ॥ कृतोद्वाहो महातेजाः सर्वशास्त्राण्यधीतवान् ॥ वेदान्तद्वयमभ्यस्य जनकात्तातदेशिकात् ॥ ३३ ॥ लक्ष्मीकुमारताताय्यों यतीन्द्रविजयध्वजः ॥ अशोभत जितारातिः श्रीशैलकुलभूषणः ॥३४॥ देवराजस्य कैङ्कर्यं कर्तुकामो महायशाः ॥ लक्ष्मीकुमारताताय्यः पुरीं काञ्चीमवाप सः ॥ ३५ ॥ कर्तुकामोथ कैङ्कर्यं वरदस्याखिलं महत् ॥ जगाम शरणं भक्त्या देवीं वरदवल्लभाम् ॥ ३६ ॥ पुरा रामानुजः कश्चिद्विबुधः पादजो महान् ॥ रामभक्तो महातेजाः साकेतनगरं ययौ ॥ ३७ ॥ संसेव्य राघवं तत्र सीतालक्ष्मणसंयुतम् ॥ रामरत्नत्रयं प्राप श्रीराघवकटाक्षतः ॥ ३८ ॥ प्रददौ भक्तिभावेन स तद्रत्नत्रयं महत् ॥ वेंकटेशाय वरदराजायाथ च रंगिणे ॥ ३९ ॥ लक्ष्मीकुमारताताय ददौ वरदवल्लभा ॥ श्रीरामरत्नं कृपया स्यमन्तकनिभं हि तत् ॥ ४० ॥ श्रीरामरत्नं संप्राप्य देव्याः श्रीतातदेशिकः ॥ कोटिकन्याप्रदाने हि संकल्पं विदधे तदा ॥ ४१ ॥ सर्वं यतींद्रसिद्धान्तं ताताय्यों जनकात्तदा ॥ संप्राप्य भाष्यकारेथ दृढभक्तिस्ततोऽभवत् ॥ ४२ ॥ सर्वं यतीन्द्रसिद्धान्तं लोके सम्यक्प्रकाशयन् ॥ कांच्यामुवास ताताय्यः शिष्यसंघसमावृतः ॥ ४३ ॥ राजासीत्सर्वदेशस्य रामरायादनन्तरम् ॥ श्रीवेङ्कटपतिर्नाम महात्मा भगवत्परः ॥ ४४ ॥ लक्ष्मीकुमारताताय्यं महात्मानमशिश्रियत् ॥ स महान् वेंकटपतिरायः श्रीमान् महायशाः ॥ ४५ ॥ तद्राज्यं देशिकाधीनं विधाय गुरुभक्तिमान् ॥

गुरुकैङ्कर्य्यनिरतः कुलशेखरवत्स्थितः ॥ ४६ ॥ आक्रान्तवेङ्कटपति-
रायः श्रीतातदेशिकः ॥ यतीन्द्राभिमुखं सम्यक् स चकाराखिलं
जगत् ॥ ४७ ॥ सर्वेषामेव दानानां मुख्यानि त्रीणि भूतले ॥ वदन्ति
मुनयः सर्वे कन्या पृथ्वी सरस्वती ॥ ४८ ॥ तन्मध्ये सुमहत्कन्या-
दानं विष्णुप्रियं परम् ॥ इति मत्वाथ तातार्य्यः कन्यादानेऽकरोन्म-
तिम् ॥ ४९ ॥ नावैष्णवो दानपात्रमिति मत्वाखिलार्थवित् ॥ वैष्ण-
वायैव तद्दानमदिशत्स दृढव्रतः ॥ ५० ॥ तेनैव हेतुना सर्वे बभूवु-
र्वैष्णवा जनाः ॥ कोटिकन्याप्रदानेन श्रीवैष्णवमयं जगत् ॥ ५१ ॥
सर्वं चकार तातार्यस्तदद्भुतमिवाभवत् ॥ देवराजस्य कैंकर्यें तस्थौ
तत्र महायशाः ॥ ५२ ॥ लक्ष्मीकुमारतातस्य तनयः समजायत ॥
वेङ्कटोपपदो दंचद्वरदार्य्यो महायशाः ॥ ५३ ॥ स निग्रहानुग्रहयोः
कर्त्तासीद्देशिकोत्तमः ॥ कोटिकन्याप्रदानस्य यत्किंचिन्न्यूनताभवत्
॥५४॥ तत्सम्यगकरोत्पूर्णमुदारः पितृभक्तिमान् ॥ तस्य विष्णववता-
रस्य वरदार्यस्य धीमतः ॥५५॥ भार्य्यास्तिस्रो महाभागाः श्रीभूनीला
इवाभवन् ॥ तासु संजज्ञिरे पुत्रा वरदार्यान्महौजसः ॥५६॥ विष्णुभ-
क्तिरताः शान्ता बहवो वेदपारगाः॥ श्रीमन्तः कीर्तिमन्तश्च सर्वे सज्जनसं-
मताः ॥ ५७ ॥ सर्वशास्त्रार्थतत्त्वज्ञा वेदान्तद्वयपालकाः ॥ सर्वे यती-
न्द्रसिद्धान्तवर्द्धका वंशवर्द्धकाः ॥ ५८ ॥ तन्मध्ये रंगनाथार्यो महा-
त्मा भगवत्परः ॥ वेदान्तद्वयतत्त्वज्ञः शान्तिमाञ्छ्रितवत्सलः ॥५९॥
जयत्यव्याहतैश्वर्यः पुत्रपौत्रैर्महायशाः ॥ श्रीमद्यतीन्द्रसिद्धान्तनिर्वो-
ढासीत्ततो भुवि ॥ ६० ॥ तस्यासन्बहवः शिष्या देशेषु निखिले-
ष्वपि ॥ गुरुभक्तिरताः शान्ता वेदान्तद्वयपारगाः ॥ ६१ ॥ तन्मध्ये
वैष्णवः कश्चिदनंतार्य इति श्रुतः॥ आंध्रपूर्णकुलोत्पन्नो बभूव गुरुभक्ति-
मान् ॥ ६२ ॥ यतीन्द्रकृपया तेन कृतमेतदनुत्तमम् ॥ यत्प्रपन्नामृतं
श्रीमद्रंगनाथार्यशासनात् ॥ ६३ ॥ एवं महात्मा यतिचक्रवर्ती

पीठैश्चतुःसप्ततिभिस्सशिष्यैः ॥ संवर्द्धयन्विष्णुमतं जगत्यामुवास सर्वत्र च भूतपुर्य्याम् ॥ ६४ ॥ अर्चावतारान्सुबहून्विधाय कृपया गुरुः ॥ विष्णुस्थानेषु सर्वेषु पुंसःपुंसो गृहेगृहे ॥ ६५ ॥ शठारिणा गोदया च पालयन्पृथिवीमिमाम् ॥ आचन्द्रार्कं जितारातिर्भूम्यां सर्वत्र दृश्यते ॥ ६६ ॥ भूतपुर्य्यां विशेषेण यतीन्द्रः सर्ववैभवैः ॥ लोकसंरक्षकः श्रीमानद्यापि परिदृश्यते ॥ ६७ ॥ सत्यमव्याहतं नित्यं निस्तुलं चोत्तमोत्तमम् ॥ श्रीरामानुजसिद्धान्तं सर्वमोक्षैकसाधनम् ॥ ६८ ॥ यो वेत्ति मनुजो लोके मुक्तिभाक्स नरो भवेत् ॥ सम्यगात्महितो गूढः सर्वदो मोक्षसाधकः ॥ ६९ ॥ य एव चरमोपायः पापिनामपि मुक्तिदः ॥ श्रीरामानुजसिद्धान्त एष एव न संशयः ॥ ७० ॥ यतीन्द्रपूजनं नित्यं कुर्वस्तद्भक्तितो वसेत् ॥ पठन्प्रपन्नगायत्रीं यतीन्द्रविषयां शुभाम ॥ ७१ ॥ तत्कैंकर्यपरः सम्यक्कालं व्यपनयंस्तदा ॥ यतीन्द्रपूजनात्सद्यो नरो निष्कल्मषो भवेत् ॥ ७२ ॥ तस्मात्प्रपन्नगायत्रीं भक्त्या पठति यः पुमान् ॥ सर्वपापविनिर्मुक्तो ब्रह्मलोके महीयते ॥ ७३ ॥ क्वापि प्रपन्नगायत्र्याः पाठको दुर्लभो भुवि ॥ तस्मात्प्रपन्नगायत्र्याः पारायणमतंद्रितैः ॥ ७४ ॥ कर्तव्यं वैष्णवैर्नित्यं यावज्जीवं मुमुक्षुभिः ॥ श्रीरंगार्यकृतां दिव्यां यतीन्द्रविषयां शुभाम् ॥ ७५ ॥ प्रतिपद्यमहादिव्यरामानुजपदाङ्किताम ॥ अष्टोत्तरशतैः पद्यैः सहितां संहितां पराम् ॥ ७६ ॥ सर्वप्रारब्धसंहर्त्रीं मोक्षदानैकपत्रिकाम ॥ वेदान्तसारां महतीं निस्तुलां निखिलार्थदाम् ॥ ७७ ॥ एतां प्रपन्नगायत्रीं भक्त्या पठति यः पुमान् ॥ सर्वपापविनिर्मुक्तो याति विष्णोः परं पदम् ॥ ७८ ॥ मोक्षैकसाधनं हृद्यं पञ्चरत्नविराजितम्॥सुकरं पञ्चमोपायतत्त्वार्थप्रतिपादकम् ॥७९॥ अखिलार्थप्रदं सिद्धं प्रपन्नामृतमुत्तमम् ॥ सम्यग्यो वेत्ति मनुजः स एव भुवि वैष्णवः ॥ ८० ॥ स्वाचार्यो वरयोगीन्द्रो यतीन्द्रश्श-

[illegible]जङ्घारेः ॥ एते ते पञ्चरत्नानीत्येवमाहुर्विपश्चितः ॥ ८१ ॥
लक्ष्मीनाथं समारभ्य स्वाचार्यान्तं समागतम् ॥ सत्यमव्याहतं नित्यं
सम्यङ्मोक्षैकसाधनम् ॥ ८२ ॥ ॥ एतं यतीन्द्रसिद्धान्तं सर्ववेदान्त-
निश्चितम् ॥ तथ्यं मत्वा यतीन्द्रस्य शिष्यो भवति चेन्नरः ॥ ८३ ॥
तत्क्षणे निखिलैः पापैर्मुच्यते नात्र संशयः ॥ शृण्वतां पठतां चैतत्प्र-
पन्नामृतमुत्तमम् ॥ ८४ ॥ यतीन्द्रो महतां तेषां प्रसन्नो भवति ध्रुवम् ॥
य इदं शृणुयान्नित्यं प्रपन्नामृतमुत्तमम् ॥ ८५ ॥ सर्वपापविनिर्मुक्तो
ब्रह्मलोके महीयते ॥ आरोग्यकामो ह्यारोग्यं धनकामो महद्ध-
नम् ॥ ८६ ॥ मोक्षकामो लभेन्मोक्षं प्रपन्नामृतपाठकः ॥
यः प्रपन्नामृतं नित्यं भक्त्या पठति वैष्णवः ॥ ८७ ॥ सर्वान्कामान-
वाप्याथ सोन्ते विष्णुपदं व्रजेत् ॥ यद्गृहे वर्तते नित्यं प्रपन्नामृतमु-
त्तमम् ॥ ८८ ॥ तद्गृहे निखिलैः सार्धं पूर्वार्यैर्दिव्ययोगिभिः ॥ यती-
न्द्रो नित्यवासं च करिष्यति न संशयः ॥ ८९ ॥ श्रीपतिर्भक्तवात्स-
ल्यात्तत्रैव रमया सह ॥ निवसत्यखिलैः सार्धं ब्रह्मरुद्रादिदैवतैः ॥९०॥
अतस्तत्रैव वर्तते महत्यः सर्वसंपदः ॥ अतः सर्वफलावाप्त्यै प्रपन्ना-
मृतसंग्रहः ॥ ९१ ॥ कर्त्तव्यः सर्वथा लोके वैष्णवेनैव धीमता ॥ नि-
त्यमव्याहतं सत्यमेतद्वैष्णवदर्शनम् ॥ ९२ ॥ यो वेत्ति मनुजः
सम्यक्स कृतार्थो न संशयः ॥ विष्णोर्वा वैष्णवानां च लक्ष्मणार्यस्य
सन्निधौ ॥ ९३ ॥ यः प्रपन्नामृतं सम्यग्भक्त्या पठति मानवः ॥ इह
लोके सुखं प्राप्य सोन्ते विष्णुपदं व्रजेत् ॥ ९४ ॥ यः प्रपन्नामृतं
श्रुत्वा मोदते सततं नरः ॥ सर्वान्कामानवाप्याथ स गच्छेद्वैष्णवं पद-
म् ॥ ९५ ॥ इति श्रीमदान्ध्रपूर्णकुलोत्पन्नश्रीमदनन्तार्यविरचिते प्रपन्ना-
मृते श्रीरामानुजादिचरित्रे प्रपन्नगायत्रीप्रपन्नामृतपठनश्रवणादिमाहा-
त्म्यप्रकाशनं नाम षड्विंशत्यधिकशततमोऽध्यायः ॥ १२६ ॥ ॥

श्रीशैलरंगेशगुरूत्तमस्य शिष्यो महान्कश्चिदनन्तसूरिः ।
ग्रन्थं प्रपन्नामृतनामधेयं चकार रंगेशकटाक्षलेशात् ॥
वैकुण्ठात्सैन्यनाथांशादवतीर्णाय सूरये ।
तिन्तिणीमूलसंस्थाय शठकोपाय मंगलम् ॥
शेषांशादवतीर्णाय लोकरक्षणहेतवे ।
श्रीमद्रामानुजार्याय गुरुवर्याय मंगलम् ॥
श्रीमते रम्यजामातृमुनीन्द्राय महात्मने ।
श्रीरंगवासिने भूयान्नित्यश्रीर्नित्यमंगलम् ॥

श्रीप्रपन्नामृतं संपूर्णम् ॥



"श्रीवेंकटेश्वर" स्टीम-यन्त्रालय-बंबई.

# क्रय्यपुस्तकें रामानुजसांप्रदायिकग्रंथाः ।

| नाम. | की, रु. |
|---|---|
| आलवारचरितामृत—पं० सुदर्शनदासानुवादित, इस ग्रन्थमें श्रीशि-रोमणिस्वामीसे लेकर श्रीरामानुजस्वामी पर्यंत बारह श्रीसंप्रदायकें आलवारोंका चरित ... ... ... ... | ॥) |
| विषयवाक्यदीपिका—श्रीरंगरामानुजमुनिप्रणीतटिप्पणीसमेतम् अर्थात् विशिष्टाद्वैतसिद्धान्त श्रीभाष्योदाहृतोपनिषद्वाक्यविवरणम् | २) |
| स्तोत्ररत्नावली—रामानुजसांप्रदायिक प्रथमभाग ... .... | १।) |
| द्वितीयभाग १।) तृतीयभाग ... ... | १।) |
| गोवर्द्धनसूरिप्रभाव—वृन्दावनस्वामीकृतसंग्रहहै .... ... | ।) |
| स्तोत्रदशकम्—जितं ते स्तोत्र पांडवगीता अच्युताष्टकादि पाठकरनेयोग्य | ।) |
| नारायणसारसंग्रह—शास्त्रमतानुयायी सांप्रदायिक वैष्णवादिलक्षण तिलक मुद्रा इत्यादि निरूपणहै ... ... ... | ।) |
| सन्मार्गदीपक— .... ... ... ... | ॥=) |
| भगवद्धर्मदर्पण—श्रीरंगचार्यस्वामीकृत पहिलाभाग और दूसराभाग | ॥=) |
| भगवत्पूजनक्रम—भाषा अर्थात् पूजापद्धति ... ... | =) |
| रामानन्द स्वामीकृत रामरक्षा और रामकबीरकी रामरक्षा | -) |
| श्रीनारदगीता—भाषाटीका अवधनिवासी पं०रामनारायणदासजीकृत | -) |
| मुकुन्दमालास्तोत्र— ... ... ... ... | -) |
| कुदृष्टिध्वान्तमार्त्तंड—( श्रीमत्स्वामीरंगाचार्यजीप्रणीत ... | ।=) |
| आलवंदारस्तोत्र मूल— -) तथा भाषाटीकासमेत .... | ।) |
| वैष्णवधर्मशिक्षा— ... ... .... ... | =) |
| भूतपुरीमाहात्म्य— .... | ।) |

## जाहिरात।

वज्रकुठार—रामानुजसांप्रदायी .... ... ... ।)

श्रीरामानंद जन्मोत्सव—भाषाटीका—श्रीवैष्णवादि चारौ संप्रदायी वैष्णवोपयोगी ... ... ... ... =।)

अष्टादशरहस्य—भाषा समेत टीका .... .... ... ।=)

बृहद्ब्रह्मोक्तरामपद्धति—चारौ संप्रदायी वैष्णवोपयोगी ... .... ॥)

रामपद्धति—रामपटल—सिद्धांतपटल—चौवीस गायत्री।

मंत्रमुक्तावली—( ए पांचों पुस्तकका एक गुटका. ) चारौ संप्रदायी वैष्णवोपयोगी ( कर्मकांडग्रंथ ) ... ... १)

रामपद्धति— .... ... " " ... ।)

रामपटल— ... ... " " ... ।)

गोपालविवेक—सटीक ... ... ... ... ।=)

सिद्धान्तपटल—अवधूता मार्गका अपूर्व ग्रंथ है .... ... ।)

चौवीसगायत्री—मंत्र और ( २४ ) मुद्रा समेत ... ... ≡)

निगमांतार्थदीपिका—संस्कृत और भाषाटीका ... ... ॥≈)

ब्रह्मोत्सव—आनंदनिधि दोहावलीसहित जिसमें श्रीवृन्दावनके श्रीरंगजीके मंदिरके सब उत्सवोंका वर्णन चित्रसहित ... ॥)

दुर्जनकरिपंचानन—भाषा स्वामी रंगचारी द्वारा जयपुरमहाराजके प्रश्नोंका उत्तर ... ... ... .. ।)

वैष्णवधर्मरत्नाकर—भाषाटीका ... ... ... २॥)

अर्चावतारस्थलवैभवदर्पण—अर्थात सब देशोंके क्षेत्र तीर्थोंका संग्रह १।)

रहस्यत्रय—भाषाटीका ... ... ... ... ।)

रामानुजाष्टपदी— ... ... ... ... =)

सन्मार्ग दर्शन— ... ... ... ... ।)

शतदूषणी खंड दोमें— ... कांची ... ६॥।)

श्रीरामतापिनी उपनिषद्—भाषाटीका—तथा रामउपनिषद्
संस्कृतटीका यंत्रराजके अनुक्रम सहित ... ... १)

उपासनातत्त्वदीपिका—भा॰ टी॰ ... ... ... ॥)

सुदर्शनशतक—संस्कृत ... ... ... ... ≈)

रामचरण चिह्नावली ... ... ... ... ≡)

## पुराण ग्रन्थाः।

पद्मपुराण—संपूर्ण ५५००० ग्रन्थ छः खण्डोंमें शुद्धतापूर्वक, कईएक व्रतादिमाहात्म्य, तीर्थमाहात्म्य, शिवविष्णु महिमा, रुद्राक्ष तुलसी माहात्म्यादि सृष्टिखण्ड, भूमिखण्ड, स्वर्गखंड, ब्रह्मखंड, पाताल-खंड, उत्तरखंड, क्रियायोगखंडमें सांगोपांग वर्णन है यह ग्रन्थ वैष्णवोंको अत्यन्त उपयोगी है ... .... .... १५)

श्रीमद्भागवत—श्रीधरीटीका और टिप्पणीसह, ग्लेज कागज ... १०)

" " तथा रफ... ... ... ... ९)

श्रीमद्भागवत—भावार्थदीपिकाप्रकाश टीका—यह टीका श्रीधरी टीकापर बहुतही उत्तम लगती है। ग्रन्थ संख्या १०००० छपताहै।... ... .... ... ...

श्रीमद्भागवत—सचूर्णिक मोटेअक्षर उत्तम कागज सप्ताह वांचनेवा-लोंको परमोपयोगीहै ग्लेज ... ... ७)

" तथा देशी कागज ... ... ... ६)

श्रीमद्भागवत—अन्वयार्थप्रकाशिकाटीकासमेत पं॰ गंगासहायजीकृत १५)

श्रीमद्भागवत—नवीन सुबोधिनीटीका समेत पढनेवालों व सप्ताह वांचनेवालोंको परमोपयोगीहै ... ... ... १२)

श्रीमद्भागवत—विजयध्वजी टीका समेत (माध्वसांप्रदायिक) ... १०)

श्रीमद्भागवत—मूल (गुटका) रेशमी जिल्द बँधी हुई नित्यपाठकर-नेयोग्य १॥)

